

प्राकट्य सं १४६६ श्रावण शुक्ल पचम्याम् (व्रज)
पाटोत्सव सं १०८८ ( रामदासस्य मंदिरे )
,, ,, १५५६ (पूर्णमल्ल मंदिर वैशाख शुक्ल तृतीया)
,, ,, १७२८ (श्रीनाथद्वारे फा. कृ. ७म्याम् ) (मेव)




## चित्राणां सूचीपत्रम्

श्रीकृष्णाय नमः ।

# प्रास्ताविकम् ।

सर्वोद्धारप्रयत्नात्मभिः श्रीमदाचार्यश्रीमद्वल्लभाधीश्वरचरणैः सिद्धान्तप्रतिपादका बहवो ग्रन्थाः सूक्ष्माः प्रणीताः। एतेषु केचित् स्तोत्ररूपाः, केचित् सिद्धान्तसंग्रहरूपाः, केचित् भगवद्गुणानुवादरूपाः। कृष्णाश्रयाद्याः प्रथमे, सिद्धान्तमुक्तावल्यादयः द्वितीये, मधुराष्टकादयः तृतीये दृष्टान्तरूपाः। एतामेव सरणिमनुसरद्भिः श्रीमद्विठ्ठलनाथप्रभुचरणैर्बहवः सूक्ष्मा भगवद्गुणगानरूपाः आचार्यस्तोत्ररूपाः विज्ञप्तिरूपाश्च ग्रन्थाः प्रणीताः। श्रीरघुनाथचरणैरपि मनोहराणि स्तोत्राणि योजितानि। श्रीमद्धरिधनचरणैरपि निःसाधनजनानुग्रहार्थमनेके सूक्ष्माः सरला ग्रन्थाः प्रकटीकृताः। कालेन एतत्साहित्यं संप्रदाये वृद्धिं गतमपि, अस्मिन् समये कीटपतङ्गादिभक्षणमिव जातमिति तन्निवृत्तये वैष्णवश्रेष्ठिलक्ष्मीदासप्रभुगोवर्धनदासेन यदुवंशीयेन एतत् विप्रकीर्णसाहित्यमितस्ततो महता प्रयासेन संगृह्य २३७ ग्रन्थानां बृहत्स्तोत्रसरित्सागरनामको द्वितीयो भागः प्रकटितः। अस्मिन् संग्रहे उत्सवादिनिर्णायकाः ग्रन्थाः, द्रव्यशुद्ध्यादयः संप्रदायस्याधारबोधका अपि निवेशिताः। एतत्संग्रहोऽप्यधुना दुर्लभो जात इति 'गुजराती न्यूस' मुद्रणालये तन्मुद्रणं पुनः कृतम्। एतत्संग्रहस्योपयोगवृद्धये श्रीहरिरायचरणकृता अष्टपद्यो भगवद्गुणानुवादरूपा यावदुपलब्धाः संगृहीताः। श्रीमदणुभाष्यानुसारी ब्रह्मसूत्रपाठः सर्वैकदेशिस्वीकृतपाठान्तरसमेतोऽपि संगृ-

हीतः । अयं च साम्प्रदायिकपण्डितमवरैर्मग्नलालशास्त्रिभिः संपादितः पूर्वं पुष्टिभक्तिसुधाख्यमासिकपत्रिकायां मुद्रितश्च, तत एवास्मिन् संगृहीतः । श्रीमदाचार्यादीनां प्राचीनानि चित्राणि महता प्रयासेनोपलभ्यात्र निवेशितानि । एतादृशं साहित्यं संप्रदायस्य रहस्यं स्वल्पप्रयत्नेन ज्ञापयतीति तु निर्विवादमस्माकम् । एतत्संग्रहावलोकने नापि श्रमो भवति । यद्यपि एते ग्रन्थाः संस्कृतभाषायां प्रणीताः, तथापि भाषासारल्यं प्रतिपदं वर्तते । वस्तुतस्तु वैष्णवानां जिज्ञासूनां यावदपेक्षितम्, तत् सर्वमत्र संगृहीतम् । वैष्णवाः एतत्संग्रहं स्वगृहे स्थापयन्त्विति विज्ञप्तिः ।



॥ श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरस्थग्रन्थानामनुक्रमणिका.

॥ श्रीगुसांइजी (श्रीविठ्ठलेश्वर) कृतग्रंथाः ॥



॥ गोस्वामिश्रीरघुनाथजीकृतग्रंथाः ॥

॥ गोस्वामिश्रीगोकुलनाथात्मज-
विठ्ठलरायजीविरचितग्रंथाः ॥

इति वृहत्स्तोत्रसरित्सागरस्थविषयानुक्रमणिका समाप्ता ।

॥ श्रीकृष्णो विजयतेतराम् ॥



# अथ श्रीकृष्णजन्मपत्रिका ।

श्रीकृष्णाय नमः ।

स्वस्तिश्रीर्जयो मंगलमभ्युदयश्चास्तु । स जयति सिंधुरवदनो देवो यत्पादपंकजस्मरणम् ॥ वासरमणिरिव तमसां राशिं नाशयति विघ्नानाम् ॥ १ ॥ आदित्याद्या ग्रहाः सर्वे सनक्षत्राः सराशयः ॥ सर्वे कल्याणमिच्छंतु यस्यैषा जन्मपत्रिका ॥ २ ॥ स्वस्ति श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्यास्मिन्ब्रह्मांडे भूर्लोके ब्रह्मणः द्वितीये परार्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरे अष्टाविंशतिमहायुगांतर्गतद्वापरयुगस्य गतवर्षाणि ( ८,६३,९०० ) नवशत्युत्तरत्रिषष्टिसहस्राधिकाष्टलक्षाणि । शेषद्वापरयुगवर्षाणि (१००) एकशतम् । तदा प्रवर्तमाने विरोधिनामसंवत्सरे दक्षिणायनगते

श्रीसूर्ये वर्षाऋतौ मासोत्तमे मासे शुभकारिणि श्रावणे मासे कृष्णपक्षे अष्टम्याः तिथेः घटिकाः ५० पलानि ४४ जन्मप्रमाणतिथौ बुधवासरे रोहिणी घटिकाः ५२ पलानि ५१ जन्मनक्षत्रे वज्रयोग घटिकाः ५३ पलानि २० तात्कालिकबवकरणघटिकाः २७ ततः परं बालवकरणे वृषभराशिस्थिते चंद्रे सिंहस्थे सूर्ये मीनस्थे देवगुरौ एवं पंचांगशुद्धेऽस्मिन्दिने श्रीमन्मार्तंडमंडलार्धोदयात् गतघटिकाः ४५ पलानि ५ वृषभलग्नोदये शशिनवमांशे कर्काख्ये चंद्रदैवत्ये सर्पयोनौ मनुष्यगणे वैश्यवर्णे मृगवर्गे अंत्यनाडीस्थिते फणिचक्रे श्रीसूर्ये पुरुषाकारचक्रे चरणस्थिते सिंहसंक्रांतिगतांशाः १६ कलाः ३९ विकलाः १० इत्यस्यां शुभग्रहावलोकिन्यां पुण्योदयवेलायां जंबूद्वीपे भरतखंडे नैध्रुवदेशे यमुनातीरे श्रीमन्मथुरानगरे महाराजाधिराजश्रीकोग्रसेनराजस्य जामाता श्रीसोमवंशोत्पन्नः पुरुषः ( ४८ ) अष्टचत्वारिंशत्तमः श्रीयदुकुलभूषणीभूत श्रीशूरसेनराजात्मजः श्रीवसुदेवराजविराजमान .. गृहे या सौभाग्याद्यखिलगुणसंपन्ना देवकी

तस्याः कुक्षौ कारागृहे अष्टमपुत्रस्य जन्माभूत् । तस्य राशिभवं विष्णुः वासुदेवः वनमाली इति जन्मनाम प्रतिष्ठितम् ॥ परं च मातापित्रोर्गुरोरिच्छया यथारुचिकरं शुभं भवतु ॥

## अथ श्रीकृष्णजन्मांगग्रहाः ।

अथ जन्मांगचक्रम् ।

३
के. १
४
चं. २
१ बु
र. ५
श. ११
शु ६
८
१० मं.
रा. गु. ७
९

अथ स्पष्टाख्यो ग्रहाः स्पष्टा.

| सू. | चं. | मं. | बु. | गु. | शु. | श. | रा | ल. |
|---|---|---|---|---|---|---|---|---|
| ४ | १ | ९ | ५ | ११ | ६ | १० | ६ | १ |
| १६ | ११ | ११ | ९ | २२ | १९ | २८ | १५ | १७ |
| ३० | ४६ | ५ | १४ | ४१ | १८ | ० | २७ | ५६ |
| २४ | ० | २० | ५१ | ३१ | १८ | २३ | ८ | ० |
| ५७ | ८५८ | ३१ | ८० | ५ | ३७ | २ | ३ | ५ |
| २८ | २७ | ० | ३७ | १७ | ० | ५७ | ११ | ० |

### श्रीकृष्णजन्मकालग्रहसंपत्तेः श्लोकाः ।

श्रीमच्छ्रावणमासकेऽसितदलेऽष्टम्यां तिथौ चंद्रजे रोहिण्यां, निशि मध्यभागसमये योगाधिपे वज्रगे ॥ शुक्रस्य स्थिरलग्नके सुखगते सूर्ये विधौ लग्नगे धर्मस्थानगते तु मंगलखगे ज्ञेऽपत्यभावाश्रिते ॥ १ ॥ जीवे लाभगते सिते रिपुगते व्योम्नि स्थिते अभजे

षष्ठस्थानगते तमे व्ययगते केतौ पुरे माथुरे ॥
श्रीख्यातानकदुंदुभेस्सुभवने श्रीकृष्णनाथोऽभवद्भू-
भाराहरणाय सौख्यजनकः पायादपायाद्भुवि ॥ २ ॥
इत्येतेन प्रकारेण श्रीकृष्णजन्मकालः । तत्रोच्चस्था-
स्त्रयो ग्रहाः—चंद्रः बुधः मंगलश्च । ततः पंच स्वगृ-
हस्थाः—रविः बुधः शुक्रः शनिः गुरुः । एक एव
राहुः नीचोन्मुखः । एवं त्रयो ग्रहाः स्वयमेव वक्रा-
तिचारगतया उच्चम् आगताः । पंच ग्रहाः केंद्रस्थाने
आगताः केचिदस्तंगता अपि तत्कालमुदयं प्राप्ताश्च
भवन्ति । राजयोगश्चैतेर्दर्शित इति ग्रहसंपत्तिः ॥

॥ इति श्रीकृष्णजन्मपत्रिका समाप्ता ॥





श्रीमद्वल्लभाचार्यचरणाः ॥

दोनहारप्यालेरयान (विसनगढे), माय श्रीठकुराणीघट्टे, परमभक्तो माधवभट्ट काश्मीरी लिखति । तत्पृष्ठ ऊर्ध्वे श्रीकृष्णदासमेघनस्तिष्ठति । श्रीदामोदरदास हरसानी प्रणमति ॥

॥ श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरः



## तत्र श्रीमहाप्रभु (जी) कृतग्रंथाः ।

## अथ पुरुषोत्तमनामसहस्रम् ।

श्रीगोपीजनवल्लभाय नमः ॥

पुराणपुरुषो विष्णुः पुरुषोत्तम उच्यते ॥
नाम्नां सहस्रं वक्ष्यामि तस्य भागवतोद्धृतम् ॥ १ ॥
यस्य प्रसादाद्वागीशाः प्रजेशा विभवोन्नताः ॥
क्षुद्रा अपि भवंत्याशु श्रीकृष्णं तं नतोऽस्म्यहम् ॥२॥
अनंता एव कृष्णस्य लीला नामप्रवर्तिकाः ॥
उक्ता भागवते गूढाः प्रकटा अपि कुत्रचित् ॥ ३ ॥
अतस्तानि प्रवक्ष्यामि नामानि मुरवैरिणः ॥
सहस्रं यैस्तु पठितं पठितं स्याच्छुकामृतम् ॥ ४ ॥
कृष्णनामसहस्रस्य ऋषिरग्निर्निरूपितः ॥
गायत्री च तथा छंदो देवता पुरुषोत्तमः ॥ ५ ॥
विनियोगः समस्तेषु पुरुषार्थेषु वै मतः ॥
बीजं भक्तप्रियः शक्तिः सत्यवागुच्यते हरिः ॥ ६ ॥

भक्तोद्धरणयत्नस्तु मंत्रोऽत्र परमो मतः ॥
अवतारितभक्तांशः कीलकं परिकीर्तितम् ॥ ७ ॥
अस्त्रं सर्वसमर्थश्च गोविंदः कवचं मतम् ॥
पुरुषो ध्यानमत्रोक्तं सिद्धिः शरणसंस्मृतिः ॥ ८ ॥
( अथ प्रथमस्कंधस्थनामानि )
श्रीकृष्णः सच्चिदानंदो नित्यलीलाविनोदकृत् ॥
सर्वागमविनोदी च लक्ष्मीशः पुरुषोत्तमः ॥ ९ ॥
आदिकालः सर्वकालः कालात्मा माययावृतः ॥
भक्तोद्धारप्रयत्नात्मा जगत्कर्ता जगन्मयः ॥ १० ॥
नामलीलापरो विष्णुर्व्यासात्मा शुकमोक्षदः ॥
व्यापिवैकुंठदाता च श्रीमद्भागवतागमः ॥ ११ ॥
शुकवागमृताब्धींदुः शौनकाद्यखिलेष्टदः ॥
भक्तिप्रवर्तकस्त्राता व्यासचिंताविनाशकः ॥ १२ ॥
सर्वसिद्धांतवागात्मा नारदाद्यखिलेष्टदः ॥
अंतरात्मा ध्यानगम्यो भक्तिरत्नप्रदायकः ॥ १३ ॥
मुक्तोपसृप्यः पूर्णात्मा मुक्तानां रतिवर्धनः ॥
भक्तकार्यैकनिरतो द्रौण्यस्त्रविनिवारकः ॥ १४ ॥
भक्तस्मयप्रणेता च भक्तवाक्परिपालकः ॥
ब्रह्मण्यदेवो धर्मात्मा भक्तानां च परीक्षकः ॥ १५ ॥

आसन्नहितकर्ता च मायाहितकरः प्रभुः ॥
उत्तराप्राणदाता च ब्रह्मास्त्रविनिवारकः ॥ १६ ॥
सर्वतः पांडवपतिः परीक्षिच्छुद्धिकारणम् ॥
गूढात्मा सर्ववेदेषु भक्तैकहृदयंगमः ॥ १७ ॥
कुंतीस्तुत्यः प्रसन्नात्मा परमाद्भुतकार्यकृत् ॥
भीष्ममुक्तिप्रदः स्वामी भक्तमोहनिवारकः ॥ १८ ॥
सर्वावस्थासु संसेव्यः समः सुखहितप्रदः ॥
कृतकृत्यः सर्वसाक्षी भक्तस्त्रीरतिवर्धनः ॥ १९ ॥
सर्वसौभाग्यनिलयः परमाश्चर्यरूपधृक् ॥
अनन्यपुरुषस्वामी द्वारकाभाग्यभाजनम् ॥ २० ॥
बीजसंस्कारकर्ता च परीक्षिज्ज्ञानपोषकः ॥
सर्वत्र पूर्णगुणकः सर्वभूषणभूषितः ॥ २१ ॥
सर्वलक्षणदाता च धृतराष्ट्रविमुक्तिदः ॥
सन्मार्गरक्षको नित्यं विदुरप्रीतिपूरकः ॥ २२ ॥
लीलाव्यामोहकर्ता च कालधर्मप्रवर्तकः ॥
पाण्डवानां मोक्षदाता परीक्षिद्भाग्यवर्धनः ॥ २३ ॥
कलिनिग्रहकर्ता च धर्मादीनां च पोषकः ॥

---

१ पूत. २ भाजनः.

सत्संगज्ञानहेतुश्च श्रीभागवतकारणम् ॥ २४ ॥
प्राकृतादृष्टमार्गश्च

( अतःपरं द्वितीयस्कंधस्थनामानि )

श्रोतव्यः सकलागमैः ॥
कीर्तितव्यः शुद्धभावैः स्मर्तव्यश्चात्मवित्तमैः ॥ २५॥
अनेकमार्गकर्ता च नानाविधगतिप्रदः ॥
पुरुषः सकलाधारः सत्त्वैकनिलयात्मभूः ॥ २६ ॥
सर्वध्येयो योगगम्यो भक्त्या ग्राह्यः सुरप्रियः ॥
जन्मादिसार्थककृतिर्लीलाकर्ता पतिः सताम् ॥२७॥
आदिकर्ता तत्त्वकर्ता सर्वकर्ता विशारदः ॥
नानावतारकर्ता च ब्रह्माविर्भावकारणम् ॥ २८ ॥
दशलीलाविनोदी च नानासृष्टिप्रवर्तकः ॥
अनेककल्पकर्ता च सर्वदोषविवर्जितः ॥ २९ ॥

( अतःपरं तृतीयस्कंधस्थनामानि )

वैराग्यहेतुस्तीर्थात्मा सर्वतीर्थफलप्रदः ॥
तीर्थशुद्ध्येकनिलयः स्वमार्गपरिपोषकः ॥ ३० ॥
तीर्थकीर्तिर्भक्तगम्यो भक्तानुशयकार्यकृत् ॥
भक्ततुल्यः सर्वतुल्यः सर्वस्वेच्छाप्रवर्तकः ॥ ३१ ॥
गुणातीतोऽनवद्यात्मा सर्गलीलाप्रवर्तकः ॥

साक्षात्सर्वजगत्कर्ता महदादिप्रवर्तकः ॥ ३२ ॥
मायाप्रवर्तकः साक्षी मायारतिविवर्धनः ॥
आकाशात्मा चतुर्मूर्तिश्चतुर्धाभूतभावनः ॥ ३३ ॥
रजःप्रवर्तको ब्रह्मा मरीच्यादिपितामहः ॥
वेदकर्ता यज्ञकर्ता सर्वकर्ताऽमितात्मकः ॥ ३४ ॥
अनेकसृष्टिकर्ता च दशधासृष्टिकारकः ॥
यज्ञांगो यज्ञवाराहो भूधरो भूमिपालकः ॥ ३५ ॥
सेतुर्विधरणो जैत्रो हिरण्याक्षांतकः सुरः ॥
दितिकश्यपकामैकहेतुः सृष्टिप्रवर्तकः ॥ ३६ ॥
देवाभयप्रदाता च वैकुंठाधिपतिर्महान् ॥
सर्वगर्वप्रहारी च सनकाद्यखिलार्थदः ॥ ३७ ॥
सर्वाश्वासनकर्ता च भक्ततुल्याहवप्रदः ॥
काललक्षणहेतुश्च सर्वार्थज्ञापकः परः ॥ ३८ ॥
भक्तोन्नतिकरः सर्वप्रकारसुखदायकः ॥
नानायुद्धप्रहरणो ब्रह्मशापविमोचकः ॥ ३९ ॥
पुष्टिसर्गप्रणेता च गुणसृष्टिप्रवर्तकः ॥
कर्दमेष्टप्रदाता च देवहूत्यखिलार्थदः ॥ ४० ॥
शुक्लनारायणः सत्यकालधर्मप्रवर्तकः ॥
ज्ञानावतारः शांतात्मा कपिलः कालनाशकः ॥४१॥

त्रिगुणाधिपतिः सांख्यशास्त्रकर्ता विशारदः ॥
सर्गदूषणहारी च पुष्टिमोक्षप्रवर्तकः ॥ ४२ ॥
लौकिकानंददाता च ब्रह्मानंदप्रवर्तकः ॥
भक्तिसिद्धांतवक्ता च सगुणज्ञानदीपकः ॥ ४३ ॥
आत्मप्रदः पूर्णकामो योगात्मा योगभावितः ॥
जीवन्मुक्तिप्रदः श्रीमानन्यभक्तिप्रवर्तकः ॥ ४४ ॥
कालसामर्थ्यदाता च कालदोषनिवारकः ॥
गर्भोत्तमज्ञानदाता कर्ममार्गनियामकः ॥ ४५ ॥
सर्वमार्गनिराकर्ता भक्तिमार्गैकपोषकः ॥
सिद्धिहेतुः सर्वहेतुः सर्वाश्चर्यैककारणम् ॥ ४६ ॥
चेतनाचेतनपतिः समुद्रपरिपूजितः ॥
सांख्याचार्यस्तुतः सिद्धपूजितः सर्वपूजितः ॥ ४७ ॥

( अतःपरं चतुर्थस्कंधस्थनामानि )

विसर्गकर्तासर्वेशः कोटिसूर्यसमप्रभः ॥
अनंतगुणगंभीरो महापुरुषपूजितः ॥ ४८ ॥
अनंतसुखदाता च ब्रह्मकोटिप्रजापतिः ॥
सुधाकोटिस्वास्थ्यहेतुः कामधुक्कोटिकामदः ॥ ४९ ॥
समुद्रकोटिगंभीरस्तीर्थकोटिसमाह्वयः ॥
सुमेरुकोटिनिष्कंपः कोटिब्रह्मांडविग्रहः ॥ ५० ॥

कोट्यश्वमेधपापघ्नो वायुकोटिमहाबलः ॥
कोटींदुजगदानंदी शिवकोटिप्रसादकृत ॥ ५१ ॥
सर्वसद्‍गुणमाहात्म्यः सर्वसद्गुणभोजनम् ॥
मन्वादिप्रेरको धर्मो यज्ञनारायणः परः ॥ ५२ ॥
आकूतिसूनुर्देवेंद्रो रुचिजन्माऽभयप्रदः ॥
दक्षिणापतिरोजस्वी क्रियाशक्तिः परायणः ॥ ५३ ॥
दत्तात्रेयो योगपतिर्योगमार्गप्रवर्तकः ॥
अनसूयागर्भरत्नमृषिवंशविवर्धनः ॥ ५४ ॥
गुणत्रयविभागज्ञश्चतुर्वर्गविशारदः ॥
नारायणो धर्मसूनुः पुण्यमूर्तिर्यशस्करः ॥ ५५ ॥
सहस्रकवचच्छेदी तपःसारो नरप्रियः ॥
विश्वानंदप्रदः कर्मसाक्षी भारतपूजितः ॥ ५६ ॥
अनंताद्भुतमाहात्म्यो बदरीस्थानभूपणम् ॥
जितकामो जितक्रोधो जितसंगो जितेंद्रियः ॥५७॥
उर्वशीप्रभवः स्वर्गसुखदायी स्थितिप्रदः ॥
अमानी मानदो गोप्ता भगवच्छास्त्रबोधकः ॥५८॥
ब्रह्मादिवंद्यो हंसः श्रीर्मायावैभवकारणम् ॥
विविधानंतसर्गात्मा विश्वपूरणतत्परः ॥ ५९ ॥

१ भाजन.

यज्ञजीवनहेतुश्च यज्ञस्वामीष्टबोधकः ॥
नानासिद्धांतगम्यश्च सप्ततंतुश्च षड्गुणः ॥ ६० ॥
प्रतिसर्गजगत्कर्ता नानालीलाविशारदः ॥
ध्रुवप्रियो ध्रुवस्वामी चिंतिताधिकदायकः ॥ ६१ ॥
दुर्लभानंतफलदो दयानिधिरमित्रहा ॥
अंगस्वामी कृपासारो वैन्यो भूमिनियामकः ॥ ६२ ॥
भूमिदोग्धा प्रजाप्राणपालनैकपरायणः ॥
यशोदाता ज्ञानदाता सर्वधर्मप्रदर्शकः ॥ ६३ ॥
पुरंजनो जगन्मित्रं विसर्गांतप्रदर्शकः ॥
प्रचेतसां पतिश्चित्रभक्तिहेतुर्जनार्दनः ॥ ६४ ॥
स्मृतिहेतुर्ब्रह्मभावसायुज्यादिप्रदः शुभः ॥
विजयी

( अतःपरं पंचमस्कंधस्थनामानि )

स्थितिलीलाब्धिरच्युतो विजयप्रदः ॥ ६५ ॥
स्वसामर्थ्यप्रदो भक्तकीर्तिहेतुरधोक्षजः ॥
प्रियव्रतप्रियस्वामी स्वेच्छावादविशारदः ॥ ६६ ॥
संख्यगम्यः स्वप्रकाशः सर्वसंगविवर्जितः ॥
इच्छायां च समर्यादस्त्यागमात्रोपलंभनः ॥ ६७ ॥
अचिंत्यकार्यकर्ता च तर्कागोचरकार्यकृत् ॥

शृंगाररसमर्यादा आभीरसभाजनम् ॥ ६८ ॥
नाभीष्टपूरकः कर्ममर्यादादर्शनोत्सुकः ॥
सर्वरूपोऽद्भुततमो मर्यादापुरुषोत्तमः ॥ ६९ ॥
सर्वरूपेषु सत्यात्मा कालसाक्षी शशिप्रभः ॥
मेरुदेवीव्रतफलमृषभो भगलक्षणः ॥ ७० ॥
जगत्संतर्पको मेघरूपी देवेंद्रदर्पहा ॥
जयंतीपतिरत्यंतप्रमाणाशेषलौकिकः ॥ ७१ ॥
शतधान्यस्तभूतात्मा शतानंदो गुणप्रसूः ॥
वैष्णवोत्पादनपरः सर्वधर्मोपदेशकः ॥ ७२ ॥
परहंसक्रियागोप्ता योगचर्याप्रदर्शकः ॥
चतुर्थाश्रमनिर्णेता सदानंदशरीरवान् ॥ ७३ ॥
प्रदर्शितान्यधर्मश्च भरतस्वाम्यपारकृत् ॥
यथावत्कर्मकर्ता च संगानिष्टप्रदर्शकः ॥ ७४ ॥
आवश्यकपुनर्जन्मकर्ममार्गप्रदर्शकः ॥
यज्ञरूपमृगः शांतः सहिष्णुः सत्पराक्रमः ॥ ७५ ॥
रहूगणगतिज्ञश्च रहूगणविमोचकः ॥
भवाटवीतत्त्ववक्ता बहिर्मुखहिते रतः ॥ ७६ ॥
गयस्वामी स्थानवंशकर्ता स्थानविभेदकृत् ॥
पुरुषावयवो भूमिविशेषविनिरूपकः ॥ ७७ ॥

जंबूद्वीपपतिर्मेरुनाभिपद्मरुहाश्रयः ॥
नानाविभूतिलीलाढ्यो गंगोत्पत्तिनिदानकृत् ॥७८॥
गंगामाहात्म्यहेतुश्च गंगारूपोऽतिगूढकृत् ॥
वैकुंठदेहहेत्वंबुजन्मकृत्सर्वपावनः ॥ ७९ ॥
शिवस्वामी शिवोपास्यो गूढः संकर्षणात्मकः ॥
स्थानरक्षार्थमत्स्यादिरूपः सर्वैकपूजितः ॥ ८० ॥
उपास्यनानारूपात्मा ज्योतीरूपो गतिप्रदः ॥
सूर्यनारायणो वेदकांतिरुज्ज्वलवेषधृक्[१] ॥ ८१ ॥
हंसोंतरिक्षगमनः सर्वप्रसवकारणम् ॥
आनंदकर्ता वसुदो बुधो वाक्पतिरुज्ज्वलः ॥ ८२ ॥
कालात्मा कालकालश्च कालच्छेदकृदुत्तमः ॥
शिशुमारः सर्वमूर्तिराधिदैविकरूपधृक् ॥ ८३ ॥
अनंतसुखभोगाढ्यो विवरैश्वर्यभोजनम्[२] ॥
संकर्षणो दैत्यपतिः सर्वाधारो बृहद्वपुः ॥ ८४ ॥
अनंतनरकच्छेदी स्मृतिमात्रार्तिनाशनः ॥
सर्वानुग्रहकर्ता च

(अतःपरं षष्ठस्कंधस्थनामानि)

मर्यादाभिन्नशास्त्रकृत् ॥ ८५ ॥

---

१ धृत्. २ भाजनः.

कालांतकभयच्छेदी नामसामार्थ्यरूपधृक् ॥
उद्धारानर्हगोप्त्रात्मा नामादिप्रेरकोत्तमः ॥ ८६ ॥
अजामिलमहादुष्टमोचकोऽघविमोचकः ॥
धर्मवक्ताऽक्लिष्टवक्ता विष्णुधर्मस्वरूपधृक् ॥ ८७ ॥
सन्मार्गप्रेरको धर्ता त्यागहेतुरधोक्षजः ॥
वैकुंठपुरनेता च दाससंशुद्धिकारकः ॥ ८८ ॥
दक्षप्रसादकृद्धंसगुह्यस्तुतिविभावनः ॥
स्वाभिप्रायप्रवक्ता च मुक्तजीवप्रसूतिकृत् ॥ ८९ ॥
नारदप्रेरणात्मा च हर्यश्वब्रह्मभावनः ॥
शबलाश्वहितो गूढवाक्यार्थज्ञापनक्षमः ॥ ९० ॥
गूढार्थज्ञापकः सर्वमोक्षानंदप्रतिष्ठितः ॥
पुष्टिप्ररोहहेतुश्च दासैकज्ञातहृद्गतः ॥ ९१ ॥
शांतिकर्ता सुहितकृत्स्त्रीप्रसूः सर्वकामधुक् ॥
पुष्टिवंशप्रणेता च विश्वरूपेष्टदेवता ॥ ९२ ॥
कवचात्मा पालनात्मा वर्मोपचितिकारणम् ॥
विश्वरूपशिरश्छेदी त्वाष्ट्रयज्ञविनाशकः ॥ ९३ ॥
वृत्रस्वामी वृत्रगम्यो वृत्रव्रतपरायणः ॥
वृत्रकीर्तिर्वृत्रमोक्षो मघवत्प्राणरक्षकः ॥ ९४ ॥

१ धृन्. २ धृन्. ३ सुतत्वाश्च.

अश्वमेधहविर्भोक्ता देवेंद्रामीवनाशकः ॥
संसारमोचकश्चित्रकेतुबोधनतत्परः ॥ ९५ ॥
मंत्रसिद्धिः सिद्धिहेतुः सुसिद्धिफलदायकः ॥
महादेवतिरस्कर्ता भक्त्यै पूर्वार्थनाशकः ॥ ९६ ॥
देवब्राह्मणविद्वेषवैमुख्यज्ञापकः शिवः ॥
आदित्यो दैत्यराजश्च मरुत्पतिरचिंत्यकृत् ॥ ९७ ॥
मरुतां भेदकस्त्राता व्रतात्मा पुंप्रसूतिकृत् ॥

( अतः परं सप्तमस्कंधस्थनामानि )

कर्मात्मा वासनात्मा च ऊतिलीलापरायणः ॥९८॥
समदैत्यसुरस्वात्मा वैषम्यज्ञानसंशयः ॥
देहाद्युपाधिरहितः सर्वज्ञः सर्वहेतुवित् ॥ ९९ ॥
ब्रह्मवाक्स्थापनपरः स्वजन्मावधिकार्यकृत् ॥
सदसद्वासनाहेतुस्त्रिसत्यो भक्तमोचकः ॥ १०० ॥
हिरण्यकशिपुद्वेषी प्रविष्टात्मातिभीषणः ॥
शांतिज्ञानादिहेतुश्च प्रह्लादोत्पत्तिकारणम् ॥ १ ॥
दैत्यसिद्धांतसद्वक्ता तपःसार उदारधीः ॥
दैत्यहेतुप्रकटनो भक्तिचिन्हप्रकाशकः ॥ २ ॥
सद्वेषहेतुः सद्वेषवासनात्मा निरंतरः ॥

---

१ सुसिद्ध. २ कारणः

नेष्ठुर्यसीमा प्रह्लादवत्सलः संगदोषहा ॥ ३ ॥
महानुभवः साकारः सर्वाकारः प्रमाणभूः ॥
स्तंभप्रसूतिर्नृहरिर्नृसिंहो भीमविक्रमः ॥ ४ ॥
विकटास्यो ललज्जिह्वो नखशस्त्रो जवोत्कटः ॥
हिरण्यकशिपुच्छेदी क्रूरदैत्यनिवारकः ॥ ५ ॥
सिंहासनस्थः क्रोधात्मा लक्ष्मीभयविवर्धनः ॥
ब्रह्माद्यत्यंतभयभूरपूर्वाचिंत्यरूपधृक् ॥ ६ ॥
भक्तैकशांतहृदयो भक्तस्तुत्यः स्तुतिप्रियः ॥
भक्तांगलेहनोद्धूतक्रोधपुंजः प्रशांतधीः ॥ ७ ॥
स्मृतिमात्रभयत्राता ब्रह्मबुद्धिप्रदायकः ॥
गोरूपधार्यमृतपाः शिवकीर्तिविवर्धनः ॥ ८ ॥
धर्मात्मा सर्वकर्मात्मा विशेषात्माऽऽश्रमप्रभुः ॥
संसारमग्नस्वोद्धर्ता सन्मार्गाखिलतत्त्ववाक् ॥ ९ ॥
आचारात्मा सदाचारी

( अतः परमष्टमस्कंधस्थनामानि )

मन्वंतरविभावनः ॥
स्मृत्याऽशेषाशुभहरो गजेंद्रस्मृतिकारणम् ॥ ११० ॥
जातिस्मरणहेत्वेकपूजाभक्तिस्वरूपदः ॥

---

१ धृत.

यज्ञो भयान्मनुत्राता विभुर्ब्रह्मव्रताश्रयः ॥ ११ ॥
सत्यसेनो दुष्टघाती हरिर्गजविमोचकः ॥
वैकुंठलोककर्ता च अजितोऽमृतकारणम् ॥ १२ ॥
उरुक्रमो भूमिहर्ता सार्वभौमो बलिप्रियः ॥
विभुः सर्वहितैकात्मा विष्वक्सेनः शिवप्रियः ॥१३॥
धर्मसेतुर्लोकधृतिः सुधामांतरपालकः ॥
उपहर्ता योगपतिर्बृहद्भानुः क्रियापतिः ॥ १४ ॥
चतुर्दशप्रमाणात्मा धर्मो मन्वादिबोधकः ॥
लक्ष्मीभोगैकनिलयो देवमंत्रप्रदायकः ॥ १५ ॥
दैत्यव्यामोहकः साक्षाद्गरुडस्कंधसंश्रयः ॥
लीलामंदरधारी च दैत्यवासुकिपूजितः ॥ १६ ॥
समुद्रोन्मथनायत्तोऽविघ्नकर्ता स्ववाक्यकृत् ॥
आदिकूर्मः पवित्रात्मा मंदराऽऽघर्षणोत्सुकः ॥ १७ ॥
श्वासेजदब्धिवार्वीचिः कल्पांतावधिकार्यकृत् ॥
चतुर्दशमहारत्नो लक्ष्मीसौभाग्यवर्धनः ॥ १८ ॥
धन्वंतरिः सुधाहस्तो यज्ञभोक्तार्तिनाशनः ॥
आयुर्वेदप्रणेता च देवदैत्याखिलार्चितः ॥ १९ ॥
बुद्धिव्यामोहको देवकार्यसाधनतत्परः ॥
स्त्रीरूपो मायया वक्ता दैत्यांतःकरणप्रियः ॥ १२० ॥

पायितामृतदेवांशो युद्धहेतुस्मृतिप्रदः ॥
सुमालिमालिवधकृन्माल्यवत्प्राणहारकः ॥ २१ ॥
कालनेमिशिरश्छेदी दैत्ययज्ञविनाशकः ॥
इंद्रसामर्थ्यदाता च दैत्यशेषस्थितिप्रियः ॥ २२ ॥
शिवव्यामोहको मायी भृगुमंत्रस्वशक्तिदः ॥
बलिजीवनकर्ता च स्वर्गहेतुर्व्रतार्चितः ॥ २३ ॥
आदित्यानंदकर्ता च कश्यपादितिसंभवः ॥
उपेंद्र इंद्रावरजो वामनो ब्रह्मरूपधृंक्[1] ॥ २४ ॥
ब्रह्मादिसेवितवपुर्यज्ञपावनतत्परः ॥
याच्ञोपदेशकर्ता च ज्ञापिताशेषसंस्थितिः ॥ २५ ॥
सत्यार्थप्रेरकः सर्वहर्ता गर्वविनाशकः ॥
त्रिविक्रमस्त्रिलोकात्मा विश्वमूर्तिः पृथुश्रवाः ॥ २६ ॥
पाशबद्धबलिः सर्वदैत्यपक्षोपमर्दकः ॥
सुतलस्थापितबलिः स्वर्गाधिकसुखप्रदः ॥ २७ ॥
कर्मसंपूर्तिकर्ता च स्वर्गसंस्थापितामरः ॥
ज्ञातत्रिविधधर्मात्मा महामीनोऽब्धिसंश्रयः ॥ २८ ॥
सत्यव्रतप्रियो गोप्ता मत्स्यमूर्तिधृतश्रुतिः[2] ॥
शृंगबद्धधृतक्षोणिः सर्वार्थज्ञापको गुरुः ॥ २९ ॥

१ धृक्. २ मत्स्यमूर्त्युद्धृतश्रुतिः.

( अतः परं नवमस्कंधस्थनामानि )

ईशसेवकलीलात्मा सूर्यवंशप्रवर्तकः ॥
सोमवंशोद्भवकरो मनुपुत्रगतिप्रदः ॥ १३० ॥
अंबरीषप्रियः साधुर्दुर्वासोगर्वनाशकः ॥
ब्रह्मशापोपसंहर्ता भक्तकीर्तिविवर्धनः ॥ ३१ ॥
इक्ष्वाकुवंशजनकः सगराद्यखिलार्थदः ॥
भगीरथमहायत्नो गंगाधौतांघ्रिपंकजः ॥ ३२ ॥
ब्रह्मस्वामीशिवस्वामी सगरात्मजमुक्तिदः ॥
खट्वांगमोक्षहेतुश्चरघुवंशविवर्धनः ॥ ३३ ॥
रघुनाथो रामचंद्रो रामभद्रो रघुप्रियः ॥
अनंतकीर्तिः पुण्यात्मा पुण्यश्लोकैकभास्करः ॥३४॥
कोशलेंद्रः प्रमाणात्मा सेव्यो दशरथात्मजः ॥
लक्ष्मणो भरतश्चैव शत्रुघ्नो व्यूहविग्रहः ॥ ३५ ॥
विश्वामित्रप्रियो दांतस्तांडकावधमोक्षदः ॥
वायव्यास्त्राब्धिनिक्षिप्तमारीचश्च सुबाहुहा ॥ ३६ ॥
वृषध्वजधनुर्भंगप्राप्तसीतामहोत्सवः ॥
सीतापतिर्भृगुपतिर्गर्वपर्वतनाशकः ॥ ३७ ॥
अयोध्यास्थमहाभोगयुक्तलक्ष्मीविनोदवान् ॥

१ स्ताटका इति पाठान्तरम्.

कैकेयीवाक्यकर्ता च पितृवाक्यपरिपालकः ॥ ३८ ॥
वैराग्यबोधकोऽनन्यसात्त्विकस्थानबोधकः ॥
अहल्यादुःखहारी च गुहस्वामी सलक्ष्मणः ॥ ३९ ॥
चित्रकूटप्रियस्थानो दंडकारण्यपावनः ॥
शरभंगसुतीक्ष्णादिपूजितोऽगस्त्यभाग्यभूः ॥ ४० ॥
ऋषिसंप्रार्थितकृतिर्विराधवधपंडितः ॥
छिन्नशूर्पणखानासः खरदूषणघातकः ॥ ४१ ॥
एकबाणोहतानेकसहस्रबलराक्षसः ॥
मारीचघाती नियतसीतासंबंधशोभनः ॥ ४२ ॥
सीतावियोगनाट्यश्च जटायुवधमोक्षदः ॥
शबरीपूजितो भक्तहनुमत्प्रमुखावृतः ॥ ४३ ॥
दुंदुभ्यस्थिप्रहरणः सप्ततालविभेदनः ॥
सुग्रीवराज्यदो वालिघाती सागरशोषणः ॥ ४४ ॥
सेतुबंधनकर्ता च विभीषणहितप्रदः ॥
रावणादिशिरश्छेदी राक्षसाघौघनाशकः ॥ ४५ ॥
सीताभयप्रदाता च पुष्पकागमनोत्सुकः ॥
अयोध्यापतिरत्यंतसर्वलोकसुखप्रदः ॥ ४६ ॥

---

१ जटायुर्विमोक्षदः इति पाठान्तरम्.

मथुरापुरनिर्माता सुकृतज्ञस्वरूपदः ॥
जनकज्ञानगम्यश्च ऐलांतप्रकटश्रुतिः ॥ ४७ ॥
हैहयांतकरो रामो दुष्टक्षत्रविनाशकः ॥
सोमवंशहितैकात्मा यदुवंशविवर्धनः ॥ ४८ ॥

( अतःपरं दशमस्कंधपूर्वार्धस्थनामानि )

परब्रह्मावतरणः केशवक्लेशनाशनः ॥
भूमिभारावतरणो भक्तार्थाखिलमानसः ॥ ४९ ॥
सर्वभक्तनिरोधात्मा लीलानंतनिरोधकृत् ॥
भूमिष्ठपरमानंदो देवकीशुद्धिकारणम् ॥ १५० ॥
वसुदेवज्ञाननिष्ठसमजीवनिवारकः ॥
सर्ववैराग्यकरणस्वलीलाधारशोधकः ॥ ५१ ॥
मायाऽऽज्ञापनकर्ता च शेषसंभारसंभृतिः ॥
भक्तक्लेशपरिज्ञाता तन्निवारणतत्परः ॥ ५२ ॥
आविष्टवसुदेवांशो देवकीगर्भभूषणम् ॥
पूर्णतेजोमयः पूर्णः कंसाधृष्यप्रतापवान् ॥ ५३ ॥
विवेकज्ञानदाता च ब्रह्माद्यखिलसंस्तुतः ॥
सत्यो जगत्कल्पतरुर्नानारूपविमोहनः ॥ ५४ ॥
भक्तिमार्गप्रतिष्ठाता विद्वन्मोहप्रवर्तकः ॥

मूलकालगुणद्रष्टा नयनानंदभोजनम् ॥ ५५ ॥
वसुदेवसुखाब्धिश्च देवकीनयनामृतम् ॥
पितृमातृस्तुतः पूर्वसर्ववृत्तांतबोधकः ॥ ५६ ॥
गोकुलागतिलीलासवसुदेवकरस्थितिः ॥
सर्वेशत्वप्रकटनो मायाव्यत्ययकारकः ॥ ५७ ॥
ज्ञानमोहितदुष्टेशः प्रपंचास्मृतिकारणम् ॥
यशोदानंदनो नंदभाग्यभूर्गोकुलोत्सवः ॥ ५८ ॥
नंदप्रियो नंदसूनुर्यशोदायाः स्तनंधयः ॥
पूतनाऽसुपयःपाता मुग्धभावातिसुंदरः ॥ ५९ ॥
सुंदरीहृदयानंदो गोपीमंत्राभिमंत्रितः ॥
गोपालाश्चर्यरसकृच्छकटासुरखंडनः ॥ १६० ॥
नंदव्रजजनानंदी नंदभाग्यमहोदयः ॥
तृणावर्तवधोत्साहो यशोदाज्ञानविग्रहः ॥ ६१ ॥
बलभद्रप्रियः कृष्णः संकर्षणसहायवान् ॥
रामानुजो वासुदेवो गोष्ठांगणगतिप्रियः ॥ ६२ ॥
किंकिणीरवभावज्ञो वत्सपुच्छावलंबनः ॥
नवनीतप्रियो गोपीमोहसंसारनाशकः ॥ ६३ ॥
गोपबालकभावज्ञश्चौर्यविद्याविशारदः ॥

---

१ भाजनः.

मृत्स्नाभक्षणलीलास्यमाहात्म्यज्ञानदायकः ॥ ६४ ॥
धराद्रोणप्रीतिकर्ता दधिभांडविभेदनः ॥
दामोदरो भक्तवश्यो यमलार्जुनभंजनः ॥ ६५ ॥
बृहद्वनमहाश्चर्यो वृंदावनगतिप्रियः ॥
वत्सघाती बालकेलिर्बकासुरनिषूदनः ॥ ६६ ॥
अरण्यभोक्ताप्यथवा बाललीलापरायणः ॥
प्रोत्साहजनकश्चैवमघासुरनिषूदनः ॥ ६७ ॥
व्यालमोक्षप्रदः पुष्टो ब्रह्ममोहप्रवर्धनः ॥
अनंतमूर्तिः सर्वात्मा जंगमस्थावराकृतिः ॥ ६८ ॥
ब्रह्ममोहनकर्ता च स्तुत्य आत्मा सदाप्रियः ॥
पौगंडलीलाभिरतिर्गोचारणपरायणः ॥ ६९ ॥
वृंदावनलतागुल्मवृक्षरूपनिरूपकः ॥
नादब्रह्मप्रकटनो वयःप्रतिकृतिस्वनः ॥ १७० ॥
बर्हिनृत्यानुकरणो गोपालानुकृतिस्वनः ॥
सदाचारप्रतिष्ठाता बलश्रमनिराकृतिः ॥ ७१ ॥
तरुमूलकृताशेषतल्पशायी सखिस्तुतः ॥
गोपालसेवितपदः श्रीलालितपदांबुजः ॥ ७२ ॥
गोपसंप्रार्थितफलदाननाशितधेनुकः ॥

कालीयफणिमाणिक्यरंजितश्रीपदांबुजः ॥ ७३ ॥
दृष्टिसंजीविताशेषगोपगोगोपिकाप्रियः ॥
लीलासंपीतदावाग्निः प्रलंबवधपंडितः ॥ ७४ ॥
दावाग्न्यावृतगोपालदृष्ट्याच्छादनवह्निपः ॥
वर्षाशरद्विभूतिश्रीगोपीकामप्रबोधकः ॥ ७५ ॥
गोपीरत्नस्तुताशेषवेणुवाद्यविशारदः ॥
कात्यायनीव्रतव्याजसर्वभावाऽऽश्रितांगनः ॥ ७६ ॥
सत्संगतिस्तुतिव्याजस्तुतवृंदावनांघ्रिपः ॥
गोपक्षुच्छांतिसंव्याजविप्रभार्याप्रसादकृत् ॥ ७७ ॥
हेतुप्राप्तेंद्रयागस्वकार्यगोसवबोधकः ॥
शैलरूपकृताशेषरसभोगसुखावहः ॥ ७८ ॥
लीलागोवर्धनोद्धारपालितस्वव्रजप्रियः ॥
गोपस्वच्छंदलीलार्थगर्गवाक्यार्थबोधकः ॥ ७९ ॥
इंद्रधेनुस्तुतिप्राप्तगोविंदेंद्राभिधानवान् ॥
व्रतादिधर्मसंसक्तनंदक्लेशविनाशकः ॥ १८० ॥
नंदादिगोपमात्रेष्टवैकुंठगतिदायकः ॥
वेणुवादस्मरक्षोभमत्तगोपीविमुक्तिदः ॥ ८१ ॥
सर्वभावप्राप्तगोपीसुखसंवर्धनक्षमः ॥

---

१ फण.

गोपीगर्वप्रणाशार्थतिरोधानसुखप्रदः ॥ ८२ ॥
कृष्णभावव्याप्तविश्वगोपीभावितवेषधृक् ॥
राधाविशेषसंभोगप्राप्तदोषनिवारकः ॥ ८३ ॥
परमप्रीतिसंगीतसर्वाद्भुतमहागुणः ॥
मानापनोदनाक्रंदगोपीदृष्टिमहोत्सवः ॥ ८४ ॥
गोपीकाव्याप्तसर्वांगः स्त्रीसंभाषाविशारदः ॥
रासोत्सवमहासौख्यगोपीसंभोगसागरः ॥ ८५ ॥
जलस्थलरतिव्याप्तगोपीदृष्ट्यभिपूजितः ॥
शास्त्रानपेक्षकामैकमुक्तिद्वारविवर्धनः ॥ ८६ ॥
सुदर्शनमहासर्पग्रस्तनंदविमोचकः ॥
गीतमोहितगोपीधृक्शंखचूडविनाशकः ॥ ८७ ॥
गुणसंगीतसंतुष्टिर्गोपीसंसारविस्मृतिः ॥
अरिष्टमथनो दैत्यबुद्धिव्यामोहकारकः ॥ ८८ ॥
केशिघाती नारदेष्टो व्योमासुरविनाशकः ॥
अक्रूरभक्तिसंराद्धपादरेणुमहानिधिः ॥ ८९ ॥
रथावरोहशुद्धात्मा गोपीमानसहारकः ॥
ह्रदसंदर्शिताशेषवैकुंठाक्रूरसंस्तुतः ॥ १९० ॥
मथुरागमनोत्साहो मथुराभाग्यभाजनम् ॥

१ धृत.

मथुरानगरीशोभादर्शनोत्सुकमानसः ॥ ९१ ॥
दुष्टरंजकघाती च वयकार्चितविग्रहः ॥
वस्त्रमालासुशोभांगः कुब्जाऽऽलेपनभूषितः ॥९२॥
कुब्जासुरूपकर्ता च कुब्जारतिवरप्रदः ॥
प्रसादरूपसंतुष्टहरकोदंडखंडनः ॥ ९३ ॥
शकलाहतकंसाप्तधनूरक्षकसैनिकः ॥
जाग्रत्स्वप्नभयव्याप्तमृत्युलक्षणबोधकः ॥ ९४ ॥
मथुरामल्ल ओजस्वी मल्लयुद्धविशारदः ॥
सद्यः कुवलयापीडघाती चाणूरमर्दनः ॥ ९५ ॥
लीलाहतमहामल्लः शलतोशलघातकः ॥
कंसांतको जितामित्रो वासुदेवविमोचकः ॥ ९६ ॥
ज्ञाततत्त्वपितृज्ञानमोहनामृतवाङ्मयः ॥
उग्रसेनप्रतिष्ठाता यादवाऽऽधिविनाशकः ॥ ९७ ॥
नंदादिसांत्वनकरो ब्रह्मचर्यव्रते स्थितः ॥
गुरुशुश्रूषणपरो विद्यापारमितेश्वरः ॥ ९८ ॥
सांदीपनिमृतापत्यदाता कालांतकादिजित् ॥
गोकुलाश्वासनपरो यशोदानंदपोषकः ॥ ९९ ॥
गोपिकाविरहव्याजमनोगतिरतिप्रदः ॥

---

१ रजक. २ वायकाचित सुद्युप्सार्चि.

समोद्धवभ्रमरवाग्गोपिकामोहनाशकः ॥ २०० ॥
कुब्जारतिप्रदोऽक्रूरपवित्रीकृतभूगृहः ॥
पृथादुःखप्रहाता च पांडवानां सुखप्रदः ॥ १ ॥
( अथ दशमस्कंधोत्तरार्द्धस्थनामानि )
जरासंधसमानीतसैन्यघाती विधारकः ॥
यवनव्याप्तमथुराजनदत्तकुशस्थलिः ॥ २ ॥
द्वारकाद्भुतनिर्माणविस्मापितसुरासुरः ॥
मनुष्यमात्रभोगार्थभूम्यानीतेंद्रवैभवः ॥ ३ ॥
यवनव्याप्तमथुरानिर्गमानंदविग्रहः ॥
मुचुकुंदमहाबोधयवनप्राणदर्पहा ॥ ४ ॥
मुचुकुंदस्तुताशेषगुणकर्ममहोदयः ॥
फलप्रदानसंतुष्टिर्जन्मांतरितमोक्षदः ॥ ५ ॥
शिवब्राह्मणवाक्याप्तजयभीतिविभावनः ॥
प्रवर्षणप्रार्थितामिदानपुण्यमहोत्सवः ॥ ६ ॥
रुक्मिणीरमणः कामपिता प्रद्युम्नभावनः ॥
स्यमंतकमणिव्याजप्राप्तजांबुवतीपतिः ॥ ७ ॥
सत्यभामाप्राणपतिः कालिंदीरतिवर्धनः ॥
मित्रविंदापतिः सत्यपतिर्वृषनिषूदनः ॥ ८ ॥

१ ग्रहः. २ स्थलः. ३ जांबुवती.

भद्रावांछितभर्ता च लक्ष्मणावरणक्षमः ॥
इंद्रादिप्रार्थितवधनरकासुरसूदनः ॥ ९ ॥
मुरारिः पीठहंता च ताम्रादिप्राणहारकः ॥
षोडशस्त्रीसहस्रेशश्छत्रकुंडलदानकृत् ॥ २१० ॥
पारिजातापहरणो देवेंद्रमदनाशकः ॥
रुक्मिणीसमसर्वस्त्रीसाध्यभोगरतिप्रदः ॥ ११ ॥
रुक्मिणीपरिहासोक्तिवाक्तिरोधानकारकः ॥
पुत्रपौत्रमहाभाग्यगृहधर्मप्रदर्शकः ॥ १२ ॥
शंबरांतकसत्पुत्रविवाहहतरुक्मिकः ॥
उषापहृतपौत्रश्रीबाणबाहुनिवारकः ॥ १३ ॥
शीतज्वरभयव्याप्तज्वरसंस्तुतषड्गुणः ॥
शंकरप्रतियोद्धा च द्वंद्वयुद्धविशारदः ॥ १४ ॥
नृगपापप्रभेत्ता च ब्रह्मस्वगुणदोषहृक् ॥
विष्णुभक्तिविरोधैकब्रह्मस्वविनिवारकः ॥ १५ ॥
बलभद्राहितगुणो गोकुलप्रीतिदायकः ॥
गोपीस्नेहैकनिलयो गोपीप्राणस्थितिप्रदः ॥ १६ ॥
वाक्यातिगामियमुनाहलाकर्षणवैभवः ॥
पौंड्रकत्याजितस्पर्धः काशिराजविभेदनः ॥ १७ ॥
काशीनिदाहकरणः शिवभस्मप्रदायकः ॥

द्विविदप्राणघाती च कौरवाखर्वगर्वनुत् ॥ १८ ॥
लांगलाकृष्टनगरीसंविग्नाखिलनागरः ॥
प्रपन्नाभयदः सांबप्राप्तसन्मानभाजनम् ॥ १९ ॥
नारदान्विष्टचरणो भक्तविक्षेपनाशकः॥
सदाचारैकनिलयः सुधर्माध्यासितासनः ॥ २२० ॥
जरासंधावरुद्धेन विज्ञापितनिजक्रमः ॥
मंत्र्युद्धवाद्युक्तवाक्यप्रकारैकपरायणः ॥ २१ ॥
राजसूयादिमखकृत्संप्रार्थितसहायकृत् ॥
इंद्रप्रस्थप्रयाणार्थमहासंभारसंभृतिः ॥ २२ ॥
जरासंधवधव्याजमोचिताशेषभूमिपः ॥
सन्मार्गबोधको यज्ञक्षितिवारणतत्परः ॥ २३ ॥
शिशुपालहतिव्याजजयशापविमोचकः ॥
दुर्योधनाभिमानाब्धिशोषबाणवृकोदरः ॥ २४ ॥
महादेववरप्राप्तपुरशाल्वविनाशकः ॥
दंतवक्त्रवधव्याजविजयाघौघनाशकः ॥ २५ ॥
विदूरथप्राणहर्ता न्यस्तशस्त्रास्त्रविग्रहः ॥
उपधर्मविलिप्तांगसूतघाती वरप्रदः ॥ २६ ॥
बल्वलप्राणहरणपालितर्षिश्रुतिक्रियः ॥

१ प्राप्ति. २ मानन:.

सर्वतीर्थाघनाशार्थतीर्थयात्राविशारदः ॥ २७ ॥
ज्ञानक्रियाविभेदेष्टफलसाधनतत्परः ॥
सारथ्यादिक्रियाकर्ता भक्तवश्यत्वबोधकः ॥ २८ ॥
सुदामरंकभार्यार्थभूम्यानीतेंद्रवैभवः ॥
रविग्रहनिमित्तासकुरुक्षेत्रैकपावनः ॥ २९ ॥
नृपगोपीसमस्तस्त्रीपावनार्थाखिलक्रियः ॥
ऋषिमार्गप्रतिष्ठाता वसुदेवमखक्रियः ॥ २३० ॥
वसुदेवज्ञानदाता देवकीपुत्रदायकः ॥
अर्जुनस्त्रीप्रदाता च बहुलाश्वस्वरूपदः ॥ ३१ ॥
श्रुतदेवेष्टदाता च सर्वश्रुतिनिरूपितः ॥
महादेवाद्यतिश्रेष्ठो भक्तिलक्षणनिर्णयः ॥ ३२ ॥
वृकग्रस्तशिवत्राता नानावाक्यविशारदः ॥
नरगर्वविनाशार्थहृतब्राह्मणबालकः ॥ ३३ ॥
लोकालोकपरस्थानस्थितबालकदायकः ॥
द्वारकास्थमहाभोगनानास्त्रीरतिवर्द्धनः ॥ ३४ ॥
मनस्तिरोधानकृतव्यग्रस्त्रीचित्तभावितः ॥
(अतःपरमेकादशस्कंधस्थनामानि)
मुक्तिलीलाविहरणो मौसलव्याजसंहृतिः ॥ ३५ ॥

१ भोगी. २ स्त्री.

श्रीभागवतधर्मादिबोधको भक्तिनीतिकृत् ॥
उद्धवज्ञानदाता च पंचविंशतिधागुरुः ॥ ३६ ॥
आचारमुक्तिभक्त्यादिवक्ता शब्दोद्भवस्थितिः ॥
हंसो धर्मप्रवक्ता च सनकाद्युपदेशकृत् ॥ ३७ ॥
भक्तिसाधनवक्ता च योगसिद्धिप्रदायकः ॥
नानाविभूतिवक्ता च शुद्धधर्मावबोधकः ॥ ३८ ॥
मार्गत्रयविभेदात्मा नानाशंकानिवारकः ॥
भिक्षुगीताप्रवक्ता च शुद्धसांख्यप्रवर्तकः ॥ ३९ ॥
मनोगुणविशेषात्मा ज्ञापकोक्तपुरूरवाः ॥
पूजाविधिप्रवक्ता च सर्वसिद्धांतबोधकः ॥ २४० ॥
लघुस्वमार्गवक्ता च स्वस्थानगतिबोधकः ॥
यादवांगोपसंहर्ता सर्वाश्चर्यगतिक्रियः ॥ ४१ ॥

( अतःपरं द्वादशस्कंधस्थनामानि )

कालधर्मविभेदार्थवर्णनाशनतत्परः ॥
बुद्धोगुप्तार्थवक्ता च नानाशास्त्रविधायकः ॥ ४२ ॥
नष्टधर्ममनुष्यादिलक्षणज्ञापनोत्सुकः ॥
आश्रयैकगतिज्ञाता कल्किः कलिमलापहः ॥ ४३ ॥
शास्त्रवैराग्यसंबोधो नानाप्रलयबोधकः ॥
विशेषतः शुकव्याजपरीक्षिज्ज्ञानबोधकः ॥ ४४ ॥

शुकेष्टगतिरूपात्मा परीक्षिद्देहमोक्षदः ॥
शब्दरूपोनादरूपो वेदरूपो विभेदनः ॥ ४५ ॥
व्यासः शाखाप्रवक्ता च पुराणार्थप्रवर्तकः ॥
मार्कंडेयप्रसन्नात्मा वटपत्रपुटेशयः ॥ ४६ ॥
मायाव्याप्तमहामोहदुःखशांतिप्रवर्तकः[1] ॥
महादेवस्वरूपश्च भक्तिदाता कृपानिधिः ॥ ४७ ॥
आदित्यांतर्गतः कालो द्वादशात्मा सुपूजितः ॥
श्रीभागवतरूपश्च सर्वार्थफलदायकः ॥ ४८ ॥
इतीदं कीर्तनीयस्य हरेर्नामसहस्रकम् ॥
पंचसप्ततिविस्तीर्णं पुराणांतरभाषितम् ॥ ४९ ॥
य एतत्प्रातरुत्थाय श्रद्धावान्सुसमाहितः ॥
जपेदर्थाहितमतिः स गोविंदपदं व्रजेत् ॥ २५० ॥
सर्वधर्मविनिर्मुक्तः सर्वसाधनवर्जितः ॥
एतद्धारणमात्रेण कृष्णस्य पदवीं व्रजेत् ॥ ५१ ॥
हर्यावेशितचित्तेन श्रीभागवतसागरात् ॥
समुद्धृतानि नामानि चिंतामणिनिभानि हि ॥५२॥
कंठस्थितान्यर्थदीप्त्या बाधंतेऽज्ञानजं तमः ॥
भक्तिं श्रीकृष्णदेवस्य साधयंति विनिश्चितम् ॥ ५३ ॥

---

१ प्रवर्तनः इति पाठः.

किं बहूक्तेन भगवान्नामभिः स्तुतषड्गुणः ॥
आत्मभावं नयत्याशु भक्तिं च कुरुते दृढाम् ॥५४॥
यः कृष्णभक्तिमिह वांछति साधनौघै-
र्नामानि भासुरयशांसि जपेत्स नित्यम् ॥
तं वै हरिस्स्वपुरुषं कुरुतेऽतिशीघ्र-
मात्मार्पणं समधिगच्छति भावतुष्टः ॥ ५५ ॥
श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रु-
ग्राजन्यवंशदहनानपवर्गवीर्य ॥
गोविंद गोपवनिताव्रजभृत्यगीत-
तीर्थश्रवः श्रवणमंगल पाहि भृत्यान् ॥२५६॥
इति श्रीभागवतसारसमुच्चये वैश्वानरोक्तं पुरुषोत्तम-
नाम्नां सहस्रं संपूर्णम् ॥ शुभमस्तु ॥

## ॥ अथ यमुनाष्टकम् ॥

श्रीगोपीजनवल्लभाय नमः ॥ नमामि यमुना-
महं सकलसिद्धिहेतुं मुदा मुरारिपदपंकजस्फुरद-
मंदरेणूत्कटाम् ॥ तटस्थनवकाननप्रकटमोदपुष्पां-
बुना सुरासुरसुपूजितस्मरपितुः श्रियं बिभ्रतीम् ॥१॥
कलिंदगिरिमस्तके पतदमंदपूरोज्ज्वला विलासगम-
नोल्लसत्प्रकटगंडशैलोन्नता ॥ सघोषगतिदंतुरा सम-

धिरूढदोलोत्तमा मुकुंदरतिवर्धिनी जयति पद्मबंधोः सुता ॥ २ ॥ भुवं भुवनपावनीमधिगतामनेकस्वनैः प्रियाभिरिव सेवितां शुकमयूरहंसादिभिः ॥ तरङ्गभुजकंकणप्रकटमुक्तिकावालुकां नितंबतटसुंदरीं नमत कृष्णतुर्यप्रियाम् ॥ ३ ॥ अनंतगुणभूषिते शिवविरंचिदेवस्तुते घनाघननिभे सदा ध्रुवपराशराभीष्टदे ॥ विशुद्धमथुरातटे सकलगोपगोपीवृते कृपाजलधिसंश्रिते मम मनःसुखं भावय ॥ ४ ॥ यया चरणपद्मजा मुररिपोः प्रियंभावुका समागमनतो भवत्सकलसिद्धिदा सेवताम् ॥ तया सदृशतामियात्कमलजासपत्नीव यद्धरिप्रियकलिंदया मनसि मे सदा स्थीयताम् ॥ ५ ॥ नमोऽस्तु यमुने सदा तव चरित्रमत्यद्भुतं न जातु यमयातना भवति ते पयःपानतः ॥ यमोऽपि भगिनीसुतान्कथमुहन्ति दुष्टानपि प्रियो भवति सेवनात्तव हरेर्यथा गोपिकाः ॥ ६ ॥ ममास्तु तव सन्निधौ तनुनवत्वमेतावता न दुर्लभतमा रतिर्मुररिपो मुकुंदप्रिये ॥ अतोऽस्तु तव लालना सुरधुनी परं संगमात्तवैव भुवि कीर्तिता न तु कदापि पुष्टिस्थितैः ॥ ७ ॥ स्तुतिं तव

करोति कः कमलजासपत्नि प्रिये हरेर्यदनुसेवया भवति सौख्यमामोक्षतः ॥ इयं तव कथाधिका सकलगोपिकासंगमस्मरश्रमजलाणुभिः सकलगात्रजैः संगमः ॥८॥ तवाष्टकमिदं मुदा पठति सूरसूते सदा समस्तदुरितक्षयो भवति वै मुकुंदे रतिः ॥ तया सकलसिद्धयो मुररिपुश्च संतुष्यति स्वभावविजयो भवेद्वदतिवल्लभः श्रीहरेः ॥ ९ ॥

इति श्रीवल्लभाचार्यविरचितं श्रीयमुनाष्टकस्तोत्रं संपूर्णम् ।

## ॥ अथ बालबोधः ॥

श्रीकृष्णाय नमः ॥

नत्वा हरिं सदानंदं सर्वसिद्धान्तविग्रहम् ॥
बालप्रबोधनार्थाय वदामि सुविनिश्चितम् ॥ १ ॥
धर्मार्थकाममोक्षाख्याश्चत्वारोऽर्था मनीषिणाम् ॥
जीवेश्वरविचारेण द्विधा ते हि विचारिताः ॥ २ ॥
अलौकिकास्तु वेदोक्ताः साध्यसाधनसंयुताः ॥
लौकिकाऋषिभिः प्रोक्तास्तथैवेश्वरशिक्षया ॥ ३ ॥
लौकिकास्तुप्रवक्ष्यामि वेदादाद्या यतः स्थिताः ॥
धर्मशास्त्राणि नीतिश्च कामशास्त्राणि च क्रमात् ॥४॥

त्रिवर्गसाधकानीति न तन्निर्णय उच्यते ॥
मोक्षे चत्वारि शास्त्राणि लौकिके परतः स्वतः ॥५॥
द्विधा द्वेद्वे स्वतस्तत्र सांख्ययोगौ प्रकीर्तितौ ॥
त्यागात्यागविभागेन सांख्ये त्यागः प्रकीर्तितः ॥६॥
अहंताममतानाशे सर्वथा निरहंकृतौ ॥
स्वरूपस्थो यदा जीवः कृतार्थः स निगद्यते ॥ ७ ॥
तदर्थंप्रक्रिया काचित् पुराणेऽपि निरूपिता ॥
ऋषिभिर्बहुधा प्रोक्ता फलमेकमबाह्यतः ॥ ८ ॥
अत्यागे योगमार्गो हि त्यागोऽपि मनसैव हि ॥
यमादयस्तु कर्तव्याः सिद्धे योगे कृतार्थता ॥ ९ ॥
पराश्रयेण मोक्षस्तु द्विधा सोऽपि निरूप्यते ॥
ब्रह्मा ब्राह्मणतां यातस्तद्रूपेण च सेव्यते ॥ १० ॥
ते सर्वथा न चाद्येन शास्त्रं किंचिदुदीरितम् ॥
अतः शिवश्च विष्णुश्च जगतो हितकारकौ ॥ ११ ॥
वस्तुनः स्थितिसंहारौ कार्यौ शास्त्रप्रवर्तकौ ॥
ब्रह्मैव तादृशं यस्मात् सर्वात्मकतयोदितौ ॥ १२ ॥
निर्दोषपूर्णगुणता तत्तच्छास्त्रे तयोः कृता ॥
भोगमोक्षफले दातुं शक्तौ द्वावपि यद्यपि ॥ १३ ॥

---

१ वस्तुनः स्थितिसंहारे कार्ये । वस्तुस्थितौ च संहारे कार्ये,

भोगः शिवेन मोक्षस्तु विष्णुनेति विनिश्चयः ॥
लोकेऽपि यत्प्रभुर्भुंक्ते तन्न यच्छति कर्हिचित् ॥ १४ ॥
अतिप्रियाय तदपि दीयते क्वचिदेव हि ॥
नियतार्थप्रदानेन तदीयत्वं तदाश्रयः ॥ १५ ॥
प्रत्येकं साधनं चैतत् द्वितीयार्थे महान् श्रमः ॥
जीवाः स्वभावतो दुष्टा दोषाभावाय सर्वदा ॥ १६ ॥
श्रवणादिकृतः प्रेम्णा सर्वं कार्यं हि सिध्यति ॥
मोक्षस्तु सुलभो विष्णोर्भोगश्च शिवतस्तथा ॥ १७ ॥
समर्पणेनात्मनो हि तदीयत्वं भवेद् ध्रुवम् ॥
अतदीयतया चापि केवलश्चेत्समाश्रितः ॥ १८ ॥
तदाश्रयतदीयत्वबुद्ध्यै किंचित् समाचरेत् ॥
स्वधर्ममनुतिष्ठन् वै भारद्वैगुण्यमन्यथा ॥
इत्येवं कथितं सर्वं नैतज्ज्ञाने भ्रमः पुनः ॥ १९ ॥

इति श्रीवल्लभाचार्यविरचितो बालबोधः संपूर्णः ।

## अथ सिद्धांतमुक्तावली ।

श्रीकृष्णाय नमः ।

नत्वा हरिं प्रवक्ष्यामि स्वसिद्धांतविनिश्चयम् ॥
कृष्णसेवा सदा कार्या मानसी सा परा मता ॥ १ ॥

---

१ विष्णोः सुलभो इति पा०.

चेतस्तत्प्रवणं सेवा तत्सिद्ध्यै तनुवित्तजा ॥
ततः संसारदुःखस्य निवृत्तिर्ब्रह्मबोधनम् ॥ २ ॥
परं ब्रह्म तु कृष्णो हि सच्चिदानंदकं बृहत् ॥
द्विरूपं तद्धि सर्वं स्यादेकं तस्माद्विलक्षणम् ॥ ३ ॥
अपरं तत्र पूर्वस्मिन्वादिनो बहुधा जगुः ॥
मायिकं सगुणं कार्यं स्वतंत्रं चेति नैकधा ॥ ४ ॥
तदेवैतत्प्रकारेण भवतीति श्रुतेर्मतम् ॥
द्विरूपं चापि गंगावज्ज्ञेयं सा जलरूपिणी ॥ ५ ॥
माहात्म्यसंयुता नृणां सेवतां भुक्तिमुक्तिदा ॥
मर्यादामार्गविधिना तथा ब्रह्मापि बुध्यताम् ॥ ६ ॥
तत्रैव देवतामूर्तिर्भक्तया या दृश्यते क्वचित् ॥
गंगायां च विशेषेण प्रवाहाभेदबुद्धये ॥ ७ ॥
प्रत्यक्षा सा न सर्वेषां प्राकाम्यं स्यात्तया जले ॥
विहिताच्च फलात्तद्धि प्रतीत्यापि विशिष्यते ॥ ८ ॥
यथा जलं तथा सर्वं यथा शक्ता तथा बृहत् ॥
यथा देवी तथा कृष्णस्तत्राप्येतदिहोच्यते ॥ ९ ॥
जगत्तु त्रिविधं प्रोक्तं ब्रह्मविष्णुशिवास्ततः ॥
देवतारूपवत्प्रोक्ता ब्रह्मणीत्थं हरिर्मतः ॥ १० ॥
कामचारस्तु लोकेऽस्मिन् ब्रह्मादिभ्यो न चान्यथा ॥

परमानंदरूपे तु कृष्णे स्वात्मनि निश्चयः ॥ ११ ॥
अतस्तु ब्रह्मवादेन कृष्णे बुद्धिर्विधीयताम् ॥
आत्मनि ब्रह्मरूपे तु छिद्रा व्योम्नीव चेतनाः ॥ १२ ॥
उपाधिनाशो विज्ञाने ब्रह्मात्मत्वावबोधने ॥
गंगातीरस्थितोयद्वद्देवतां तत्र पश्यति ॥ १३ ॥
तथा कृष्णं परं ब्रह्म स्वस्मिञ्ज्ञानी प्रपश्यति ॥
संसारी यस्तु भजते स दूरस्थो यथा तथा ॥ १४ ॥
अपेक्षितजलादीनामभावात्तत्र दुःखभाक् ॥
तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः ॥ १५ ॥
आत्मानंदसमुद्रस्थं कृष्णमेव विचिंतयेत् ॥
लोकार्थी चेद्भजेत्कृष्णं क्लिष्टो भवति सर्वथा ॥ १६ ॥
क्लिष्टेऽपि चेद्भजेत्कृष्णं लोको नश्यति सर्वथा ॥
ज्ञानाभावे पुष्टिमार्गी तिष्ठेत्पूजोत्सवादिषु ॥ १७ ॥
मर्यादास्थस्तु गंगायां श्रीभागवततत्परः ॥
अनुग्रहः पुष्टिमार्गे नियामक इति स्थितिः ॥ १८ ॥
उभयोस्तु क्रमेणैव पूर्वोक्तैव फलिष्यति ॥
ज्ञानाधिको भक्तिमार्ग एवं तस्यां निरूपितः ॥ १९ ॥
भक्त्यभावे तु तीरस्थो यथा दुष्टैः स्वकर्मभिः ॥
अन्यथाभावमापन्नस्तस्मात्स्थानाच्च नश्यति ॥ २० ॥

एवं स्वशास्त्रसर्वस्वं मया गुप्तं निरूपितम् ॥
एतद् बुद्ध्वा विमुच्येत पुरुषः सर्वसंशयात् ॥ २१ ॥

इति श्रीवल्लभाचार्यविरचिता सिद्धांतमुक्तावलिः समाप्ता ।

# अथ पुष्टिप्रवाहमर्यादाभेदः ।

श्रीकृष्णाय नमः ।

पुष्टिप्रवाहमर्यादा विशेषेण पृथक् पृथक् ॥
जीवदेहक्रियाभेदैः प्रवाहेण फलेन च ॥ १ ॥
वक्ष्यामि सर्वसंदेहा न भविष्यंति यच्छ्रुतेः ॥
भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चयः ॥ २ ॥
द्वौ भूतसर्गावित्युक्तेः प्रवाहोऽपि व्यवस्थितः ॥
वेदस्य विद्यमानत्वान्मर्यादापि व्यवस्थिता ॥ ३ ॥
कश्चिदेव हि भक्तो हि यो मद्भक्त इतीरणात् ॥
सर्वत्रोत्कर्षकथनात्पुष्टिरस्तीति निश्चयः ॥ ४ ॥
न सर्वोऽतः प्रवाहाद्धि भिन्नो वेदाच्च भेदतः ॥
यदा यस्येति वचनान्नाहं वेदैरितीरणात् ॥ ५ ॥
मार्गैकत्वेऽपि चेदंत्यौ तनू भक्त्यागमौ मतौ ॥
न तद्युक्तं सूत्रतो हि भिन्नो युक्त्या हि वैदिकः ॥ ६ ॥
जीवदेहकृतीनां च भिन्नत्वं नित्यता श्रुतेः ॥
यथातद्वत्पुष्टिमार्गे द्वयोरपि निषेधतः ॥ ७ ॥

प्रमाणभेदाद्भिन्नो हि पुष्टिमार्गो निरूपितः ॥
सर्गभेदं प्रवक्ष्यामि स्वरूपांगक्रियायुतम् ॥ ८ ॥
इच्छामात्रेण मनसा प्रवाहं सृष्टवान् हरिः ॥
वचसा वेदमार्गं हि पुष्टिं कायेन निश्चयः ॥ ९ ॥
मूलेच्छातः फलं लोके वेदोक्तं वैदिकेऽपि च ॥
कायेन तु फलं पुष्टौ भिन्नेच्छातोऽपि नैकता ॥ १० ॥
तानहं द्विषतो वाक्याद्भिन्ना जीवाः प्रवाहिणः ॥
अत एवेतरौ भिन्नौ सांतौ मोक्षप्रवेशतः ॥ ११ ॥
तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशयः ॥
भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत् ॥ १२ ॥
स्वरूपेणावतारेण लिंगेन च गुणेन च ॥
तारतम्यं न स्वरूपे देहे वा तत्क्रियासु वा ॥ १३ ॥
तथापि यावता कार्यं तावत्तस्य करोति हि ॥
ते हि द्विधा शुद्धमिश्रभेदान्मिश्रास्त्रिधा पुनः ॥१४॥
प्रवाहादिविभेदेन भगवत्कार्यसिद्धये ॥
पुष्ट्या विमिश्राः सर्वज्ञाः प्रवाहेण क्रियारता ॥ १५ ॥
मर्यादया गुणज्ञास्ते शुद्धाः प्रेम्णातिदुर्लभाः ॥
एवं सर्गस्तु तेषां हि फलं त्वत्र निरूप्यते ॥ १६ ॥
भगवानेव हि फलं स यथाविर्भवेद्भुवि ॥

गुणस्वरूपभेदेन तथा तेषां फलं भवेत् ॥ १७ ॥
आसक्तौ भगवानेव शापं दापयति क्वचित् ॥
अहंकारेऽथवा लोके तन्मार्गस्थापनाय हि ॥ १८ ॥
न ते पाषंडतां यान्ति न च रोगाद्युपद्रवाः ॥
महानुभावाः प्रायेण शास्त्रं शुद्धत्वहेतवे ॥ १९ ॥
भगवत्तारतम्येन तारतम्यं भजंति हि ॥
वैदिकत्वं लौकिकत्वं कापट्यात्तेषु नान्यथा ॥२०॥
वैष्णवत्वं हि सहजं ततोऽन्यत्र विपर्ययः ॥
संबंधिनस्तु ये जीवाः प्रवाहस्थास्तथाऽपरे ॥ २१ ॥
चर्षणीशब्दवाच्यास्ते ते सर्वे सर्ववर्त्मसु ॥
क्षणात् सर्वत्वमायांति रुचिस्तेषां न कुत्रचित् ॥२२॥
तेषां क्रियानुसारेण सर्वत्र सकलं फलम् ॥
प्रवाहस्थान्प्रवक्ष्यामि स्वरूपांगक्रियायुतान् ॥ २३ ॥
जीवास्ते ह्यासुराः सर्वे प्रवृत्तिंचेति वर्णिताः ॥
ते च द्विधा प्रकीर्त्यंते ह्यज्ञदुर्ज्ञविभेदतः ॥ २४ ॥
दुर्ज्ञास्ते भगवत्प्रोक्ता ह्यज्ञास्तानन्तु ये पुनः ॥
प्रवाहेऽपि समागत्य पुष्टिस्थस्तैर्न युंज्यते ॥ २५ ॥
सोऽपि तैस्तत्कुले जातः कर्मणा जायते यतः ॥२६॥

इति श्रीवल्लभाचार्यविरचितः पुष्टिप्रवाहमर्यादाभेदः समाप्तः ।

१ संड. २ ह्व. ३ स्तैन मुच्यते.

# अथ सिद्धांतरहस्यम् ।

श्रीकृष्णाय नमः ।

श्रावणस्यामले पक्षे एकादश्या महानिशि ॥
साक्षाद्भगवता प्रोक्तं तदक्षरश उच्यते ॥ १ ॥
ब्रह्मसंबंधकरणात्सर्वेषां देहजीवयोः ॥
सर्वदोषनिवृत्तिर्हि दोषाः पंचविधाः स्मृताः ॥ २ ॥
सहजा देशकालोत्था लोकवेदनिरूपिताः ॥
संयोगजाः स्पर्शजाश्च न मंतव्याः कथं च न ॥३॥
अन्यथा सर्वदोषाणां न निवृत्तिः कथं च न ॥
असमर्पितवस्तूनां तस्माद्वर्जनमाचरेत् ॥ ४ ॥
निवेदिभिः समर्प्यैव सर्वं कुर्यादिति स्थितिः ॥
न मतं देवदेवस्य सामिभुक्तसमर्पणम् ॥ ५ ॥
तस्मादादौ सर्वकार्ये सर्ववस्तुसमर्पणम् ॥
दत्तापहारवचनं तथा च सकलं हरेः ॥ ६ ॥
न ग्राह्यमिति वाक्यं हि भिन्नमार्गपरं मतम् ॥
सेवकानां यथा लोके व्यवहारः प्रसिध्यति ॥ ७ ॥
तथा कार्यं समर्प्यैव सर्वेषां ब्रह्मता ततः ॥

---

१ कार्यमिति पा०.

गंगात्वं सर्वदोषाणां गुणदोषादिवर्णना ॥ ८ ॥
गंगात्वेन निरूप्या स्यात्तद्वदत्रापि चैव हि ॥ ९ ॥
इति श्रीवल्लभाचार्यविरचितं सिद्धांतरहस्यं समाप्तम् ।

## अथ नवरत्नस्तोत्रम् ।

श्रीकृष्णाय नमः ।

चिंता कापि न कार्या निवेदितात्मभिः कदापीति ॥
भगवानपि पुष्टिस्थो न करिष्यति लौकिकीं च गतिं १
निवेदनं तु स्मर्तव्यं सर्वथा तादृशैर्जनैः ॥
सर्वेश्वरश्च सर्वात्मा निजेच्छातः करिष्यति ॥ २ ॥
सर्वेषां प्रभुसंबंधो न प्रत्येकमिति स्थितिः ॥
अतोऽन्यविनियोगेऽपि चिंता का स्वस्य सोऽपि चेत् ३
अज्ञानादथवा ज्ञानात्कृतमात्मनिवेदनम् ॥
यैः कृष्णसात्कृतप्राणैस्तेषां का परिदेवना ॥ ४ ॥
तथा निवेदने चिंता त्याज्या श्रीपुरुषोत्तमे ॥
विनियोगेऽपि सा त्याज्या समर्थो हि हरिः स्वतः ॥५॥
लोके स्वास्थ्यं तथा वेदे हरिस्तु न करिष्यति ॥
पुष्टिमार्गस्थितो यस्मात्साक्षिणो भवताऽखिलाः ॥६॥

---

१ गंगात्वे इति पा०. २ परिदेवना.

सेवाकृतिर्गुरोराज्ञाऽबाधनं वा हरीच्छया ॥
अतः सेवापरं चित्तं विधाय स्थीयतां सुखम् ॥ ७॥
चित्तोद्वेगं विधायापि हरिर्यद्यत्करिष्यति ॥
तथैव तस्य लीलेति मत्वा चिंता द्रुतं त्यजेत् ॥ ८॥
तस्मात्सर्वात्मना नित्यं श्रीकृष्णः शरणं मम ॥
वदद्भिरेवं सततं स्थेयमित्येव मे मतिः ॥ ९ ॥

इति श्रीवल्लभाचार्यविरचितं नवरत्नस्तोत्रं समाप्तम् ।

## अथांतःकरणप्रबोधः ।

श्रीकृष्णाय नमः ।

अंतःकरण मद्वाक्यं सावधानतया शृणु ॥
कृष्णात्परं नास्ति दैवं वस्तु दोषविवर्जितम् ॥ १ ॥
चांडाली चेद्राजपत्नी जाता राज्ञा च मानिता ॥
कदाचिदपमानेऽपि मूलतः का क्षतिर्भवेत् ॥ २ ॥
समर्पणादहं पूवमुत्तमः किं सदा स्थितः ॥
काममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥
सत्यसंकल्पतो विष्णुर्नान्यथा तु करिष्यति ॥
आज्ञैव कार्या सततं स्वामिद्रोहोऽन्यथा भवेत् ॥ ४ ॥
सेवकस्य तु धर्मोऽयं स्वामी स्वस्य करिष्यति ॥

१ संकल्पिनो इति पाठः.

आज्ञापूर्वं तु या जाता गंगासागरसंगमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्वयं मया ॥
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥
पश्चात्तापः कथं तत्र सेवकोऽहं न चान्यथा ॥
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदा चन ॥ ७ ॥
सर्वं समर्पितं भक्त्या कृतार्थोऽसि सुखी भव ॥
प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्तव्यं वरस्तुष्यति नान्यथा ॥
लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥
अशक्ये हरिरेवास्ति मोहं मागाः कथं च न ॥
इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ॥ १० ॥
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिततां व्रजेत् ॥ ११ ॥

इति श्रीवल्लभाचार्यविरचितोंतःकरणप्रबोधः समाप्तः ।

## ॥ अथ विवेकधैर्याश्रयः ।

श्रीकृष्णाय नमः ।

विवेकधैर्ये सततं रक्षणीये तथाश्रयः ॥
विवेकस्तु हरिः सर्वं निजेच्छातः करिष्यति ॥ १ ॥
प्रार्थिते वा ततः किं स्यात्स्वाम्यभिप्रायसंशयात् ॥
सर्वत्र तस्य सर्वं हि सर्वसामर्थ्यमेव च ॥ २ ॥

अभिमानश्च संत्याज्यः स्वाम्याधीनत्वभावनात् ॥
विशेषतश्चेदाज्ञा स्यादंतःकरणगोचरः ॥ ३ ॥
तदा विशेषगत्यादि भाव्यं भिन्नं तु दैहिकात् ॥
आपद्गत्यादिकार्येषु हठस्त्याज्यश्च सर्वथा ॥ ४ ॥
अनाग्रहश्च सर्वत्र धर्माधर्माग्र्यदर्शनम् ॥
विवेकोऽयं समाख्यातो धैर्यं तु विनिरूप्यते ॥ ५ ॥
त्रिदुःखसहनं धैर्यमामृतेः सर्वतः सदा ॥
तक्रवद्देहवद्भाव्यं जडवद्गोपभार्यवत् ॥ ६ ॥
प्रतीकारो यदृच्छातः सिद्धश्चेन्नाग्रही भवेत् ॥
भार्यादीनां तथान्येषामसतश्चाक्रमं सहेत् ॥ ७ ॥
स्वयमिंद्रियकार्याणि कायवाङ्मनसा त्यजेत् ॥
अशूरेणापि कर्तव्यं स्वस्यासामर्थ्यभावनात् ॥ ८ ॥
अशक्ये हरिरेवास्ति सर्वमाश्रयतो भवेत् ॥
एतत्सहनमत्रोक्तमाश्रयोऽतो निरूप्यते ॥ ९ ॥
ऐहिके परलोके च सर्वथा शरणं हरिः ॥
दुःखहानौ तथा पापे भये कामाद्यपूरणे ॥ १० ॥
भक्तद्रोहे भक्त्यभावे भक्तैश्चातिक्रमे कृते ॥
अशक्ये वा सुशक्ये वा सर्वथा शरणं हरिः ॥११॥

१ कामार्थ.

अहंकारकृते चैव पोष्यपोषणरक्षणे ॥
पोष्यतिक्रमणे चैव तथांतेवास्यतिक्रमे ॥ १२ ॥
अलौकिकमनःसिद्धौ सर्वार्थे शरणं हरिः ॥
एवं चित्ते सदा भाव्यं वाचा च परिकीर्तयेत् ॥१३॥
अन्यस्य भजनं तत्र स्वतो गमनमेव च ॥
प्रार्थनाकार्यमात्रेऽपि ततोऽन्यत्र विवर्जयेत् ॥ १४ ॥
अविश्वासो न कर्तव्यः सर्वथा बाधकस्तु सः ॥
ब्रह्मास्त्रचातकौ भाव्यौ प्राप्तं सेवेत निर्ममः ॥ १५ ॥
यथाकथंचित्कार्याणि कुर्यादुच्चावचान्यपि ॥
किं वा प्रोक्तेन बहुना शरणं भावयेद्धरिम् ॥ १६ ॥
एवमाश्रयणं प्रोक्तं सर्वेषां सर्वदा हितम् ॥
कलौ भक्त्यादिमार्गा हि दुःसाध्या इति मे मतिः॥१७॥

इति श्रीवल्लभाचार्यविरचितं विवेकधैर्याश्रयनिरूपणं समाप्तम्।

## अथ कृष्णाश्रयः।

श्रीकृष्णाय नमः।

सर्वमार्गेषु नष्टेषु कलौ च खलधर्मिणि ॥
पाषंडप्रचुरे लोके कृष्ण एव गतिर्मम ॥ १ ॥

१ खल. २ गंड.

म्लेच्छाक्रांतेषु देशेषु पापैकनिलयेषु च ॥
सत्पीडाव्यग्रलोकेषु कृष्ण एव गतिर्मम ॥ २ ॥
गंगादितीर्थवर्येषु दुष्टैरेवावृतेष्विह ॥
तिरोहिताधिदेवेषु कृष्ण एव गतिर्मम ॥ ३ ॥
अहंकारविमूढेषु सत्सु पापानुवर्तिषु ॥
लाभपूजार्थयत्नेषु कृष्ण एव गतिर्मम ॥ ४ ॥
अपरिज्ञाननष्टेषु मंत्रेष्वव्रतयोगिषु ॥
तिरोहितार्थदैवेषु कृष्ण एव गतिर्मम ॥ ५ ॥
नाना कार्यविनष्टेषु सर्वकर्मव्रतादिषु ॥
पापैकप्रयत्नेषु कृष्ण एव गतिर्मम ॥ ६ ॥
अजामिलादिदोषाणां नाशकोऽनुभवे स्थितः ॥
ज्ञापिताखिलमाहात्म्यः कृष्ण एव गतिर्मम ॥ ७ ॥
प्राकृताः सकला देवा गणितानंदकं बृहत् ॥
पूर्णानंदो हरिस्तस्मात्कृष्ण एव गतिर्मम ॥ ८ ॥
विवेकधैर्यभक्त्यादिरहितस्य विशेषतः ॥
पापसक्तस्य दीनस्य कृष्ण एव गतिर्मम ॥ ९ ॥
सर्वसामर्थ्यसहितः सर्वत्रैवाखिलार्थकृत् ॥
शरणस्थसमुद्धारं कृष्णं विज्ञापयाम्यहम् ॥ १० ॥

१ मन्त्रेषु. २ समुद्धारे.

कृष्णाश्रयमिदं स्तोत्रं यः पठेत्कृष्णसन्निधौ ॥
तस्याश्रयो भवेत् कृष्ण इति श्रीवल्लभोऽब्रवीत्॥११॥

इति श्रीवल्लभाचार्यविरचितं कृष्णाश्रयस्तोत्रं समाप्तम्।

## अथ चतुःश्लोकी।

श्रीकृष्णाय नमः।

सर्वदा सर्वभावेन भजनीयो व्रजाधिपः ॥
स्वस्यायमेव धर्मो हि नान्यः क्वापि कदा च न ॥ १ ॥
एवं सदा स्म[1] कर्तव्यं स्वयमेव करिष्यति ॥
प्रभुः सर्वसमर्थो हि ततो निश्चिततां व्रजेत् ॥ २ ॥
यदि श्रीगोकुलाधीशो धृतः सर्वात्मना हृदि ॥
ततः किमपरं ब्रूहि लौकिकैर्वैदिकैरपि ॥ ३ ॥
अतः सर्वात्मना शश्वद्गोकुलेश्वरपादयोः ॥
स्मरणं भजनं चापि न त्याज्यमिति मे मतिः ॥ ४ ॥

इति श्री वल्लभाचार्यविरचिता चतुःश्लोकी समाप्ता।

## अथ भक्तिवर्धिनी।

श्रीकृष्णाय नमः।

यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ॥
बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥

१ स्वकर्तव्यं.

बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः ॥
अव्यावृत्तो भजेत् कृष्णं पूजया श्रवणादिभिः ॥ २ ॥
व्यावृत्तोऽपि हरौ चित्तं श्रवणादौ यतेत्सदा ॥
ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ ३ ॥
बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ॥
स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥
गृहस्थानां बाधकत्वमनात्मत्वं च भासते ॥
यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥
तादृशस्यापि सततं गृहस्थानं विनाशकम्[१] ॥
त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥
लभते सुदृढां भक्तिं सर्वतोऽप्यधिकां पराम् ॥
त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥
अतः स्थेयं हरिस्थाने तदीयैः सहतत्परैः ॥
अदूरे विप्रकर्षे वा यथाचित्तं न दुष्यति ॥ ८ ॥
सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ॥
यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥
बाधसंभावनायां तु नैकांते वास इष्यते ॥
हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥

१ गेहस्थानविनाशनम् इति पा०.

इत्येवं भगवच्छास्त्रगूढतत्त्वं निरूपितम् ॥
य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः ॥ ११ ॥
इति श्रीवल्लभाचार्यविरचिता भक्तिवर्धिनी समाप्ता ।

## अथ जलभेदः ।

श्रीकृष्णाय नमः ।

नमस्कृत्य हरिं वक्ष्ये तद्गुणानाविभेदकान् ॥
भवान्विंशतिधा भिन्नान्सर्वसंदेहवारकान् ॥ १ ॥
गुणभेदास्तु तावंतो यावंतो हि जले मताः ॥
गायकाः कूपसंकाशा गंधर्वा इति विश्रुताः ॥ २ ॥
कूपभेदास्तु यावंतस्तावंतस्तेऽपि संमताः ॥
कुल्याः पौराणिकाः प्रोक्ताः पारंपर्ययुता भुवि ॥ ३ ॥
क्षेत्रप्रविष्टास्ते चापि संसारोत्पत्तिहेतवः ॥
वश्यादिसहिता मत्ता गायका गर्तसंज्ञिताः ॥ ४ ॥
जलार्थमेव गर्तास्तु नीचा गानोपजीविनः ॥
ह्रदास्तु पंडिताः प्रोक्ता भगवच्छास्त्रतत्पराः ॥ ५ ॥
संदेहवारकास्तत्र सूदा गंभीरमानसाः ॥
सरःकमलसंपूर्णाः प्रेमयुक्तास्तथा बुधाः ॥ ६ ॥
अल्पश्रुताः प्रेमयुक्ता वेशंताः परिकीर्तिताः ॥
कर्मशुद्धाः पल्वलानि तथाल्पश्रुतभक्तयः ॥ ७ ॥

योगध्यानादिसंयुक्ता गुणा वर्ष्याः प्रकीर्तिताः ॥
तपोज्ञानादिभावेन स्वेदजास्तु प्रकीर्तिताः ॥ ८ ॥
अलौकिकेन ज्ञानेन ये तु प्रोक्ता हरेर्गुणाः ॥
कादाचित्काः शब्दगम्याः पतच्छब्दाः प्रकीर्तिताः॥९॥
देवाद्युपासनोद्भूताः पृष्ठ्या भूमेरिवोद्गताः ॥
साधनादिप्रकारेण नवधा भक्तिमार्गतः ॥ १० ॥
प्रेमपूर्त्या स्फुरद्धर्माः स्यंदमानाः प्रकीर्तिताः ॥
यादृशास्तादृशाः प्रोक्ता वृद्धिक्षयविवर्जिताः ॥११॥
स्थावरास्ते समाख्याता मर्यादैकप्रतिष्ठिताः ॥
अनेकजन्मसंसिद्धा जन्मप्रभृति सर्वदा ॥ १२ ॥
संगादिगुणदोषाभ्यां वृद्धिक्षययुता भुवि ॥
निरंतरोद्गमयुता नद्यस्ते परिकीर्तिताः ॥ १३ ॥
एतादृशाः स्वतंत्राश्चेत्सिंधवः परिकीर्तिताः ॥
पूर्णा भगवदीया ये शेषव्यासाग्निमारुताः ॥ १४ ॥
जडनारदमैत्राद्यास्ते समुद्राः प्रकीर्तिताः ॥
लोकवेदगुणैर्मिश्रभावेनैके हरेर्गुणान् ॥ १५ ॥
वर्णयंति समुद्रास्ते क्षाराद्याः षट् प्रकीर्तिताः
गुणातीततया शुद्धान्सच्चिदानंदरूपिणः ॥ १६ ॥
सर्वानेव गुणान्विष्णोर्वर्णयंति विचक्षणाः ॥

तेऽमृतोदाः समाख्यातास्तद्वाक्पानं सुदुर्लभम्॥१७॥
तादृशानां क्वचिद्वाक्यं दूतानामिव वर्णितम् ॥
अजामिलाकर्णनवद्विंदुपानं प्रकीर्तितम् ॥ १८ ॥
रागज्ञानादिभावानां सर्वथा नाशनं यदा ॥
तदा लेहनमित्युक्तं स्वानंदोद्गमकारणम् ॥ १९ ॥
उद्धृतोदकवत्सर्वे पतितोदकवत्तथा ॥
उक्तातिरिक्तवाक्यानि फलं चापि तथा ततः ॥ २० ॥
इति जीवेंद्रियगता नानाभावं गता भुवि ॥
रूपतः फलतश्चैव गुणा विष्णोर्निरूपिताः ॥ २१ ॥

इति श्रीवल्लभाचार्यविरचितो जलभेदः समाप्तः ।

## अथ पंचपद्यानि ।

श्रीकृष्णाय नमः ।

श्रीकृष्णरसविक्षिप्तमानसा रतिवर्जिताः ॥
अनिर्वृता लोकवेदे ते मुख्याः श्रवणोत्सुकाः ॥ १ ॥
विक्लिन्नमनसो ये तु भगवत्स्मृतिविह्वलाः ॥
अर्थैकनिष्ठास्ते चापि मध्यमाः श्रवणोत्सुकाः ॥ २ ॥
निःसंदिग्धं कृष्णतत्त्वं सर्वभावेन ये विदुः ॥
ये त्वावेशात्तु विकला निरोधाद्वा न चान्यथा ॥ ३ ॥

१ तपात्मनः.

पूर्णभावेन पूर्णार्थाः कदाचिन्न तु सर्वदा ॥
अन्यासक्तास्तु ये केचिदधमाः परिकीर्तिताः ॥ ४ ॥
अनन्यमनसो मर्त्या उत्तमाः श्रवणादिषु ॥
देशकालद्रव्यकर्तृमंत्रकर्मप्रकारतः ॥ ५ ॥

इति श्रीवल्लभाचार्यविरचितानि पंचपद्यानि समाप्तानि ।

## अथ संन्यासनिर्णयः ।

श्रीकृष्णाय नमः ।

पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ॥
स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥
कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ॥
अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥
श्रवणादिप्रवृत्त्यर्थं कर्तव्यत्वेन नेष्यते ॥
सहायसंगसाध्यत्वात्साधनानां च रक्षणात् ॥ ३ ॥
अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ॥
गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥
अग्रेऽपि तादृशैरेव संगो भवति नान्यथा ॥
स्वयं च विषयाक्रांतपाषंडी स्यात्तु कालतः ॥ ५ ॥
विषयाक्रांतदेहानां नावेशः सर्वदा हरेः ॥

१ सर्वथा-

अतोऽत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥
विरहानुभवार्थं तु परित्यागः प्रशस्यते ॥
स्वीयबंधनिवृत्यर्थं वेषः सोऽत्र न चान्यथा ॥ ७ ॥
कौंडिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तत् ॥
भावो भावनया सिद्धः साधनं नान्यदिष्यते ॥ ८ ॥
विकलत्वं तथाऽस्वास्थ्यं प्रकृतिः प्राकृतं न हि ॥
ज्ञाने गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥
सत्यलोके स्थितिर्ज्ञानात्संन्यासेन विशेषितात् ॥
भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥
तादृशाः सत्यलोकादौ तिष्ठंत्येव न संशयः ॥
बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदि ॥ ११ ॥
तदैव सकलो बंधो नाशमेति न चान्यथा ॥
गुणास्तु संगराहित्याज्जीवनार्थं भवंति हि ॥ १२ ॥
भगवान् फलरूपत्वान्नात्र बाधक इष्यते ॥
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥
दुर्लभोऽयं परित्यागः प्रेम्णा सिध्यति नान्यथा ॥
ज्ञानमार्गे तु संन्यासो द्विविधोऽपि विचारितः[1] ॥ १४ ॥
ज्ञानार्थमुत्तरांगं च सिद्धिर्जन्मशतैः परम् ॥
ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥

---

१ विचारतः इति पा०.

अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ॥
पाषंडित्वं भवेच्चापि तस्माज्ज्ञानेन संन्यसेत्॥ १६॥
सुतरां कलिदोषाणां प्रबलत्वादिति स्थितिः ॥
भक्तिमार्गेऽपि चेद्दोषस्तदा किं कार्यमुच्यते ॥१७॥
अत्रारंभे न नाशः स्याद्दृष्टांतस्याप्यभावतः ॥
स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य संभवेत्॥१८॥
हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ॥
अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥१९॥
ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ॥
आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥
तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ॥
अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः॥२१॥
इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ॥
संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥

इति श्रीवल्लभाचार्यविरचितः संन्यासनिर्णयः समाप्तः।

## अथ निरोधलक्षणम्।

श्रीकृष्णाय नमः।

यच्च दुःखं यशोदाया नंदादीनां च गोकुले ॥
गोपिकानां च यद् दुःखं तद् दुःखं स्यान्मम क्वचित्[१]

१ स्थित इति पा०.

गोकुले गोपिकानां च सर्वेषां व्रजवासिनाम् ॥
यत्सुखं समभूत्तन्मे भगवान्किं विधास्यति ॥ २ ॥
उद्धवागमने जात उत्सवः सुमहान्यथा ॥
वृंदावने गोकुले वा तथा मे मनसि क्वचित् ॥ ३ ॥
महतां कृपया यावद्भगवान् दययिष्यति ॥
तावदानंदसंदोहः कीर्त्यमानः सुखाय हि ॥ ४ ॥
महतां कृपया यद्वत्कीर्तनं सुखदं सदा ॥
न तथा लौकिकानां तु स्निग्धभोजनरूक्षवत् ॥५॥
गुणगाने सुखावाप्तिर्गोविंदस्य प्रजायते ॥
यथा तथा शुकादीनां नैवात्मनि कुतोऽन्यतः ॥६॥
क्लिश्यमानाञ्जनान् दृष्ट्वा कृपायुक्तो यदा भवेत् ॥
तदा सर्वं सदानंदं हृदिस्थं निर्गतं बहिः ॥ ७ ॥
सर्वानंदमयस्यापि कृपानंदः सुदुर्लभः ॥
हृद्गतः स्वगुणाञ्श्रुत्वा पूर्णः प्लावयते जनान् ॥ ८ ॥
तस्मात्सर्वं परित्यज्य निरुद्धैः सर्वदा गुणाः ॥
सदानंदपरैर्गेयाः सच्चिदानंदता ततः ॥ ९ ॥
अहं निरुद्धो रोधेन निरोधपदवीं गतः ॥
निरुद्धानां तु रोधाय निरोधं वर्णयामि ते ॥ १० ॥

---

१ स्वतः

हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे ॥
ये निरुद्धास्त एवात्र मोदमायात्यहर्निशम् ॥ ११ ॥
संसारावेशदुष्टानामिंद्रियाणां हिताय वै ॥
कृष्णस्य सर्ववस्तूनि भूम्न ईशस्य योजयेत् ॥ १२ ॥
गुणेष्वाविष्टचित्तानां सर्वदा मुरवैरिणः ॥
संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १३ ॥
तदा भवेद्दयालुत्वमन्यथा क्रूरता मता ॥
बाधशंकापि नास्त्यत्र तदध्यासोऽपि सिध्यति ॥१४॥
भगवध्दर्मसामर्थ्याद्विरागो विषये स्थिरः ॥
गुणैर्हरेः सुखस्पर्शान्न दुःखं भाति कर्हिचित् ॥ १५ ॥
एवं ज्ञात्वा ज्ञानमार्गादुत्कर्षो गुणवर्णने ॥
अमत्सरैरलुब्धैश्च वर्णनीयाः सदा गुणाः ॥ १६ ॥
हरिमूर्तिः सदा ध्येया संकल्पादपि तत्र हि ॥
दर्शनं स्पर्शनं स्पष्टं तथाकृतिगती सदा ॥ १७ ॥
श्रवणं कीर्तनं स्पष्टं पुत्रे कृष्णप्रिये रतिः ॥
पायोर्मलांशत्यागेन शेषभागं तनौ नयेत् ॥ १८ ॥
यस्य वा भगवत्कार्यं यदा स्पष्टं न दृश्यते ॥
तदा विनिग्रहस्तस्य कर्तव्य इति निश्चयः ॥ १९ ॥

१ दुत्कर्षे हरिवर्णने. २ स्पृष्टं. ३ पायुं. ४ मार्ग. ५ तनुं.

नातः परतरो मंत्रो नातः परतरः स्तवः ॥
नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥
इति श्रीवल्लभाचार्यविरचितं निरोधलक्षणं समाप्तम् ।

## अथ सेवाफलम् ।

श्रीकृष्णाय नमः ।

याद्दशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ॥
अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः॥१॥
फलं वा ह्यधिकारो वा न कालोऽत्र नियामकः ॥
उद्वेगः प्रतिबंधो वा भोगो वा स्यात्तु बाधकम् ॥२॥
अकर्तव्यं भगवतः सर्वथा चेद्गतिर्न हि ॥
यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ३ ॥
बाधकानां परित्यागो भोगेऽप्येकं तथा परम् ॥
निष्प्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ४ ॥
सविघ्नोऽल्पो घातकः स्याद्बलादेतौ सदा मतौ ॥
द्वितीये सर्वथा चिंता त्याज्या संसारनिश्चयात् ॥ ५ ॥
नं[1]त्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ॥
अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥
तदीयैरपि तत्कार्यंपुष्टौ नैव विलंबयेत् ॥

१ न त्वाद्ये इति पा०.

गुणक्षोभोऽपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥
कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ८ ॥

इति श्रीवल्लभाचार्यविरचितं सेवाफलं समाप्तम् ।

## अथ सेवाफलविवरणम् ।

श्रीकृष्णाय नमः ।

सेवायाः फलत्रयम्–अलौकिकसामर्थ्यं सायुज्यं सेवौपयिकदेहो वा वैकुंठादिषु । सेवायाः प्रतिबंधकत्रयम्–उद्वेगः प्रतिबंधो भोगो वा ॥ त्रयाणां साधनपरित्यागः कर्तव्यः ॥ भोगो द्विविधः–लौकिकोऽलौकिकश्च ॥ तत्र लौकिकस्त्याज्य एव ॥ प्रतिबंधोऽपि द्विविधः–साधारणो भगवत्कृतश्च ॥ तत्राद्यो बुद्ध्या त्याज्यः ॥ अलौकिकभोगस्तु फलानां मध्ये प्रथमे प्रविशति ॥ भगवत्कृतश्चेत्प्रतिबंधस्तदा भगवान् फलं न दास्यतीति मंतव्यम् ॥ तदान्यसेवापि व्यर्था, तदा आसुरोऽयं जीव इति निर्धारः, तदा ज्ञानमार्गेण स्थातव्यं शोकाभावायेति विवेकः ॥ ननु साधारणो भोगः कथं त्यक्तव्य इत्याकांक्षायामाह सविघ्नोऽल्पो घातकः स्यादिति ॥ सविघ्नत्वाद-

१ क्षोभेऽपि.

त्पत्वाद्भोगस्त्याज्यः ॥ एतौ सदा प्रतिबंधकौ ॥ द्वितीयो भगवत्कृतप्रतिबंधः ज्ञानस्थित्यभावे चिंताभावार्थमाह–द्वितीय इति ॥ आद्यफलाभावे भगवतो दातृत्वं नास्ति तदा सेवा नाधिदैविकीत्युक्तं भवति ॥ भोगाभावस्तदैव सिद्धयति यदा गृहपरित्यागः ॥

इति श्रीवल्लभाचार्यविरचितं सेवाफलविवरणं समाप्तम्।

# अथ परिवृढाष्टकम्।

श्रीकृष्णाय नमः।

कलिंदोद्भूतायास्तटमनुचरंतीं पशुपजां
रहस्येकां दृष्ट्वा नवलुभगवक्षोजयुगलाम् ॥
दृढं नीवीग्रंथिं श्लथयति मृगाक्ष्या हठतरं
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ १ ॥
समायाते स्वस्मिन्सुरनिलयसाम्यं गतवति
व्रजे वैशिष्टयं यो निजपदगताब्जांकुशयवैः ॥
अकार्षीत्तस्मिन्मे यदुकुलसमुद्भासितमणौ
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ २ ॥
हिहीहीहींकारान्प्रतिपशु वने कुर्वति सदा ॥
नमद्ब्रह्मेशेंद्रप्रभृतिपु च मौनं धृतवति ॥

मृगाक्षीभिः स्वक्षानवकुवलयैरर्चितपदे ॥
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ३ ॥
सकृत्स्मृत्वा कुंभी यमिह परमं लोकमगम-
च्चिरं ध्यात्वा धाता समधिगतवान्यं न तपसा ॥
विभौ तस्मिन्मह्यं सजलजलदालीनिभतनौ
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ४ ॥
परा काष्ठा प्रेम्णां पशुपतरुणीनां क्षितिभुजां
सुहृत्सानां त्रासास्पदमखिलभाग्यं यदुपतेः ॥
विभुर्यस्तस्मिन्मे दरविकचजंबालजमुखे
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ५ ॥
दरप्रादुर्भूतद्विजगणमहःपूरितवने
चरं कुह्वां राकारुचिरतरशोभाधिकरुचि ॥
हरिर्यस्तस्मिन्स्त्रीगणपरिवृतो नृत्यति सदा
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ६ ॥
स्फुरद्गुंजापुंजाकलितनिजपादाब्जविलुठत्
स्रजि श्यामाकामास्पदपदयुगे मेचकरुचि ॥
वरांगे शृंगारं दधति शिखिनां पिच्छपटलै
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ७ ॥
दुरंतं दुःखाब्धिं हसितसुधया शोषयति यो

यदास्येंदुर्गोपीनयननलिनानंदकरणम् ॥
अनंगः सांगत्वं व्रजति मम तस्मिन् मुररिपौ
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ८ ॥
इदं यः स्तोत्रं श्रीपरिवृढसमीपे पठति वा
शृणोति श्रद्धावान् रतिपतिपितुः पादयुगळे ॥
रतिं प्रेप्सुः शश्वत्कुवलयदलश्यामलतनौ
रतिः प्रादुर्भूता भवति नचिरात्तस्य सुदृढा ॥ ९ ॥

इति श्रीवल्लभाचार्यविरचितं श्रीपरिवृढाष्टकं समाप्तम् ।

# अथ श्रीमधुराष्टकम् ।

श्रीकृष्णाय नमः ।

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ॥
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलंमधुरम्॥१॥
वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ॥
चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् २
वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ ॥
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम्॥३॥
गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ॥
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ४
करणं मधुरं तरणं मधुरं हरणं मधुरं स्मरणं मधुरं ॥

वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ५
गुंजा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा ॥
सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ६
गोपी मधुरा लीला मधुरा युक्तं मधुरं भुक्तं मधुरम् ॥
इष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥७॥
गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा ॥
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥

इति श्रीवल्लभाचार्यविरचितं मधुराष्टकं समाप्तम् ।

## अथ तत्त्वदीपनिबंधः ।

प्रथमं शास्त्रार्थप्रकरणम् ।

श्रीकृष्णाय नमः ।

नमो भगवते तस्मै कृष्णायाद्भुतकर्मणे
रूपनामविभेदेन जगत् क्रीडति यो यतः ॥ १ ॥
सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः ॥
भवांतसंभवा दैवात्तेषामर्थे निरूप्यते ॥ २ ॥
भगवच्छास्त्रमाज्ञाय विचार्य च पुनःपुनः ॥
यदुक्तं हरिणा पश्चात् संदेहविनिवृत्तये ॥ ३ ॥
एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव ॥

१ दृष्टं.

मंत्रोऽप्येकस्तस्य नामानि यानि
कर्माप्येकं तस्य देवस्य सेवा ॥ ४ ॥
इत्याकलय्य सततं शास्त्रार्थः सर्वनिर्णयः ॥
श्रीभागवतरूपं च त्रयं वच्मि यथामति ॥ ५ ॥
वेदांते च स्मृतौ ब्रह्मलिंगं भागवते तथा ॥
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ६ ॥
त्रितये त्रितयं वाच्यं क्रमेणैव मयात्र हि ॥
वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ॥
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥ ७ ॥
उत्तरं पूर्वसंदेहवारकं परिकीर्तितम् ॥
अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा ॥ ८ ॥
एतद्विरुद्धं यत् सर्वं न तन्मानं कथं च न ॥
अथवा सर्वरूपत्वान्नामलीलाविभेदतः ॥ ९ ॥
विरुद्धांशपरित्यागात् प्रमाणं सर्वमेव हि ॥
द्वापरादौ तु धर्मस्य द्विपरत्वाद् द्वयं प्रमा ॥ १० ॥
विरुद्धवचनानां च निर्णयानां तथैव च ॥
अज्ञरूपो हरिः पूर्वकांडे ब्रह्मतनुः परे ॥ ११ ॥
अवतारी हरिः कृष्णः श्रीभागवते ईर्यते ॥
सूर्यादिरूपधृग् ब्रह्मकांडे ज्ञानांगमीर्यते ॥ १२ ॥

पुराणेष्वपि सर्वेषु तत्तद्रूपो हरिस्तथा ॥
भजनं सर्वरूपेषु फलसिद्ध्यै तथापि तु ॥ १३ ॥
आदिमूर्तिः कृष्ण एव सेव्यः सायुज्यकाम्यया ॥
निर्गुणा मुक्तिरस्माद्धि सगुणा सान्यसेवया ॥ १४ ॥
ज्ञानेऽपि सात्त्विकी मुक्तिर्जीवन्मुक्तिरथापि वा ॥
ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः परः ॥१५॥
बुद्धावतारे त्वधुना कलौ तदंशगाः सुराः ॥
नानामतानि विप्रेषु भूत्वा कुर्वन्ति मोहनम् ॥ १६॥
यथाकथंचित् कृष्णस्य भजनं वारयंति हि ॥
अयमेव महामोहो हीदमेव प्रतारणम् ॥ १७ ॥
यत् कृष्णं न भजेत् प्राज्ञः शास्त्राभ्यासपरः कृती ॥
तेषां कर्मवशानां हि भव एव फलिष्यति ॥ १८ ॥
ज्ञाननिष्ठा तदा ज्ञेया सर्वज्ञो हि यदा भवेत् ॥
कर्मनिष्ठा तदा ज्ञेया यदा चित्तं प्रसीदति ॥ १९ ॥
भक्तिनिष्ठा तदा ज्ञेया यदा कृष्णः प्रसीदति ॥
निष्ठाभावे फलं तस्मान्नास्त्येवेति विनिश्चयः ॥२०॥
निष्ठा च साधनैरेव न मनोरथवार्तया ॥
स्वाधिकारानुसारेण मार्गस्त्रेधा फलाय हि ॥ २१॥
अधुना ह्यधिकारास्तु सर्व एव गताः कलौ ॥

कृष्णश्चेत् सेव्यते भक्त्या कलिस्तस्य फलाय हि॥२२॥
सर्वेषां वेदवाक्यानां भगवद्वक्त्रसामपि ॥
श्रौतोऽर्थो ह्ययमेव स्यादन्यः कल्प्यो मतांतरैः ॥ २३ ॥
कृष्णवाक्यानुसारेण शास्त्रार्थं ये वदंति हि ॥
ते हि भागवताः प्रोक्ताः शुद्धास्ते ब्रह्मवादिनः ॥२४॥
एतन्मतमविज्ञाय सात्विका अपि वै हरिम् ॥
मतांतरैर्न सेवंते तदर्थं ह्येष उद्यमः ॥ २५ ॥
प्रपंचो भगवत्कार्यस्तद्रूपो माययाऽभवत् ॥
तच्छक्त्याऽविद्यया त्वस्य जीवसंसार उच्यते ॥ २६ ॥
संसारस्य लयो मुक्तौ न प्रपंचस्य कर्हिचित् ॥
कृष्णस्यात्मरतौ त्वस्य लयः सर्वसुखावहः ॥ २७ ॥
पंचपर्वा त्वविद्या हि जीवगा मायया कृता ॥
आकाशवद्व्यापकं हि ब्रह्म मायांशवेष्टितम् ॥ २८ ॥
सर्वतः पाणिपादांतं सर्वतोऽक्षिशिरोमुखम् ॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २९ ॥
अनंतमूर्ति तद्ब्रह्म ह्यविभक्तं विभक्तिमत् ॥
बहु स्यां प्रजायेयेति वीक्षा तस्य ह्यभूत् सती ॥ ३० ॥
तदिच्छामात्रतस्तस्माद्ब्रह्मभूतांशचेतनाः ॥
सृष्ट्यादौ निर्गताः सर्वे निराकारास्तदिच्छया ॥ ३१ ॥

विस्फुलिंगा इवाग्नेस्तु सदंशेन जडा अपि ॥
आनंदांशस्वरूपेण सर्वान्तर्यामिरूपिणः ॥ ३२ ॥
सच्चिदानंदरूपेषु पूर्वयोरन्यलीनता ॥
अत एव निराकारौ पूर्वावानंदलोपतः ॥ ३३ ॥
जडो जीवोंतरात्मेति व्यवहारस्त्रिधा मतः ॥
विद्याविद्ये हरेः शक्ती माययैव विनिर्मिते ॥ ३४ ॥
ते जीवस्यैव नान्यस्य दुःखित्वं चाप्यनीशता ॥
स्वरूपाज्ञानमेकं हि पर्व देहेंद्रियासवः ॥ ३५ ॥
अंतःकरणमेषां हि चतुर्थोऽध्यास उच्यते ॥
पंचपर्वा त्वविद्येयं यद्बद्धो याति संसृतिम् ॥ ३६ ॥
विद्ययाऽविद्यानाशे तु जीवो मु(वन्मु)क्तो भविष्यति॥
देहेंद्रियासवः सर्वे निरध्यस्ता भवंति हि ॥ ३७ ॥
तथापि न प्रलीयंते जीवन्मुक्तिगताः स्फुटम् ॥
आसन्यस्य हरेर्वापि सेवया देवभावतः ॥ ३८ ॥
इंद्रियाणां तथा स्वस्य ब्रह्मभावाल्लयो भवेत् ॥
आनंदांशप्रकाशाद्धि ब्रह्मभावो भविष्यति ॥ ३९॥
सायुज्यं वान्यथा तस्मिन्नुभयं हरिसेवया ॥
एवं कदाचिद्भगवान् साक्षात् सर्वं करोत्यजः॥ ४० ॥
कदाचित् पुरुषद्वारा कदाचित् पुनरन्यथा ॥

कदाचित् सर्वमात्मैव भवतीह जनार्दनः ॥ ४१ ॥
महेंद्रजालवत् सर्वं कदाचिन्माययाऽसृजत् ॥
तदा ज्ञानादयः सर्वे वार्तामात्रं न वस्तुतः ॥ ४२ ॥
वियदादि जगत् सृष्ट्वा तदाविश्य द्विरूपतः ॥
जीवांतर्यामिभेदेन क्रीडते स्म हरिः क्वचित् ॥ ४३ ॥
अचिंत्यानंतशक्तेस्तद्यदेतदुपपद्यते ॥
अत एव श्रुतौ भेदाः सृष्टेरुक्ता ह्यनेकधा ॥ ४४ ॥
यथाकथंचिन्माहात्म्यं तस्य सर्वत्र वर्ण्यते ॥
भजनस्यैव सिद्ध्यर्थं तत्त्वमस्यादिकं तथा ॥ ४५ ॥
माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ॥
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥४६॥

पंचात्मकः स भगवान् द्विपदात्मकोऽभूत्
पंचद्वयीशतसहस्रपरामितश्च ॥
एकः समोऽप्यखिलदोषसमुज्झितोऽपि
सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूत् ॥ ४७ ॥
निर्दोषपूर्णगुणविग्रहआत्मतंत्रो
निश्चेतनात्मकशरीरगुणैश्च हीनः ॥
आनंदमात्रकरपादमुखोदरादिः ॥
सर्वत्र च त्रिविधभेदविवर्जितात्मा ॥ ४८ ॥

तस्य ज्ञानाद्धि कैवल्यमविद्या विनिवृत्तितः ॥
वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे ॥ ४९ ॥
पंचपर्वैतिविद्येयं यया विद्वान् हरिं विशेत् ॥
सत्त्वसृष्टिप्रवृत्तानां देवानां मुक्तियोग्यता ॥ ५० ॥
तीर्थादावपि या मुक्तिः कदाचित्कस्यचिद्भवेत् ॥
कृष्णप्रसादयुक्तस्य नान्यस्येति विनिश्चयः ॥ ५१ ॥
सेवकं कृपया कृष्णः कदाचिन्मोचयेत् क्वचित् ॥
तन्मूलत्वात् स्तुतिस्तस्य क्षेत्रस्य विनिरूप्यते ॥५२॥
तस्मात्सर्वं परित्यज्य दृढविश्वासतो हरिम् ॥
भजेत श्रवणादिभ्यो यद्विद्यातो विमुच्यते ॥ ५३ ॥
ब्रह्मानंदे प्रविष्टानामात्मनैव सुखप्रमा ॥
संघातस्य विलीनत्वाद्भक्तानां तु विशेषतः ॥ ५४ ॥
सर्वेंद्रियैस्तथा चांतःकरणैरात्मनापि हि ॥
ब्रह्मभावात्तु भक्तानां गृहमेव विशिष्यते ॥ ५५ ॥
मोहार्थशास्त्रकलिलं यदा बुद्धेर्विभिद्यते ॥
तदा भागवते शास्त्रे विश्वासस्तेन सत्फलम् ॥ ५६ ॥
जीवस्त्वाराग्रमात्रो हि गंधवद्व्यतिरेकवान् ॥
व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यते ॥ ५७ ॥
आनंदांशाभिव्यक्तौ तु तत्र महांडकोटयः ॥

प्रतीयेरन् परिच्छेदो व्यापकत्वं च तस्य तत् ॥५८॥
प्रकाशकं तच्चैतन्यं तेजोवत्त्वेन भासते ॥
न प्राकृतेंद्रियैर्ग्राह्यं न प्रकाश्यं च केनचित् ॥५९॥
योगेन भगवद्दृष्ट्या दिव्यया वा प्रकाशते ॥
आभासप्रतिबिंबत्वमेवं तस्य न चान्यथा ॥ ६० ॥
आनंदांशतिरोधानात् तत्तद्वत्त्वेन भासते ॥
मायाजवनिकाच्छन्नं नान्यथा प्रतिबिंबते ॥ ६१ ॥
तत्र वृत्तेर्द्वासुपर्णाश्रुतेरपि विरुद्ध्यते ॥
गुहां प्रविष्टावित्युक्तेर्भगवद्वचनादपि ॥ ६२ ॥
जीवहानिस्तदा मुक्तिर्जीवन्मुक्तिर्विरुद्ध्यते ॥
लिंगस्य विद्यमानत्वादविद्यायां ततोऽपि हि ॥ ६३ ॥
अधिष्ठातुर्विनष्टत्वान्न देहः स्पंदितुं क्षमः ॥
प्रारब्धमात्रशेषत्वे सुषुप्तस्येव न व्रजेत् ॥ ६४ ॥
तत्त्वमस्यादिवाक्यस्य शोधितस्यापि युक्तितः ॥
न विद्याजनने शक्तिरन्यार्थं तच्च कीर्तितम् ॥ ६५ ॥
ब्रह्मणः सर्वरूपत्वमनयुज्य निरूपितम् ॥
अलौकिकं तत्प्रमेयं न युक्त्या प्रतिपद्यते ॥ ६६ ॥
तपसा वेदयुक्त्या च प्रसादात्परमात्मनः ॥
विद्यां प्राप्नोत्युरुक्लेशः कश्चित्सत्ययुगे पुमान् ॥ ६७ ॥

सर्वज्ञत्वं च तस्येष्टं लिंगं तेजोऽप्यलौकिकम् ॥
तत्प्राप्तावपि नो मुक्तिर्जाग्रत्स्वप्नवदुद्भवः ॥ ६८ ॥
अविद्याविद्ययोस्तस्माद्भजनं सर्वथा मतम् ॥
सच्चिदानंदरूपं तु ब्रह्म व्यापकमव्ययम् ॥ ६९ ॥
सर्वशक्ति स्वतंत्रं च सर्वज्ञं गुणवर्जितम् ॥
सजातीयविजातीयस्वगतद्वैतवर्जितम् ॥ ७० ॥
सत्यादिगुणसाहस्रैर्युक्तमौत्पत्तिकैः सदा ॥
सर्वाधारं वश्यमायमानंदाकारमुत्तमम् ॥ ७१ ॥
प्रापंचिकपदार्थानां सर्वेषां तद्विलक्षणम् ॥
जगतःसमवायि स्यात् तदेव च निमित्तकम् ॥ ७२ ॥
कदाचिद्रमते स्वस्मिन् प्रपंचेऽपि क्वचित् सुखम् ॥
यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥ ७३ ॥
स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥
यः सर्वत्रैव संतिष्ठन्नंतरः संस्पृशेन्न तत् ॥ ७४ ॥
शरीरं तन्न वेदेत्थं योऽनुविश्य प्रकाशते ॥
सर्ववादानवसरं नानावादानुरोधि तत् ॥ ७५ ॥
अनंतमूर्ति तद्ब्रह्म कूटस्थं चलमेव च ॥
विरुद्धसर्वधर्माणामाश्रयो युक्त्यगोचरः ॥ ७६ ॥
आविर्भावतिरोभावैर्मोहनं बहुरूपतः ॥

इंद्रियाणां तु सामर्थ्याद्दृश्यं स्वेच्छया तु तत् ॥ ७७ ॥
आनंदरूपे शुद्धस्य सत्त्वस्य फलनं यदा ॥
तदा मरकतश्याममाविर्भावे प्रकाशते ॥ ७८ ॥
चतुर्युगेषु च तथा नानारूपवदेव तत् ॥
उपाधिकालरूपं हि तादृशं प्रतिबिंबते ॥ ७९ ॥
अथवा शून्यवद्गाढव्योमवद्ब्रह्म तादृशम् ॥
प्रकाशते लोकदृष्ट्या नान्यथा दृक् स्पृशेत्परम् ॥८०॥
आत्मसृष्टेर्न वैषम्यं नैर्घृण्यं चापि विद्यते ॥
पक्षांतरेऽपि कर्म स्यान्नियतं तत् पुनर्बृहत् ॥ ८१ ॥
स एव हि जगत्कर्ता तथापि सगुणो न हि ॥
गुणाभिमानिनो ये वै तदंशाः सगुणाः स्मृताः ॥ ८२ ॥
कर्ता स्वतंत्र एव स्यात् सगुणत्वे विरुध्यते ॥
केचिदत्रातिविमलप्रज्ञाः श्रौतार्थबाधनम् ॥ ८३ ॥
कृत्वा जगत्कारणतां दूषयंति हरौ परे ॥
अनाद्यविद्यया बद्धं ब्रह्म तत् किल कारणम् ॥ ८४ ॥
स्वाविद्यया संसरति मुक्तिः कल्पितवाक्यतः ॥
एवं प्रतारणाशास्त्रं सर्वमाहात्म्यनाशकम् ॥ ८५ ॥
उपेक्ष्यं भगवद्भक्तैः श्रुतिस्मृतिविरोधतः ॥
कलौ तदादरो मुख्यः फलं वैमुख्यतस्तमः ॥ ८६ ॥

ज्ञाननाश्यत्वसिद्ध्यर्थं यदेतद्विनिरूपितम् ॥
तदन्यथैव संसिद्धं विद्याविद्यानिरूपणैः ॥ ८७ ॥
यन्मायिकत्वकथनं पुराणेषु प्रदृश्यते ॥
तदैंद्रजालपक्षेण मतांतरमिति ध्रुवम् ॥ ८८ ॥
नास्ति श्रुतिषु तद्वार्ता दृश्यमानासु कुत्रचित् ॥
वाचारंभणवाक्यानि तदनन्यत्वबोधनात् ॥ ८९ ॥
न मिथ्यात्वाय कल्पंते जगतो व्याससौरवात् ॥
ज्ञानार्थमर्थवादश्चेच्छ्रुतिः सृष्ट्यादिरूपिणी ॥ ९० ॥
अनंगीकरणाद्युक्तं विधिमाहात्म्ययोर्न तत् ॥
अपवादार्थ एवैतदारोपो वस्तुतो न हि ॥ ९१ ॥
दृढप्रतीतिसिद्ध्यर्थमिति चेत्तन्न युज्यते ॥
मुख्यार्थबाधनं नास्ति कार्यदर्शनतः श्रुतेः ॥ ९२ ॥
ऐंद्रजालिकपक्षेऽपि तत्कर्तृत्वं नटे यथा ॥
मुक्तिस्तदातिनष्टा स्यात् स्वप्नदृष्टगजेष्विव ॥ ९३ ॥
मायादीनां च कर्तृत्वं श्रुतिसूत्रैर्विबाध्यते ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ ९६ ॥
अपरस्परसंभूतं किमन्यत् कामहैतुकम् ॥
अखंडाद्वैतभाने तु सर्वं ब्रह्मैव नान्यथा ॥ ९७ ॥
ज्ञानाद्विकल्पबुद्धिस्तु बाध्यते न स्वरूपतः ॥
भिन्नत्वं नैव युज्येत ब्रह्मोपादानतः क्वचित् ॥ ९८ ॥
वाचारंभणमात्रत्वाद्भेदः केनोपजायते ॥
सांख्यो बहुविधः प्रोक्तस्तत्रैकः सत्प्रमाणकः ॥ ९९ ॥
अष्टाविंशतितत्त्वानां स्वरूपं यत्र वै हरिः ॥
अन्ये सूत्रे निषिध्यंते योगोऽप्येकः सदादृतः ॥ १०० ॥
यस्मिन् ध्यानं भगवतो निर्बीजेऽप्यात्मबोधकः ॥
वैराग्यज्ञानयोगैश्च प्रेम्णा च तपसा तथा ॥ १०१ ॥
एकेनापि दृढेनेशं भजन् सिद्धिमवाप्नुयात् ॥
ज्ञाने लयप्रकारा हि जगतो बहुधोदिताः ॥ १०२ ॥
मनसः शुद्धिसिद्ध्यर्थमेकः सांख्यानुलोमतः ॥
इंद्रियाणां देवतात्वभावनाप्रापणे तथा ॥ १०३ ॥
गोविंदासन्यसेवातः प्रापणं नान्यथा भवेत् ॥
अद्वयात्मदृढज्ञानाद्वैराग्यं गृहमोचकम् ॥ १०४ ॥
वागादिविलयाः सर्वे तदर्थं मनआदिषु ॥
भावनामात्रतो भाव्या न हि सर्वात्मना लयः ॥१०५॥

मनोमात्रत्वकथनं तदर्थं जगतः क्वचित् ॥
भक्तिमार्गानुसारेण मतांतरगता नराः ॥ १०६ ॥
भजंति चोधयंत्येवमविरुद्धं न बाध्यते ॥
नैकांतिकं फलं तेषां विरुद्धाचरणात् क्वचित् ॥१०७॥
एवं सर्वं ततः सर्वं स इति ज्ञानयोगतः ॥
यः सेवते हरिं प्रेम्णा श्रवणादिभिरुत्तमम् ॥ १०८ ॥
प्रेमाभावे मध्यमः स्याज्ज्ञानाभावे तथादिमः ॥
उभयोरप्यभावे तु पापनाशस्ततो भवेत् ॥ १०९ ॥
तपोवैराग्ययोगे तु ज्ञानं तस्य फलिष्यति ॥
योगयोगे तथाप्रेम स्तुतिमात्रं ततोऽन्यथा ॥ ११० ॥

अर्थोऽयमेव निखिलैरपि वेदावाक्यै
रामायणैः सहितभारतपंचरात्रैः ॥
अन्यैश्च शास्त्रवचनैः सह तत्त्वसूत्रै
र्निर्णीयते सहृदयं हरिणा सदैव ॥ ११ ॥

इति श्रीकृष्णव्यासविष्णुस्वामिमतवर्तिवल्लभदीक्षितविरचिते तत्त्वदीपे शास्त्रार्थकथनं नाम प्रथमं प्रकरणम् ॥ १ ॥

---

## अथ पत्रावलंबनम् ।

श्रीकृष्णाय नमः ।

लौकिको वैदिकश्चैव व्यवहारो द्विधा मतः ॥
लोकसिद्धं पुरस्कृत्य वैदिकं चोच्यते यथा ॥ १ ॥

लोके शब्दार्थसंबंधो रूपं तेषां च यादृशम् ॥
न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत् ॥ २ ॥
ब्रह्मवादे निरुक्तिस्तु न वक्तव्यैवकुत्रचित् ॥
वस्तुतो ब्रह्म सर्वं हि व्यवहारस्तु लोकतः ॥ ३ ॥
ये धातुशब्दा यत्रार्थं उपदेशे प्रकीर्तिताः ॥
तथैवार्था वेदराशेः कर्तव्यो नान्यथा क्वचित् ॥ ४ ॥
कांडद्वयार्थसिद्ध्यर्थं स्वाध्यायविधिरुच्यते ॥
वाक्यत्रयं तथा वेदे–"स्वाध्यायोऽध्येतव्यः" ॥
"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" ॥
"सांगो वेदोऽध्येयो ज्ञेयश्च" इति अनारभ्योक्तमेव हि
एकार्थता तु सर्वत्र विशेषोऽप्युच्यते स्फुटः ॥
स्वाध्यायशब्दो वेदे हि रूढो योगोऽपि वर्तते ॥६॥
सुष्ठु समंतादध्येयः शोभनं नियमैर्युतम् ॥
देशे काले गुरौ स्वस्मिन्येऽपेक्ष्यंते गुणा इह ॥ ७ ॥
आ सर्वतः पुनस्तत्र यथा शंका न जायते ॥
शब्दे ह्यर्थे ह्यनुष्ठाने तथाऽध्येयो हि वैदिकैः ॥ ८ ॥
अपर्णतापहतपाप्मादिसकलैर्गुणैः ॥
प्रजापतिमुखैर्वेदो यथा हि पठितः पुरा ॥ ९ ॥
तादृग्गुणविशिष्टोऽत्र वेदः स्वाध्याय उच्यते ॥
तव्यस्त्वावश्यके प्रोक्तो न विधिर्ज्ञातृबोधनात् ॥१०॥

स्वाध्यायपदतो ज्ञेयं तन्माहात्म्यफलं तथा ॥
ज्ञातृज्ञापनतासिद्ध्यै द्वितीयं वाक्यमीर्यते ॥ ११ ॥
वसुरुद्रादित्यवर्षैस्त्रयो वर्णाः क्रमाद्द्विजाः ॥
अध्याप्या इति तस्यापि नियोगः श्रुतिचोदितः ॥१२॥
पराधीनतया बाले न विधिः श्रुतिचोदितः ॥
तथाध्यापनसिद्ध्यर्थं तृतीयं वाक्यमीर्यते ॥ १३ ॥
सांगेऽधीते तथा ज्ञाते स्वध्यायस्तस्य सिद्ध्यति ॥
अध्यापनप्रयुक्तं हि प्रथमं लिंगयोगतः ॥ १४ ॥
आत्मनेपदतः स्वस्य स्यातां वृत्तिश्च सेत्स्यति ॥
उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ॥१५॥
सरहस्यं तदंगं च तमाचार्यं प्रचक्षते ॥
"आचार्यवान्पुरुषो वेद" ॥
"आचार्यं मां विजानीयाद् ॥
"गच्छेदाचार्यसंसदि" इति ॥
स्वातंत्र्ये वयसा जाते तस्यावश्यकमीर्यते ॥ १६ ॥
मर्यादाभंगतः केचित्कृत्ये विध्यर्थतां जगुः ॥
शब्दार्थमनपेक्ष्यैव निर्णयं च स्वबुद्धितः ॥ १७ ॥
अध्यापनप्रयुक्तं हि तस्मादध्यापनं[1] मतम् ॥

[1] अध्ययनम्.

एतर्ह्यपि तथैवैतन्न कार्यं कल्पनं ततः ॥ १८ ॥
तत्र संशयमापन्ना बुद्धिर्वाक्यार्थनिर्णये ॥
एकवाक्यत्वसंदेहादैकार्थ्याभावतः स्फुटम् ॥ १९ ॥
स एकोऽर्थोऽत्र वक्तव्यो यच्छरीरप्रवेशतः ॥
एकार्थतां श्रुतिर्याति तदभावे तु निष्फला ॥ २० ॥
कुंठितेव भवेन्नूनं वेदाध्ययनचोधने ॥
वेदोऽखिलोधर्ममूलं धर्मो यस्यां मदात्मकः ॥ २१ ॥
एवं पूर्वर्षिभिः प्रोक्तं जैमिनिः प्रथमं स्वयम् ॥
निश्चित्य लोकशिक्षार्थमर्थप्राधान्यतस्तथा ॥ २२ ॥
धर्मं विचारयामास प्रामाण्यादिपुरःसरम् ॥
संदेहस्तु पुनर्जातो वेदांतेपु यथा पुरा ॥ २३ ॥
एकवाक्यत्वमेषां हि धर्मकांडे कथं भवेत् ॥
धर्मः पंचविधो द्वेधा षड्भिः संपद्यते तु सः ॥ २४ ॥
देशकालद्रव्यकर्तृमंत्रकर्मविभेदतः ॥
सर्वो वेदस्तेपु लीनो वेदांतेपु विचार्यते ॥ २५ ॥
यदेव विद्ययेत्याह ब्रह्मा ब्रह्मिष्ठ एव च ॥
तज्ज्ञानं तेपु हि प्रोक्तं कर्तृशेषास्ततस्तु ते ॥ २६ ॥
ज्ञाननिष्ठाय देयानि कव्यानीति यथा तथा ॥
फलश्रुत्यां पूर्वकांडसमाप्त्या चावगम्यते ॥ २७ ॥

ब्रह्मविद्ब्रह्म भवति परं वाप्नोति कुत्रचित् ॥
"वेदमनूच्य आचार्यः" इत्युक्तोपनिषद्वचः ॥ २८ ॥
शास्त्रांतरेऽप्येवमेव वैदिकानामतस्तथा ॥
अतः स्वतंत्रता वाच्या तथा चेन्नैकवाक्यता ॥ २९ ॥
"वेदोऽखिलो धर्ममूलम्" इत्यादिश्च विरुद्ध्यते ॥
वैदिकानामभिध्यानं स्वरादिनियमैर्युतम् ॥ ३० ॥
वेदा एव न चान्यार्था वाच्या बुद्धिमता क्वचित् ॥
अतो वेदांतवाक्यान्यप्रसिद्धिः वैदिकानामपि तथैव प्रसिद्धिरिति चेत् ॥ एवं लोकसिद्धस्य जगतो लोकप्रतीतिं बाधित्वा ब्रह्मत्वेनालौकिकत्वं संपाद्यत इति अर्धजरतीयन्यायात्तदेतत्त्वम् ॥ ननु लोकनिपुणाः कथं मन्यंते ॥ शब्दार्थविचारेणेति ब्रूमः ॥ कथम् ॥ शब्दानामर्थं विचार्यमाणे ब्रह्मैव सर्वं भवति॥ घटपटादिशब्दा धर्मवाचका एव भवितुमर्हंति ॥ घटत्वादिविशिष्टवाचका ह्येत इति लोकप्रसिद्धिः ॥ घटत्वमिति घटगतो धर्मः कश्चिद्घटसद्भावात् घटपदवाच्यताधर्मिणः "तस्य भावस्त्वतलौ" इति त्वो भावप्रत्ययः ॥ भाव इति भूधातोर्घञि रूपम् ॥ भूधातुः सत्तायां व्याप्तौ वा ॥ उभयथापि व्याप-

कस्य सतो वा धर्मस्यत्वाचको भवति ॥ घत्वस्त्वार्थे ॥ अन्यथा अनवस्था स्यात् ॥ तथा च घटत्वं नाम सतः व्यापकस्य वा धर्म इत्युक्तं भवति ॥ एवं पटत्वादिष्वपि ॥ तथा च प्रकृत्यर्थः सन् व्यापको वा यदा भवति तदैव प्रत्ययार्थेनैकवाक्यता भवति ॥ ततश्च सर्वेषामेकार्थता स्यात् ॥ अत आकृतिविशेषव्यंग्या धर्मास्ते भिन्ना एव शक्तिसंकोचेन व्यवहारसिद्ध्यर्थमंगीकर्तव्याः ॥ तथा च घटादिशब्दाः अरुणादिशब्दवद्धर्मवाचका न च स्वरूपतः सतो भिन्नाः प्रत्यक्षतः स्वीकर्तव्या इति वाच्यम् ॥ कारणीभूतस्य सतः एकत्वात्कार्ये कुतो भेदः समायाति ॥ मृद इवांशभेदादिति चेत् ॥ अस्तु तर्हि अंशेन भेदः ॥ अस्तिकः संदेहः कार्यकारणयोर्भेद इति चेत् ॥ न कार्ये समवेतत्वात्कारणमप्यस्तीति मंतव्यम् ॥ तथा च कार्ये द्विगुणगुरुत्वापत्तिः, न वा भेदः प्रतीयेत ॥ पिंडावस्था गता घटावस्था जातेत्येव प्रतीतिः ॥ तथा चाकृतिरेव भिन्नेति धर्मभेद एव जात इति वक्तव्यम् ॥ तथा च सतोऽप्यंशेन धर्मभेद एव जगज्जातमिति सदेकमेव ॥ न चांशांशिनोर्भेदः

सिद्ध्यति ॥ पूर्ववदेव द्विगुणभारापत्तेः ॥ अंशाना-मिव परस्परं भेदो नाम नानात्वं चेत् ॥ ओमित्यत्र केचित् ॥ "बहु स्याम्" इति श्रुतेः ॥ वस्तुतस्तु "पूर्णात्पूर्णमुदच्यत" इति श्रुतेर्नांशेन नानात्वम् ॥ कार्यावस्थायां व्यापकत्वस्य तिरोभाव एव ॥ अथा-न्योन्याभावः स च प्रतियोगितावच्छेदकारोपापवा-दलक्षणः॥ तथा च घटत्वं पटत्वं चैकत्र नास्तीत्युक्तं भवति ॥ नैतत्सारम् ॥ सति द्रव्ये पार्थिवे च द्वयो-र्विद्यमानत्वात् सर्वगुणप्रसिद्ध्यै तथा प्रकटस्य धर्म-स्य वैषम्यलक्षणानि वंधना प्रतीतिः नटस्य नानारूपेण प्रकटस्य रूपद्वये भेदप्रतीतिवत् ॥ श्रुतिस्मृतिविद्ध-त्प्रतीत्या वस्तुनः एकत्वे सिद्धे प्रतीतिर्धर्मनिबंध-नैव ॥ तर्हि धर्माः स्वतो धर्मिणश्च भिन्ना इति सिद्धम् ॥ नैतदप्यस्ति ॥ तस्यैव प्रथमं धर्मरूपेणा-विर्भावात् ॥ "नाऽब्रह्मैवार्थः प्रतीयते" ॥

अतः कृतापि जिज्ञासा कुंठितैव भवेद् ध्रुवम् ॥३१॥
अनारभ्याधीतगार्हस्मार्ता इव भवेयदि ॥
प्रक्रिया महता वृत्तिः स्वातंत्र्यं चात्र तेन न ॥३२॥
धर्मार्थकाममोक्षाख्यं श्रेयः स्मार्तं न वैदिकम् ॥

पुरुषेक्षावशेनैते साध्यसाधनतां गताः ॥ ३३ ॥
अलौकिको हि वेदार्थः प्रमाणांतरगो न हि ॥
परमात्मविचारेण ते चत्वारो ह्यलौकिकाः ॥ ३४ ॥
धर्मे ब्रह्मणि च प्रोक्ता विराजमभिपद्यते ॥
अमृती भवति " प्रजापतेरेव सायुज्यमुपैतीदं सर्वं प्रजापतिः ॥ न स पुनरावर्तते ॥ वसीयान्भवति स निमेष्यन् ॥ कामुका एव स्त्रियो भवंति " ॥ " य एवं वेद प्रतितिष्ठति अन्नवानन्नादो भवति ॥ महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन " इत्यादिफलत्वेन तथैव ते ॥ ३५ ॥

अथ वेदाध्ययनं ब्रह्मचर्ये वेदांताध्ययनं संन्यास इति तद्विचारः पृथगेव समासिश्च श्रूयते शिक्षायां " वेदमनूच्याचार्योंतेवासिनमनुशास्ति " इत्यादिना उपनिषदनंतरं पठिताचार्योंतरेऽपि गुणोपसंहारन्यायेन पूर्वकांडाध्ययनमेव ब्रह्मचर्ये नोत्तरकांडस्य सौकर्यार्थमेव पाठांतरम् ॥ इदानीं विचारस्तु पश्चादेवेति नैकवाक्यता ॥ अत एव विचारोऽपि पृथगेवं सांगोपनिषद इति पृथक्पुराणेषु निर्देश इति ॥

१ पूर्वकांडविचारो जैमिनिना कृतः- उत्तरकांडविचारो व्यासेन कृत इत्यनस्तथैत्यर्थः.

अथवा कुत्रापि आश्रमे विचारोऽस्तु, नैकवाक्यता, न वेदत्वमुपनिषदाम् ॥ स्वरादिनियमस्तदंताना-मपि आचारपरंपरया ॥ वाक्येन तूपयोगो " यदेव विद्यया करोति " इति ॥ तथापि कथमुपयोग इति चेत् ॥ उच्यते ॥ लौकिकेषु पदार्थेषु सांगो यज्ञो-ऽभ्यस्यते वैदिके तत्रार्थे वैदिकता संपद्यत इति ब्रह्मवादेन सर्वस्यापि ब्रह्मत्वेऽवगते ब्रह्मण्येव यज्ञः प्रतिष्ठितोऽपि भवति ॥ अयज्ञकालेऽपि वैदिकत्वं सिद्ध्यति न तु वेदांतत्वम् ॥ कथम् ॥

तत्र कृष्णप्रसादेन मायावादो निराकृतः ॥
आवैदिको महादेवस्तत्र साक्षी न संशयः ॥ १ ॥
ये वैदिका महात्मानस्तेषां चानुमतिस्तथा ॥
अवेदविन्न मनुते मया चोपेक्षितः पुनः ॥ २ ॥
स्थापितो ब्रह्मवादो हि सर्ववेदांतगोचरः ॥
काशीपतिस्त्रिलोकेशो महादेवस्तु तुष्यतु ॥ ३ ॥
कस्यचित्त्वथ संदेहः स मां पृच्छतु सर्वथा ॥
न भयं तेन कर्तव्यं ब्राह्मणानामियं गतिः ॥ ४ ॥
डिंडिमस्तु वादितो द्वारि विश्वेशस्य मयात्र हि ॥
विद्वद्भिः सर्वथा श्राव्यं ते हि सन्मार्गरक्षकाः ॥५॥

इति श्रीवल्लभदीक्षितानां पत्रावलंबनमिदं समाप्तम् ।

# अथ श्रीभागवतैकादशस्कंधार्थ-निरूपणकारिकाः ।

श्रीगणेशाय नमः ।

निरोधलीलामुक्तानां मुक्तिस्तदनुवर्ण्यते ॥
मुक्तानामाश्रयः कृष्णो नान्येषामिति शास्त्रतः ॥१॥
अनन्यत्वं तदा सिध्येन्न त्वध्यासो मनागपि ॥
प्रपंचविस्मृतिः कृष्णासक्तिश्चाध्याससंभवे ॥ २ ॥
भजनानंदसिद्ध्यर्थं द्विरूपत्वमपीष्यते ॥
एकत्वे शिथिलाध्यासो निरोधेन भविष्यति ॥ ३ ॥
नाशो ज्ञानेन मुक्तस्य सम्यगाश्रयसिद्धये ॥
अवतारवदेवात्र निरूपणमपीष्यते ॥ ४ ॥
यथाधिकारबोधाय सर्वा लीलाः फलावधि ॥
मुक्तिं हित्वाऽन्यथारूपस्वरूपेण व्यवस्थितिः ॥ ५ ॥
लीला भगवतः सेयमाश्रयो भगवानतः ॥
विषयाः सात्त्विका जीवानिर्गुणाश्च द्विरूपतः ॥ ६ ॥
वसुदेवोद्धवौ तत्र विषयौ सत्त्वनिर्गुणौ ॥
अन्यथारूपमीशस्य माययेति हरेः कृपा ॥ ७ ॥
यैर्धर्मास्ते हि वक्तव्या अन्यथारूपनाशकाः ॥
भक्ता एव हि तज्ज्ञाः स्युः सर्वज्ञः केवलं हरिः ॥८॥

स्वरूपेण व्यवस्था तु सर्वज्ञेनैव नान्यथा ॥
आज्ञाकृतिर्निर्भयत्वं नैवाभ्यामुच्यते स्फुटम् ॥ ९ ॥
जीवस्य यादृशं रूपं तेन नित्यं व्यवस्थितिः ॥
यदौपनिषदं ज्ञानं प्रमया नेह तत्कथा ॥ १० ॥
व्यवस्थाश्रयसिद्धौ तु न तृतीयेऽपि सूचितम् ॥
द्वितीयेऽपि स्फुटं नोक्तं केवलौपनिषत्त्वतः ॥ ११ ॥
अतः सर्वज्ञतासिद्धौ सर्वनिर्णयमुक्तवान् ॥
आदिमध्यावसानेषु मुख्यलीलोच्यते हरेः ॥ १२ ॥
हेतूद्यमफलैर्द्वेधा समग्रा न स्वतःफलाः ॥
अतस्तु प्रथमेऽध्याये लीला भगवतोच्यते ॥ १३ ॥
हेतुरूपा ससामान्या प्रश्नः पूर्वविनिश्चितः ॥ १४ ॥

इति श्रीवल्लभाचार्यविरचिता एकादशस्कंधार्थनिरूपण-कारिकाः समाप्ताः ॥

## अथ श्रीकृष्णप्रेमामृतम् ।

श्रीकृष्णाय नमः ।

एकदा कृष्णविरहाद्ध्यायंती प्रियसंगमम् ॥
मनोवाप्पनिरासाय जल्पंतीदं मुहुर्मुहुः ॥ १ ॥
कृष्णः कृष्णेंदुरानंदो गोविंदो गोकुलोत्सवः ॥

१ मनोव्यथा निरा॰ पा॰ इति मम प्रतिभाति.

गोपालो गोपगोपीशो वल्लवेंद्रो व्रजेश्वरः ॥ २ ॥
प्रत्यहं नूतनतरस्तरुणानंदविग्रहः ॥
आनंदकसुखस्वामी संतोपाक्षयकोशभूः ॥ ३ ॥
आभीराभिनवानंदः परमानंदकंदलः ॥
वृंदावनकलानाथो व्रजानंगनवांकुरः ॥ ४ ॥
नयनानंदकुसुमो व्रजभाग्यफलोदयः ॥
प्रतिक्षणातिसुखदो मोहनो मधुरद्युतिः ॥ ५ ॥
सुधानिर्यासनिचयः सुंदरः शीतलाकृतिः ॥
नवयौवनसंभिन्नश्यामामृतरसार्णवः ॥ ६ ॥
इंद्रनीलमणिस्वच्छो दलितांजनचिक्कणः ॥
इंदीवरसुखस्पर्शो नीरदस्निग्धसुंदरः ॥ ७ ॥
कर्पूरागरुकस्तूरीकुंकुमाक्तांगधूसरः ॥
संकुंचितकचग्रस्तोल्लसच्चारुशिखंडकः ॥ ८ ॥
मत्तालिविभ्रमत्पारिजातपुष्पावतंसकः ॥
आननेंदुजितानंतपूर्णशारदचंद्रमाः ॥ ९ ॥
श्रीमल्ललाटपाटीरतिलकालकरंजितः ॥
लीलोन्नतभ्रुविलासो मदालसविलोचनः ॥ १० ॥
आकर्णारक्तसौंदर्यलहरीदृष्टिमंथरः ॥
घूर्ण्यमानस्वनयनः सर्वेक्षणविचक्षणः ॥ ११ ॥

अपांगेरितसौभाग्यतरलीकृतलोचनः ॥
ईषन्मुद्रितलोलाक्षः सुनासापुटसुंदरः ॥ १२ ॥
गंडप्रांतोल्लसत्कर्णमकराकृतिकुंडलः ॥
प्रसन्नानंदवदनो जगदाह्लादकाननः ॥ १३ ॥
सस्मेराधरलावण्यप्रकाशीकृतदिङ्मुखः ॥
सिंदूरारुणसुस्निग्धमाणिक्यदशनच्छदः ॥ १४ ॥
पीयूषाधिकमाध्वीकसूक्तश्रुतिरसायनः ॥
त्रिभंगललितस्तिर्यग्ग्रीवस्त्रैलोक्यमोहनः ॥ १५ ॥
कुंचिताधरसंसक्तकूजद्वेणुविनोदवान् ।
कंकणांगदकेयूरमुद्रिकाविलसद्भुजः ॥ १६ ॥
स्वर्णसूत्रसुविन्यस्तकौस्तुभामुक्तकंधरः ॥
मुक्ताहारलसद्वक्षःस्फुरच्छ्रीवत्सलांछनः ॥ १७ ॥
आपीनहृदयो नीपमाल्यवान्बंधुरोदरः ॥
संवीतपीतवसनो रशनाविलसत्कटिः ॥ १८ ॥
अंतरीयपटीबंधप्रपदांदोलितांचलः ॥
अरविंदपदद्वंद्वकलक्वणितनूपुरः ॥ १९ ॥
बंधूकारुणमाधुर्यसुकुमारपदांबुजः ॥
नखचंद्रजिताशेषदर्पणेषु मणिप्रभः ॥ २० ॥
ध्वजवज्रांकुशांभोजराजच्चरणपल्लवः ॥

त्रैलोक्याद्भुतसौंदर्यपरिपाकमनोहरः ॥ २१ ॥
साक्षात्केलिकलामूर्तिः परिहासरसार्णवः ॥
यमुनोपवनश्रेणीविहारी व्रजनागरः ॥ २२ ॥
गोपांगनाजनासक्तो वृंदारण्यपुरंदरः ॥
आभीरनागरीप्राणनायकः कामशेखरः ॥ २३ ॥
यमुनानाविको गोपीपारावारकृतोद्यमः ॥
राधावरुंधनरतः कदंबवनमंदिरः ॥ २४ ॥
व्रजयोषित्सदाहृद्यो गोपीलोचनतारकः ॥
जीवनानंदरसिकः पूर्णानंदकुतूहलः ॥ २५ ॥
गोपिकाकुचकस्तूरीपंकिलः कोकिलालसः ॥
अलक्षितकुटीरस्थो राधासर्वस्वसंपुटः ॥ २६ ॥
वल्लवीवदनांभोजमधुपानमधुव्रतः ॥
निगूढरसविद्गोपीचित्ताह्लादकलानिधिः ॥ २७ ॥
कालिंदीपुलिनानंदी क्रीडातांडवपंडितः ॥
आभीरिकानवानंगरंगभूमिसुधाकरः ॥ २८ ॥
विदग्धगोपवनिताचित्ताकूतविनोदवान् ॥
नानोपायनपाणिस्त्रगोपनारीगणावृतः ॥ २९ ॥
वांछाकल्पतरुः कामकलारसशिरोमणिः ॥
कंदर्पकोटिलावण्यः कोटींदुललितद्युतिः ॥ ३० ॥

नवीनमधुरस्नेहः प्रेयसीप्रेमसंचयः ॥
गोपीमनोरथाक्रांतो नाट्यलीलाविशारदः ३१ ॥
जगत्त्रयमनोमोहकरो मन्मथमन्मथः ॥
गोपसीमंतिनीशश्वद्भावापेक्षापरायणः ॥ ३२ ॥
प्रत्यंगरभसावेशप्रमदाप्राणवल्लभः ॥
रासोल्लासमदोन्मत्तो राधिकारतिलंपटः ॥ ३३ ॥
खेलालीलापरिश्रांतः स्वेदांकुरचिताननः ॥
गोपिकांकलसच्छ्रीमान्मलयानिलसेवितः ॥ ३४ ॥
इत्येवं प्राणनाथस्य प्रेमामृतरसायनम् ॥
यः पठेच्छ्रावयेद्वापि स प्रेम्णि प्रमिलेद्ध्रुवम् ॥ ३५ ॥

इति श्रीवल्लभाचार्यविरचितं प्रेमामृतं संपूर्णम् ।

## अथ श्रीनंदकुमाराष्टकम् ।

श्रीकृष्णाय नमः ।

सुंदरगोपालम् उरवनमालं नयनविशालं दुःखहरं वृंदावनचंद्रमानंदकंदं परमानंदं धरणिधरम् ॥ वल्लभघनश्यामं पूर्णकामम् अत्यभिरामं प्रीतिकरं भज नंदकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्म परम् ॥१॥ सुंदरवारिजवदनं निर्जितमदनम् आनंदसदनं मुकु

१ उरूवन.२ घनदामैन्.३ पूर्णसुकामम्.४ इति पा० ममप्रतिभाति.

टधरं गुंजाकृतिहारं विपिनविहारं परमोदारं चीरहरम्॥ वल्लभपटपीतं कृतउपवीतं करनवनीतं विबुधवरं भजनंदकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्म परम्॥२॥
शोभितसुखमूलं यमुनाकूलं निपटअतूलं सुखदवरं सुखमंडितरेणुं चारितधेनुं वादितवेणुं मधुरसुरम्॥ वल्लभमतिविमलं शुभपदकमलं नखरुचिविमलं तिमिरहरं भज नंदकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्॥३॥
शिरमुकुटसुदेशं कुंचितकेशं नटवरवेषं कामवरं मायाकृतमनुजं हलधरसहजं प्रतिहतदनुजं भारहरम् ॥ वल्लभव्रजपालं सुभगसुचालं हितमनुकालं भाववरं भज नंदकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्म परम्॥४॥
इंदीवरभासं प्रकटसुरासं कुसुमविकासं वंशिधरं हितमन्मथमानं रूपनिधानं कृतकलिगानं चित्तहरम् ॥ वल्लभमृदु ।सं कुंजनिवासं विविधविलासं केलिकरं भज नंदकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्म परम्॥५॥
अतिपरमप्रवीणं पालितदीनं भक्ताधीनं कर्मकरं मोहनमतिधीरं कणिर्वलित्वारं हतपतवीरं तरलतरम् ॥

१ वल्लभपीतपटं. २ कृतसंवीतं. ३ निरुपमशीलं. ४ वंशधर इति पा० ममप्रतिभाति. ५ कलित्रलित्वारं. अथवा चलितकल्रितारं.

वल्लभव्रजरमणं वारिजवदनं जलधरशमनं शैलधरं
भज नंदकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्म परम्॥६॥
जलधररुचिकायं ललितत्रिभंगं बहुकृतिरंगं रसिकवरं
गोकुलपरिवारं मदनाकारं कुंजविहारं गूढनरम् ॥
वल्लभव्रजचंद्रं सुभगसुच्छंदं परमानंदं भ्रांतिहरं
भज नंदकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्म परम्॥७॥
वंदितचरणयुगं पावनकरणं जगदुद्धरणं विमलधरं
कालियशिरगमनं कृतफणिनमनं घातितयमनं मृदुलतरम् ॥ वल्लभदुःखहरं निर्मलचरणम् अशरणशरणं
मुक्तिकरं भज नंदकुमारं सर्वसुखसारं तत्त्वविचारं
ब्रह्म परम् ॥ ८ ॥

इति श्रीवल्लभाचार्यविरचितं श्रीनंदकुमाराष्टकं संपूर्णम् ।

---

## अथ श्रीगिरिराजधार्यष्टकम् ।

श्रीगोपीजनवल्लभाय नमः ।

भक्ताभिलाषाचरितानुसारी दुग्धादिचौर्येण यशोविसारी ॥ कुमारतानंदितघोषनारिर्मम प्रभुः श्रीगिरिराजधारी ॥ १ ॥ व्रजांगनावृंदसदाविहारी अंगैर्गु-

---

१ विमलतरं. २ घातितयमुनं इति पा० ममप्रनिपानि.

हांगारतमोपहारी ॥ क्रीडारसावेशतमोभिसारी मम प्रभुः श्रीगिरिराजधारी ॥ २ ॥ वेणुस्वनानंदितपन्नगारी ॥ रसातलानृत्यपदप्रचारी ॥ क्रीडन् वयस्याकृतिदैत्यमारी ॥ मम प्रभुः श्रीगिरिराजधारी ॥ ३ ॥ पुलिंददाराहितशंबरारी रमासदोदारदयाप्रकारी ॥ गोवर्धने कंदफलोपहारी मम प्रभुः श्रीगिरिराजधारी ॥ ४ ॥ कलिंदजाकूलदुकूलहारी कुमारिकाकामकलावितारी ॥ वृंदावने गोधनवृंदचारी मम प्रभुः श्रीगिरिराजधारी ॥ ५ ॥ व्रजेंद्रसर्वाधिकशर्मकारी महेंद्रगर्वाधिकगर्वहारी ॥ वृंदावने कंदफलोपहारी मम प्रभुः श्रीगिरिराजधारी ॥ ६ ॥ मनःकलानाथतमोविदारी वंशीरवाकारिततत्कुमारिः॥ रासोत्सवोद्वेल्लरसाब्धिसारी मम प्रभुः श्रीगिरिराजधारी ॥ ७ ॥ मत्तद्विपोद्दामगतानुकारी लुंठत्प्रसूनाप्रपदीनहारी ॥ रामोरसस्पर्शकरप्रसारी मम प्रभुः श्रीगिरिराजधारी ॥ ८ ॥

इति श्रीवल्लभाचार्यविरचितं गिरिराजधार्यष्टकं संपूर्णम् ।

---

१ रामोरसंम्प. इति पा० ममप्रतिभाति.

# अथ श्रीकृष्णाष्टकम् ।

श्रीकृष्णाय नमः ।

श्रीगोपगोकुलविवर्धन नंदसूनो ॥ राधापते व्रजजनार्तिहरावतार ॥ मित्रात्मजातटविहारण दीनबंधो ॥ दामोदराच्युत विभो मम देहि दास्यम् ॥१॥ श्रीराधिकारमण माधव गोकुलेंद्र ॥ सूनो यदूत्तम रमार्चितपादपद्म ॥ श्रीश्रीनिवास पुरुषोत्तम विश्वमूर्ते गोविंद यादवपते मम देहि दास्यम् ॥ २ ॥ गोवर्धनोद्धरण गोकुलवल्लभाद्यवंशोद्भटालयहरेऽखिललोकनाथ ॥ श्रीवासुदेव मधुसूदन विश्वनाथ विश्वेश गोकुलपते मम देहि दास्यम् ॥ ३ ॥ रासोत्सवप्रिय बलानुज सत्त्वराशे भक्तानुकंपित भवार्तिहराधिनाम ॥ विज्ञानधाम गुणधाम किशोरमूर्ते सर्वेश मंगलतनो मम देहि दास्यम् ॥ ४ ॥ सद्धर्मपाल गरुडासन यादवेंद्र ब्रह्मण्यदेव यदुनंदनभक्तिदान ॥ संकर्षण प्रियकृपाऽऽलय देव विष्णो सत्यप्रतिज्ञ भगवन् मम देहि दास्यम् ॥ ५ ॥ गोपीजनप्रियतमक्रियथैकलभ्य राधावरप्रिय वरेण्य शरण्यनाथ ॥ आश्चर्यबाल वरदेश्वर पूर्णकाम विद-

समाश्रय विभो मम देहि दास्यम् ॥ ६ ॥ कंदर्पकोटिमदहारण तीर्थकीर्ते विश्वैकवंद्य करुणार्णव तीर्थपाद ॥ सर्वज्ञ सर्ववरदाश्रय कल्पवृक्ष नारायणाखिलगुरो मम देहि दास्यम् ॥ ७ ॥ वृंदावनेश्वर मुकुंद मनोज्ञवेष वंशीविभूषितकरांबुज पद्मनेत्र ॥ विश्वेश केशव व्रजोत्सव[1] भक्तिवश्य देवेश पांडवपते मम देहि दास्यम् ॥ ८ ॥ श्रीकृष्णस्तवरत्नमष्टकमिदं सर्वार्थदं वर्ण्यतां भक्तानां च हितं हरेश्च नितरां यो वै पठेत्पावनम् ॥ तस्यासौ व्रजराजसूनुरतुलां भक्तिं स्वपादांबुजे सत्सेव्ये प्रददाति गोकुलपतिः श्रीराधिकावल्लभः ॥ ९ ॥

इति श्रीमद्वल्लभाचार्यविरचितं श्रीकृष्णाष्टकं समाप्तम् ।

## अथ गोपीजनवल्लभाष्टकम् ।

श्रीगोपीजनवल्लभाय नमः ।

नवाम्बुदानीकमनोहराय प्रफुल्लराजीवविलोचनाय वेणुस्वनैर्मोदितगोकुलाय नमोऽस्तु गोपीजनवल्लभाय ॥१॥ किरीटकेयूरविभूषिताय ग्रैवेयमालाम-

[1] सदोत्सव.

णिरंजिताय ॥ स्फुरच्चलत्कांचनकुंडलाय नमोऽस्तु गोपीजनवल्लभाय ॥ २ ॥ दिव्यांगनावृंदनिषेविताय स्मितप्रभाचारुमुखांबुजाय ॥ त्रैलोक्यसंमोहनसुंदराय नमोऽस्तु गोपीजनवल्लभाय ॥ ३ ॥ रत्नादिमूलालयसंस्थिताय कल्पद्रुमच्छायसमाश्रिताय ॥ हेमस्फुरन्मंडलमध्यगाय नमोऽस्तु गोपीजनवल्लभाय ॥ ४ ॥ श्रीवत्सरोमावलिरंजिताय वक्षःस्थले कौस्तुभभूषिताय ॥ सरोजकिंजल्कनिभांशुकाय नमोऽस्तु गोपीजनवल्लभाय ॥ ५ ॥ दिव्यांगुलीयांगुलिरंजिताय मयूरपिच्छच्छविशोभिताय ॥ वन्यस्रजालंकृतविग्रहाय नमोऽस्तु गोपीजनवल्लभाय ॥ ६ मुनींद्रवृंदैरभिसंस्तुताय क्षरत्पयोगोकुलगोकुलाय ॥ धर्मार्थकामामृतसाधकाय नमोऽस्तु गोपीजनवल्लभाय ॥ ७ ॥ एनस्तमःस्तोमदिवाकराय भक्तस्य चिंतामणिसाधकाय ॥ अशेषदुःखामयभेषजाय नमोस्तु गोपीजनवल्लभाय ॥ ८ ॥

इति श्रीमद्वल्लभाचार्यविरचितं गोपीजनवल्लभाष्टकं समाप्तम्। श्रीहरिरायजीविरचितमिति केचित्।

# अथ पंचश्लोकी ।

श्रीकृष्णाय नमः ।

गृहं सर्वात्मना त्याज्यं तच्चेत्त्यक्तुं न शक्यते ॥
कृष्णार्थं तत्प्रयुंजीत कृष्णोऽनर्थस्य मोचकः ॥ १ ॥
संगः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ॥
स सद्भिः सह कर्तव्यः संतः संगस्य भेषजम् ॥ २ ॥
अनुकूले कलत्रादौ विष्णोः कार्याणि कारयेत् ॥
उदासीने स्वयं कुर्यात् प्रतिकूले गृहं त्यजेत् ॥ ३ ॥
तत्त्यागे दूषणं नास्ति यतः कृष्णबहिर्मुखाः ॥
अनुकूलस्य संकल्पः प्रतिकूलविसर्जनम् ॥ ४ ॥
करिष्यतीति विश्वासो भर्तृत्वे वरणं यथा ॥
आत्मनैवेद्यकार्पण्ये षड्विधा शरणागतिः ॥ ५ ॥

इति श्रीमद्वल्लभार्यकृता पंचश्लोकी समाप्ता ।

# अथ न्यासादेशः ।

श्रीकृष्णाय नमः ।

न्यासादेशेषु धर्मत्यजनवचनतोऽकिंचनाधिक्रियोक्ता कार्पण्यं वांगमुक्तं, मदितरभजनापेक्षणं वा व्यपोढम् ॥ दुःसाध्येच्छोद्यमौ वा क्वचिदुपशमिताव-

१ कृष्णः संसार. २ भगवत्कर्म. ३ रक्षिष्य.

न्यसंमेलने वा ब्रह्मास्त्रन्याय उक्तस्तदिह न विहतो धर्म आज्ञादिसिद्धः ॥ १ ॥

इति श्रीवल्लभाचार्यविरचितो न्यासादेशः समाप्तः ।

# अथ श्रीमद्भागवतदशमस्कंधार्थानुक्रमणिका ।

श्रीकृष्णाय नमः ।

राजप्रश्नो हरेर्जन्मकारणं भूमिसांत्वनम् ॥
कंसबोधनषट्पुत्रवधः कंसभयं नृषु ॥ १ ॥
मायाज्ञापनदेवादिस्तुतिः कृष्णसमुद्भवः ॥
वर्णनं कृष्णरूपस्य वसुदेवस्य संस्तुतिः ॥ २ ॥
देवक्यादिपुराकृत्यकथनं जगदीशितुः ॥
गोकुले नयनं कन्यामारणे तद्विभाषणम् ॥ ३ ॥
सांत्वनं वसुदेवस्य मोचनं भार्यया सह ॥
कंसदुर्मंत्रदैत्येषु साधुबालउपद्रवः ॥ ४ ॥
प्रादुर्भूते व्रजे कृष्णे व्रजराजमहोत्सवः ॥
मथुरागमनं नंदवसुदेवसमागमः ॥ ५ ॥
पूतनासुपयःपानं नंदगोपादिविस्मयः ॥
शकटव्यत्ययो दैत्यचक्रवातवधः शिशोः ॥ ६ ॥

संलालने सुखे धात्र्या जृंभणे विश्वदर्शनम् ॥
रामकेशवयोर्नाम्नः करणं केलिरेतयोः ॥ ७ ॥
धौर्त्यं गोपवधूगेहे प्रसंगाद्भक्षणं मृदः ॥
दर्शनं विश्वरूपस्य नंदभाग्यपुराकथा ॥ ८ ॥
चौर्यं हैयंगवस्याथ बंधनं दामभिर्बलात् ॥
यमलार्जुनताशापो भंगश्चैव स्तुतिस्तयोः ॥ ९ ॥
बालक्रीडोपनंदादिमंत्रणं गमनं ततः ॥
वृंदावने तयोः क्रीडा वयस्यैर्वनचारिणोः ॥ १० ॥
वत्सासुरस्य च वधो बकाघासुरयोरपि ॥
भोजनं सखिभिस्तीरे यमुनाया हरेर्मुदा ॥ ११ ॥
...श्रा कृष्णत्वं वत्सपालयोः ॥
...नं स्तुतिः कृष्णरतिर्गतिः ॥ १२ ॥
...कायधेनुकाद्रिवधस्तथा ॥
...ृष्णो गोपीनेत्रमहोत्सवः ॥ १३ ॥
...ानेन गोपान् हरिरजीवयत् ॥
...ोत्रं तद्भार्याणां प्रलापनम् ॥ १४ ॥
...धकथनं वह्निमोचनम् ॥



---

२ यवम्तनः. ३ व्रजे कृष्णस्यागमनं इति मम

क्रीडाप्रलंबनिधनं दावाग्नेर्मोचनं गवाम् ॥
वर्षाशरद्वर्णनं च गोपीनां वचनामृतम् ॥ १५ ॥
व्रतं गोकुलकन्यानां वस्त्राणां हरणं मुदा ॥
वनभाग्यकथा गोपप्रार्थना प्रेषणं मखे ॥ १६ ॥
विप्रभार्याप्रसादश्च पश्चात्तापो द्विजन्मनाम् ॥
यागभंगो महेंद्रस्य धृतिर्गोवर्धनस्य च ॥ १७ ॥
सुरेंद्रगर्वहरणं गर्गगीतस्य वर्णनम् ॥
गोपशंकापगमनमिंद्रधेन्वभियाचनम् ॥ १८ ॥
नंदस्य मोक्षणं गोपवैकुंठागमनं ततः ॥
पंचाध्याय्यां निशि क्रीडा सर्पान्नंदस्य मोक्षणम् ॥१९॥
शंखचूडवधः पश्चाद् गोपीगीतं वृषार्दनम् ॥
कंसनारदसंवादः कंसाक्रूरकथा ततः ॥ २० ॥
केशिनो निधनं कृष्णान्नारदर्षिकथा ततः ॥
व्योमासुरवधोऽक्रूरागमनं गोकुलेषु[1] च ॥ २१ ॥
दर्शनानंदहृष्टात्मरोमांचो गद्गदा गिरः ॥
संवादो रामकृष्णाभ्यां वर्णितं कंससेष्टितम् ॥ २२ ॥
रामकृष्णप्रयाणं च तथा गोपीप्रलापनम् ॥
मथुरागमनं मध्ये ह्रदे कृष्णस्य दर्शनम् ॥ २३ ॥

१ नंदगोकुले.

स्तुतिः पुरगतिः पश्चाद्दर्शनं पुरसंपदः ॥
रजकस्य शिरश्छेदो वायकस्य वरद्वयः ॥ २४ ॥
सुदाम्नो वरदानं च कुब्जासंदर्शनं हरेः ॥
धनुर्भंगः सैन्यवधः कंसदुर्हेतुदर्शनम् ॥ २५ ॥
रंगोत्सवे कुवलयापीडयुद्धविघातनम् ॥
दर्शनं रामकृष्णस्य पौराणां प्रेमदर्शनम् ॥ २६ ॥
मल्लानां निधनं रंगे कंसस्य सह बंधुभिः ॥
पित्रोश्च सांत्वनं सर्वसुहृदां परितोषणम् ॥ २७ ॥
उग्रसेनाभिषेकश्च नंदादिव्रजप्रेषणम् ॥
ईशद्विजातिसंस्कारः पठनं च गुरोर्गृहे ॥ २८ ॥
मृतपुत्रप्रदानं च गुरोः पंचजनार्दनम् ॥
पुनरागमनं शौरेर्मधुपुर्यां महोत्सवः ॥ २९ ॥
उद्धवप्रेषणं गोपीविलापपरिसांत्वनम् ॥
कुब्जारतिस्तथाक्रूरप्रेषणं गजसाह्वये ॥ ३० ॥
पांडवेषु च वैषम्यं धृतराष्ट्रस्य बोधनम् ॥
इत्येवं दशमस्कंधपूर्वार्धे विनिरूपितम् ॥ ३१ ॥
जामातृवधसंतप्तजरासंधचमूवधः ॥
बहुशः सेनयोद्वेगो द्वारकादुर्गकारणम् ॥ ३२ ॥
यवनस्य वधो दृष्ट्या मुचुकुंदस्य संस्तुतिः ॥

वरं दत्त्वा ततो म्लेच्छवधं कृत्वा धने ततः ॥३३॥
नीयमाने वैरैर्द्दसजरासंघात्पलायनम् ॥
रैवताद्रेवतीकन्या बलदेवसमर्पणम् ॥ ३४ ॥
रुक्मिणीप्रियसंदेशश्रवणादखिलान्रिपून् ॥
निर्जित्य निर्गमो गेहादंबिकाया हृतिर्बलात् ॥३५॥
चैद्यसांत्वनमुर्वीशैस्ततो रुक्मिसमागमः ॥
युद्धाक्षेपापराधे च मुंडनं तस्य कृष्णतः ॥ ३६ ॥
रुक्मिणीदुःखशमनं रामवाक्यं च मोक्षणम् ॥
ततो विवाहो रुक्मिण्या विधिवत्स्वपुरे तदा ॥३७॥
प्रद्युम्नोत्पत्तिकथनं हरणं सूतिकागृहात् ॥
मायावत्योक्तवृत्तांतः शंबरस्य वधस्ततः ॥ ३८ ॥
पुनरागमनं गेहे संतोपो द्वारकौकसाम् ॥
सूर्यात्स्यमंतकमणिर्याचनं तस्य वै हरेः ॥ ३९ ॥
तत्संबंधात्प्रसेनस्य वधोऽकीर्तिर्हरेस्तथा ॥
तन्मार्जनाय ऋक्षस्य गेहे गमनमेतयोः ॥ ४० ॥
ज्ञात्वा सुरर्षभं युद्धाज्जांबवत्याः समर्पणम् ॥
सत्राजितस्य प्राप्तस्य स्वतो दानं मुरारिणा ॥ ४१ ॥
विवाहः सत्यभामाया दत्तायाः प्रीतये हरेः ॥
रामेण सह कृष्णस्य गमनं गजसाह्वये ॥ ४२ ॥

---

१ मुदा.

अक्रूरकृतवर्मभ्यां प्रेरिताच्छतधन्वनः ॥
सत्राजितवधो मध्ये कृष्णाच्छतधनोर्वधः ॥ ४३ ॥
रामस्य मिथिलायांत्रा गदाशिक्षा सुयोधने ॥
अक्रूरमणिदानं च शक्रप्रस्थे हरेर्गतिः ॥ ४४ ॥
कालिंद्या संगतिः शौरेर्विवाहः स्वपुरे ततः ॥
मित्रविंदाहृतिर्नाग्नजित्युद्वाहोऽत एव वै ॥ ४५ ॥
भद्राया लक्ष्मणायाश्च विवाहो मुरघातिना ॥
पितुस्तत्तनयानां च नरकस्य च घातनम् ॥ ४६ ॥
भूमिस्तुती राजकन्याप्रेषणं स्वपुरे ततः ॥
गत्वा महेंद्रभवनं पारिजाताहृतिर्बलात् ॥ ४७ ॥
उद्वाहो राजकन्यानां रुक्मिणीकृष्णकौतुकम् ॥
कृष्णभार्याकथा पुत्रनामान्युद्वाहपर्वणि ॥ ४८ ॥
रामाद्रुक्मिवधो द्यूते बाणस्य हरसंकथा ॥
उषास्वप्नकथा चित्रलेखया हरणं हरेः ॥ ४९ ॥
पौत्रस्य बंधनं चापि बाणयादवसंयुगे ॥
कृष्णशंकरयोर्युद्धं ज्वरसंस्तवनं ततः ॥ ५० ॥
बाणबाहुच्छिदा रुद्रस्तुतिर्बाणाभयं वरः ॥
उषाप्राप्तिर्नृगाख्यानं बलभद्रव्रजागमः ॥ ५१ ॥
गोपीविलापो रामस्य स्तुतिर्गोपीभिरेव च ॥

१ यामो. २ मुरेश प. ३ पीडनतनयानां.

यद्यपि प्रणवो व्याहृतयश्च तथा भवंति तथापि तेषामर्थः स्पष्ट एवेति गायत्र्यर्थो निरूप्यते गायत्र्यंतर्गततच्छन्दव्याख्यानं सत्यं परमिति कालत्रयाबाधितं सर्वलोकप्रसिद्धं सत्यं परं श्रेष्ठं पुरुषोत्तमरूपं सर्ववेदप्रसिद्धमिति सवितुरित्युक्तम् ॥ प्रसवितुरिति ॥ गायत्री हि वेदमाता वेदत्रयार्थप्रतिपादिका भवति ॥ तेन निर्विघ्नवाक्प्रसवार्थं गायत्र्या भगवदुपस्थानं कुर्वाणाः गायत्र्यर्थमाहुः ॥ तेन गायत्र्या जगत्प्रसूत्वेन सर्वकर्तृत्वम् ॥ यथा कामधेनोः कल्पवृक्षाचिंतामणेर्मंत्रादेश्च जायमानाः पदार्था दृश्यंते न हि ते विकृता भवंति ॥ चतुर्विधपुरुषार्थसिद्ध्यर्थं जगज्जननमित्यर्थः ॥ सर्वजीवानां सर्वपुरुषार्थसिद्ध्यर्थं जगदित्युक्तं भवति ॥ गायत्र्यर्थे हि प्रसवमात्रमुक्तं न स्थितिप्रलयौ ॥ वरेण्यभर्गःशब्दाभ्यां च पश्चात्सूचितौ ॥ वरेण्यमिति भक्तिबीजम् ॥ "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः ॥ एतेन परस्परवरणमुक्तम् ॥ वरणीयत्वोक्त्या यथा कन्या स्वाभिमतमेव स्वपतित्वेन वृणुते वरो वा तादृशीमेव कन्यां स्वस्त्रीत्वेन, तथा भगवान् स्वदासत्वेनात्मीयत्वेनांगीकरोतीत्युच्यते ॥

तथा च यथा तदनंतरं नान्यत्र विनियोगस्तस्यास्तथै-वैतस्यापीति ज्ञापितं भवति ॥ पूर्वं केनापि ज्ञातुमशक्यमित्यर्थः ॥ वरणीयं सुंदरमिति स्वतो दोषाभाव उक्तः ॥ भजनीयगुणान् वदन् सेवकोद्धारमाह ॥ भर्ग इति ॥ संसारनिवृत्तिः भर्जयत्यखिलाविद्यामिति भर्गश्शब्दः सकारांतो व्याख्यातः ॥ स्वरूपस्फूर्त्यैव सर्वेषां सर्वाविद्यानां नाशक इत्यर्थः ॥ स्वरूपमेवाविद्यानाशकम् ॥ प्रमेयबलमेतत् ॥ देवत्वेन सर्वज्ञत्वम् ॥ अत एव देवस्य धीमहीति समस्तानां तद्ध्यानं सर्वथा हितमिति ॥ धीमहि ध्यायेम प्रीतिं वा कुर्म इत्यर्थः ॥ धियो यो नः प्रचोदयादिति ॥ धियः बुद्धीः प्रचोदयादिति ॥ तेन सर्वप्रेरकत्वमायाति ॥ प्रकृष्टत्वेन मूलपुरुषोत्तमस्वरूपपर्यंतं चोदयादिति प्रेरयति फलसंबंधं करोतीत्यर्थः ॥ गायत्री बीजं वेदो वृक्षः श्रीभागवतं फलमिति फलसंबंधेन श्रीभागवतप्रतिपाद्यं वेद्यं वास्तवं वस्तु इति ॥ वास्तववस्तुषु "पिबत भागवतं रसमालयम्" इति ॥ रसम् आलयम् आङ् ईषदर्थे लयो मोक्षः यद्रसाग्रे सोऽपि ईषदतितुच्छ इत्यर्थः ॥ मोक्षाधिकारस्तु

"ब्रह्मानंदात्समुद्धृत्य भजनानंदयोजने ॥ स रसस्तु रससमूहो रास इति रासलीलैकतात्पर्यमित्यर्थः ॥ अत एव रास एव सर्वेंद्रियास्वाद्यसाक्षात्स्वरूपसंबंधः मनोरथांतरूपः "यतो वाचो निवर्तंते अप्राप्य मनसा सह ॥ आनंदं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इति श्रुतिप्रतिपाद्यः ॥ "रसो वै सः ॥ रसꣳ ह्येवायं लब्ध्वानंदी भवति" इति श्रुतिः ॥ ननु प्रचोदयादिति गायत्रीचतुर्थः पादः संन्यासाश्रमपर्यंतं प्रेरकत्वमापादयति कथं रासलीलातात्पर्यकत्वमिति चेत्तत्राह ॥ भक्तिमार्गीयसंन्यासस्तु साक्षात्पुष्टिपुष्टिश्रुतिरूपाणां रासमंडलमंडनानाम् ॥ स्वयमेवोक्तं "संत्यज्य सर्वविषयांस्तव पादमूलं प्राप्ता" इत्यादि चतुर्थाध्याये ताः प्रति भगवता ॥ " एवं मदर्थोज्झितलोकवेदस्वानाम्" इति तस्य स्वात्मत्वेन परमकाष्ठापन्नस्नेहास्पदं प्रभुरेव स्फुरत्येति "तत्त्वमसि" इति महावाक्यार्थस्य "तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेव गायंत्यो नात्मागाराणि सस्मरुः" इति सिद्धिः ॥ ननु तद्योऽहं सोऽसौ योऽसौ सोऽहमित्यैक्यम् एवं परस्परं

स्वरूपव्यतिहारेण धर्मारोपः तैत्तिरीयके च- "अहमस्मि ब्रह्माहमस्मि" इति पठ्यते ॥ अत्र मध्यस्थं ब्रह्मपदमुभयत्र संबध्यते ॥ तेनावृत्त्या व्यतिहारः ॥ अतो ब्रह्माभेदः सिध्यति ॥ तथा लीलामध्यपातिभक्तानामपि कृष्णोऽहमहं कृष्ण इतिभावमुल्लेख्यवाक्यं श्रूयते ॥ तज्ज्ञानं भक्तिफलमिति प्रफुल्लभानं प्रतिवादिनं तत्स्वरूपं बोधयंति ॥ रसात्मकत्वाद्भक्तेः संयोगवियोगात्मकत्वाद्द्वितीयभावोद्रेके यथेतरेश्रुप्रलापादयो व्यभिचारिभावास्तथाऽतिविगाढभावेन तदभेदस्फूर्तिरप्येकः सः न तु सार्वत्रिकः ॥ तदात्मानं तत्त्वेन विशिषंति तं च स्वात्मत्वेन सोऽत्र व्यतिहारपदार्थ इत्यर्थः ॥ अपरं च उद्देश्यविधेयभावस्फूर्त्या न ह्यद्वैतज्ञानमस्ति किं तु भावनामात्रम् ॥ भक्तानां तु विरहभावे तदात्मकत्वमेवाखंडं स्फुरति येन लीलाः स्वतः कुर्वते ॥ तद्यथा तथा श्रीमद्भागवतदशमस्कंधविवृतौ प्रपंचितमस्माभिः ॥ एवं सति मुख्यं यदद्वैतज्ञानं तद्भक्तिभावैकदेशव्यभिचारिभावेष्वेकतर इति सर्षपस्वर्णाचलयोरिव ज्ञानभक्त्योस्तारतम्यं कथं वर्णनीयमिति भावः॥भक्तिमार्गीयसंन्यासे

चतुर्थपादगायत्र्यर्थस्तु योऽहं सोऽसौ योऽसौसोऽह-मिति यः पुरुषोत्तमः सोहं भक्तः फलप्रकरणप्रथमाध्याये बाहुप्रसार इति भिन्नसंयोग उक्तः ॥ द्वितीयाध्याये "अंतर्हिते भगवति" इत्यादिविप्र योगेऽसौ उभयत्र एकात्मको भवति॥द्वितीये योऽसौ तृतीयाध्यायेप्येकात्मनोरेव द्विवचनोभयभावात्मकस्फूर्तिः योऽसौ उभयभावात्मकः चतुर्थाध्याये "तासामाविरभूत्" इत्यादि नोक्तः सोऽहमिति सपुरुषोत्तमः अहं भक्तो भिन्नो भवति ॥ तस्मात्पंचमाध्याये संयोगरसेपरमकाष्ठापन्नः अनिर्वचनीयरससमूहरासरसाब्धिकल्लोलसर्वेंद्रियास्वाद्यरसानुभवं करोति वेदोक्तमहावाक्यात् "तत्त्वमसि"इति "अहमस्मि ब्रह्माहमस्मि" इत्यादिविप्रयोगभावात्मकरसानंदो भवति ॥ संयोगरसे "भगवंस्तवास्मि" इति गद्ये कामाक्षरं पश्चाद्दीजम् ॥ "अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम" इति "मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥ याहि सर्वात्मभावेन संयास्यस्यकुतोभयः" इत्यादीतिदिक् ॥ अत एव श्रुतिः–"आत्मानं द्वेधाऽपातयत पतिश्च पत्नी चाभवताम्" इति, व्याससूत्रे

" लोकवत्तु लीला कैवल्यम् " इति, "सर्वज्ञानस्वरूपं हि ब्रह्म पूर्वं रिरंसया ॥ ततोऽखिलजगद्रूपं भूत्वा तत्रातिदुस्तराः ॥ भक्ताः सर्वं परित्यज्य प्रभुप्राप्त्यै यथा रहः ॥ साक्षात्स्वरूपदानेन परा लीलेयमित्यपि ॥ लीलासंबंधिनस्तत्र सर्वं भगवदात्मकम् ॥ प्रवर्तकत्वतो वेणुनादो वेदात्मकोऽत्र हि" ॥ "यतो वाचो निवर्तंते अप्राप्य मनसा सह" इति, श्रुतिः " आनंदं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इति चेति दिक् ॥

इति श्रीमद्वल्लभाचार्यविरचितं गायत्रीभाष्यं संपूर्णम् ।

---

## अथ गायत्रीव्याख्या ।

श्रीकृष्णः शरणं मम ।

श्रीकृष्णः स्वात्मनः सर्वमुत्पाद्य विविधं जगत् ॥
तदासक्तांशत्रोपाय शब्दब्रह्माभवत्स्वयम् ॥ १ ॥
तत्र सर्गादिभिः क्रीडन्नित्यानंदरसात्मकः ॥
निजभावप्रकाशाय गायत्रीरूप उद्बभौ ॥ २ ॥
सा षड्गुणयुतं सर्वदेवबीजं गुणातिगम् ॥
सर्वावताररूपं हि सर्वतत्त्वोपबृंहितम् ॥ ३ ॥

शृंगारैश्वर्यसंयुक्तं पुरुषद्वयपूरणम् ॥
भक्त्या सर्वेंद्रियाह्लादि चतुर्विंशाक्षरं ततः ॥ ४ ॥
मार्गत्रयप्रकटनं भावत्रयविवर्धनम् ॥
सच्चिदानंदपूर्णं च त्रिपदेति प्रकीर्त्यते ॥ ५ ॥
छंदो मंत्रस्य गायत्री प्रेमोल्लासादहर्निशम् ॥
गायंतं त्रायते भावमाच्छादयति चैव हि ॥ ६ ॥
विश्वामित्रो जगन्मित्रमृषिरत्र हरिःस्वयम् ॥
मित्रे चर्षाविति प्रोक्तेः पूर्वाचापि प्रतीयते ॥ ७ ॥
सविता सर्वबीजानां निजानां देवतास्य हि ॥
आचार्यो भगवानग्निर्मुखमस्य प्रकीर्तितम् ॥ ८ ॥
गतिज्ञानार्थधातूक्त्या नलोपाच्च प्रतीयते ॥
लोपस्यादर्शनात्मत्वात्प्राकृतानुकृतिर्मया ॥ ९ ॥
ब्रह्मा शिरो जगद्बीजं सत्यलोकस्थितेरपि ॥
यज्ञात्मकोजगद्व्यापी शृंगाररसविग्रहः ॥ १० ॥
विष्णुर्हृदयमित्युक्तं हृदयं हृदयं श्रुतौ ॥
तत्तद्धर्मप्रधानत्वात्सर्वं च स्वयमेव हि ॥ ११ ॥
रुद्रः शिखेति कथनात्क्लेशात्मा स निरूपितः ॥
अहंकारो बंधरूप इति बद्धा शिखा मता ॥ १२ ॥
मुखस्याग्नित्वकथनात्तज्ज्वाला च शिखा मता ॥

लौकिकी दुष्टदाहाय घोरातनुरिति श्रुतेः ॥ १३ ॥
पृथिवी भगवत्कीर्तिरुत्पत्तेः कारणं मतम् ॥
भक्तिबोधाय चरणरेणुरूपत्वकीर्तनम् ॥ १४ ॥
प्रियत्वाय हरेः सर्वप्राणात्मत्वेन वर्णनम् ॥
शुक्लभास्वररूपं तु श्वेतवर्णेतिकीर्तितम् ॥ १५ ॥
भगवद्योग्यतासिद्ध्यै श्वेतः सर्वाधिको मतः ॥
सांख्यायनसगोत्रत्वं भगवद्भागसिद्धये ॥ १६ ॥
स हि ब्रह्म परं जीवः सच्चिदानंदतोभयोः ॥
सगोत्रत्वमतः प्रोक्तं नैव लक्षण्यमण्वपि ॥ १७ ॥
भगादेशादयो वापि शक्तयश्चेंद्रियाणि च ॥
ज्ञानानि खंडाखंडानि कुक्षौ सर्वविनिश्चयात् ॥१८॥
धामान्यर्थविभावाश्च सर्वोपनिषदः शिरः ॥
समीपनयने विष्णोर्विनियोगः प्रकीर्तितः ॥ १९ ॥
सप्त व्याहृतयः प्रोक्ता भूरेस्त्वयमुदाहृतम् ॥
सर्वाधारत्वतस्तावच्छक्तित्वान्नास्य बाधनम् ॥ २० ॥
अंतरिक्षत्वकथनाद्भुवो वीर्यं निरूपितम् ॥
सुवः श्रीः श्रीर्मनुष्यस्य कथनादवसीयते ॥ २१ ॥
महो यशः परं प्रोक्तं सुखं तेजस्ततोऽत्र हि ॥
जनो वैराग्यमित्युक्तं तापनाशकता यतः ॥ २२ ॥

जनताया तु तन्मुख्यमतोजन इतीरितम् ॥
यस्य ज्ञानमयं प्रोक्तं तपस्तस्मात्तदेव हि ॥ २३ ॥
सत्यं परमिति प्रोक्तं स्वरूपमिति निश्चितम् ॥
लोकवेदप्रसिद्धार्थकथनाय तदीयताम् ॥ २४ ॥
द्वादशात्मत्वकथनात्सविता पुरुषोत्तमः ॥
रूपमासक्तिजनकं वरणीयमितीरितम् ॥ २५ ॥
वरणे स्वार्थपरतानिवृत्त्यै वृणुते यतः ॥
अन्योन्यरसबोधाय तथा वा समुदीरितम् ॥ २६ ॥
भयकामाद्यभावाय भोग्यत्वाय च भर्जनम् ॥
दशलीलावबोधाय देवत्वं दुर्लभत्वतः ॥ २७ ॥
दशावस्थावबोधाय प्रीतिर्ध्यानं च कीर्तितम् ॥
स्वस्यायोग्यत्वतो बुद्धिप्रेरणं ध्रुववन्मतम् ॥ २८ ॥
निरोधसिद्धये धीषु बहुत्वं परिकीर्तितम् ॥
जीवे बहुत्वकथनं तत्संबंधिषु सिद्धये ॥ २९ ॥
नित्यसंबंधसिद्ध्यर्थं षष्ठी जीवेशयोर्मता ॥
वरिसक्तभावबोधाय स्वभावत्याजनाय च ॥ ३० ॥
वांछाधिक्यज्ञापनाय प्रकर्षः परिकीर्तितः ॥
आशीरंते पूर्णतायै प्रेरणं सर्वतोऽधिकम् ॥ ३१ ॥
आपः श्रद्धाधर्ममूलं ज्योतिरप्यस्फुटौ परौ ॥

भावास्त्रयो मंत्रपूर्तौ प्रोक्ता व्याहृतयः स्फुटाः ॥३२॥
दोषाभावाय सर्वस्य ब्रह्मात्मत्वेन कीर्तनम् ॥
नवीनभावजनक उभयोरतिवर्धनः ॥ ३३ ॥
तस्मात्प्रणव इत्युक्तस्तस्याप्यर्थोऽयमेव हि ॥ ३४ ॥
इति श्रीमद्विठ्ठलदीक्षितानां हस्ताक्षरैः सुलिखितान्येतानि पद्यानि ॥ "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः" इति श्रुतेः ॥ इत्यपि तत्रैव । श्रीगोपीजनवल्लभाय नमः ॥

इति श्रीमद्विठ्ठलेश्वराचार्यकृता गायत्रीव्याख्या समाप्ता ।

## अथ त्रिविधलीलानामावली ।

श्रीकृष्णाय नमः ।

नामावलीं प्रवक्ष्यामि केशवस्यातिवल्लभाम् ॥
यस्याः संकीर्तनाद्विष्णुरात्मानं संप्रयच्छति ॥ १ ॥
श्रीकृष्णाय नमः ॥ १ ॥ नराकृतये नमः ॥ २ ॥ परब्रह्मणे नमः ॥ ३ ॥ यदुकुलचूडामणये नमः ॥४॥ वसुदेवनंदनाय नमः ॥५॥ भूमिक्लेशहराय नमः ॥६॥ पुण्यश्रवणकीर्तनाय नमः ॥ ७ ॥ कलिमलसंहृतिकल्पकयशःपुंजाय नमः ॥ ८ ॥ भक्तिमार्गप्रवर्तकाय

नमः ॥ ९ ॥ भक्तजनकल्पवृक्षाय नमः ॥ १० ॥ देवकीनंदनाय नमः ॥ ११ ॥ वसुदेवदेवकीपुण्यपुंजफलाय नमः ॥ १२ ॥ देवकीमनःप्रमोदजनकाय नमः ॥ १३ ॥ ब्रह्मादिभक्तवाक्परिपालकाय नमः ॥ १४ ॥ कालिंदीवेगहर्त्रे नमः ॥ १५ ॥ शेषादिभक्तसेवितचरणाय नमः ॥ १६ ॥ योगाधिपतये नमः ॥ १७ ॥ गोकुलपतये नमः ॥ १८ ॥ गोपीजनवल्लभाय नमः ॥ १९ ॥ गोकुलोत्सवाय नमः ॥ २० ॥ अखिलाशापूरकाय नमः ॥ २१ ॥ यशोदास्तनंधयाय नमः ॥ २२ ॥ नंदमनोमोदकाय नमः ॥ २३ ॥ पूतनांतकाय नमः ॥ २४ ॥ सुकृतज्ञाय नमः ॥ २५ ॥ पूतनामोक्षदात्रे नमः ॥२६॥ भक्तमनोरोधकाय नमः ॥ २७ ॥ गोकुलाभयदानचरित्राय नमः ॥ २८ ॥ शकटभेदनबालचरित्राय नमः ॥ २९ ॥ भक्तप्रपंचविस्मारकाय नमः ॥३०॥ तृणावर्तविमर्दकाय नमः ॥ ३१ ॥ भक्तिस्वशक्तिजनकाय नमः ॥ ३२ ॥ यशोदामोहनाशकाय नमः ॥ ३३ ॥ रामानुजाय नमः ॥ ३४ ॥ कृष्णाय नमः ॥ ३५ ॥ वासुदेवाय नमः ॥ ३६ ॥ अनंत-

गुणगंभीराय नमः ॥३७॥ अद्भुतकर्मणे नमः ॥३८॥ गोकुलचिंतामणये नमः ॥ ३९ ॥ गोपगोकुलनंदनाय नमः ॥ ४० ॥ भक्तसर्वदुःखनिवारकाय नमः ॥ ४१ ॥ महानुभावाय नमः ॥ ४२ ॥ अचिंत्यगुणकर्मणे नमः ॥ ४३ ॥ नारायणाय नमः ॥४४॥ व्रजांगणरिंगणजानुचरणारविंदाय नमः ॥ ४५ ॥ व्रजपंकांगलेपनाय नमः ॥ ४६ ॥ भक्तपरीक्षापरिपालकाय नमः ॥ ४७ ॥ व्रजहीरमणये नमः ॥४८॥ गोकुलधूर्तचरित्राय नमः ॥ ४९॥ भक्तवशीकरणाय नमः॥ ५० ॥ नवनीतल (न) वहराय नमः ॥५१॥ दधिदुग्धप्रियाय नमः ॥५२॥ क्षीरकणावलीढमुखारविंदाय नमः ॥ ५३ ॥ मृत्स्नाभक्षणभीतयशोदाताडनसत्रासनयनारविंदाय नमः ॥५४॥ सर्वविमोहकाय नमः ॥ ५५ ॥ माहात्म्यप्रदर्शकाय नमः ॥ ५६ ॥ परब्रह्मत्वबोधकाय नमः ॥ ५७ ॥ सर्वजनीनमाहात्म्यबोधकाय नमः ॥५८॥ दधिभांडभेत्रे नमः ॥५९॥ चौर्यविशंकितेक्षणाय नमः ॥ ६०॥ भक्ताधीनाय नमः ॥ ६१ ॥ दामोदराय नमः ॥ ६२ ॥ यमलार्जुनभंजनाय नमः ॥ ६३ ॥ भक्तवाक्यपरिपूरकाय

नमः॥६४॥ भक्तिदात्रे नमः॥६५॥ सर्वेश्वराय नमः६६ सर्वाय नमः ॥६७॥ नंदमोचितबंधनाय नमः ॥६८॥ उपनंदप्रियायनमः ॥ ६९ ॥ मातुरुरुसंगगताय नमः ॥ ७० ॥ वृंदावनक्रीडारताय नमः ॥ ७१ ॥ वत्सवाटचराय नमः ॥७२॥ वत्सासुरहंत्रे नमः ॥७३॥ बकविदारणाय नमः ॥ ७४ ॥ वृंदावनचारिणे नमः ॥७५॥ धेनुकासुरखंडनाय नमः ॥७६॥ उत्तालताल-भेत्रे नमः ॥ ७७ ॥ सर्वप्राणिसुखसंचारकर्त्रेनमः ७८ गोकुलसुखवासाय नमः॥७९॥ गोरजश्छुरितकुंतलाय नमः ॥८०॥ वेणुवाद्यविशारदाय नमः ॥८१॥ वनकु-सुमावलीरचितकल्पाय नमः ॥ ८२ ॥ अनुगगीयमा-नयशःपुंजाय नमः ॥ ८३ ॥ गोपीतापहारकाय नमः ॥ ८४ ॥ गोपीनयनारविंदार्चिताय नमः ॥ ८५ ॥ लौकिकलीलाप्रदर्शकाय नमः ॥ ८६ ॥ विषविमूर्छित-गोपालजीवनदृष्टिवृष्टये नमः ॥ ८७ ॥ भक्तजनप-रीक्षकाय नमः ॥ ८८ ॥ कालीयफणमाणिक्यरंजि-तश्रीपदांबुजाय नमः ॥ ८९ ॥ नागपत्नीसमर्चिता-य नमः ॥९० ॥ भक्ताश्रयजलस्थलविशोधकाय नमः ॥ ९१ ॥ नानाविधक्रीडारताय नमः ॥९२॥ प्र-

लंबघातकाय नमः ॥ ९३ ॥ दावाग्निपतितगोकुलरक्षकाय नमः ॥ ९४ ॥ अग्निमुखाय नमः ॥ ९५ ॥ सर्वर्तुक्रीडाविलासाय नमः ॥ ९६ ॥ गोचारणचारुविचित्रचरित्राय नमः ॥ ९७ ॥ गोपिकाधैर्यविमोचकवेणुनादाय नमः ॥ ९८ ॥ गोपांगनानयनपानैकपात्राय नमः ॥ ९९ ॥ श्रुतिरूपगोपिकावर्णितनिखिलगुणाय नमः ॥ १०० ॥ गोपकन्याव्रतफलाय नमः ॥ १०१ ॥ जलक्रीडासमासक्तगोपीवस्त्रापहारकाय नमः ॥१०२॥ मुक्तोपसर्वकाय नमः ॥ १०३ ॥ वृंदावनबोधकाय नमः ॥१०४॥ यज्ञपत्नीप्रसादकाय नमः ॥१०५॥ सर्वाज्ञाननिवारकाय नमः ॥ १०६ ॥ यज्ञभोक्त्रे नमः ॥१०७॥ धर्मरक्षकाय नमः ॥ १०८ ॥ इति बालचरित्रस्य नाम्नामष्टोत्तरं शतम् ॥ कृष्णभक्तहृदानंदि कीर्तनाद्भक्तिबोधकम् ॥१॥ ॥ नामान्यथ प्रवक्ष्यामि यैः संतुष्यति केशवः ॥ वक्ष्यामि भक्तहृदये परमानंददायकम् ॥ १ ॥ अद्भुतबालकाय नमः॥१॥ अंबुजेक्षणाय नमः ॥ २ ॥ चतुर्भुजाब्जचक्रासिगदाशंखाद्युदायुधाय नमः ॥ ३ ॥ श्रीवत्सलक्ष्मणे नमः ॥४॥ कौस्तुभाभरणग्रीवाय नमः ॥५॥ नीलमेघश्या-

माय नमः ॥६॥ पीतांबरधारिणे नमः ॥७॥ नानाकल्पविराजिताय नमः ॥ ८ ॥ आत्मविस्मापकमानुषवेषसौंदर्यनिधये नमः ॥९॥ रमालालितपादपद्माय नमः ॥ १० ॥ भक्तहितोपदेशकाय नमः ॥११॥ कृतवेषविमोहितदेवकीपरीक्षकाय नमः ॥१२॥ सर्वहविर्मंत्रदेवतामूलबोधकाय नमः ॥१३॥ एकदेशदृष्टवायुदेवताक्षोभजनकाय नमः ॥ १४ ॥ सर्वरूपाय नमः ॥ १५ ॥ वेदमार्गरक्षकाय नमः ॥१६॥ भक्तिमार्गप्रवर्तकाय नमः ॥ १७ ॥ गोवर्धनोद्धरणधीराय नमः ॥ १८ ॥ सर्वजनीनमाहात्म्यबोधकाय नमः ॥१९॥ भक्तविस्मापकाय नमः ॥२०॥ मोहप्रबोधोभयरक्षकाय नमः ॥२१॥ अद्भुतचरित्राय नमः॥२२॥ लोकवेदोल्लंघनकरप्रपंचसर्वदुःखनिवारकाय नमः ॥२३॥ इंद्रसुरभिप्रसादजनकाय नमः ॥२४॥ गोविंदाय नमः ॥२५॥ अत्यंतभक्तनिरोधकाय नमः ॥२६॥ वरुणादिदेवप्रबोधकाय नमः ॥२७॥ व्यापिवैकुंठप्रदर्शकाय नमः ॥२८॥ भक्तगृहस्थितिबोधकाय नमः ॥ २९ ॥ वैकुंठस्थितमदनगोपालाय नमः ॥ ३० ॥ अनादिब्रह्मचारिणे नमः ॥३१॥ कंदर्पकोटिलावण्या-

य नमः ॥ ३२ ॥ सर्वोपनिषत्तात्पर्यगोचराय नमः ॥३३॥ गोपिकाचरणाय नमः ॥३४॥ सकलयोगाधिपतये नमः ॥ ३५ ॥ अलौकिकपूरणकामजनकाय नमः ॥ ३६ ॥ आशापूरकसत्यकामजनदीपकाय नमः ॥३७॥ शृंगारविभावादियुक्ताय नमः ॥३८॥ सत्यवाक्याय नमः ॥ ३९ ॥ कामोन्मत्तगोपांगनामुक्तिदात्रे नमः ॥ ४० ॥ मुक्ताधिगोपीमनोमोहकाय नमः ॥४१॥ लोकवेदसर्वधर्मपरित्यक्तगोपीसेवितचरणाय नमः ॥४२॥ भक्तिप्रतिबंधकनिवर्तकाय नमः॥४३॥ अलब्धरासगोपिकासद्योमुक्तिप्रदायकाय नमः ॥ ४४ ॥ परीक्षितगोपवधूसेवितचरणाय नमः ॥४५॥ निजजनस्मयध्वंसनस्मिताय नमः ॥ ४६ ॥ कायिकतिरोभावितगोपीपुंजाय नमः ॥४७॥ राधासहचराय नमः ॥४८॥ विरहव्याकुलगोपांगनान्वेपितमार्गाय नमः ॥४९॥ ज्ञानतुल्यभक्तिभ्रांतिज्ञानजनकाय नमः ॥ ५० ॥ निकुंजनिकटस्थितिबोधकाय नमः ॥५१॥ गोपीवर्णितनिखिलगुणाय नमः ॥५२॥ भक्तिसिद्धिविलंबनाय नमः ॥ ५३ ॥ दीनकृशप्रकृतिरूपाय नमः ॥ ५४ ॥ सर्वमनोनयनाह्लादाय

नमः ॥ ५५ ॥ गोपीवाक्यविचारकाय नमः ॥५६॥ स्वधर्मनिर्धारकाय नमः ॥ ५७ ॥ सर्वरसाभिज्ञाय नमः ॥ ५८ ॥ रासमंडलानेकरूपाय नमः ॥ ५९ ॥ उद्दीप्तकामपूरकाय नमः ॥ ६० ॥ अतिक्रांतमर्यादाय नमः ॥ ६१ ॥ यमुनाकीर्तिजनकाय नमः ॥ ६२ ॥ भक्तदैन्यनिवारकाय नमः ॥६३॥ सुदर्शनमोचकाय नमः ॥६४॥ बलभद्राभीष्टदात्रे नमः ॥ ६५ ॥ शंखचूडघातकाय नमः ॥६६॥ गोपीक्लेशनाशकगुणार्णवाय नमः ॥ ६७ ॥ स्वसमानगुणाय नमः ॥ ६८ ॥ सर्ववशीकरणद्वादशविधचरित्राय नमः ॥ ६९ ॥ वृषासुरविध्वंसिने नमः ॥ ७० ॥ नारदादिबोधिताक्लिष्टकर्मणे नमः ॥७१॥ दुष्टदुर्बुद्धिहेतवे नमः ॥ ७२ ॥ शिष्टज्ञानदीपकाय नमः ॥ ७३ ॥ केश्यादिमहादुष्टनिबर्हणाय नमः ॥ ७४ ॥ नारदादिवंदितचरणाय नमः ॥ ७५ ॥ सुरव्योमासुरदुष्टपीडितगोपगोपीरक्षकाय नमः ॥७६॥ सद्भक्तिहेतवे नमः ॥७७॥ अक्रूरादिभक्तमनोरथपूरकाय नमः ॥७८॥ नंदादिगोपमथुरागमनोत्सवहेतवे नमः ॥ ७९ ॥ भक्तदुःखमूलोच्छेदकाय नमः ॥ ८० ॥ गोपिकाकार्पण्यशीलहेतवे

नमः ॥८१॥ गोपिकाविरहनाशकवाक्यामृतपुंजाय नमः ॥ ८२ ॥ भक्तसंशयच्छेदकाय नमः ॥ ८३ ॥ व्यापिवैकुंठवासिने नमः ॥ ८४ ॥ अक्रूरादिभक्तस्तुतानंतगुणाय नमः ॥ ८५ ॥ सत्यप्रतिज्ञाय नमः ८६ स्वगुणबोधकाय नमः ॥ ८७ ॥ मथुरादर्शनोत्सुकाय नमः ॥ ८८ ॥ स्वाधारवैकुंठस्थापकाय नमः ॥८९॥ पुरस्त्रीपुण्यजनकाय नमः ॥ ९० ॥ रजकादिदुष्टघातकाय नमः ॥ ९१ ॥ वस्त्राद्यनेकाकल्पभूषितरूपाय नमः ॥९२॥ वायकसुदामाभक्त्यलंकृताय नमः ॥९३॥ अत्युदाराय नमः ॥ ९४ ॥ कुब्जानुलेपालंकृताय नमः ॥ ९५ ॥ कुब्जादिभक्तसहजदोषदूरीकरणाय नमः ॥ ९६ ॥ स्वलीलोपयिकरूपाभिव्यंजकाय नमः ॥ ९७ ॥ मथुरामहोत्सवाय नमः ॥९८॥ दैत्यधर्मनिवारकाय नमः ॥ ९९ ॥ धनुर्भंगबोधितकालाय नमः ॥ १०० ॥ अतिसामर्थ्यबोधिताक्लिष्टचरित्राय नमः ॥ १ ॥ मृत्युधर्मबोधकाय नमः ॥२॥ कुवलयापीडघातकाय नमः ॥ ३ ॥ गजदंतवरायुधाय नमः ॥ ४ ॥ निखिलजनमनोनयनाह्लादकाय नमः ॥ ५ ॥ सर्वरसाविर्भावकराय नमः ॥ ६ ॥

चाणूरादिमहामल्लदैत्यगर्वनिबर्हणाय नमः ॥ ७॥ निखिलकामिनीप्रेमावलोकिताय नमः ॥८॥ कंसघातकाय नमः ॥ ९ ॥ वसुदेवदेवकीदुःखनिवारकाय नमः ॥ ११० ॥ प्रदर्शितसदाचाराय नमः ॥ ११ ॥ यदुकुलनलिनीविकाशकाय नमः ॥ १२ ॥ कालदुःखनिवारकाय नमः ॥ १३ ॥ सांदीपनिमृतापत्यदात्रे नमः ॥ १४ ॥ नंदादिज्ञानबोधकाय नमः ॥ १५॥ यशोदादिस्नेहरक्षकाय नमः ॥ १६॥ गोपिकादिलौकिकभावदोषदूरीकरणाय नमः ॥ १७॥ उद्धवादिमध्यमभावबोधकाय नमः ॥१८॥ स्वानिष्टमनोदोषनाशकाय नमः ॥ १९ ॥ कुब्जामनोरथपूरकाय नमः ॥ १२० ॥ अक्रूरादिभक्तसन्मानहेतवे नमः ॥ २१ ॥ भक्तहितचिंतकाय नमः ॥ २२ ॥ कुंतीप्रीतिहेतवे नमः ॥ २३ ॥ भक्तपक्षबोधकाय नमः ॥ २४ ॥ पांडवस्थापकाय नमः ॥ २५ ॥ धृतराष्ट्रज्ञानबोधकाय नमः ॥ २६ ॥ प्रौढलीलाबोधकाय नमः ॥ २७ ॥ सर्वाभिवंदितचरणाय नमः ॥ १२८ ॥ एवं श्रीकृष्णनामानि प्रौढलीलावबोधने ॥ कीर्तितान्यतिपुण्यानि शतं विंशतिरष्ट च ॥ १ ॥ अतः

परं प्रवक्ष्यामि राजलीलामुपाश्रितः ॥ कृतवान्यानि कर्माणि तन्नामानि विमुक्तये ॥ १ ॥ क्षात्रधर्मप्रवर्तकाय नमः ॥ १ ॥ दिव्ययुद्धविशारदाय नमः ॥२॥ जरासंधसमानीतसैन्यघातविशारदाय नमः ॥ ३ ॥ द्वारकापुरनिर्माणहेतवे नमः ॥ ४ ॥ भक्ताचिंत्यसुखदाय नमः ॥ ५ ॥ यवनांतकाय नमः ॥ ६ ॥ मुचुकुंदप्रसादकाय नमः ॥७॥ शिवब्राह्मणवाक्यपरिपालकाय नमः ॥८॥ रुक्मिणीमनोरथपूरकाय नमः ॥९॥ रुक्मिणीविवाहप्रदर्शितगृहस्थधर्माय नमः ॥ १० ॥ रुक्मिणीगांधर्वविवाहकाय नमः ॥ ११ ॥ रुक्मिणीप्राणपतये नमः ॥१२॥ कामजनकाय नमः ॥१३॥ शंबरघातकाय नमः ॥ १४ ॥ प्रद्युम्नाय नमः ॥१५॥ लोकनिर्णीतसर्वार्थाय नमः ॥ १६ ॥ सत्यभामावल्लभाय नमः ॥१७॥ जांबवतीप्राणपतये नमः ॥१८ ॥ सत्राजितस्वगृहहेतवे नमः ॥१९॥ स्वमंतकमणिहर्त्रे नमः ॥ २० ॥ शुद्धकीर्तिस्थापकायनमः ॥ २१ ॥ अक्रूरादिभक्तदोषनिवारकाय नमः ॥ २२ ॥ कालिंदीपतये नमः ॥ २३ ॥ पांडवराज्यस्थापकाय नमः ॥ २४ ॥ मित्रविंदापतये नमः ॥ २५ ॥ सत्यापतये

नमः ॥२६॥ भद्रापतये नमः ॥ २७ ॥ लक्ष्मणापतये नमः ॥२८॥ षोडशसहस्रनायिकापतये नमः ॥ २९ ॥ मुरारये नमः॥३०॥ नरकांतकाय नमः ॥३१॥ वसुधापूजितचरणाय नमः ॥३२॥पूर्वजननीसुखहेतवे नमः ॥३३ ॥ पारिजातापहरणाय नमः॥३४॥महेंद्रादिदुष्टबुद्धिनिवारकाय नमः ॥३५॥ सर्वरत्नकोशाधिपूरितगृहाय नमः ॥ ३६ ॥ रुक्मिण्यादिस्त्रीमनःपरीक्षकाय नमः ॥ ३७ ॥ लौकिकलीलावाक्यविशारदाय नमः ॥३८॥ प्रीत्यर्थप्रतिपादकदशदशपुत्राय नमः॥३९॥ बाणासुरबलांतकर्त्रे नमः ॥४०॥ महादेवादिसन्मानहेतवे नमः ॥४१॥ ज्वरादिदोषनाशकाय नमः॥४२॥ प्रह्लादादिभक्तवंशरक्षकाय नमः ॥४३॥ दानादिधर्मदोषबोधकाय नमः॥४४॥ नृगमोक्षहेतवे नमः ॥४५॥ ब्रह्मण्याय नमः ॥४६॥ पुष्टिमार्गप्रवर्तकाय नमः ४७ यमुनाकर्षणहेतवे नमः॥४८॥स्पर्धादिदोषविमोचकाय नमः ॥४९॥ पौंड्रकाशिराजहंत्रे नमः ॥५०॥ देवांतरवरदृप्तगर्वनाशकाय नमः ॥५१॥ काशीदाहकाय नमः ॥५२॥ दुष्टनिवासदोषनाशकाय नमः ॥५३॥ मुक्तिहेतवे नमः ॥५४॥ दुःसंगदृप्तद्विविदादिवधहेतवे

नमः ॥ ५५ ॥ राज्यादिदृप्तकौरवगर्वनाशकाय नमः ॥५६॥ मर्यादाभक्तिदृप्तभक्तमोहनाशकाय नमः ५७ जीवाधिकारशास्त्रगर्वनाशकाय नमः ॥ ५८ ॥ सुधर्मालंकृतचरणाय नमः ॥५९॥ भक्तोपेक्षावभासहेतवे. नमः ॥६०॥ उद्धवादिबुद्ध्यनुसारिणे नमः ॥६१॥ जीवधर्मावबोधकाय नमः ॥६२॥ हीनधर्मावलंबनजीवकार्यकर्त्रे नमः॥६३॥ भक्तज्ञानहेतवे नमः॥६४॥ पुष्टिनिर्मितिज्ञापकाय नमः ॥६५॥ राजसूयादिधर्मप्रवर्तकाय नमः ॥६६॥ शिशुपालादिभक्तवैकुंठप्राप्तिहेतवे नमः ॥६७॥ दुर्योधनादिदुष्टयानभंगहेतवे नमः ॥६८॥ प्रद्युम्नादियादवगर्वापहारकाय नमः ॥६९॥ तपस्यादिदृप्तशाल्वादिघातकाय नमः ॥७०॥ दंतवक्रविदूरथादिमुक्तिहेतवे नमः ॥ ७१ ॥ क्षत्रियधनाद्युपसंहारकर्त्रे नमः ॥ ७२ ॥ न्यस्तशस्त्राय नमः ॥ ७३ ॥ बलदेवतीर्थयात्राप्रवर्तकाय नमः ॥ ७४ ॥ सूतघातकाय नमः ॥ ७५ ॥ पार्थसारथये नमः ॥ ७६ ॥ अव्यक्तगीतामृतमहोदधिप्रवर्तकाय नमः ॥ ७७ ॥ कौरवकुलांतकृते नमः ॥ ७८ ॥ इतरपक्षपातनाशकाय नमः ॥ ७९ ॥ सुदामरंकभार्यार्थि-

भूम्यानीतेंद्रवैभवाय नमः ॥ ८० ॥ देशकालादिधर्महेत्वनुसारिणे नमः ॥ ८१ ॥ यात्रोत्सवादिप्रवर्तकाय नमः ॥ ८२ ॥ अखिलनयनामृताब्धिपूरकाय नमः ॥८३॥ गोपिकादिसाक्षात्कारहेतवे नमः ॥८४॥ रुक्मिण्यादिभक्तिस्थापकाय नमः ॥८५॥ सन्मार्गस्थापकाय नमः ॥८६॥ वसिष्ठादिसेवितचरणाय नमः ॥८७॥ वसुदेवयज्ञमहोत्सवकर्त्रे नमः ॥८८॥ वसुदेवज्ञानबोधकाय नमः ॥८९॥ देवकीमनः पीडापनोदकाय नमः ॥९०॥ देवादिभक्तशापादिदोषनाशकाय नमः॥९१॥ देवकीमृतापत्यदात्रे नमः॥९२॥ देवकीस्तनंधयाय नमः ॥ ९३ ॥ भक्ताचिंत्यसुखहेतवे नमः ॥ ९४ ॥ सुभद्राविवाहहेतवे नमः ॥ ९५ ॥ जनकादिज्ञानिमनोरथपूरकाय नमः ॥ ९६ ॥ श्रुतदेवाद्युपासकसन्मार्गबोधकाय नमः ॥९७॥ निखिलनिगमनिजजनसंस्तुताय नमः ॥ ९८ ॥ सर्वागम्यस्वरूपाय नमः ॥ ९९ ॥ ऐश्वर्यादिषट्धर्मस्थापकाय नमः ॥ १०० ॥ भक्तदुष्टवैभवनाशकाय नमः ॥ १ ॥ भक्तसंकटनिवारकाय नमः ॥ २ ॥ वृकादिदुष्टघातकाय नमः ॥ ३ ॥ ब्रह्मशिवादिवंदितचरणाय नमः

॥ ४ ॥ सर्वोत्कर्षबोधकाय नमः ॥ ५ ॥ विप्रमृताप-त्यदात्रे नमः ॥ ६ ॥ अर्जुनादिगर्वापहारकाय नमः ॥ ७ ॥ नानाविलासविलसन्मुखाय नमः ॥ ८ ॥ निखिलनिजजनप्रपंचविस्मारकाय नमः ॥ १०९ ॥ इत्येवं राजलीलाया नाम्नामष्टोत्तरं शतम् ॥ निरोध-लीलामाश्रित्य भक्त्यै भक्तेन रूपितम् ॥ १ ॥ बाललीलानामपाठाच्छ्रीकृष्णे प्रेम जायते ॥ आसक्तिः प्रौढलीलाया नाम्नां पाठाद्भविष्यति ॥ २ ॥ व्यसनं कृष्णचरणे राजलीलाविधानतः ॥ तस्मान्नामत्रयं जाप्यं भक्तिप्राप्तीच्छुभिः सदा ॥ ३ ॥

इति श्रीवल्लभाचार्यविरचिता त्रिविधलीलानामावली संपूर्णा ।

कृष्ण एव सदा सेव्यो निर्णीतः पंचधा बुधैः ॥
शरीरदः प्रेरकश्च सुखदः शेषसत्पदः ॥ ४ ॥
कर्मरूपं हरिं केचित्सेवंते योगरूपिणम् ॥
तेभ्योऽप्यक्षररूपस्य सेवकाः संमताः सताम् ॥५॥
सर्वत्र भगवांस्तुल्यः सर्वदोषविवर्जितः ॥
क्रीडार्थमनुकुर्वन्हि सर्वत्रैव विराजते ॥ ६ ॥
गुप्तानंदा यतो जीवा निरानंदं जगद्यतः ॥
पूर्णानंदो हरिस्तस्माज्जीवैः सेव्यः सुखार्थिभिः ॥७॥
कृष्णे हरौ भगवति परमानंदसागरः ॥
वर्तते नात्र संदेहः कथा तत्र नियामिका ॥ ८ ॥
असत्संगो न कर्तव्यो भक्तिमार्गस्य बाधकः ॥
देहे ह्यनुगुणे कृष्णे नेंद्रियाणां प्रियं चरेत् ॥ ९ ॥
सर्व एव हरेर्भक्तास्तुल्या यान्मन्यते हरिः ॥
अतः कृष्णो यथात्मीयान्मन्यते भजनं तथा ॥ १० ॥
ज्ञानमार्गो भ्रांतिमूलस्ततः कृष्णं भजेद्बुधः ॥
प्रवर्तकं ज्ञानकांडं चित्तशुद्ध्यै यतो भवेत् ॥ ११ ॥
भ्रांतिमूलतया सर्वसमयानामयुक्तितः ॥
न तद्विरोधात्कृष्णाख्यं परं ब्रह्म त्यजेद्बुधः ॥ १२ ॥
जीवानां ब्रह्मरूपत्वाद्दोषा अपि च मानसाः ॥

जगच्च सकलं ब्रह्म ततो दोषः कथं हरौ ॥ १३ ॥
सर्वथा सर्वतः शुद्धा भक्ता एव न चापरे ॥
अतः शुद्धिमभीप्सद्भिः सेव्या भक्ता न चापरे। १४।
सुवर्णप्रतिमेवासौ सर्वानंदमयोऽधिराट् ॥
सर्वसेव्यो नियंता च निर्दुष्टः सर्वथैव हि ॥ १५ ॥
सर्वभावविनिर्मुक्तः पूर्णः क्रीडार्थमुद्गतः ॥
निमित्तं तं समाश्रित्य जायंते जीवराशयः ॥ १६ ॥
नियंता जीवसंघस्य हरिस्तेनाणवो मताः ॥
जीवा न व्यापकाः क्वापि चिन्मया ज्ञानिना मताः १७
नामरूपप्रपंचं हि देवतिर्यङ्नरात्मकम् ॥
कृष्णादेव समुद्भूतं लीनं तत्रैव तन्मयम् ॥ १८ ॥
नृणां दुर्गतिमालोक्य ये सेवंते दृढव्रताः ॥
कृष्णं तद्भृकुटिः कालो न तान् हंति कदाचन ॥ १९ ॥
अदांते मनसि ज्ञानयोगार्थं न यतेद्बुधः ॥
गुरुसेवापरो भूत्वा भक्तिमेव सदाभ्यसेत् ॥ २० ॥
सर्वलोकोपकारार्थं कृष्णेन सहितास्तु ते ॥
परिभ्रमंति लोकानां निस्ताराय महाशयाः ॥ २१ ॥
पुत्रादीन्संपरित्यज्य कृष्णः सेव्यो न तैः सह ॥

तत्सुखं भगवान् दाता ते तु क्लिष्टेऽतिदुःखदाः ॥२२॥
परिभ्रमंस्तीर्थनिष्ठो गुरुलब्धहरिस्मृतिः ॥
न सेवेत गृहान् दुष्टान् सद्धर्मात्यंतनाशकान् ॥२३॥
सद्बुद्ध्या सर्वथा सद्भिर्न सेव्यमखिलं जगत् ॥
भ्रांत्या सद्बुद्धिरत्रेति संतं कृष्णं भजेद्बुधः ॥ २४ ॥
खपुष्पादिसमत्वाद्धि मिथ्याभूतं जगद्यतः ॥
अधिष्ठानाच्च सद्भानं तं कृष्णं नियतं भजेत् ॥ २५ ॥
कालादितृणपर्यंता न सेव्यामुक्तिमिच्छता ॥
दोषत्याजनशक्तो हि सेव्यो दाता गुणस्य च ॥ २६ ॥
जीवेषु भगवानात्मा संच्छन्नस्तेन तत्र न ॥
भजनं सर्वथा कार्यं ततोऽन्यत्रैव पूजयेत् ॥ २७ ॥
सुखसेवापरो यस्तु सदानंदं हरिं भजेत् ॥
अन्यथा सुखसंप्रेप्सुः सर्वथा दुःखमाप्नुयात् ॥ २८ ॥
कृष्णानंदः परानंदो नान्यानंदस्तथाविधः ॥
वेदा अपि न तच्छक्ताः प्रतिपादयितुं स्वतः ॥ २९ ॥
इत्येवं श्रुतिगीतायाः संक्षेपेण निरूपितः ॥
अर्थराशिसमुद्रो हि यथांगुल्या निरूप्यते ॥ ३० ॥

इति श्रीवल्लभाचार्यविरचिता श्रुतिगीता संपूर्णा ।

# अथ पूर्वमीमांसाकारिकाः ।

श्रीकृष्णाय नमः ।

लौकिको वैदिकश्चैव मार्गो नित्यो द्विधा मतः ॥
प्रवाहेण स्वरूपेण नित्यत्वं च तयोः क्रमात् ॥ १ ॥
अर्थः प्रधानं लोके हि शब्दोऽन्यस्मिन्निति स्थितिः ॥
जलाग्न्योरिव संरक्षा तयोः कार्या मनीषिभिः ॥ २ ॥
लोके जलं द्वितीयस्तु दहनो वैरिणौ मिथः ॥
लोकदृष्ट्या यदा वेदः स्पृश्यते नाशमेति हि ॥ ३ ॥
लौकिकं सहसा वेदो न हि बाधितुमर्हति ॥
यथा पात्रव्यवहितं वह्निना शुष्यते जलम् ॥ ४ ॥
तथाधिकारिचित्तस्थो लोको वेदेन शुष्यति ॥
धर्मार्थकाममोक्षाख्या वर्णानां प्रतिलोमतः ॥ ५ ॥
नियतः पूर्वभावी तु परांगं सति निश्चितम् ॥
सतः शूद्रस्य नार्थाद्या मोक्षो हि ब्राह्मणे स्थितः ॥ ६ ॥
धर्मार्थकामैः साध्यः स नान्यथा ब्रह्मता भवेत् ॥
सेवाधर्मस्तु शूद्रस्य नान्यो ह्युत्तरसाधकः ॥ ७ ॥
अर्थादिसाधको धर्मो वर्णिनामिति निश्चयः ॥
तत्रापि वैदिको धर्मो मोक्षांतो ब्राह्मणे स्थितः ॥ ८ ॥
मोक्षो हि लौकिकः शुष्येदतो वेदस्य तत्फलम् ॥

फलं सुखं तस्य काष्ठा ब्रह्मानंद इति स्थितिः ॥ ९ ॥
सच्चिद्रूपं च तच्चेति केचित्तत्रैव संस्थिताः ॥
गृहस्थानामतिथिवद्गृहस्था इव के चन ॥ १० ॥
अतः साधकपक्षस्तु मुख्यः साभिमतेर्महान् ॥
अतो धर्मस्य जिज्ञासा कर्तव्या सर्वथा द्विजैः ॥ ११ ॥
जैमिनिः कर्मतत्त्वज्ञः प्रतिज्ञां तत्करोति हि ॥
स्वातंत्र्येऽपि च संसिध्येन्मीमांसायाः फलं महत् ।१२।
पुराणपंक्तिपाठेन शिक्षाद्यंगेष्वपाठतः ॥
नैतावता लौकिकत्वं स्वरूपेण फलेन वा ॥ १३ ॥
वेदैकविषयत्वेन गुणत्वाच्च प्रतीतितः ॥
तथापि वैदिकानां हि संतोषो नैव जायते ॥ १४ ॥
वेदार्थमात्रकृतिनामप्रवृत्तिश्च संभवेत् ॥
विचारानंतरं ह्येवं तथाप्यत्याग्रहो यदि ॥ १५ ॥
संदेहवारणं शास्त्रं तदेतत्सुविनिश्चितम् ॥
ऋषेरकौशलं तु स्यात्फलतस्तुल्यता तयोः ॥ १६ ॥
स्वाध्यायविधिमूलत्वं तदा ह्यस्य भविष्यति ॥
श्रुत्वा समंताद्ध्येयः स्वाध्यायो वेद उच्यते ॥१७॥
देशकालादिनियमा निःसंदेहश्च सर्वतः ॥
उपसर्गद्वयादर्थस्तथाध्येयो न चान्यथा ॥ १८ ॥

पाठे ह्यर्थे ह्यनुष्ठाने शिक्षादीनां द्वयं द्वयम् ॥
वाक्यार्थस्य तु निर्धारो न शक्यस्तैः कथं चन ॥१९॥
अतो वाक्यार्थनिर्धारे मीमांसैव गतिर्भवेत् ॥
निर्धारितं ततो ह्यर्थं महावाक्यैकगोचरम् ॥ २० ॥
स्वयं च गुरुतो ज्ञातं प्रतिज्ञां यां करोति च ॥
यज्ञेन यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन् ॥
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥
वेदोऽखिलो धर्ममूलमित्यादिश्रुतिभिः स्फुटम् ॥ २२ ॥
वेदार्थो धर्म एवेति स्वयं निश्चित्य सर्वतः ॥
जिज्ञासां प्रतिजानीते धर्मस्येत्यथ के चन ॥ २३ ॥
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥
अतस्तदर्थसंसिद्धौ सर्वं सेत्स्यति सर्वतः ॥ २४ ॥
अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं ततः ॥
शास्त्रारंभेऽथशब्दस्तु श्रुत्या मंगलबोधकः ॥ २५ ॥
अर्थांतरे विकल्पो हि अधिकारे स्वतंत्रता ॥
अथाधिक्रियते यस्माद्धर्मज्ञानात्फलं महत् ॥ २६ ॥
अतो धर्मावबोधाय विचारो योगरूढितः ॥
अध्याहारो न कर्तव्यो नाप्यर्थापत्तिकल्पना ॥ २७ ॥
स्नानस्मृतेरबाधश्च ज्ञेयश्चेति विधेर्बलात् ॥

प्रवृत्तिरत्र विप्राणां वैदिकत्वं ततो भवेत् ॥ २८ ॥
विधिव्यापारविषया गृहमेधीयरात्रिवत् ॥
शब्दतो वैदिकत्वं हि समायात्यर्थतोऽन्यथा ॥ २९ ॥
शब्दतो वैदिकत्वार्थमध्याहारादिकल्पना ॥
असंगतिश्चास्य भवेत्सूत्रस्य स्वार्थता यदि ॥ ३० ॥
परार्थो न तु तैः शक्यः स्वकृतिश्च निरर्थिका ॥
अतोऽधिकार एवार्थो युक्तः स्वातंत्र्यमस्य हि ॥ ३१ ॥
न दोषाय निराकार्यमथवांगत्वदृष्टितः ॥
अथवांगत्वमायाति ह्यर्थज्ञानोपयोगतः ॥ ३२ ॥
अनुवादत्वसापेक्षत्वासूत्राप्रमाणताम् ॥
परिहर्तुं प्रवृत्त्यर्थं चाध्याहारं विधेर्जगौ ॥ ३३ ॥
ज्ञाने क्षयोऽस्तु विषयसौंदर्यकरणादिना ॥
लभ्यत्वान्न विधेयत्वं विमृश्यो लक्ष्यते ततः ॥ ३४ ॥
यत्त्विच्छासाध्यताभावात्साक्षाज्ज्ञानस्य तत्कृतेः ॥
तन्निर्वाहकताक्षेपस्तत्रापूर्वेष्वसाम्यतः ॥ ३५ ॥
तस्याक्षेपैकलभ्यत्वाद्यागवज्ज्ञानगो विधिः ॥
भवेत्तस्यान्यतः प्राप्तेर्न स स्यादिति मन्मतिः ॥ ३६ ॥
फलाधिकारसाकांक्षत्वतोऽनर्थत्वशंकितम् ॥
चतुःसाधनसंपन्नप्राप्त्यानंतर्यवाचिना ॥ ३७ ॥

अथशब्देनापनोद्याभाव्यत्वात्फलतापि च ॥
ब्रह्मज्ञानस्य तस्यापि फलत्वं नोपपद्यते ॥ ३८ ॥
सुखदुःखाभावरूपत्वाभावादिति चेन्न हि ॥
अथशब्दोऽत्राधिकारिविशेषणतया स्थितः ॥ ३९ ॥
मोक्षः संत्रप्यते यस्मात्फलत्वेनाथ मोचने ॥
विशेषणत्वकाम्यत्वपक्षाभ्यां फलता न हि ॥ ४० ॥
जीवनागारदेहादेरपि तत्त्वप्रसंगतः ॥
प्रायश्चित्ते परस्त्रीणामपि तत्त्वप्रसंगतः ॥ ४१ ॥
उच्यते काम्यतायां तद्विधिवेष्यैकसाध्यता ॥
प्रयोजिका फलत्वे हि तस्मात्सुष्ठूक्तमार्थिकम् ॥४२॥

इति श्रीमद्वल्लभाचार्यविरचिताः पूर्वमीमांसाकारिकाः संपूर्णाः ।

## अथ श्रीभगवत्पीठिका ।

श्रीकृष्णाय नमः ।

श्रीपुरुषोत्तमस्य त्रीणि स्वरूपाणि—एकम् आधिभौतिकं, द्वितीयम् आध्यात्मिकं, तृतीयम् आधिदैविकम् । आधिभौतिको नारायणो लक्ष्मीपतिः । तत्परःस्वरूपम्, आध्यात्मिकं ब्रह्म अक्षरम्, आधिदैविकं पुरुषोत्तमः, सच्चिदानंदरूपाणि । आधिदैविके पुष्टिः, आध्यात्मिके मर्यादा, आधिभौतिके प्रवाहः ।

श्रीपुरुषोत्तमस्य सृष्टेरिच्छा यदा जायते तदा रविकाश्मीरयोगो यथा वह्निः प्रजायते तथा कालोऽक्षराज्जातः सदानंदकटाक्षतः पृथक् भवति। भ्रुवो रंध्रादुत्पद्यते। कालात्प्रकृतिपुरुषौ। प्रकृतेर्गुणात्मको नारायणो लक्ष्मीपतिः। तस्य मनसो विष्णुः। ललाटाद्रुद्रः। नाभिकमलात् ब्रह्मा जातः। ततः सृष्टिः। वृंदावने पुष्टिः। गोकुले मर्यादापुष्टिः। मथुरायां कालयवनदाहपर्यंतं मर्यादापुष्टिः। पश्चात् मर्यादा तथा द्वारकायाम्। अथ वृंदावने एकस्तु आदिरासः अविच्छिन्नोऽस्ति। पश्चात् यस्य रसिकसेवकस्य जीवस्योपरि करुणा स्यात् तथा या गोप्यः कुमारिकास्ताः सर्वा उपनिषद्रूपास्तासामध्यनादित्वम्। व्रजांगनासहगमने मिलितास्तु सामवेदऋचः। नंदस्य गृहे चतुर्व्यूहयुक्तो हरिः। ततो गुरुरासे केवलं श्रीपुरुषोत्तमः। लघुरासे विषण्णा भग्नसंकल्पाश्चितामापुरित्यनेन अनिरुद्धव्यूहो निवारितः। कृत्वा मुखान्यवशुच इत्यनेन संकर्षणव्यूहो निवारितः। कारुयंगते इत्यनेन प्रद्युम्नव्यूहो निवारितः। केवलं श्रीपुरुषोत्तमेन सह रासक्रीडा। पूतनादिवधे संकर्षणः।

द्वारकायां धर्मपालने अनिरुद्धः । द्वारकायां रुक्मिण्यादिषु कामचारे प्रद्युम्नः । राजलीलायां वासुदेवः । गोवर्धनोद्धरणे केवलः । दानलीलायां केवलशरणे प्रवाहः । जपे मर्यादा । आत्मनिवेदने पुष्टिः । कंसवधे संकर्षणव्यूहः । कुब्जाकृपायां प्रद्युम्नव्यूहः । श्रीदाममालाकारस्य कृपायामनिरुद्धः । मुचुकुंदस्य कृपायां वासुदेवः । एवं चतुर्व्यूहलीला सर्वत्र । अतो न कुत्रापि केवलः श्रीपुरुषोत्तमः । अथ पूतनादिवधे संकर्षणयुक्तो भगवान् । यमलार्जुनभंगे संकर्षणः । नलकूबरमणिग्रीवप्रसंगेऽनिरुद्धः । तयोरनुग्रहे वासुदेवः । व्रजे सर्वदा श्रीपुरुषोत्तम एव । परं तु यशोदानंदयोः कृपादर्शने चतुर्व्यूहयुक्तः पुरुषोत्तम एव । गोपांगनासु पुष्टिः । गोपीषु मर्यादा । व्रजांगनासु प्रवाहः । अत्र आशंका जाता । या व्रजकुमारिकास्तेन श्रीकृष्णेन सह बद्धजीवा नान्यत्र सांसारिके भर्तर्यपि धृतासवस्तासां मर्यादात्वमुक्तम् । तत्कथ्यते । तत्राह । गोपांगनास्तु भुक्तमुक्ताः भुक्तं गृहे सुखं मुक्तं याभिस्ताः किं वा नाज्ञातो लोकवेदभययुक्तो याभिरता भुक्ता कुटुंबमायापत्यवैभवगेहाधिपतिध-

नवपुःपत्यादिकसकलमर्यादार्थां मुक्ता याभिस्ताः सर्वान् धर्मान्निराकृत्य केवलं श्रीपुरुषोत्तममेव भजंति। तस्मात्तासां पुष्टित्वम् । अथ गोपीनां व्रजकुमारीणां गोपीजनवल्लभभजनेतरभजनं जातम् । किं च तद्भजनोपायेऽपि कात्यायनीभजनं कृतम् । तस्मात्तासाम् अनन्यव्रतं विनष्टम् । अत एव तासां मर्यादा भक्तिः । दर्शनमपि चतूर्व्यूहयुक्तस्य श्रीकृष्णस्य पुरुषोत्तमस्य । तथा व्रजांगनानां मातृभावेनैव संग्रहः । तासाम् ईश्वरे पुत्रभावो वर्तते । तस्मात्तासां प्रवाहत्वम् । इति त्रिविधा गोप्यः । अथ वसुदेवस्य पूर्वं मर्यादापुष्टिस्वरूपं दर्शितम् । तस्मादादौ चतुर्भुजस्वरूपं दर्शितम् । जन्मस्थाने पुष्टिरहितं वासुदेवव्यूहं दर्शयितुं चतुर्भुजस्वरूपं दर्शितम् तदा विस्मयो जातः वसुदेवस्य कश्चित् ननु—यदा स्वरूपं मया पूर्वं समाधिना दृष्टं तदिदं नेति तदा भृत्यार्तिहरत्वात् दयालुत्वात् श्रीपुरुषोत्तमेन अविच्छिन्नरासे क्रीडता भगवता स्वांशस्तत्रतत्र नियोजितः । ततो बभूव प्राकृतः शिशुः। पश्चाद्दधिकर्दमलीलायां स्वांशावेश एव सर्वो वा—अरिष्टे गोगणे कुंजे वटे गोवर्धने

तथा व्रजे वृंदावने चैव पुष्टिस्वरूपं यदस्ति । स पूर्णस्तु सर्वदा । अथ नंदस्य गृहे मर्यादापुष्टिस्वरूपं यदस्ति तस्य स्वरूपं वर्ण्यते । तच्च अष्टावरणसंयुतं भवति । आवरणानि—पृथ्वी, आपः, तेजः, वायुः, आकाशं, महत्तत्त्वम्, अहंकारः, प्रकृतिः । इत्यष्टावरणानि अष्टाभिः सह मुकुंदोऽष्टावरणयुक्तचतुर्व्यूहसंयुक्तोऽस्ति अथ नारायणेन यद्भवति तत्कथ्यते । श्रीनारायणो गोदेवभक्तसाधूनामनुग्रहार्थं चतुर्धा भवति । वैकुंठस्तु भगवान् अंशादिचतुर्भेदान् भक्तानामनुग्रहार्थं करोति । अंशः, कलाः, आवेशा, इति नृसिंहरामवासुदेवा एव त्रयः अंशावताराः । मत्स्यकूर्मवराहा एते त्रयःकलावताराः । वामनो बुद्धः कल्की एते त्रय आवेशावताराः । अन्ये नारदादयो विभूतयः संति । एता ईश्वरस्य विभूतयः ।

इति श्रीवल्लभाचार्यविरचिता भगवत्पीठिका संपूर्णा ॥

## अथ भा॰सुबोधिनीप्रथमस्कंधकारिकाः।

श्रीकृष्णाय नमः ।

वंदे श्रीकृष्णदेवं मुरनरकभिदं वेदवेदांतवेद्यं लोके भक्तिप्रसिद्ध्यै यदुकुलजलधौ प्रादुरासीदपारः ॥

यस्याऽऽसीद्रूपमेव त्रिभुवनतरणे भक्तिवच्च स्वतंत्रं शास्त्रं रूपं च लोके प्रकटयति मुदा यः स नो मूर्ति-हेतुः ॥ १ ॥ कर्ता ज्ञः सकलस्य यो निगमभूः सर्व-स्वरूपोऽपि सन् सर्वस्याऽपि विधारणो विजयते निर्दोषसर्वेष्टदः ॥ यो लीलाभिरनेकधा वितनुते रूपं निजं केवलः सोऽयं वाचि ममास्तु पूर्णगुणभूः कृष्णा-वतारः पतिः ॥ २ ॥ श्रीमद्वल्लभविद्वदीशविलसद्वं-शाब्धिपूर्णेंदवे श्रीगोपीपतिवंदिने सुमनसि ब्रह्मामृ-तस्यंदिने ॥ श्रीमल्लक्ष्मणभट्टसूरिरिति यन्नामाखिला-भीष्टदं तस्मै तातमहाशयाय हरये कुर्मो नमः सिद्धये ॥ ३ ॥ श्रीमद्भागवतागमः सुरतरुर्लोके फलत्वं गतो भाषाभेदविभेदतस्त्रयमपि स्यान्नो विरुद्धं महत् ॥ भक्त्यंशे फलता प्रमाणसुबले वेदत्वमर्थे पुनः स्कंधै-र्द्वादशभिर्युतः सुरतरुः शाखा द्विवह्निद्वयम् ॥ ४ ॥ अर्थं तस्य विवेचितुं न हि विभुर्वैश्वानराद्वाक्पतेर-न्यस्तत्र विधाय मानुषतनुं मां व्यासवच्छ्रीपतिः ॥ दत्त्वाऽऽज्ञां च कृपावलोकनपटुर्यस्मादतोऽहं मुदा गूढार्थं प्रकटीकरोमि बहुधाव्यासस्य विष्णोः प्रियम् ॥ ५ ॥ लक्षणं नैव वक्ष्यामि न न्यूनादन्यपूरणम् ॥

आर्थिकं तु प्रवक्ष्यामि परोक्षकथनादृते ॥ ६ ॥ अविरोधेन सप्तानामर्थानामिह संगतिः ॥ उत्तरोत्तरदौर्बल्यं वाच्यं संकोचतः परम् ॥ ७ ॥ भाषात्रयविरोधश्च कल्पभेदात्समाहितः ॥ भाषात्रयविभेदश्च लक्षणैर्ज्ञाप्यते पुनः ॥ ८ ॥ अर्थत्रयं तु वक्ष्यामि निर्बंधेऽस्ति चतुष्टयम् ॥ अत्र संतः स्वसंतोषैराज्ञां यच्छंतु सिद्धये ॥ ९ ॥ सुज्ञेषु हस्तयुगलं पुरतो विधाय विज्ञापयामि सुखैरपिदाञ्जनिष्ठः ॥ उच्छृंखलापि विवृतिर्मम चिंतनीया श्रीकृष्णपादयुगले विनिवेशितेति ॥ १० ॥

इति श्रीवल्लभाचार्यविरचितायां सुबोधिन्यां प्रथमस्कंधभा० व्या० कारिकाः समाप्ताः ।

---

## अथ शिक्षाश्लोकाः ।

श्रीकृष्णाय नमः ।

यदा बहिर्मुखा यूयं भविष्यथ कथं चन ॥
तदा कालप्रवाहस्था देहचित्तादयोऽप्युत ॥ १ ॥
सर्वथा भक्षयिष्यंति युष्मानिति मतिर्मम ॥
न लौकिकः प्रभुः कृष्णो मनुते नैव लौकिकम् ॥२॥

भावस्तत्राप्यस्मदीयः सर्वस्वश्चैहिकश्च सः ॥
परलोकश्च तेनायं सर्वभावेन सर्वथा ॥
सेव्यः स एव गोपीशो विधास्यत्यखिलं हि नः ॥३॥
इति श्रीवल्लभाचार्यविरचिताः शिक्षाश्लोकाः समाप्ताः॥
( इमे श्रीमदाचार्यैः काश्यामासुरव्यामोहलीलावसरे
स्वात्मजश्रीगोपीनाथश्रीविठ्ठलनाथौ प्रत्युपदिष्टाः ॥
तदैव भगवता प्रादुर्भूयाऽयं सार्धश्लोक उक्तः ॥
मयि चेदस्ति विश्वासः श्रीगोपीजनवल्लभे ॥
तदा कृतार्था यूयं हि शोचनीयं न कर्हि चित् ॥१॥
मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थितिरिति )॥

---

## अथ श्रीवल्लभाचार्याणां जन्मपत्रिका ।

श्रीकृष्णाय नमः ।

अब्दे कंत्यात्मजातांधकरिपुनयनेष्वब्जयुक्ते वसौभे
कृष्णेऽर्के माधवेऽभूत्स हरिशुभदिने कौर्प्ये आविर्वेऽह्नि ॥ वैरिस्थेऽर्म्णि याने शशिनि कवियुते ह्यात्मजे
ज्ञेऽस्तसौरौ धर्मे भौमे सजीवे तमसि गगनगे श्रीहरिर्वल्लभोऽग्निः ॥ १ ॥ अब्दे पांडवबह्विबाणक्षमिते

---

सांप्रं चैर्ह.

राधोऽसितैकादशी वस्वर्क्षकिंववे शुभे वृषशनौ राहौ च खे ज्ञे सुते ॥ कर्के सारगुरावलावज्ररवौ कुंभे च चंद्रे कवौ श्रीमद्वल्लभनामधाम जगदुद्धारार्थमेवाऽजनि ॥२॥



संवत् १५३५ शके १४०० वैशाखकृष्णे ११ रवौ धनिष्ठानक्षत्रे शुभयोगे ववकरणे एवं पंचांगे श्रीदिनगतसमस्तरात्रिगतघटी १।४४ समये वृश्चिकलग्ने श्री ७ श्रीवल्लभाचार्य (जी) प्राकट्यम् ॥ स्थितिवर्षाणि ५२ मासौ २ दि० ७ पर्यंतम् ॥ संवत् १५८७ आषाढशुक्ले ३ दिने अंतर्धानम् ॥



॥ श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरे

## श्री ( गुसाइजी ) श्रीविठ्ठलेश्वरकृतग्रंथाः ।

## तत्र मंगलाचरणम् ।

श्रीकृष्णाय नमः ।

चिंतासंतानहंतारो यत्पादांबुजरेणवः ॥
स्वीयानां तान्निजाचार्यान्प्रणमामि मुहुर्मुहुः ॥ १ ॥
यदनुग्रहतो जंतुः सर्वदुःखातिगो भवेत् ॥
तमहं सर्वदा वंदे श्रीमद्वल्लभनंदनम् ॥ २ ॥
यदुक्तं तातचरणैः श्रीकृष्णः शरणं मम ॥
अत एवास्ति मच्चित्तमैहिके पारलौकिके ॥ ३ ॥
मम चित्तस्य विश्वासः श्रीगोपीजनवल्लभे ॥
यदा तदा कृतार्थोऽहं शोचनीयो न कर्हिचित् ॥ ४ ॥

इति श्रीविठ्ठलेश्वरविरचितं मंगलाचरणं समाप्तम् ।

## अथ श्रीसर्वोत्तमस्तोत्रम् ।

श्रीकृष्णाय नमः ।

प्राकृतधर्मानाश्रयमप्राकृतनिखिलधर्मरूपमिति ॥
निगमप्रतिपाद्यं यत्तच्छुद्धं साकृति स्तौमि ॥ १ ॥



श्रीमद्विट्ठलेश्वरप्रभुचरणाः ॥
प्रादुर्भाव सं० १५७२ मार्गशीर्ष कृष्ण नवम्याम्
तिरोधान सं० १६४२ पौष कृष्ण सप्तम्याम्

कलिकालतमश्छन्नदृष्टित्वाद्विदुषामपि ॥
संप्रत्यविषयस्तस्य माहात्म्यं समभूद्भुवि ॥ २ ॥
दयया निजमाहात्म्यमकरोत्प्रकटं हरिः ॥
वाण्या यदा तदा स्वास्यं प्रादुर्भूतं चकार हि ॥ ३ ॥
तदुक्तमपि दुर्बोधं सुबोधं स्याद्यथा तथा ॥
तन्नामाष्टोत्तरशतं प्रवक्ष्याम्यखिलाघहृत् ॥ ४ ॥
ऋषिरग्निकुमारस्तु नाम्नां छंदो जगत्यसौ ॥
श्रीकृष्णाऽऽस्यं देवता च बीजं कारुणिकःप्रभुः ॥५॥
विनियोगो भक्तियोगः प्रतिबंधविनाशने ॥
कृष्णाधरामृतास्वादसिद्धिरत्र न संशयः ॥ ६ ॥
आनंदः परमानंदः श्रीकृष्णास्यः कृपानिधिः ॥
दैवोद्धारप्रयत्नात्मा स्मृतिमात्रार्तिनाशनः ॥ ७ ॥
श्रीभागवतगूढार्थप्रकाशनपरायणः ॥
साकारब्रह्मवादैकस्थापको वेदपारगः ॥ ८ ॥
मायावादनिराकर्ता सर्ववादिनिरासकृत् ॥
भक्तिमार्गाब्जमार्तंडः स्त्रीशूद्राद्युद्धृतिक्षमः ॥ ९ ॥
अंगीकृत्यैव गोपीशवल्लभीकृतमानवः ॥
अंगीकृतौ समर्यादो महाकारुणिको विभुः ॥ १० ॥
अदेयदानदक्षश्च महोदारचरित्रवान् ॥

प्राकृतानुकृतिव्याजमोहितासुरमानुषः ॥ ११ ॥
वैश्वानरो वल्लभाख्यः सद्रूपो हितकृत्सताम् ॥
जनशिक्षाकृते कृष्णभक्तिकृन्निखिलेष्टदः ॥ १२ ॥
सर्वलक्षणसंपन्नः श्रीकृष्णज्ञानदो गुरुः ॥
स्वानंदतुंदिलः पद्मदलायतविलोचनः ॥ १३ ॥
कृपादृग्वृष्टिसंहृष्टदासदासीप्रियः पतिः ॥
रोषदृक्पातसंप्लुष्टभक्तद्विट् भक्तसेवितः ॥ १४ ॥
सुखसेव्यो दुराराध्यो दुर्लभांघ्रिसरोरुहः ॥
उग्रप्रतापो वाक्सी (शी) धुपूरिताशेषसेवकः ॥१५॥
श्रीभागवतपीयूषसमुद्रमथनक्षमः ॥
तत्सारभूतरासस्त्रीभावपूरितविग्रहः ॥ १६ ॥
सान्निध्यमात्रदत्तश्रीकृष्णप्रेमा विमुक्तिदः ॥
रासलीलैकतात्पर्यः कृपयैतत्कथाप्रदः ॥ १७ ॥
विरहानुभवैकार्थसर्वत्यागोपदेशकः ॥
भक्त्याचारोपदेष्टा च कर्ममार्गप्रवर्तकः ॥ १८ ॥
यागादौ भक्तिमार्गैकसाधनत्वोपदेशकः ॥
पूर्णानंदः पूर्णकामो वाक्पतिर्विबुधेश्वरः ॥ १९ ॥
कृष्णनामसहस्रस्य वक्ता भक्तिपरायणः ॥
भक्त्याचारोपदेशार्थनानावाक्यनिरूपकः ॥ २० ॥

स्वार्थोज्झिताखिलप्राणप्रियस्तादृशचेष्टितः ॥
स्वदासार्थे कृताशेषसाधनः सर्वशक्तिधृक् ॥ २१ ॥
भुवि भक्तिप्रचारैककृते स्वान्वयकृत्पिता ॥
स्ववंशे स्थापिताशेषस्वमाहात्म्यः स्मयापहः ॥ २२ ॥
पतिव्रतापतिः पारलौकिकैहिकदानकृत् ॥
निगूढहृदयोऽनन्यभक्तेषु ज्ञापिताशयः ॥ २३ ॥
उपासनादिमार्गातिमुग्धमोहनिवारकः ॥
भक्तिमार्गे सर्वमार्गवैलक्षण्यानुभूतिकृत् ॥ २४ ॥
पृथक्शरणमार्गोपदेष्टा श्रीकृष्णहार्दवित् ॥
प्रतिक्षणनिकुंजस्थलीलारससुपूरितः ॥ २५ ॥
तत्कथाक्षिप्तचित्तस्तद्विस्मृतान्यो व्रजप्रियः ॥
प्रियव्रजस्थितिः पुष्टिलीलाकर्ता रहःप्रियः ॥ २६ ॥
भक्तेच्छापूरकः सर्वाज्ञातलीलोऽतिमोहनः ॥
सर्वासक्तो भक्तमात्रासक्तः पतितपावनः ॥ २७ ॥
स्वयशोगानसंहृष्टहृदयांभोजविष्टरः ॥
यशःपीयूषलहरीप्लावितान्यरसः परः ॥ २८ ॥
लीलामृतरसार्द्रार्द्रीकृताखिलशरीरभृत् ॥
गोवर्धनस्थित्युत्साहस्तल्लीलाप्रेमपूरितः ॥ २९ ॥
यज्ञभोक्ता यज्ञकर्ता चतुर्वर्गविशारदः ॥

सत्यप्रतिज्ञस्त्रिगुणातीतो नयविशारदः ॥ ३० ॥
स्वकीर्तिवर्धनस्तत्त्व सूत्रभाष्यप्रदर्शकः ॥
मायावादाख्यतूलाग्निर्ब्रह्मवादनिरूपकः ॥ ३१ ॥
अप्राकृताऽखिलाकल्पभूषितः सहजस्मितः ॥
त्रिलोकीभूषणं भूमिभाग्यं सहजसुंदरः ॥ ३२ ॥
अशेषभक्तसंप्रार्थ्यचरणाब्जरजोधनः ॥
इत्यानंदनिधेः प्रोक्तं नाम्नामष्टोत्तरं शतम् ॥ ३३ ॥
श्रद्धाविशुद्धबुद्धिर्यः पठत्यनुदिनं जनः ॥
स तदेकमनाः सिद्धिमुक्तां प्राप्नोत्यसंशयम् ॥३४॥
तदप्राप्तौ वृथा मोक्षस्तदाप्तौ तद्गतार्थता ॥
अतः सर्वोत्तमं स्तोत्रं जप्यं कृष्णरसार्थिभिः ॥३५॥

इति श्रीमदग्निकुमारप्रोक्तं सर्वोत्तमस्तोत्रं संपूर्णम् ।

## अथ श्रीवल्लभाष्टकम् ।

श्रीकृष्णाय नमः ।

श्रीमद्वृंदावनेंदुप्रकटितरसिकानंदसंदोहरूपस्फूर्ज-
द्रासादिलीलाऽमृतजलधिभराक्रांतसर्वोऽपि शश्वत् ॥
तस्यैवात्मानुभावप्रकटनहृदयस्याज्ञया प्रादुरासीद्भूमौ
यः सन्मनुष्याकृतिरतिकरुणस्तं प्रपद्ये हुताशम् ॥१॥
नाविर्भूयाद्भवांश्चेदधिधरणितलं भूतनाथोदितासन्मा-

गेध्वांतांधतुल्या निगमपथगतौ देवसर्गेऽपि जाताः ॥ घोपाधीशं तदेमे कथमपि मनुजाः प्राप्नुयुर्नैव दैवी सृष्टिर्व्यर्था च भूयान्निजफलरहिता देव वैश्वानरैषा ॥ २ ॥ न ह्यन्यो वागधीशाच्छ्रुतिगणवचसां भावमाज्ञातुमीष्टे यस्मात्साध्वी स्वभावं प्रकटयति वधूरग्रतः पत्युरेव ॥ तस्माच्छ्रीवल्लभाख्यत्वदुदितवचनादन्यथा रूपयंति भ्रांता ये ते निसर्गत्रिदशरिपुतया केवलांधंतमोगाः ॥ ३ ॥ प्रादुर्भूतेन भूमौ व्रजपतिचरणांभोजसेवाख्यवर्त्मप्राकट्यं यत्कृतं ते तदुत निजकृते श्रीहुताशेति मन्ये ॥ यस्मादस्मिन्स्थितो यत्किमपि कथमपि क्वाप्युपाहर्तुमिच्छत्यद्धा तद्गोपिकेशः स्ववदनकमले चारुहासे करोति ॥ ४ ॥ उष्णत्वैकस्वभावोऽप्यतिशिशिरवचाः पुंजपीयूषवृष्टीरार्तेष्वत्युग्रमोहासुरनृपु युगपत्तापमप्यत्र कुर्वन् ॥ स्वस्मिन्कृष्णास्यतां त्वं प्रकटयसि च नो भूतदेवत्वमेतद्यस्मादानंददं श्रीव्रजजननिचये नाशकं चासुराणाम् ॥५॥ आम्नायोक्तं यदंभोभवनमनलतस्तच्च सत्यं विभो यत्सर्गादौ भूतरूपादभवदनलतः पुष्करं भूत-

१ केवलं निम्यदुगाः. २ यः किमपि.

रूपम् ॥ आनंदैकस्वरूपात्त्वदधिभु यदभूत्कृष्णसेवारसाब्धिश्चानंदैकस्वरूपस्तदखिलमुचितं हेतुसाम्यं हि कार्ये ॥ ६ ॥ स्वामिञ्छ्रीवल्लभाग्रे क्षणमपि भवतः सन्निधाने कृपातः प्राणप्रेष्ठव्रजाधीश्वरवदनदिदृक्षार्तितापो जनेषु ॥ यत्प्रादुर्भावमाप्नोत्युचिततरमिदं यत्तु पश्चादपीत्थं दृष्टेऽप्यस्मिन्मुखेंदौ प्रचुरतरमुदेत्येव तच्चित्रमेतत् ॥ ७ ॥ अज्ञानाद्यंधकारप्रशमनपटुताख्यापनाय त्रिलोक्यामग्नित्वं वर्णितं ते कविभिरपि सदा वस्तुतः कृष्ण एव ॥ प्रादुर्भूतो भवानित्यनुभवनिगमाद्युक्तमानैरवेत्य त्वां श्रीश्रीवल्लभे मे निखिलबुधजना गोकुलेशं भजंते ॥ ८ ॥

इति श्रीमद्विठ्ठलदीक्षितविरचितं श्रीवल्लभाष्टकं संपूर्णम् ।

## अथ मंगलारार्तिकार्या ।

श्रीकृष्णाय नमः ।

मंगलं मंगलं व्रजभुवि मंगलं मंगलमिह श्रीनंदयशोदानामसुकीर्तनमेतद्रुचिरोत्संगसुलालितपालितरूपम् ॥ १ ॥ श्रीश्रीकृष्ण इति श्रुतिसारं नाम स्वार्तजनाशयतापापहमिति मंगलरावम् ॥ व्रजसुंदरीवयस्यसुरभीवृंदमृगीगणनिरुपमभावा( वं)

मंगलसिंधुचया (यम्) ॥ २ ॥ मंगलमीषत्स्मितयुतवीक्षणभाषणमुन्नतनासापुटगतमुक्ताफलचलनम् ॥ कोमलचलदङ्गुलिदलसंगतवेणुनिनादविमोहितवृंदावनभुविजाता ( तम् ) ॥३॥ मंगलमखिलं गोपीशितुरतिमंथरगतिविभ्रममोहितरासस्थितगानम् ॥ त्वं जय सततं गोवर्धनधर पालय निजदासान् ॥४॥

इति श्रीविट्ठलेश्वरविरचिता मंगलारार्तिकार्या समाप्ता ।

## अथ पर्यंकः ( पालना ) ( विज्ञप्तिः ) ।

राग रामकली ( छंद चर्चरी ).

श्रीकृष्णाय नमः ।

प्रेंखपर्यंकशयन चिरविरहतापहरमतिरुचिरमीक्षणं प्रकटय प्रेमायन ॥ ध्रु० ॥ तनुतरद्विजपंक्तिमतिललितानि हसितानि तव वीक्ष्य गायकीनाम् ॥ यदवधि परमेतदाशया समभवज्जीवितं तावकीनाम् ॥ १ ॥ तोकता वपुषि तव राजते दृशि तु मदमानिनीमानहरणम् ॥ अग्रिमे वयसि किमु भाविकामेऽपि निजगोपिकाभावकरणम् ॥ २ ॥ व्रजयुवतिहृद्यकनकाचलानारोढुमुत्सुकं तव चरणयुगलम् ॥ तत्तु मुहु-

रुन्नमनकाभ्यासमिव नाथ सपदि कुरुते मृदुलमृदुलम् ॥ ३ ॥ अधिगोरोचनातिलकमलकोद्ग्रथितविविधमणिमुक्ताफलविरचितम् ॥ भूषणं राजते मुग्धतामृतभरस्यंदि वदनेंदुरसितम् ॥ ४ ॥ भ्रूतटे मातृरचितांजनबिंदुरतिशयितशोभया दृग्दोषमपनयन् ॥ स्मरधनुषि मधु पिबन्नलिराज इव राजते प्रणयिसुखमुपनयन् ॥ ५ ॥ वचनरचनोदारहाससहजस्मितामृतचयैरार्तिभरमपनयन् ॥ पालय सदास्मानस्मदीयश्रीविठ्ठले निजदास्यमुपनयन् ॥ ६ ॥

इति श्रीविठ्ठलेश्वरविज्ञप्तिः समाप्ता ।

## अथ राजभोगारार्तिकार्या ।

श्रीकृष्णाय नमः ।

व्रजराजविराजितघोषवरे वरणीयमनोहररूपधरे ॥ धरणीरमणीरमणैकपरे परमार्तिहरस्मितविभ्रमके ॥१॥ मकराकृतिकुंडलशोभिमुखे मुखरीकृतनूपुरद्वयगतौ ॥ गतिसंगतभूतलतापहरे हरशक्रविमोहनगानपरे ॥२॥ परमप्रियगोपवधूहृदये दयया दिनतापहरे सुहृदाम् ॥ हृदयस्थितगोकुलवासिजने जनहृद्यविहारपरे सततम् ॥ ३ ॥ ततवेणुनिनादविनोदपरे परचित्तहरस्मित

मात्रकथे ॥ कथनीयगुणाकरपादयुगे युगलेयुगले सुदृशां सुरतौ रतिरस्तु मम व्रजराजसुते ॥

इति श्रीमद्विट्ठलेश्वरविरचिता राजभोगारार्तिकार्या समाप्ता । श्रीवल्लभाचार्यविरचितेयमितिकेचित् ।

## अथ संध्यारार्तिकार्या ।

श्रीकृष्णाय नमः ।

हरिभक्तिसुधोदधिवृद्धिकरे करवर्णितकृष्णकथाग्ररसे ॥ रसिकागमवागमृतोक्तिपरे परमादरणीयतमाब्जपदे ॥ १ ॥ पदवंदितपावनपापजने जननीजठरागमतापहरे ॥ हरनीतविदारणनामकथे कथनीयगुणाकरदासवरे ॥ २ ॥ वरवारणमानहरागमने रमणीयमहोदधिरासरसे ॥ रसपद्दृगंचलशोभिमुखे मुखरीकृतवेणुनिनादरते ॥ ३ ॥ रतिनाथविमोहनवेषधरे धरणीधरधारणभारभरे ॥ भरतागमशिक्षितलास्यकरे करकृष्टगिरींद्रपदाब्जरते ॥ रतिरस्तु सदा वल्लभतनये ॥ ४ ॥

इति श्रीमद्विट्ठलेश्वरविरचिता संध्यारार्तिकार्या समाप्ता । श्रीरघुनाथाचार्यविरचितेयमिति केचित् ।

# अथ शयनारार्तिकार्या ।

श्रीकृष्णाय नमः ।

शरणागतभीतिनिवृत्तिपरं परपक्षतमोनिकरांशुनिधिम् ॥ निधिसेवितपादसरोजयुगं युगधर्मनिवर्तितकालकरम् ॥ १ ॥ करजोल्लिखितप्रमदौघकुचं कुचकुंकुमलिप्तविशालहृदम् ॥ हृदयस्थितगोकुलवासजनं जनसंचितपुण्यचयैकफलम् ॥ २ ॥ फलदानपरातिसमर्थभुजं भुजदंडगृहीतकुचाग्रमणिम् ॥ मणिशोभितहस्तधृताद्रिवरं वरगोपवधूचयसंवलितम् ॥३॥ वलितप्रमदाद्युतरासकरं करपद्मयुगाहितवेणुवरम् ॥ वरभक्तिशिरःस्थितपद्मकरं करमर्दितयादवयूथरिपुम् । रिपुयूथभुजंगमदर्पहरं हरपूजितरम्यसरोजपदम् ॥ पदपद्मयुगार्चनदत्तपदं पदपद्मनखस्थितभक्तिरसम् ५ रसपूरितगोपवधूशरणं शरणागतघोषजनाभयदम् ॥ भयदौघशिरोहरखड्गधरं धरणीकृतपुण्यचयैकफलम् ६ फलहेतुविमर्दितदुष्टखलं खलमुक्तिदपादसरोजवरम् ॥ वरबर्हिशिखंडकयुक्तकचं कचकोशनिवेशितपुष्पचयं घोषाधिपतिं कमलाधिपतिं वंदे तमहं मथुराधीशम् ।

इति श्रीमद्विठ्ठलेश्वरविरचिता शयनारार्तिकार्या समाप्ता ।

# अथ स्फुरत्कृष्णप्रेमामृतस्तोत्रम् ।

श्रीकृष्णाय नमः ॥

स्फुरत्कृष्णप्रेमामृतरसभरेणातिभरिता विहारान्कुर्वाणा व्रजपतिविहाराब्धिषु सदा ॥ प्रिया गोपीभर्तुः स्फुरतु संततं वल्लभ इति प्रथावत्यस्माकं हृदि सुभगमूर्तिः सकरुणा ॥ १ ॥ श्रीभागवतप्रतिपदमणिवरभावांशुभूषिता मूर्तिः ॥ श्रीवल्लभाभिधानस्तनोतु निजदास्यसौभाग्यम् ॥ २ ॥ मायावादतमो निरस्य मधुभित्सेवाख्यवर्त्माद्भुतं श्रीमद्गोकुलनाथसंगमसुधासंप्रापकं तत्क्षणात् ॥ दुष्प्रापं प्रकटीचकार करुणारागादिसंमोहनः स श्रीवल्लभभानुरुल्लसति यः श्रीवल्लवीशांतरः ॥ ३ ॥ क्वचित्पांडित्यं चेन्न निगमगतिः सापि यदि न क्रिया सा सापि स्याद्यदि न हरिमार्गे परिचयः ॥ यदि स्यात्सोऽपि श्रीव्रजपतिरतिर्नेति निखिलैर्गुणैरन्यः को वा विलसति विना वल्लभवरम् ॥ ४ ॥ मायावादिकरींद्रदर्पदलनेनास्येंदुराजोद्गतश्रीमद्भागवताख्यदुर्लभसुधावर्षेण वेदोक्तिभिः ॥ राधावल्लभसेवया तदुदितप्रेम्णोपदेशैरपि श्रीमद्वल्ल-

१ दास. २ रागाति.

भनामधेयसदृशो भावी न भूतोऽस्त्यपि ॥ ५ ॥ यदंघ्रिनखमंडलप्रसृतवारिपीयूषयुग्वरांगहृदयैः कलिस्तृणमिवेह लुञ्छीकृतः ॥ व्रजाधिपतिरिंदिराप्रभृतिमृग्यपादांबुजः क्षणेन परितोषितस्तदनुगत्वमेवास्तु मे ॥ ६ ॥ अघौघतमसावृतं कलिभुजंगमासादितं जगद्विषयसागरे पतितमस्वधर्मे रतम् ॥ यदीक्षणसुधानिधिः समुदितोऽनुकंपामृतादमृत्युमकरोत्क्षणादरणमस्तु मे तत्पदम् ॥ ७ ॥

इति श्रीविट्ठलेश्वरविरचिता सप्तश्लोकी ( स्फु० ) संपूर्णा ॥

अस्य ग्रंथस्य श्लोकानामन्योऽपि पाठक्रमो दृश्यते ।
तथापि श्रीहरिरायचरणकृतटीकानुसारी क्रमोऽत्र गृहीतः ॥

## अथ यमुनाष्टपदी ।

श्रीकृष्णाय नमः ॥

नमोदेवियमुनेनमोदेवियमुनेहरकृष्णमिलनांतरायम् । निजनाथमार्गदायिनि कुमारीकामपूरिके कुरु भक्तिरायम् ॥ १ ॥ ( ध्रुवपदम् ) ॥ मधुपकुलकलितकमलावलीव्यपदेशधारितश्रीकृष्णयुतभक्तहृदये ॥ सततमतिशयितहरिभावनाजाततत्सारूप्यगदितहृ-

१ कुमारि. २ पूरक. ३ निज.

दये ॥ १ ॥ निजकूलभवविविधतरुकुसुमयुतनीरशोभया विलसदलिवृंदे ॥ स्मारयसि गोपीवृंदपूजितसरसमीशवपुरानंदकंदे ॥ २ ॥ उपरिखेलदमलकमलारुणद्युतिरेणुपरिमैलितजलभरेणामुना ॥ व्रजयुवतिकुचकुंभकुंकुमारुणमुरः स्मारयसि मारपितुरधुना ॥ ३ ॥ अधिरजनि हरिविहृतिमीक्षितुं कुवलयाभिधशुभगनयनान्युशति तनुषे ॥ नयनयुगमल्पमिति बहुतराणि च तानि रसिकतानिधितया कुरुषे ॥४॥ रजनिजागरजनितरागरंजितनयनपंकजैरहनि हरिमीक्षसे ॥ मकरंदभरमिषेणानंदपूरिता सततमिह हर्षाश्रु मुंचसे ॥ ५ ॥ तटगतानेकशुकसारिकामुनिगणस्तुतविविधगुणसी (शी) धुसागरे ॥ संगता सततमिह भक्तजनतापहृति राजसे रासरससागरे ॥ ६ ॥ रतिभरश्रमजलोदितकमलपरिमलव्रजयुवतिजनविहृतिमोदे ॥ ताटंकचलनैनसुनिरस्तसंगीतयुतमदमुदितमधुपकृतविनोदे ॥७॥ निजव्रजजनावनात्तगोवर्धने राधिकाहृदयगतहृद्यकरकमले ॥ रतिमतिशयितरसविह्वलस्याशु कुरु वेणुनिनदाह्वानसरले॥८॥

---

१ गोपिका. २ चल. ३ मिलित. ४ चालन.

श्लोकौ—व्रजपरिवृढवल्लभे कदा त्वच्चरणसरोरुहमीक्षणास्पदं मे ॥ तव तटगतवालुकाः कदाहं सकलनिजांगगता मुदा करिष्ये ॥ १ ॥ वृंदावने चारु बृहद्वने मन्मनोरथं पूरय सूरसूते ॥ दृग्गोचरः कृष्णविहार एव स्थितिस्त्वदीये तट एव भूयात् ॥ २ ॥

इति श्रीविठ्ठलेश्वरविरचिता यमुनाष्टपदी समाप्ता ।

# अथ भुजंगप्रयाताष्टकम् ।

श्रीकृष्णाय नमः ।

सुधाधामनैजाधराधारवेणुं कराग्रेरुदग्रैरतिव्यग्रशीलैः[1] सदा पूरयंश्चारयन्गोवरूथान्पुरः प्रादुरास्तां ममाभीरवीरः ॥१॥ यशोदायशोदानदक्षांबुजाक्ष प्रतीपप्रमाद प्रहाणप्रवीण ॥ निजापांगसंगोद्भवानंगगोपांगनापांगनृत्यांगणीभूतदेह ॥२॥ सदाराधिकाराधिकासाधकार्थप्रतापप्रसाद प्रभो कृष्णदेव ॥ अनंगीकृतानंगसेव्यंतरंगप्रविष्टप्रतीपाघहन्मे प्रसीद ॥ ३ ॥ रमाकांत शांत प्रतीपांत मेंतः स्थिरीभूतपादांबुजस्त्वं भवाशु ॥ सदा कृष्णकृष्णेति नाम त्वदीयं विभो गृण्हतो हे यशोदाकिशोर ॥ ४ ॥ स्फुरद्रंगभूमिष्ठमं-

१ सर्वेऽपरा. २ प्रतीप.

चोपविष्टोच्छलच्छत्रुपक्षे भयं चानिनीषो ॥ अलिव्रातजुष्टोत्तमस्रग्धर श्रीमनोमंदिर त्वं हरे मे प्रसीद ॥५॥ स्मरस्मेर कस्मात्त्वमस्मान्स्वतो न स्मरस्यंबुजस्मेरनेत्रानुकंपिन् ॥ स्मितोद्भावितानंगगोपांगनांगोल्लसत्स्वांगसत्संगलंभेश पाहि ॥ ६ ॥ रमाराम रामामनोहारिवेषोद्धतक्षोणिपालौघपापक्षयेश ॥ दरोत्फुल्लपंकेरुहस्मेरहास प्रपन्नार्तिहन्नंदसूनो प्रसीद ॥७॥ कुरंगीदृशामंगसंगेन शश्वन्निजानंददानंदकंदातिकाल ॥ कलिंदोद्भवोद्भूतपंकेरुहाक्ष स्वभक्तानुरक्ताक्षपाद प्रसीद ॥ ८ ॥ भुजंगप्रयाताष्टकेनानुयातो भुजंगेशयानं हरिं संस्तवीति ॥ रतिस्तस्य कृष्णे भवत्याशु नित्या किमन्यैः फलैः फल्गुभिः सेवकस्य॥

इति श्रीविट्ठलेश्वरविरचितं भुजंगप्रयाताष्टकं संपूर्णम् ।
श्रीमदाचार्यविरचितमिदमिति केचित् ।

## अथ राधाप्रार्थनाचतुःश्लोकी ।

श्रीकृष्णाय नमः ।

कृपयति यदि राधा बाधिताशेषबाधा किमपरमवशिष्टं पुष्टिमर्यादयोर्मे ॥ यदि वदति च किंचित् स्मेरहासोदितश्रीर्द्विजवरमणिपंक्त्या मुक्तिशुक्त्या तदा

श्लोकौ–व्रजपरिवृढवल्लभे कदा त्वच्चरणसरोरुहमीक्षणास्पदं मे ॥ तव तटगतवालुकाः कदाहं सकलनिजांगगता मुदा करिष्ये ॥ १ ॥ वृंदावने चारुबृहद्वने मन्मनोरथं पूरय सूरसूते ॥ दृग्गोचरः कृष्णविहार एव स्थितिस्त्वदीये तट एव भूयात् ॥ २ ॥

इति श्रीविट्ठलेश्वरविरचिता यमुनाष्टपदी समाप्ता ।

## अथ भुजंगप्रयाताष्टकम् ।

श्रीकृष्णाय नमः ।

सुधाधामनैजाधराधारवेणुं कराग्रेरुदग्रैरतिव्यग्रशीलैः[1] सदा पूरयंश्चारयन्गोवरूथान्पुरः प्रादुरास्तां ममाभीरवीरः ॥१॥ यशोदायशोदानदक्षांबुजाक्ष प्रतीपप्रमादप्रहाणप्रवीण ॥ निजापांगसंगोद्भवानंगगोपांगनापांगनृत्यांगणीभूतदेह ॥२॥ सदाराधिकाराधिकासाधकार्थप्रतापप्रसाद प्रभो कृष्णदेव ॥ अनंगीकृतानंगसेव्यंतरंगप्रविष्टप्रतीपाघहन्मे प्रसीद ॥ ३ ॥ रमाकांत शांत प्रतीपांत मंतः स्थिरीभूतपादांबुजस्त्वं भवाशु ॥ सदा कृष्णकृष्णेति नाम त्वदीयं विभो गृण्हतो हे यशोदाकिशोर ॥ ४ ॥ स्फुरद्रंगभूमिष्ठपं-

१ सर्वेश्वरम. २ प्रतीपा.

चोपविष्टोऽच्छलच्छत्रुपक्षे भयं चानिनीषो ॥ अलिव्रात-जुष्टोत्तमस्रग्धर श्रीमनोमंदिर त्वं हरे मे प्रसीद ॥५॥ स्मरस्मेर कस्मात्त्वमस्मान्स्वतो न स्मरस्यंबुजस्मेरने-त्रानुकंपिन् ॥ स्मितोद्भावितानंगगोपांगनांगोल्ल-सत्स्वांगसत्संगलंभेश पाहि ॥ ६ ॥ रमाराम रामामनोहारिवेषोद्धतक्षोणिपालौघपापक्षयेश ॥ दरो-त्फुल्लपंकेरुहस्मेरहास प्रपन्नार्तिहृन्नंदसूनो प्रसीद ॥७॥ कुरंगीदृशामंगसंगेन शश्वन्निजानंददानंदकंदाति-काल ॥ कलिंदोद्भवोद्भूतपंकेरुहाक्ष स्वभक्तानुरक्ता-क्तपाद प्रसीद ॥ ८ ॥ भुजंगप्रयाताष्टकेनानुयातो भुजंगेशयानं हरिं संस्तवीति ॥ रतिस्तस्य कृष्णे भवत्याशु नित्या किमन्यैः फलैः फल्गुभिः सेवकस्य॥

इति श्रीविठ्ठलेश्वरविरचितं भुजंगप्रयाताष्टकं संपूर्णम् ।
श्रीमदाचार्यविरचितमिदमिति केचित् ।

# अथ राधाप्रार्थनाचतुःश्लोकी ।

श्रीकृष्णाय नमः ।

कृपयति यदि राधा बाधिताशेषबाधा किमपरमवशिष्टं पुष्टिमर्यादयोर्मे ॥ यदि वदति च किंचित् स्मेरहा-सोदितश्रीर्द्विजवरमणिपंक्त्या मुक्तिशुक्त्या तदा

किम् ॥ १ ॥ श्यामसुंदर शिखंडशेखर स्मेरहास्य मुरलीमनोहर ॥ राधिकारसिक मां कृपानिधे स्वप्रियाचरणकिंकरी कुरु ॥ २ ॥ प्राणनाथ वृषभानुनंदिनीश्रीमुखाब्जरसलोलषट्पद ॥ राधिका पदतले कृतस्थितिस्त्वां भजामि रसिकेंद्रशेखर ॥ ३ ॥ संविधाय दशने तृणं विभो प्रार्थये व्रजमहेंद्रनंदन ॥ अस्तु मोहन तवातिवल्लभा जन्मजन्मनि मदीश्वरी प्रिया ॥

इति श्रीविट्ठलेश्वरविरचिता राधाप्रार्थनाचतुःश्लोकी संपूर्णा ।

## अथ श्रीगोकुलाष्टकम् ।

श्रीकृष्णाय नमः ।

श्रीमद्गोकुलसर्वस्वं श्रीमद्गोकुलमंडनम् ॥
श्रीमद्गोकुलदृक्तारा श्रीमद्गोकुलजीवनम् ॥ १ ॥
श्रीमद्गोकुलमात्रेशः श्रीमद्गोकुलपालकः ॥
श्रीमद्गोकुललीलाब्धि श्रीमद्गोकुलसंश्रयः ॥ २ ॥
श्रीमद्गोकुलजीवात्मा श्रीमद्गोकुलमानसम् ॥
श्रीमद्गोकुलदुःखघ्नः श्रीमद्गोकुलवीक्षितः ॥ ३ ॥
श्रीमद्गोकुलसौंदर्यं श्रीमद्गोकुलसत्फलम् ॥
श्रीमद्गोकुलगोप्राणः श्रीमद्गोकुलकामदः ॥ ४ ॥

१ स्थितं.

श्रीमद्गोकुलराकेशः श्रीमद्गोकुलतारकः ॥
श्रीमद्गोकुलपद्मालिः श्रीमद्गोकुलसंस्तुतः ॥ ५ ॥
श्रीमद्गोकुलसंगीतः श्रीमद्गोकुललास्यकृत् ॥
श्रीमद्गोकुलभावात्मा श्रीमद्गोकुलपोषकः ॥ ६ ॥
श्रीमद्गोकुलहृत्स्थानः श्रीमद्गोकुलसंवृतः ॥
श्रीमद्गोकुलदृक्पुष्टः श्रीमद्गोकुलमोदितः ॥ ७ ॥
श्रीमद्गोकुलभोग्यश्रीः श्रीमद्गोकुललालितः ॥
श्रीमद्गोकुलभोग्यश्रीः श्रीमद्गोकुलसर्वकृत् ॥ ८ ॥
इमानि श्रीगोकुलेशनामानि वदने मम ॥
वसंतु संततं चैव लीलाश्च हृदये सदा ॥ ९ ॥

इति श्रीविठ्ठलेश्वरविरचितं गोकुलाष्टकं संपूर्णम्।

## अथ अष्टाक्षरनिरूपणम्।

श्रीकृष्णाय नमः।

श्रीकृष्णकृष्णकृष्णेति कृष्णनाम सदा जपेत् ॥
आनंदः परमानंदो वैकुंठं तस्य निश्चितम् ॥ १ ॥
सदा स्मरेत्तु यो कृष्णं यमस्तस्य करोति किम् ॥
भस्मीभवंति तस्याशु महापातकराशयः ॥ २ ॥
यः स्मरेत्तु सदा मंत्रं श्रीकृष्णः शरणं मम ॥
अष्टाक्षरं जपेन्नित्यं यमो दृष्ट्वा हि शंकते ॥ ३ ॥

श्रीमंत्रार्थाः प्रकाश्यंते जीवानां कार्यसाधनाः ॥
जीवानां हितकार्यार्थं गुरुश्रीविठ्ठलेश्वरैः ॥ ४ ॥
श्रीमुखात्कथ्यते सम्यक् सदष्टाक्षरतत्त्वतः ॥
विवृतिर्हृदये यस्य सोयं श्रीवल्लभो भवेत् ॥ ५ ॥
श्रीः श्रीसौभाग्यसंप्राप्तिः धनवान् राजवल्लभः ॥
कृशब्दः शोषयेत्पापं ष्णशब्दस्तापसंहृतिम् ॥ ६ ॥
शशब्दो निर्दहेद्योनिं रशब्दो ज्ञानमाप्नुयात् ॥
णशब्देन सदा कृष्णे दृढा भक्तिः सदा भवेत् ॥७॥
मशब्देन गुरौ प्रीतिः कृष्णरत्नोपदेशके ॥
मशब्दे हरिसायुज्यमन्ययोनिं न गच्छति ॥ ८ ॥
इति श्रीकृष्णमंत्रार्थं यो जपेद्विठ्ठले रतिम् ॥
भक्तिं वैराग्यमाप्नोति भुक्तिमुक्ती करे स्थिते ॥९॥
सर्वरोगोपशमनं सर्वपापोपनाशनम् ॥
ऋद्धिः सिद्धिर्गृहे शीघ्रं वसते सर्वदा स्थिरा ॥१०॥
आनंदं परमानंदं सायुज्यं हरिवल्लभम् ॥
यः पठेच्छ्रीकृष्णमंत्रं सर्वज्वरविनाशनम् ॥ ११ ॥
भूतप्रेतपिशाचादिव्याघ्रचौरादिसंकटे ॥
शत्रवो मित्रतां यांति सर्पं दृष्ट्वेव मूषकाः ॥ १२ ।
कुक्रियाः सर्वरिष्टानि कुग्रहाः सर्वनाशनाः ॥

आनंदमूर्तिः कृष्णोऽस्य हृदये वसते सदा ॥ १३ ॥
तस्य कुत्रापि नो दुःखं सुखं सर्वत्र सर्वदा ॥
अहोरात्रं जपेन्नित्यं गुरूणां मंत्रमुत्तमम् ॥ १४ ॥
तं हि दृष्ट्वा त्रयो लोका पूतास्युः किमु मानवाः ॥
मध्ये च सर्वमंत्राणां मंत्रराजोत्तमोत्तमः ॥ १५ ॥
इदमेव परैकांतभक्तिमान् यः सदा स्मरेत् ॥
ऋद्धिः सिद्धिर्गृहे सत्यं कृष्णतात्पर्यसुंदरम् ॥ १६ ॥
भक्तानां हितकार्यार्थं ज्ञातव्यं स्वजनोत्तमैः ॥
वेदवाक्ये महावाक्यं पुराणे भारते तथा ॥ १७ ॥
श्रीमद्वल्लभवाक्यार्थं श्रीकृष्णः शरणं मम ॥

इति श्रीविठ्ठलेश्वरविरचितमष्टाक्षरनिरूपणं समाप्तम् ।

## अथ ललितत्रिभंगस्तोत्रम् ।

श्रीकृष्णाय नमः ।

नमः पितृपदांभोजरेणुभ्यो यन्निवेदनात् ॥
अस्मत्कुलं निष्कलंकं श्रीकृष्णेनात्मसात्कृतम् ॥ १ ॥
वामजान्वंतकलितातिवक्रेतरजानुकम् ॥
एतत्संप्राप्तसौभाग्यं विचित्रमणिभूषणम् ॥ २ ॥
नखचंद्रमहःक्षिप्तभक्तसंतापसंततिम् ॥
विचित्रभावसंतानविचित्रीकृतमानसम् ॥ ३ ॥

दक्षिणपदतलपद्मं वामप्रपदस्य वामतः प्रकटम् ॥
सौंदर्यं किमपितरां प्रकटयति प्रेमवल्लभ्यम् ॥ ४ ॥
विकसितशारदकमलोदरमदहरणेऽपि तत्र पद्माकम् ॥
वहता निरवधि रसता निवेद्यते स्वीयभक्तेषु ॥ ५ ॥
भक्तार्तिहरणे काचिन्मर्यादा नैव मन्यते ॥
इति ज्ञापयितुं वज्ररेखां धारयति स्फुटम् ॥ ६ ॥
अनुग्रहानिलो यत्र तत्सांमुख्यं भजन् त्यजन् ॥
अन्याशां राजते भक्तपदमेवमिति ध्वजम् ॥ ७ ॥
धारयन् ज्ञापयत्येष त्यक्तभक्तान्यदिक्प्रभुः ॥
अत एव हि संसेव्यो निर्दोषगुणविग्रहः ॥ ८ ॥
युग्मम्—एतत्पदपंकजमधुमत्तस्यायं निसर्गएवाभूत्॥
नेतरभावं भजते यदंकुशो नित्यमेवास्ति ॥ ९ ॥
कदाचिद्विविधा लीलाः कर्तुं भक्तैः सह प्रभुः ॥
एवं भूतो वादयति वेणुमिष्टं करोति च ॥ १० ॥
प्रपदोपरिसंचारिचारुपीतांबरावृतम् ॥
गुंजद्भ्रमद्भ्रमरयुग्वनमालातिसुंदरम् ॥ ११ ॥
विविधरूपसुचारुसुगंधयुङ्मृदुलपुष्पचयैरतिसुंदरम् ।
ग्रथितमध्यमदेशमतिप्रियं करयुगेन हृदि स्रजि कामये
ग्रीवोरःस्थलकटितटकांचीजानुप्रपदयोः सततम् ॥

विहरंती वनमाला सक्तासीदलिकुलैर्मत्तैः ॥ १३ ॥
गंभीरनाभिविलसत्कांचीदामलसन्मणीन् ॥
स्वरुचा रोचयन्नन्यानप्याकल्पान्वभौ प्रभुः ॥ १४ ॥
त्रिगुणानिलसंचारचलत्प्रांतातिसुंदरम् ॥
उत्तरीयं बिभ्रदंसे शुशुभेऽतितरां हरिः ॥ १५ ॥
विविधमहामणिखचितैः परितो मुक्ताफलावलिग्रथितैः
वलयांगदकंकणचयसकलांगुलिभूषणै रेजे ॥ १६ ॥
कट्या कुटिलया कांची भुवनत्रयमोहिनी ॥
तनोति सुषमां नाभ्या सह साम्येऽपि दुर्लभाम् ॥१७॥
रसभरभरितं पात्रं नामितमन्यत्र तं रसं कर्तुम् ॥
एकत आनतमुन्नतमेकत इह दृश्यते सर्वैः ॥ १८ ॥
कटिगतभावरसानां व्रजांगनाहृत्सु पूरणे सापि ॥
अभवत्तथैव हृष्टा दृष्टा परमुपपद्यते कांच्या ॥ १९ ॥
वेणुरवानुगया नवनवचापल्यं समासवत्योचैः ॥
व्रजतरुणीमानसधनसंपन्नयाऽभूज्जगज्जवत् ॥२०॥
नयनांबुजसौंदर्यं मनसां वाचामगोचरं सत्यम् ॥
व्रजसुंदरीनयनमनोऽनुभवैकगतं परं हृद्यम् ॥२१॥
तत्रापि भावगर्भं तरलतरं प्रियतमामुखांभोजे ॥
स्थगितं भवदरुणतरप्रांतं प्राकट्यतोऽनुरागमिव २२

विचित्रवेणुतानाब्धितरंगांदोलितांचलम् ॥
स्थिरं वा तरलं वेति नैवाभूदवधारितम् ॥ २३ ॥
स्मितामृतभरेणात्मभक्तहृत्प्राणपोषकम् ॥
तत्रैव लयहेतुर्वा तेषामिति न वेद्म्यहम् ॥ २४ ॥
भ्रूचापसंधितः कर्णाविध्याकृष्टः प्रियाहृदि ॥
विद्धः प्राणानाजहार स्वस्मिन्नस्मिन् दया न हि २५
स्मितकौटिल्यचापल्यारुणिमामृतसिंधुषु ॥
मेमाः कथंचिज्जीवंति भक्तास्तत्तत्स्वभावतः ॥ २६ ॥
शृंगाररससर्वस्वं भक्तभावामृतावृतम् ॥
अनुरागचयं ताराश्वेत्यापांगैर्विभर्त्यसौ ॥ २७ ॥
सालिकुलं कमलकुलं जितं निजाकारमात्रतो जगति॥
प्रकटातिगूढरसभरजितोऽभवत्कुसुमशरकोटिः ॥२८॥
स्निग्धता मुग्धता वापि चातुरी सहजापि वा ॥
नैव वर्णयितुं शक्यांऽनुभवंतीभिरप्यहो ॥ २९ ॥
मन्ये गोकुलतरुणीनवनवभावाः स्वरससंजाताः ॥
रतिरससुधाब्धिपतितप्लवे प्लवंतेऽतिसर्गमधुरतराः ३०
संमुखप्रेक्षणेऽपांगप्रेक्षणं च यथा रसः ॥
तथारुणाभी रेखाभिर्ज्ञापयत्यंबुजेक्षणः ॥ ३१ ॥

---

१ ममा जीवंति तत्पोपातरे पृष्ठास्तदाश्रयाः.

विरलारुणरेखाभिः सितगर्भस्य नेत्रयोः ॥
आविर्भवति या शोभा तां न वक्तुं क्षमा रमा ॥३२॥
पक्ष्माणि तरुणीभावा नानेतुं नयनाब्जयोः ॥
करांगुलीचयाभानि भासंते परितः प्रभोः ॥ ३३ ॥
अतिसारस्यतो नेत्रे स रसः परितोऽभवत् ॥
रसाङ्कुराः पक्ष्मरूपा भासंते सुषमास्पदाः ॥ ३४ ॥
आदायादाय भक्तानां भावानतिमनोहरान् ॥
निमेषमिषतः स्वांतसंचयं कुरुते मुदा ॥ ३५ ॥
स्वतः सामर्थ्यमप्येतत्रिलोकीमोहने बत ॥
स्मितं सहायं संप्राप्य यत्करोति न वेद्मि तत् ॥३६॥
रसपूरैः प्लावयति स्वजनविवेकत्रपाधृतिस्तत्रयथा ॥
तानेव तद्रसाब्धिषु मग्नान्कुरुते तदेवैतत् ॥ ३७ ॥
एतत्कार्यस्य भवने प्रतिबंधेऽपि चेश्वरः ॥
न शक्तो प्रतिबद्धो यत्तत्स्वभावस्वभावतः ॥ ३८ ॥
तत्रापि चेत् सहायोऽभूदुदारो वेणुनिःस्वनः ॥
त्रिभंगस्य त्रिजगति न जाने कीदृशी दशा ॥३९॥
तिष्ठत्वन्यकथैतादृक्स्वरूपं प्रतिबिंबितम् ॥
कचित् पश्येत्स्वयं नाथः कां दशां नु भजेत्तदा ॥४०॥

१ भावः. २ कन्दोऽभुन्मनस्ता.

प्रायो न दर्शनापेक्षा यत्स्वयं तद्रसात्मकम् ॥
प्रियाहृदयनेत्रेषु निरुद्धोऽस्ति स नायकः ॥ ४१ ॥
एतत्संदर्शने तु स्यात् प्रमदाभाव एव हि ॥
तत्तापशामकोऽप्येष कृष्ण एवास्ति नापरः ॥ ४२ ॥
अथवा तद्रसात्मा तद्दर्शनेनाऽतिपोषितः ॥
भवति स्वप्रियावृंदवृतोऽयं गजराडिव ॥ ४३ ॥
कदाचिदथवा प्रेष्ठो वियोगार्त्या तदात्मकः ॥
तासामाविर्भवद्भावै रेव तां शामयत्यपि ॥ ४४ ॥
दृष्ट्वापि रसरूपत्वं मयि जानंतु मामकाः ॥
तदर्थमाविष्कुरुते त्रिभंगं भक्तलोचनम् ॥ ४५ ॥
रसात्मकं स्फुटं स्वस्मिन् भक्तैर्नैवानुभूयते ॥
तदर्थमाविष्कुरुते त्रिभंगं भक्तलोचनम् ॥ ४६ ॥
पुष्टिभक्तिं स्थिरीकृत्य मर्यादां च तदाश्रिताम् ॥
कृत्वा वृंदावनक्षोणीमयथापूर्वसंस्थितिम् ॥ ४७ ॥
हृदयंभक्तहृदये स्थिरं लोकान्निजान् परान् ॥
पुष्टिदिश्येव सुमुखान् कृत्वा संराजते प्रभुः ॥ ४८ ॥
सुगमम्—उद्बुद्धशृंगाररसस्वरूपो भूषणान्यपि ॥
तादृगेवाखिलांगेषु बिभ्रत्संराजते प्रभुः ॥ ४९ ॥
मत्याद्यगम्यं यद्रूपमल्पकेन मया कथम् ॥

तन्निरूपयितुं शक्यं तदीयत्वाद्भवेदपि ॥ ५० ॥
तथापि श्रीगोकुलेऽस्मिन्नाविर्भूतो विराजते ॥
अनन्यभक्तैरनिशं पीयते तत्सुधासवः ॥ ५१ ॥
स मत्प्रभुः सदाऽहं तु तत्पादाब्जरजोऽस्मि वै ॥
तत्प्रभावाद्यथाशक्ति वर्णयाम्यविचारयन् ॥ ५२ ॥
अहं च तत्पादपद्मरेणुरस्मिति मत्प्रभुः ॥
स चास्तीति यथाशक्ति वर्णयाम्यविचारयन् ॥५३॥
स्वतो मल्लोचनमनोवृत्तिर्वृंदावनप्रभुः ॥
बृहद्वनप्रियः शश्वच्छिशिरीकुरुतात्स्वतः ॥ ५४ ॥
अहं तदीय इत्येषा तद्वार्ता रुचिता परम् ॥
तेन प्रसन्नो भवतु दासे श्रीविठ्ठलप्रभुः ॥ ५५ ॥

इति श्रीविठ्ठलेश्वरविरचितं ललितत्रिभंगस्तोत्रं संपूर्णम् ।

## अथ आत्मसुतेभ्यः पत्रम् ।

श्रीकृष्णाय नमः ।

स्वस्ति श्रीविठ्ठलदीक्षितानां गिरिधरस्य च—गोविंदबालकृष्णश्रीवल्लभयदुनाथरघुनाथघनश्यामेषु, गिरिधरस्य च भवतां पुत्रेष्वाशिषः, शमिह, भावत्कं भद्रमाशास्महे, टोडाग्रामपर्यंतं श्रीगोकुलनाथेन कुशलं नीताः स्मः, अत्रैव दोलोत्सवश्च कारितः, गिरि-

धरविषयिण्यस्मद्विपयिणी च काऽपि चिंता न कार्या, श्रीगोवर्धनेश एवावितास्ति, उभयत्रापि सेवा सम्यक्कार्या, कारणीया च, स्वस्वदेहरक्षा सर्वैः प्रकारैः कार्या, सेवकाः स्वस्वमर्यादायां च रक्षणीयाः, बालकानां रक्षा सर्वैः प्रकारैः कार्या, यद्द्रव्यमागमिष्यति तन्मध्ये तत्कालानुरूपव्ययोपयोगि यावद्भवति तावत्स्थापयित्वा शेषेणावश्यमृणशोधनं कार्यम्, व्ययश्च सावधानतया करणीयः, निशि यामिकाः सावधानाः स्थापनीयाः, इतः प्रेषितोऽश्वो गोविंदभट्टेभ्यो दत्तोऽस्तु, अस्माभिस्तं विक्रीय तद्द्रव्यं तैर्ग्राह्यं, पत्रं मुहुः प्रेषणीयं, तत्रत्यः सर्वोपि वृत्तांतो लेखनीयः, गिरिधरापत्यानां विशेषतः कुशलं लेख्यं, चिंता कापि न कार्या, श्रीगोवर्धननाथोऽस्मत्कुलपतिरस्मद्धितमेव करिष्यति, किमधिकम् । चैत्रवदि ४ गोविंदभट्टेषु गणेशभट्टेषु चाशिषः॥ पदकृद्गोविंददासेषु भगवत्स्मरणं वाच्यम्, अनादिषु कृष्णदासादिष्वाशिषो वाच्याः ॥ वासुदेवभट्टैः स्वगृहे गंतव्यं पुरोहितगृहात्, वेंकटप्रभृतिषु कृष्णरायादिष्वाशिषः इति ॥१॥

इति वि० पत्रम् ।

# अथ विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

यद्दैन्यं त्वत्कृपाहेतुर्न तदस्ति ममाण्वपि ॥ तां कृपां कुरु राधेश यया तद्दैन्यमाप्नुयाम् ॥ १ ॥ सर्वेषां जीवितं लोके दृष्टं सर्वार्थसाधकम् ॥ ग्लान्येकफलकं जातमधुना मम जीवितम् ॥२॥ कर्तुं पुनरथाकर्तुमन्यथाकर्तुमीश्वरे ॥ सामर्थ्यं यन्मया दृष्टं त्वय्येवातो न संशयः ३ तं न पश्यामि यस्याग्रे वार्तां स्वस्य मनोगताम् ॥ उक्त्वा तदुत्तरं लब्ध्वा मनो विश्रमये क्षणम् ॥ ४ ॥ अतीव नीचा मत्प्राणा मूर्खा अति गतत्रपाः ॥ स्वस्थित्ययोग्यकालेऽपि यतस्तिष्ठंति सांप्रतम् ॥५॥ शास्त्रं नियामकं तावद्यावत्पूर्णा कृपा नते ॥ कृपया ते सुपूर्णस्य नैव कोऽपि नियामकः ॥ ६ ॥ सुभगा एव जानंति प्रियासौभाग्यजं सुखम् ॥ तद्धीनायास्तदीयेति प्रसिद्धिः शरणं सखि ॥ ७ ॥ प्रियसंगमराहित्याद्व्यर्थाः सर्वे मनोरथाः ॥ निरपत्रपतासिद्ध्यै जीवामि सखि सांप्रतम् ॥ ८ ॥ न लब्धस्तादृशः कोऽपि यस्याग्रे स्वमनोगताम् ॥

वार्तामुक्त्वा स्वमात्मानं क्षणं विश्रामयाम्यहम् ॥९॥
श्रीमुखालोकनेंतःस्थप्रियस्य च बहिर्गतौ ॥
पक्ष्मापकारोपकारौ निर्णेतुं नैव शक्नुमः ॥ १० ॥
अद्य श्वो वा परश्वो वा कदाचित्कृपयिष्यति ॥
नाथ इत्याशया सर्वं गतं जन्म करोमि किम्॥११॥
तथापि तत्कृपाकांक्षां मनो मे निरपत्रपम् ॥
कं वा हेतुं सुनिश्चित्य करोतीति न वेद्म्यहम् ॥१२॥
स्वभावतः सदा मेघः सर्वेषां जीवनप्रदः ॥
जाने तस्यैव दौर्भाग्यं सोऽपि यं समुपेक्षते ॥१३॥
त्वदीयत्वमपि ज्ञात्वा मयि कालादयः प्रभो ॥
प्रभवंति ततो मन्ये त्वत्कृपाशून्यतां मयि ॥ १४ ॥
एतेषामहमेवास्मि सर्वस्वमतिसुंदरः ॥
जानात्यस्माकमज्ञानेऽप्यतः कर्ता स्वतोखिलम्॥१५॥
विज्ञप्तौ वाऽपराधे वा पाखंडे वा मदुक्तयः ॥
पर्यवस्यंति कुत्रेति न जानेऽहं विमूढधीः ॥ १६ ॥
दुर्भगाऽसि तथाऽपि त्वं मा त्यज स्वप्रियांतिकम्॥
कदाचित्कृपया पश्येत्प्रियस्तद्भाग्ययोगतः ॥ १७ ॥
विरहेणाऽतितप्तां मां स्मरेच्चेत्प्राणवल्लभः ॥

राज्ययोग्ये तदाकांक्षा दंडावाप्त्यै यथा भवेत् ॥
त्वत्सेवायामहं तादृक् तद्वदाप्तो दशामिमाम् ॥१९॥
स्वीयं कृतागसं चेत्त्वं दूरस्थं कुरुषे यदि ॥
इतः परोऽधिको दंडस्त्वदीयस्य न विद्यते ॥२०॥
वियोगो बाधते तावद्यावद्धृद्येव ते स्थितिः ॥
यदा बहिस्तदा नेति विचित्रेयं तव स्थितिः ॥ २१ ॥
भूर्जत्वगिव मद्दोषा निःसरंत्येव सर्वतः ॥
तथैवाऽनन्यगतिके त्वत्कृपेति न मे भयम् ॥ २२ ॥
बलिष्ठा अपि मद्दोषास्त्वत्कृपाग्रेऽतिदुर्बलाः ॥
तस्या ईश्वरधर्मत्वाद्दोषाणां जीवधर्मतः ॥ २३ ॥
त्वद्वियुक्तस्य जीवस्य तदीयस्यापि नित्यता ॥
संगं विना न चैवास्तु विज्ञापनमिदं मम ॥ २४ ॥

इति श्रीविट्ठलेश्वरकृता विज्ञप्तिः समाप्ता ॥

## अथ व्रजचर्याष्टपदी ।

श्रीकृष्णाय नमः ॥

व्रजानंदकंदं व्रजानंदकंदं घोषपतिभाग्यभुवि जातम्। रसिकवरगोपिकापतिरसमाननं तव जयतु मम दृशि सुजातम् ॥ १ ॥ रुचिरदरहासगलदमलपरिमलल्लु-ब्धमधुपकलमुखकमलसदनम् ॥ अमृतचयगर्वनि-

वासनाधरसीधु पायय मनोजाग्निशमनम् ॥ २ ॥ स्मितप्रकटितचारुदंतरुचिवदनविधुकौमुदीहृतनिखिलतापे ॥ विलसिलिलिते हृद्यकनककलशद्वये मारकतमणिरिव दुरापे ॥ ३ ॥ सुभगसुमुखीकंठनिहितनिजबाहुरतिमत्तगजराज इव रुचिरम् ॥ विरहविरहानलं चारुपुष्करचलनसीकरैरुपशमय सुचिरम् ॥४॥ अरुणतरलापांगसरनिहत कुलवधूधृतविलोचनसरोजम् ॥ मम वदनसुषमासरसि विलसति सततमलसगतिनिर्गतमनोजम् ॥ ५ ॥ नंदगेहालवालोदितस्त्रीरागसेकसंवृद्धसुरवृक्षम् ॥ व्रजवरकुमारिकाबाहुहाटकलतासततमाश्रयतकृतरक्षम् ॥ ६ ॥ व्रजजनश्लाघ्यगुणगोपनातिशयरुचिरालापलीलम् ॥ तादृगीक्षणजनितकुसुमशरभावभरयुवतिषु प्रकटतरनिटिलम् ॥ ७ ॥ रुचिरकौमारचापल्यजवक्रीडया बल्लवीहृदयगृहग्रसम् ॥ प्रकटय निजनखरसंचयैः कुसुमशरमिह जयसि त्वतभावविचम् ॥ ८ ॥ घोषसीमंतिनीविद्धद्विरदवेणुकलनिनदगर्जितस्त्वमिहसततम् ॥ वचनकरुणाकृतदृष्टदृष्टीरंग नवजलदमय कुरु सुहसितम् ॥

इति श्रीविठ्ठलेश्वरविरचिता व्रजचर्याष्टपदी संपूर्णा ।

# अथ श्रीस्वामिनीप्रार्थना ।

श्रीकृष्णाय नमः ।

श्रीराधे प्रियतमदृक्संगमसंजातहासदृक्सलिलैः ॥
भवदीयैः स्नानं मे भूयात्सततं न पाथोभिः ॥ १ ॥
भूयान्मेऽभ्यवहारस्तावकतांबूलचर्वितेनैव ॥
पानं करुणाकूतस्मितावलोकामृतेनैव ॥ २ ॥
त्रिषवणमिह भवदंघ्रिप्रणतिः संध्या प्रकृष्टदैन्येन ॥
जापस्तुतापक्लेशैर्विगाढभावेन कीर्तनं नाम्नाम् ॥३॥
अस्तंगच्छत्सूर्यांशुशुक्षणौ दिवसदुःखहोमोऽस्तु ॥
त्वत्पृष्टप्रियवार्ताकथनं मे ब्रह्मयज्ञोऽस्तु ॥ ४ ॥
भवतीनां प्रियसंगमसंजातमनोमहोत्सवेक्षणतः ॥
तर्पणमिह सर्वेंद्रियतृप्तिर्भवतान्मनोरथाढ्या मे ॥५॥
इत्थं जीवनमस्तु क्षणमपि भवदंघ्रिविप्रयोगे तु ॥
मरणं भवतादेवं भावे शरणं त्वमेव भव ॥ ६ ॥

इति श्रीविट्ठलेशविरचिता श्रीस्वामिनीप्रार्थना समाप्ता ।

---

# अथ श्रीस्वामिन्यष्टकम् ।

श्रीकृष्णाय नमः ।

रहस्य श्रीराधेत्यखिलनिगमानामिव धनं निगूढं मद्वाणी जपतु सततं जातु न परम् ॥ प्रदोषे

दङ्कूमोषे पुलिनगमनायाति मधुरं चलत्तस्याश्चंचचरणयुगमास्तां मनसि मे ॥ १ ॥ अमंदप्रेमार्द्रप्रियकरतलं कुंकुममिषात्कुचद्वंद्वे वक्षस्यपि च दधती चारु सततम् ॥ कृपां कुर्याद्राधा मयि रुचिरहेमाद्रिशिखरोदितप्रावृण्मेघस्मरहरहरी चूचुकमिषात् ॥ २ ॥ निमंत्र्य प्रातर्या निजहृदयनाथं निरुपमा समाकार्यैकाकिन्यतिघनवनादात्मभवने ॥ विधायान्नं स्वादु स्वयमतिमुदा भोजयति सा मयि प्रीता राधा भवतु हरिसंगार्पितमनाः ॥ ३ ॥ निधाय श्यामांसे निजभुजलतामिंदुवदनं कटाक्षैः पश्यंती कुवलयदलाक्षी मधुपतेः ॥ मुदा गायंती या मधुर मुरलीजातनिनदानुसारं तारं सा फलतु मम राधावदनयोः ॥ ४ ॥ अमंदप्रेमार्द्राक्सिलयमयात्केलिशयनादुपस्युत्थाया रुजारुणतरकपोलातिरुचिरा ॥ गृहं यांती श्रांतिस्थगितगतिरास्यांबुजगतं घनीभूतं राधा रसमनुदिनं मे वितरतु ॥५॥ प्रियेणाक्ष्णा संसूचितनवनिकुंजेषु विविधप्रसूनैर्निर्माया तिशयरुचिरं केलिशयनम् ॥ दिवा प्येषा गुंजन्मधुपमुखरे धीरपवनाश्रिते क्रीडंती मे निजचरणदास्यं वितरतु ॥६॥ कदंबारूढं या निजप-

तिमजानंत्यहनि तत्तले कुर्वंती स्वप्रियतमसखीभिः सह कथाम् ॥ अकस्मादुद्वीक्ष्य स्फुरत्तरलहारोरसमतिस्मितस्मेरव्रीडाननमुदितदृक् सा मम गतिः ॥७॥ न मे भूयान्मोक्षो न पुनरमराधीशसदनं न योगो न ज्ञानं न विषयसुखं दुःखकदनम् ॥ त्वदुच्छिष्टं भोज्यं तव पदजलं पेयमपि तद्रजो मूर्ध्नि स्वामिन्यनुसवनमस्तु प्रतिभवम् ॥८॥ इति श्रीमद्गोपीजनचरणपंकेरुहयुगानुगत्यानंदांभोनिधिनिभृतवाक्कायमनसा ॥ मयेदं प्रादुर्भावितमतिसुखं विठ्ठलपदाभिधेयं मय्येव प्रतिफलतु सर्वत्र सततम् ॥ ९ ॥

इति श्रीविठ्ठलेश्वरविरचितं श्रीस्वामिन्यष्टकं समाप्तम् ।

## अथ श्रीस्वामिनीस्तोत्रम् ।

श्रीकृष्णाय नमः ।

यदैव श्रीराधे रहसि मिलति त्वां यदुपतिस्तदैवाकार्याहं निजचरणदास्ये निगदिता ॥ मुदा चंद्रावल्या शशिमुखि कृतार्थास्मि भवती तथा संपन्ने मां स्मरति यदि संप्रेषणविधौ ॥ १ ॥ कदाचित्कालिंद्यामहनि तरलापांगरुचिरा समाप्लुत्याकंठं किमपि परिधायाशु वसनम् ॥ स्मरेन्मां चेदुत्तारितवसनसंक्षालनविधौ

कृतार्थाहं भूयान्निजचरणदासीति भवति ॥ २ ॥
तमिस्रायामस्रावितचरणमंजीरनिनदा कथंचित्संप्राप्ता
प्रियतमनिकुंजं चरणयोः ॥ मुदा तल्पारोहे कमल-
मुखि संमार्जनविधौ कृतार्थैवाहं चेत्स्मरति भवति मां
सकृदपि ॥ ३ ॥ विविधबंधरतिश्रमसीकराकुलकपो-
लमुदीक्ष्य हरिं यदि ॥ स्मरसि मां व्यजनार्थमपि
क्षणं सुमुखि धन्यतमास्मि तदा ह्यहम् ॥ ४ ॥ यदि
स्नानव्याजात्तरणितनयातीरमहनि प्रयातुं प्राणेशो-
चितविविधवस्तूनि सुमुखि ॥ गृहीत्वा गुप्तानि स्मरसि
परिधेयस्ववसनं गृहीतुं मां स्वामिन्यहमिह कृतार्थैव
हि तदा ॥५॥ कुतूहलाभिवासितप्रियेण पाणिकर्षणा-
दितस्ततो विपाटितां स्वकंचुकीमतिप्रियाम् ॥ प्रदातु-
मुन्नतांगि मां सकृद्यदि स्मरस्यहं तदा मुदास्मि राधिके
कृतार्थतापदं गता ॥ ६ ॥ चारुप्रसूनमयतल्पगता
स्वनाथे तांबूलचर्वितमुदारमुखांबुजस्थम् ॥ दातुं
स्थिते निजमुखाब्जगतं प्रदातुं मां चेत्स्मरस्यनुचरी
कृतदा नमामि ॥ ७ ॥ निकुंजे पुष्पालीरचितशय-
नात्केलिजनितश्रमांभःसंक्रांताननकमलशोभाहृत-
मनाः ॥ समुत्थायायांती सहजकृपया केलिदलित-

स्रजं दातुं राधे स्मरसि यदि मां त्वं किमपरैः ॥८॥
यदा चलसि मार्गतः शयनभावशेषे मुदा पदांबुज-
मलंकरोष्यमलकुंकुमं त्वं तदा ॥ मुहुः सुमुखि राधिके
किमधिकं तु संप्रार्थये सदा भवतु मे भवच्चरणपं-
कजारक्तता ॥ ९ ॥ प्रियतमकरपद्मस्पर्शभावेक्षणो-
द्यद्रसभरजवशासामंदमोदाकुलानाम् ॥ प्रतिपदतल-
रुग्भिर्गोपसीमंतिनीनामरुणतरहृदंभोजन्मने मे नमो-
ऽस्तु ॥ १० ॥ यावंति पदपद्मानि भवतीनां हरि-
प्रियाः ॥ तावद्रूपः सदा दास्यं करवाणि तदा तदा
॥ ११ ॥ गेहे निकुंजं निशि संगतायाः प्रियेण
तल्पे विनिवेशितायाः ॥ स्वकेशवृंदैस्तव पादपंकजं
संमार्जयिष्यामि मुदा कदापि ॥ १२ ॥

इति श्रीविठ्ठलेश्वरविरचितं श्रीस्वामिनीस्तोत्रं समाप्तम् ।

## अथ दानलीलाष्टकम् ।

श्रीगोपीजनवल्लभाय नमः ।

सदा चंद्रावल्या कुसुमशयनीयादि रचितुं सहासं प्रो-
क्ताः स्वप्रणयिगृहचर्यः प्रमुदिताः ॥ निकुंजेष्वन्योन्यं
कृतविविधतल्पेषु सरसां कथां स्वस्वामिन्या सपदि
कथयंति प्रियतमाम् ॥ १ ॥ अशेषसुकृतोदयैरसि-

लमंगलैर्वेधसा मनोरथशतैः सदा मनसि भावितैर्निर्मिते ॥ अहन्यतिमनोहरे निजगृहाद्विहारेच्छया सखीशतवृता चलद्व्रजवनेषु चंद्रावली ॥२॥ समुद्ग्रथितमालती कुरबकादिपुष्पावलीगलत्परिमलोन्मदभ्रमरयूथसंच्छादितम् ॥ उदारमतिचित्रितं मृगमदादिभिर्बिभ्रतीं मनोभवमदापहं किमपि केशपाशं सखी ३ श्यामेंदोरनुरूपां विधिरचितां तारकामहं मन्ये ॥ यत्तस्कर नखकिरणा न जातु सख्यस्त्यजंतीमम् ॥ ४ ॥ कुंकुममृगमदमलयजचित्रितकुसुमं तदीयधम्मिल्लम् ॥ नो किं तु कुसुमधनुपस्तूणीरससर्जितं विधिना ॥५॥ न धम्मिल्लो मौग्ध्यामृतजलमुचामेष निचयो न पुष्पाणीमानि त्रिदशपतिमौर्वीपरिणतिः ॥ न मुक्तागुच्छानि प्रकटसुखगात्रः करझरो न काश्मीरोद्भूता सुभगतररेखा तडिदियम् ॥ ६ ॥ निसर्गसुंदरोऽप्यालीसूक्ष्मचित्रांबरांतरे ॥ गूढो भाव इवैतस्याः सोऽदृश्यत विलक्षणः ॥ ७ ॥ मत्समर्पितसिंदूररेखोपरि सुसंस्थिताम् ॥ मुक्ताफलावलीमालां सीमंते बिभ्रती विभौ ॥ ८ ॥

इति श्रीविट्ठलेश्वरविरचितं दानलीलाष्टकम् ।

# अथ रससर्वस्वम् ।

श्रीकृष्णाय नमः ।

कुमारीणां राधावरमिलनमाकर्ण्य परशा सहासा संस्मेरस्मितलवजिताशेषसुदृशाम् ॥ अलं तद्वाग्योक्त्या यदतिमधुरो माधववरो वशे जातो लोकत्रययुवतिमृग्यः सहचरि ॥ १ ॥ पुरैवजनकात्मजारमणहार्दसंपादितस्वभाग्यनिधयो व्रजे प्रकटिता बभूवुः प्रियाः ॥ हरिस्थितिविहारभूरिति विनिश्चयेनोत्तमामधिव्रजमकुर्वत स्थितिममंदमोदायनाः ॥ २ ॥ समये तत इह गोकुलजनजीवनचरणरेणुराविरभूत् ॥ स्वयमेव सकलनिजगुणकृतोपमानं वहन्नाथः ॥ ३ ॥ नंदात्मजरूपामृतविभ्रमसंमोहिताः सर्वाः ॥ अतिदुर्लभतत्संगमकृते व्रतं तामुदाकुर्वन् ॥ ४ ॥ चंपककुवलयजातीकुरवककुंदादिपुष्पसंपत्त्या ॥ विजितवसंतेऽकुर्वन् हेमंतर्तौ व्रतारंभम् ॥ ५ ॥ शीतारंभे प्रियतमगाढाश्लेषानुकूले यत् ॥ विधुरपि चिरं जह्रातीत्यतिरमणीं रात्रिमाश्लिष्टः ॥ ६ ॥ अचिरेणासितांभोजविकासेन सितेक्षणे ॥ सूचयत्यचिरं कृष्णचंद्रेणासां च्युतसवम् ॥ ७ ॥ रजनीकरकररंजितविक-

सितमकरंदकुवलयैरासाम् ॥ सूचयति केलिचुंबन-रागं सुदृशां विलोचनयोः ॥ ८ ॥ मुकुलायमान-कुवलयकुलैः प्रभातेषु रविकरात्यरुणैः ॥ ज्ञापयति रात्रिजागरसरागतां नेत्रयोर्निद्राम् ॥ ९ ॥ कोकार्त-स्वरशिशिरकुमुदाह्लादादनैंदनलैः ॥ चिरमिह ताप-सपदवीं विरहिजनं भापयत्युच्चैः ॥ १० ॥ विकसित-कुंदैर्विहसति शरदिन्द्वालोकनमकटम् ॥ पुष्पवती नवकुसुमा कुमुदवधूः कामहृतलज्जा ॥ ११ ॥

इति श्रीविट्ठलेश्वरविरचितं रससर्वस्वं सपाप्तम् ॥

## अथ शृंगाररसः ।

श्रीकृष्णाय नमः ।

कथयकथय स्वामिन्या मे कथं नवसंगमः सुमुखि समभूद्गोविंदस्य प्रियस्य राधिकया ॥ सखि विदित-मेवैतत्ते किं ब्रुवे यदियं कथा व्रजवर वधूदासीनां नः कृशोदरि जीवितम् ॥ १ ॥ स्मृतनिजनिजस्वा-मिन्यस्ताः स्वभावजनिर्भरप्रणयपुलकोद्भिन्नांग्यः साश्रुलोलविलोचनाः ॥ व्रजपरिवृढक्रीडांभोधेः पर-स्परमंबुभिः सुखितहृदयाः संचिंत्य: श्रीमनोप्यहर-स्तदा ॥ २ ॥ यदेवाविर्भूतश्चिरनिभृतमार्गैर्व्रजदृशां

यशोदाया प्राचीदिशि सकलतारापतिरिव ॥ तदेवासामासीत्सहजरतिरस्मिन्मधुरिपौ परं राधायाः सख्यतिसुहितरागः समजनि ॥ ३ ॥ कदाचित्कालिंदीपुलिननलिनामोदधनिना प्रमोदप्राचुर्यप्रशिथिलसमीरेण ललिते ॥ मुदा वृंदारण्ये निजसहचरीवृंदसहिता गता राधा गोपीशतवृतमपश्यद्व्रजपतिम् ॥ ४ ॥ चिरं चेतस्तस्या हरिवदनलावण्यजलधावगाधेऽभूद्राधासहचरि निमग्नं सह दृशा ॥ तदा सारंगाक्ष्या वदनवरचंद्रे मधुरिपोश्चिराद्दृष्टे दृष्टिर्न्यपतदनिमेषातिरुचिरा ॥ ५ ॥ यदैवास्या गोपीपरिवृढदृशा दृष्टिरमिलत्तदैवाभूद्भावः प्रणयिनि स कोऽपि प्रियगतः ॥ यतस्तंभस्वेदोत्पुलकविकसत्वादय इमे स्फुटा भावास्तस्यां प्रियसखि बभूवुर्नचिरतः ॥ ६ ॥ नवप्रेम्णा पूर्णे हृदि निरवकाशेऽपि सुदृशः प्रियापांगानंगप्रहितशरसंदोहविततिः ॥ गतांतः साजात्यात्सुमुखि यदसौ तेन कठिनः कृशांग्याः संतापः समभवदहो वागविषयः ॥ ७ ॥ चिरादासक्ता सा कृशतनुरशक्ता धृतिकृतौ तदा राधा बाधाशतवलितभावा प्रियसखी ॥ क्वचित्कुंजे गुंजन्मधुपमुखरे धीरपवना-

श्रिते लीना दीना निजसहचरीमाह ललिताम् ॥८॥

मल्हाररागे अष्टपदी ।

सह विहरति युवतिभिरिह सहचरिहरिरतिकोमला-निले ॥ सेवति किमु कथयामि वागविषयो मम मनसि परं खेलति ॥ १ ॥ ध्रु० ॥ वदनकमल एव रुचिरहसिते दृष्टिरपतदिमं पतिधृतिगतिरेव ॥ अंग-मपरमनंगकोटिरुचिरतरं न दृष्टमेव ॥ २ ॥ मदन एवा-याति ह प्रकट इति ज्ञानेनायं कुसुमशरैर्यदति दुनोति इत्थमधीरराधिकाकथितं शुभं वितनोति ॥ ३ ॥ सकृद्दृष्टं दूराद्वदनकमलं गोकुलपतेः कथंचिन्मे मुग्ध-स्मितमनुपमं दर्शय पुनः ॥ तदा किं ते देयं वद सखि वरीवर्ति भुवने परं प्राणाः स्युर्मे मधुरिपुदृशा ते बत हताः ॥ ४ ॥ इत्थमसकलाक्षरं तन्निगदितं सहचरी साकर्ण्य चतुरा ॥ राधां प्रोवाच दारान्मा-धवमुपदर्शयंत्यालिः ॥ ५ ॥

वसंतरागेण गीयते ॥ हरिरिह व्रजयुवतीशत-संगे ॥ विलसति करिणीगणावृतवारणावर इव रति-पतिमानभंगे ॥ १ ॥ ध्रु० ॥ विभ्रमसंभ्रमलोलवि-लोचनसूचित संचितभावम् ॥ कापि दृगंचलकुवल-

यनिकरैरंचति तं कलरावम् ॥ २ ॥ स्मितरुचिरुचिरतराननकमलमुदीक्ष्य हरे रतिकंदम् ॥ चुंबति कापि नितंबवती करतलधृतचिबुकममंदम् ॥ ३ ॥ उद्भटभावविभावितचापलमोहननिधुवनशाली ॥ रमयति कामपि पीनघनस्तनविलुलितनववनमाली ॥ ४ ॥ निजपरिरंभकृतेऽनुद्रुतमभिवीक्ष्य हरिं सविलासम् ॥ कामपि कापि बलादकरोदग्रे कुतुकेन सहासम् ॥५॥ कामपि नीवीबंधविमोकससंभ्रमलज्जितनयनाम् ॥ रमते संप्रति सुमुखि बलादपि करतलधृतनिजवसनाम् प्रियपरिरंभविपुलपुलकावलिद्विगुणितसुभगशरीरा ॥ उद्गायति सखि कापि समं हरिणा रसरतिरणधीरा॥७॥ विभ्रमसंभ्रमगलदंचलमलयांचितमंगमुदारम् ॥ पश्यति स स्मितमपि विस्मितमनसां सुदृशां सविकारम् ॥ ८ ॥ चलति कयापि समं सकरग्रहमलसतरं सविलासम्॥ राधे तव पूरयतु मनोरथमुदितमिदं हरिरासम् ॥ ९ ॥ कुवलयदलकोमलांगसंगमकटमनोभवभावसुंदरीभिः ॥ विलसति सरसे कलिंदकन्योपवनभवत्पवने वहत्युदारः ॥ १० ॥ कलिंदतनयातटोन्मदमधुव्रतास्वादितप्रसूननवपल्लवांचितमनोहराक-

रूपकः ॥ स्फुरन्मुरलिकाकलस्वनविमुग्धगोपीजनो मनोरथशतं हरिः सखि तनोतु पूर्णं तव ॥ ११ ॥

इति श्रीमद्विठ्ठलेश्वरविरचितः शृंगाररसः समाप्तः ।

## अथ स्वप्नदर्शनम् ।

श्रीकृष्णाय नमः ॥

कुसुमशरशरश्रांताहितदुःखमिवाधुनाच्छस्वरकरकमलनखरं बिभ्रतम् ॥ मकरकुण्डलमंडितगंडमंडलप्रभोद्योतितभुवनत्रयम् ॥ १ ॥ अतिसुभगकिंचिदुच्चचिबुकम् अधरबिंबविजितबिंबम् ॥ २ ॥ निजवाक्पीयूषसरित्सरस्वतीभिरिवानेकरेखाभी रंजिताधरम् ॥ कनकसूत्रसूत्रितबृहदतिसुभगामलमुक्ताफलसंशोभिश्वासदरोन्नतिनतिमन्नासापुटम् ॥ ३ ॥ कुपितकुसुमशरशरयुगेनेव श्रोत्रकृताग्रिमगतिप्रतिबंधजनितरोपेणेवपक्ष्मलोहितेन त्रिभुवनविजयव्यग्रेणेवातिचपलेन रससरसिजभ्रमोद्भ्रांतभ्रमरेणेवातिश्याममध्येन नयनयुगेन दृश्यं रतिपतिशरासनकुटिलभ्रुवम् ॥४॥ प्रथमं मलयजतिलकं मृगनाभिजं तदंतराले च ॥ तन्मध्येऽपि च मुक्ताफलरचितं बिंदुमादधतम् ॥५॥ अतिवक्ररुचिरचिकुरावृतवदनांबुजं सख्यः ॥ दर-

हासविगलितामलपरिमललुब्धैरिव भ्रमरैः ॥ ६ ॥ अलकोद्ग्रथितकुसुमैरावृतवदनांबुजं रात्रौ ॥ राकाधीशमिवाखिलनक्षत्रैरावृतं गगने ॥ ७ ॥ पद्मरागप्रतिभटवत्कर्णिकारशोभिकर्णोपरिभागं गुंजापुंजसंवलितबर्हिबर्होद्ग्रथितविविधमणिजालमुक्ताफलप्रकरसंकीर्णकुसुमाकलशिखराहितनीलमण्युपरिस्थितस्थूलमुक्ताफलसंशोभिमुकुटविराजमानोत्तमांगम् ॥८॥ विविधकुसुमोद्ग्रथितसुभगमेचककेशपाशं पवनानीतनिजविविधप्रसूनप्रकरप्रसारिपरिमललुब्धमधुकरनिकराकुलवनमालाधरम् ॥ त्रिभंगसंदर्शितदक्षिणचरणतलं करकमलकलितललितवंशीकलरवेण विद्रावितमुनिगणसमाधि निखिलवृंदाविपिनं, समाधिस्थमानसीकृताशेषपक्षिगणं चित्रन्यासीकृतत्रिभुवनं निजमुखामोदप्रमदभ्रमरझांकृत्युपश्रुतिगानं रतिपतिजयपताकामिव मनोभवसिद्धिमूलमिव तार्तीयपुमर्थसिद्धांतरहस्यमिव निखिलनितंबिनीमनःसमाकर्षणमंत्रविन्महीभूषणमणिमिव व्रजसौभाग्यमिव मूर्तिमत्त्रिभुवनसुषमामिव त्रिलोकीनयनजनुःसाफल्यमिव प्रतिबिंबितविविधनिकुंजकुसुमैरखिलसुरपूजितः

मिव अखिलपुण्यपुंजमिवापश्यम् ॥ ततः प्रेमातिभ-
रमनसा सहेंद्रियरूपामृताब्धिप्रत्यंगतरङ्गेषु चिरंनिम-
ग्ननयनमीनयुगलाऽहमासम् ततस्तत्प्राप्तिमाशंस-
मानाया निद्रा विद्राविता बभूव ॥ ततः प्रतिक्षणप्रवृ-
द्धमचरप्रेमप्रोद्यत्पुलकसीत्काराहमित्थं व्यलपम्—
हा हा नाथ शरण्य हा हा गोपीजनाधार—हा हा
वृंदावनभूषण हा हा सानंदानंदसर्वस्व ॥ ९ ॥ वंच-
नमरचयदियता कालेन विधिस्तदास्येंदोः ॥ अव-
लोकेऽखिललोकीसुषमास्पदपादपद्मेश ॥१०॥ अहह
प्रियसंगेन विना कथमहं क्षणं जीविष्ये, बल्लवीवृंद-
वल्लभस्य वियोगतः ॥ प्रथमं भवतोऽदर्शनोद्वेगेनापि
दुःखसंतानम् ॥ अधुना भवतो दर्शने दुःखं प्राप्तं
त्वदप्राप्त्या ॥ १२ ॥ भवतीति किमित्ययं प्रसंगोभ-
वदित्थं प्रिय मे मनोरथेऽपि ॥ न हि संभवति भ्रमा-
दपीश व्रजगोपीजनजीवनांघ्रिपद्म ॥ १३ ॥ सर्व
मधुरिमासीम तावकं गोकुलेश्वर ॥ यदि त्वद्विरहो
न स्यादक्षमः स्वाश्रयेक्षणे ॥ १४ ॥ एवमुरुधाश्रुतं
विलपंतीमूर्च्छिताऽहमासम् ॥ ततश्चिरेण श्रुतिपथ-
गतप्रियवंशीनिनादैर्मंत्रैरिव विगतमूर्च्छाहमभवम् ॥

ततो मामियं दुःखितां सखी तत्रापश्यत् ॥ ततो मद्दुःखदुःखिता तामहं प्रोवाच स कोऽपि सखि सानंदनंदाद्युरसंगलालितः ॥ करोति सुषमासीमां मन्मथोन्मथितो हि सः ॥ १५ ॥ तं न पश्यामि कः श्यामसुंदरं दर्शयेत्सखि ॥ मुरलीकलनादेन मोहयंतमदो जगत् ॥ १६ ॥ कापि सखी मम संप्रति वरिवर्ति किमु व्रजाधिपप्राणा ॥ या नंदसूनुमुरलीतरलं चेतः समादध्यात् ॥ १७ ॥ गताऽऽसमद्याहमये कलिंदकन्यातटं तत्र तमालनीलम् ॥ त्रिभंगमस्मत्कुलधर्मधैर्यभंगं चतुष्पादघनं त्वपश्यम् ॥ १८ ॥ किं कुर्मः क नु यामः क्व नु तिष्ठामः किमेतदासीन्नः ॥ इतिचिंतासंताना बुद्धेः पारंगता गोप्यः ॥ १९ ॥

इति श्रीविठ्ठलेश्वरविरचितं स्वप्नदर्शनं समाप्तम् ।

## अथ प्रबोधः ।

श्रीकृष्णाय नमः ।

जयजय तुहिनकरकरनिकरकुड्मलितकमलावलीनिलीनतया निवृत्तमधुकरनिकरमधुरतरोद्घोषोद्धतिविहतनिद्र भद्र सुभद्राग्रज ॥ १ ॥ जयजय निजमुखकमलामलपरिमलाघ्राणजनितसुखातिशयेनेव

संजातसुखनिद्राविद्रावणभियेव नयनयुगलखंजरीटो-न्मीलनभियेव झंकाररहितैरलिभिरिवालकशतैः परिवृतवदनारविंद गोविंद ॥ २ ॥ जयजय निशाकरकरविकचकुवलयकोशनिर्यातदिवाकरकरनिकरकुंचितकमलावलिकोशस्थितिजनितमधुरमधुपानोन्मोदमुदितभृंगांगनारवमधुरतरोद्घोषविद्रावितनिद्र निखिलगोपीजनजनितनिजाधारहिंदोलांदोलनचलदमलवलयझणत्कारेण मधुरतरनिनदवीणागीतादिभिरुन्निद्रनयनखंजरीटयुगल ॥ ३ ॥ जयजय ततः किंचिदुन्मीलनोन्नतभ्रूलतासमशरासनच्युतकुसुमविशिखद्वयेनेव गोपीजनवदनशरदिंदुविभ्रमसंचरखंजनयुगलेनेव हिंदोलांदोलनचलदमलसुभगवछवीगंडमण्डलस्फुरत्ताटंकमार्तण्डभ्रमविकसितकमलद्वयेनेवारुणतरामलाधाधरदीधितिकिर्मीरितदरहसनप्रकटरदनावलीतुहिनकरप्रतिभटप्रभाजनितशारदशर्वरीपत्युदयभ्रमविकसितकुमुदद्वयेन प्रकटितनयनयुगेनेक्षितनिखिलनितंबिनीवृंद ॥ ४ ॥ जयजय निजदृगंतपातसोपानसमारूढमकरकेतुभिर्निजवदनशरदिंदुसंफुल्लातिलोललोचनकुवलयाभिरनल्पाक-

त्पभूपिताभिर्निजनितंबबिंबालंकृतसुधाकरकरधवल विशदसुभगतल्पाभिर्हरिकिरकमलनखशरसंपात- पराजितानंगपृतनाभिरिव विगलितकंचुकांचलनि- तंबांबरभूषाभिरतिसुभगविशदजघनकनकासनोपवे- शितप्रियाभिर्निजनखदृगंतविविधप्रसूनार्चितवल्ल- भाभिः सुरतविद्याविनोदचतुराभिर्भावाधिगमसमये प्रियवियोगशंकयांतर्नयनद्वारं प्रवेश्य पिहितकपाटा- भिरिव निमीलितनयनाभिः क्रीडित ॥ ५ ॥ जय- जय पुनरतिनिर्वृतिविहितनिद्र जागृहि जागृहि ॥६॥ नयावदेष कुंकुमारुणांशुरिंदिरापते पुरंदरीयदिङ्मुखं समेति तावदुत्थितः ॥ प्रमार्जयाननांबुजं निजाधरं च सुंदरं कदंबशोभितांतरस्त्वतल्पमन्मथोदयम् ॥७॥ न चेदमी शमीतरुप्रसूनतल्पकंचुकं नखक्षतं च मेख- काधरं सकुंकुमं मुखम् ॥ विलोक्य नागरा जनास्त- ईदृशीं तव स्थितिं प्रभो सभासु भाषितुं समुज्झि- तोक्तयो न हि ॥ ८ ॥ स्फुरत्त्वन्मुखांभोजशोभानि- वृत्तस्वसौंदर्यगर्वाचलः शर्वरीशः॥ ह्रिया मज्जति क्षीर- वारांनिधौ तन्नखालिच्छटाभिश्च तुच्छीकृतोऽयम् ॥९॥ दिवाकरोऽप्युत्कटस्त्वदंघ्रिपंकजार्हणं विधातुमाग-

तोंबुजैस्तदर्हणं सभाजय ॥ कलिंदजा त्वदाननाव-
लोकनाय दृक्सरोजनूंपि संप्रसारयत्यनंगकोटिसुंदर
॥ १० ॥ स्फुरत्सरोजनिर्गतद्विरेफयूथगायका यशो
वितन्वते दिशां शुभाय दर्शनार्थिनः ॥ जगद्विलो-
चने हरे कुरुष्व सार्थजन्मके कृपां कुरुष्व विठ्ठले
स्वपादपद्मसेवके ॥ ११ ॥

इति श्रीविठ्ठलेश्वरविरचितः प्रबोधः समाप्तः ।

## अथ गुप्तरसः ।

श्रीकृष्णाय नमः ।

पयोदध्यामिक्षाभिनवघृतगोधूमचणकेक्षवैरत्युत्कृष्टैर्वि-
विधरसभोज्यं त्वतिमुदा ॥ विधायाधायार्थाचितरुचि-
रपात्रेषु रहसि प्रियं प्राप्यांकस्थं किमपि समवोचत्प्रिय-
तमा ॥१॥ अस्मदीयपदार्थानां भोगः कार्यस्त्वयैव
हि॥अन्यथा मार्गमर्यादा नङ्क्षत्यंभोजलोचन ॥२॥
इतरोपयोगशंकादवदहनप्लुतप्रमंतरस्माकम् ॥
स्वांगीकृतिनवजलदैः शिशिरय गोपीजनप्राण ॥३॥
लोकविगीतं नाथ स्फुटमस्माभिस्तथाकृतं तस्मात् ॥
बालकलीलाप्रौढ्या त्वयैव संपादनीयः सः ॥ ४ ॥
कार्या व्यावृतिरन्येषां यदास्माभिस्तदा तथा ॥

यतनीयं समुद्देलबाललीलामिवाचर ॥ ५ ॥
रजतमयेऽप्यतिसूक्ष्मे पात्रे नवनीतमतिनवं निहितम्॥
शाणे शिक्ये मुक्तागुच्छवति त्वं गृहाणेदम् ॥ ६ ॥
तन्निकटे त्वस्ति सिता हैमे पात्रे तदग्रिमे शिक्ये ॥
सुशृतं पयः सितैलाकर्पूरयुतं च पेयं तत् ॥ ७ ॥
दुग्धमध्ये हैमपात्रं सूक्ष्मं निहितमस्ति मे ॥
सुखेन तेन तत्पानं कुरु मत्प्राणवल्लभ ॥ ८ ॥
भृतदुग्धमोदकानि प्रियैतदुपरिस्थकनकमयपात्रे ॥
निहितानि संति सुहितान्यस्माकं त्वत्करस्पर्शात्॥९॥
सुभृतमाहिषदुग्धघटोऽपि तन्निकटमेव च शिक्यगतः
प्रिय ॥ रुचिरमृन्मयपात्रपिधानयुक्तव मुखांबुजसंग-
ममिच्छति ॥ १० ॥ एकैकं त्वन्मुखांभोजे यथा
माति तथा कृतम् ॥ तदग्रेऽस्ति नवे शिक्ये कर्कटी-
बीजमोदकम् ॥ ११ ॥ सितालवंगकर्पूरादिभिराति-
रसुत्तमम् ॥ नवमृन्मयपात्रेऽस्ति दधिशिक्येऽति-
चित्रिते ॥ १२ ॥ केवलेनैव दध्ना यदासिक्तं सुशृतं
पयः ॥ तद्ध्यतिघनं स्वादु शिक्येऽस्ति नवकां-
चने ॥ १३ ॥ गोधूमचणकपिष्टामिक्षा मिष्टा विनि-
र्मिता रम्याः ॥ ते संत्यर्थाः पीतश्वेतश्यामेषु शिक्ये

षु ॥ १४ ॥ निगदितशिक्यसमूहांतरतुर्ये पद्मरागमयशिक्ये तत्र स्तः शिखरिण्यौ नवमृन्मयपात्रयोर्नाथ ॥ १५ ॥ संधितचूतार्द्रकजंबीरफलःसत्करीरादिः ॥ अतिरोचकस्तदग्रिमशिक्येऽस्ति नवांबुदश्याम ॥ १६ ॥ उच्चैःस्थितशिक्यानामर्थमनेकत्रसाधनानि परम् ॥ पीठोलूखलभांडान्यस्माभिः संति निहितानि ॥ १७ ॥ षड्रसमयाः पदार्थाः संयावाद्यातिचित्ररूपांताः ॥ योग्यस्थाने निहिता महानसे संति भूयिष्ठाः ॥१८॥ कियदवधि ते पदार्थास्त्वदेकभोग्याः सुवर्णनीया मे ॥ त्वं भुंक्ष्वाशु सरामोवयस्यवृंदैः सहागत्य ॥१९॥ एवमेवाखिला नोंतःसदनेषु त्वदाशया ॥ संपाद्य निहिताः संति पदार्था भावसुंदर २० वत्सविमोकं तोकप्रपीडनाद्यनयवृत्तमिव चात्र ॥ संकेतमस्मदीयं संगोपयितुं त्वया कार्यम् ॥ २१ ॥
अस्माभिरप्युपालंभ इवादेयस्तदर्थकः ॥
मातृपादाब्जनिकटे भक्ष्यामस्त्वां तदापि च ॥ २२ ॥
अधिकं किं तु वक्तव्यं यथैवास्मन्मनोरथः ॥
पूर्णो भवत्ययं नाथ तथा पश्य त्वमातुराः ॥ २३ ॥
यद्यपि लोकविगीतं व्रजेशसूनोस्तवेदृशं करणम् ॥

निजजनहृदयानंदप्रदायकत्वादतिश्लाघ्यम् ॥ २४ ॥
इत्थं स्वीयगृहेऽपि च क्व च तत्करणेन बाल्यमौग्ध्यं ते॥
ज्ञात्वा स्नेहातिशयात्सर्वे त्वां लालयिष्यंति ॥ २५ ॥
अस्मदीयमखिलं भवदीयं तेन तत्र ग्रहतो न परस्य॥
कस्य चिन्नु भविष्यति बुद्धिर्दोष इत्यमलवस्तुनिसर्गात् ॥२६॥ न ज्ञास्यत्यन्योऽपि प्रियावयोश्चरणरेणुरेप परम् ॥ श्रीविठ्ठलोऽतिगोप्यं सर्वमिदं वेत्ति वृत्तांतम्२७
इति प्रियतमावृंदसुखपद्मवचो मधु ॥
रसायनमिवापीय तथैव प्रभुराचरत् ॥ २८ ॥
यदोपालंभमिव ताः कर्तुं मातृपदांतिके ॥
गतास्तदा प्रियतमप्रेक्षणेन विलक्षणाः ॥ २९ ॥
तरंगा इव रागाब्धेरुदिताः प्रिययोर्मिथः ॥
भावा वक्तुमशक्यास्ते विज्ञेयास्त्वत्कृपाबलात् ॥ ३० ॥
अयं मनोरथोऽन्यत्र भविता नैव पूरकः ॥
नान्यात्श्रीगोकुलाधीशाज्ज्ञात्वाप्यन्यो न भावितः ३१

इति श्रीविठ्ठलेश्वरविरचितो गुप्तरसः समाप्तः ।

## अथ रक्षास्मरणम् ।

श्रीकृष्णाय नमः ।

सदा सर्वात्मभावेन स्मर्तव्यः स्वप्रभुस्त्वया ॥
यादृशास्तादृशा एव महांतस्ते पुनंति नः ॥ १ ॥

पितृपादवचो जातु न विस्मर्तव्यमुत्तमैः ॥
दोषा हरौ न संत्येव तथा भक्ताहिता क्रिया ॥२॥
स्फुरंति चित्तदोषेण मूलं तस्य बहिर्दृशिः ॥
भवत्संगाय भवता वृत्तं गोवर्धनोद्धृतम् ॥ ३ ॥
सर्वं श्रुतं तेन चित्तमुपेक्षायां प्रवर्तते ॥
वयं सर्वात्मना सर्वे कृष्णेनैवात्मसात्कृताः ॥ ४ ॥
अतश्चिंता नैव कुर्मः स एवाखिलकृद्यतः ॥
सततं गोपिकाधीशपदांभोजप्रभावतः ॥ ५ ॥
हृदि कार्यं चिंतितं यत्तत एव फलिष्यति ॥
निवेदितात्मभिन्नेषु सदौदासीन्यमाचरेत् ॥ ६ ॥
प्रावाहिकास्तेऽपि चेत्स्युरुपेक्षैवोचिता तदा ॥
सिंचत्यभिनवजलदे गिरिशिखरं संतताम्रतधाराभिः७
दवदहनादतिभीता चातक्याशावलंबाऽऽस्ते ॥
सरसि कुशेशयमास्वादितुमागच्छंस्ततो मार्गे ॥८॥
यदि कनककमलपाने नासीत्तोपः किमन्येन ॥
नात्र कुशेशयमानस प्रेयानन्यो यतः प्रियो मधुप९
तस्मिंस्तुष्टे तोषस्ते दौःस्थ्यं निरुपधि स्नेहात् ॥
यद्यलिरपि निरुपाधित्वेन स्वामन्यतः समागच्छेत्१०
निरवधि तपोऽस्य परमं प्रभवेदेवेति किं वाच्यम् ॥

अंगीकृतजनजनितापराधकूटक्षमाविनोदस्य ॥
अंगीकृतश्च नित्यं वदंतु कोऽन्योऽस्य साम्यमियात्११
इति श्रीविट्ठलेश्वरविरचितं रसास्मरणं समाप्तम् ।

## अथाद्या ( वृत्त ) चतुःश्लोकी ।

श्रीकृष्णाय नमः ।

प्रसीदतु सदा रासलीलारसपयोधिषु ॥
निष्कलंककलानाथो भवद्वाचो मदीश्वर ॥ १ ॥
पूर्वमिदं प्रति प्राह ततो भक्त्याग्रतो हरिम् ॥
दृष्ट्वा तत्प्रार्थयामास पुष्टिर्दिष्टफला यतः ॥ २ ॥
आद्ये तु पुष्टिमार्गीयो धर्मः स्मरणकीर्तने ॥
सेवा चेति त्रयं तेन प्रार्थितः स निरूप्यते ॥ ३ ॥
आत्मनश्चाधिकारित्वमुत्तमं दीनभावतः ॥
प्रार्थनीयं तया तस्य साधनं च तयोच्यते ॥ ४ ॥
इति श्रीविट्ठलेश्वरविरचिता (वृत्त)चतुःश्लोकी समाप्ता ।

## अथ द्वितीया चतुःश्लोकी ।

श्रीकृष्णाय नमः ।

सदा सर्वात्मभावेन भजनीयो व्रजेश्वरः ॥
करिष्यति स एवास्मदैहिकं पारलौकिकम् ॥ १ ॥
अन्याश्रयो न कर्तव्यः सर्वथा बाधकस्तु सः ॥

स्वकीयेष्वात्मभावश्च कर्तव्यः सर्वथा सदा ॥ २ ॥
सदा सर्वात्मना कृष्णः सेव्यः कालादिदोषनुत् ॥
तद्भक्तेषु च निर्दोषभावेन स्थेयमादरात् ॥ ३ ॥
भगवत्येव सततं स्थापनीयं मनः स्वयम् ॥
कालोऽयं कठिनोऽपि श्रीकृष्णभक्तान्न बाधते ॥४॥

इति श्रीविठ्ठलेश्वरोक्ता द्वितीया चतुःश्लोकी समाप्ता ।

## अथ विज्ञप्तयः ।

## तत्र प्रथमा विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

कियान्पूर्वं जीवस्तदचितकृतिश्चापि कियती भवान्
यत्सापेक्षो निजचरणदाने बत भवेत् ॥ अतः
स्वात्मानं स्वं निरुपममहत्त्वं व्रजपते समीक्ष्यास्म-
न्नेत्रे शिशिरय निजास्यांबुजरसैः ॥ १ ॥ स्वदोषा-
ञ्जानामि स्वकृतिविहितैः साधनशतैरभेद्यांस्त्यक्तुं
चापद्धतरमना यद्यपि विभो ॥ तथापि श्रीगोपीज-
नपदपरागांचितशिरास्त्वदीयोऽस्मीति श्रीव्रजनृप न
शोचामि मुदितः ॥ २ ॥ धृतं यदर्थं वपुरेतदासी-
त्तदिच्छया यद्भविता तदस्तु ॥ प्रभो कृपालो यदि

रोचते ते विज्ञापनीयं न कदापि किंचित् ॥ ३ ॥
यमंतरेण क्षणमप्यशक्यं यो मन्यमानः स दिनान्यमूनि ॥ नयामि तेनापि विना यदित्थं किमस्ति कापट्यमितोऽधिकं मे ॥ ४ ॥ आसारैः पीडितं स्वं व्रजमवितुमधादाशु गोवर्धनाद्रिं दावाग्निं दह्यमानं तमपिबदमिताऽसह्यभक्तार्तिभीतिः ॥ गोपस्त्रीविप्रयोगानलमुपशमयन्नेति गोष्ठं दिनांते सोऽपि श्रीगोकुलेशः किमिति करुणया मामिहोपेक्षते स्वम् ॥ ५ ॥
जानामि मंदभाग्योऽहं यदर्थं गोकुलेश्वरः ॥ भक्तक्लेशासहिष्णुत्वस्वभावं कुरुतेऽन्यथा ॥ ६ ॥ आशातृणावलंबेन त्वद्वियोगाधिवारिधिम् ॥ अनुग्रहगरिष्ठोऽतितरामिह तराम्यहम् ॥ ७ ॥ अंबुदस्य स्वभावोऽयं समये वारि मुंचति ॥ तथापि चातकः खिन्नो रटत्येव न संशयः ॥ ८ ॥ यद्यप्यहमपराधी तथापि तव चरणसेवकोऽस्म्येव ॥ एवं सत्येवं मयि करणं नैवोचितं नाथ ॥ ९ ॥ कालकर्माधीनतां यत्करोषि मयि सुंदर ॥ तदप्यनुचितं यस्मात्त्वदीयोऽस्म्युररीकृतः ॥ १० ॥ स्वतंत्रत्वेन मर्यादां मनुषे नैव चेत्प्रभो॥ श्रीगोकुलप्रभुरसि तेनैवं दीनतां ब्रुवे ॥ ११ ॥ सर्व-

साधनशून्योऽहं सर्वसामर्थ्यवान् भवान् ॥ श्रीगोकुल-प्राणनाथ न त्याज्योऽहं कदापि वै ॥ १२ ॥ यत्करिष्यसि तन्नाथ स्वत एव करिष्यसि ॥ अतो मुहुः किं वदामि श्रीगोपीजनवल्लभ ॥ १३ ॥ एकोऽपि रेणुर्व्रजभूषणाढ्याः पातुं क्षमः सर्वत एव सर्वम् ॥ अशेषतत्पादसरोजरेणुसनाथसर्वस्य कुतोऽस्ति मे भीः॥ १४ ॥ घुणकीटवदेव यांतरंतश्चरति प्राणभृतामशेषसारम् ॥अपगच्छति नाप्युपायलक्षैर्व्रजनाथ प्रणयः स किं सुखाय१५
त्वन्नामोच्चारणेऽप्यस्ति न जीवेष्वधिकारिता ॥
अलौकिकत्वात्त्वन्नाम्नस्त्वद्वाचोऽलौकिकत्वतः ॥१६॥
एवं सत्यपि जानामि त्वन्नामादिप्रभाववित् ॥
उद्यदेव स्वयोग्यां तां कुर्वदेव हि राजते ॥ १७ ॥
त्वदंगीकृतयो जीवेष्वधिकारा यतः प्रभो ॥
अतस्ते न विचारार्हाः कृपां कुरु कृपानिधे ॥ १८ ॥
साधिता भवतु साधितार्थता बाधिताथ विहिताधिकारिता ॥ कापिकापि गतिरुत्सुकास्म्यहं राधिकाचरणदासिका परम् ॥ १९ ॥ मदीयोऽयमिति ज्ञात्वा न कस्मै त्वं प्रसीदसि ॥ यादृशस्तादृशो वाहं तव चेत्किं विलंबसे ॥ २० ॥ आचार्यचरणैरुक्तं दैन्यं

त्वत्तोपसाधनम् ॥ स्वल्पं बहुतरं वापि तदस्तीति प्रसीद मे ॥ २१ ॥ प्रभुस्त्वमेव मे नाथ यत्करोषि वरं हि तत् ॥ तथाप्यधीरतामेव मानसं मेऽवलंबते ॥२२॥ यदि प्रसन्न एवासि त्वदीयोऽहं न चान्यथा ॥ न चेदहं तथैवास्मि स्मर स्वानुग्रहं मयि ॥ २३ ॥ यादृशी मे कृतिर्नाथ तस्याः फलमिदं कियत् ॥ यादृशस्त्वं प्रभुः किं तु तादृगेव विधीयताम् ॥२४॥ अपि मे सापराधस्य शिक्षितस्याप्यजानतः ॥ हानाथ पालनीयस्य किमुपेक्षोचिता तव ॥ २५ ॥

इति श्रीविठ्ठलेश्वरकृता प्रथमा विज्ञप्तिः समाप्ता ॥ १ ॥

## अथ द्वितीया विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

यदि तुष्टोऽसि रुष्टो वा त्वमेव शरणं मम ॥ मारणे वारणे वापि दासीनां नः प्रभुर्गतिः ॥ १ ॥ त्वद्वियोगे य आद्यो मच्छ्वासो निरगमद्बहिः ॥ तेनैव सह चेत्प्राणा न ययुस्तर्हि किं ब्रुवे ॥ २ ॥ निरपत्रपतां चान्यां किं ब्रुवे योऽहमीदृशः ॥ संगमाशां करोम्येवं विचाराद्यनपायिनीम् ॥ ३ ॥ एवं सति त्वदीयस्य त्वमेव शरणं मम ॥

गोकुलेश किमप्यस्तु त्वं मा मा त्यज किं परैः ॥४॥
त्वद्वियुक्तस्य जीवस्य नित्यता मास्तु कस्यचित् ॥
किं तु तत्क्षण एवास्य नाश एव व्रजेश्वर ॥ ५ ॥
तोषसाधनराहित्यं यद्यप्यस्ति मयि प्रभो ॥
तथापि सहजैश्वर्यं त्वय्यस्तीत्यहमक्रमः ॥ ६ ॥
यद्यपि त्वत्कृपायोग्यं पात्रं नास्ति तथापि तु ॥
त्वमर्हसि कृपां कर्तुं पितरं वीक्ष्य मे प्रभो ॥ ७ ॥
महत्यल्पेऽथवार्थे या पराश्रयकृतिर्मम ॥
निसर्गदोषात्तन्नाशोऽपीह कार्यस्त्वयैव हि ॥ ८ ॥
सर्वज्ञे त्वय्यज्ञतरः किं वच्मि व्रजपालक ॥
सर्वथाहं त्वदीयोऽस्मि सान्वयः सपरिग्रहः ॥ ९ ॥
सर्वथा स्वीयतां राधाप्रिय ज्ञात्वा सदा मयि ॥
यत्करिष्यसि तत्सर्वं साध्वेवेति मतिर्मम ॥ १० ॥
कस्याग्रे कथयाम्यालि मनोदुःखस्य संततिम् ॥
व्रजाधीशवियोगाब्धिमग्नः कोऽपि न दृश्यते ॥११॥
यद्दैन्यं तोषहेतुस्ते आचार्यैः प्रकटीकृतम् ॥
विना साधनसंपत्तिं तेन मेऽस्ति स्थिरं मनः ॥१२॥
त्वद्दर्शनादृते नूनं दिनानीमानि हृत्पते ॥
वृथा यांति त्वदीयस्य नाथ त्वं दर्शयांतिकम्॥१३॥

मयि यद्यपि नैवास्ति त्वत्प्रसादनकारणम् ॥
तथापि स्वीकृतं दैन्यं मत्वा कार्या कृपानिशम्॥१४॥
त्वद्विप्रयोगदहनज्वरितासवो मे यत्संस्थिताः कथमपीदमतीव चित्रम् ॥ भो जीवितेश मम यांति कथं दिनानि शून्यानि ते स्मितमुखाब्जविलोकनेन॥१५॥
अपि जीवितनाथ मन्मनो छलितं त्वद्वदनं समीक्षितुम् ॥ व्यथते सततं समुत्सुकं नय मां त्वत्पदपंकजांतिकम् ॥ १६ ॥ ईदृशः कोऽपराधोऽस्ति हृदयेश न वेद्म्यहम् ॥ येनांतराय एतावाञ्छ्रीमुखालोकने मम ॥ १७ ॥ सर्वात्मना दुरापत्वं ज्ञात्वाप्याशां करोमि यत् ॥ भ्रांतोऽस्म्यहं न वेतीश न जाने करवाणि किम् ॥१८॥ श्रुतिर्यत्प्राह गोपीश साधनप्राप्यतां त्वयि ॥ तन्मे न खेदहेतुर्यत्साधनं नास्ति मेऽण्वपि ॥ १९ ॥ त्वदीयत्वं त्वदीयत्वं त्वदीयत्वं यदस्ति मे ॥ तदेव फलमित्यात्मशास्त्रतः प्रमिनोम्यहम् ॥ २० ॥ तथापि मन्नेत्रवपुःप्रभृतीनां व्रजाधिप॥साक्षात्त्वय्युपभोगं मे मनः कामयतेतराम्॥२१॥
त्वदंतरंगभक्तांघ्रिपद्मदास्यं व्रजेश्वर ॥
त्वदीयतायाः फलमित्यहं मन्ये न चेतरत् ॥ २२ ॥

यदुक्तं तातचरणैः श्रीकृष्णः शरणं मम ॥
तत एवास्ति नैश्चिन्त्यमैहिके पारलौकिके ॥ २३ ॥
इति वस्तुस्थितौ सत्यामपि त्वद्वदनांबुजम् ॥
द्रष्टुं कामयते चेतः सस्मितेक्षण मोहनम् ॥ २४ ॥
नान्यास्ति कामना देहस्थितिरेतादृशी मम ॥
नोचिता तावकीनस्य विज्ञप्तिरियमेव मे ॥ २५ ॥

इति श्रीविठ्ठलेश्वरकृता द्वितीया विज्ञप्तिः समाप्ता ॥ २ ॥

## अथ तृतीया विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

यद्दैन्यं त्वत्कृपाहेतुर्न तदस्ति ममाण्वपि ॥
तां कृपां कुरु राधेश यया ते दैन्यमाप्नुयाम् ॥ १ ॥
सर्वेषां जीवनं लोके दृष्टं सर्वार्थसाधकम् ॥
ग्लान्येकफलकं जातमधुना मम जीवितम् ॥ २ ॥
कर्तुं पुनर्यथाकर्तुमन्यथा कर्तुमीश्वरे ॥
सामर्थ्यं यन्मया दृष्टं त्वय्येवातो न संशयः ॥ ३ ॥
तं न पश्यामि यस्याग्रे वार्तां स्वस्य मनोगताम् ॥
उक्त्वा तदुत्तरं लब्ध्वा मनो विश्रामये क्षणम् ॥४॥
अतीव नीचा मत्प्राणा मूर्खा अपि गतत्रपाः ॥
स्वस्थित्ययोग्यकालेऽपि यतस्तिष्ठंति सांप्रतम् ॥५॥

शास्त्रं नियामकं तावद्यावत्पूर्णा कृपा नु ते ॥
कृपया ते न पूर्णस्य नैव कोऽपि नियामकः ॥ ६ ॥
सुभगा एव जानंति प्रियसौभाग्यजं सुखम् ॥
तद्धीनायास्तदीयेति प्रसिद्धिः शरणं सखि ॥ ७ ॥
प्रियसंगमराहित्याद्व्यर्थाः सर्वे मनोरथाः ॥
निरपत्रपतासिद्ध्यै जीवामि सखि सांप्रतम् ॥ ८ ॥
न लब्धस्तादृशः कोऽपि यस्याग्रे स्वमनोगताम् ॥
वार्तामुक्त्वा स्वमात्मानं क्षणं विश्रामयाम्यहम् ॥९॥
अद्य श्वो वा परश्वो वा कदाचित्कृपयिष्यति ॥
नाथ इत्याशया सर्वं गतं जन्म करोमि किम् ॥१०॥
तथापि त्वत्कृपाकांक्षां मनो मे निरपत्रपम् ॥
कं वा हेतुं सुनिश्चित्य करोतीति न वेद्म्यहम् ॥ ११ ॥
स्वभावतः सदा मेघः सर्वेषां जीवनप्रदः ॥
जाने तस्यैव दौर्भाग्यं सोऽपि यत्तमुपेक्षते ॥ १२ ॥
त्वदीयत्वमपि ज्ञात्वा मयि कालादयः प्रभो ॥
प्रभवंति ततो मन्ये त्वत्कृपाशून्यतामपि ॥ १३ ॥
विज्ञप्तौ वाऽपराधे वा पाखंडे वा मदुक्तयः ॥
पर्यवस्यंति कुत्रेति न जानेऽहं विमूढधीः ॥ १४ ॥
राज्यायोग्ये तदाकांक्षा दंडावाप्त्यै यथा भवेत् ॥

त्वत्सेवायामहं तादृक् तदवाप दशामिमाम् ॥१५॥
स्वीयं कृतागसं चेत्त्वं दूरस्थं कुरुषे यदि ॥
इतः परोऽधिको दंडस्त्वदीयस्य न विद्यते ॥ १६ ॥
वियोगो बाधते तावद्यावद्धृयेव ते स्थितिः ॥
यदा बहिस्तदा नेति विचित्रेयं स्थितिस्तव ॥१७॥
भूर्जत्वगिव मद्दोषा निस्सरंत्येव सर्वतः ॥
तथैवानन्यगतिके त्वत्क्षमेति न मे भयम् ॥ १८ ॥
बलिष्ठा अपि मद्दोषास्त्वत्क्षमाग्रेऽतिदुर्बलाः ॥
तस्या ईश्वरधर्मत्वाद्दोषाणां जीवधर्मतः ॥ १९ ॥
मत्प्राणानां स्वतो लज्जा नैवास्ति परतोऽपि च ॥
प्राप्याप्यवस्थां नो यांति इहामुत्र च गर्हिताम् ॥२०॥
त्वद्दर्शनविहीनस्य त्वदायत्तस्य तु जीवितम् ॥
व्यर्थमेव यथा नाथ दुर्भगाया नवं वयः ॥ २१ ॥
गतः स कालो यत्रासीत्सुदुर्लभकृपामयि ॥
इदानीमीदृशः कालो यत्त्वं दृग्गोचरोऽपि न ॥२२॥
त्वदीयानां सुखं दुःखं न लोकसदृशं भवेत् ॥
त्वत्सेवायां सुखं सर्वं नो चेत्तस्य विपर्ययः ॥ २३ ॥
मत्वा स्वकीयतां नाथ रोषेण कृपया तव ॥
ताडनं लालनं चैव परमानंददं मम ॥ २४ ॥

त्वद्वियुक्तस्य जीवस्य त्वदीयस्यापि नित्यता ॥
संगं विना न चैवास्तु विज्ञापनमिदं मम ॥ २५ ॥

इति श्रीविठ्ठलेश्वरकृता तृतीया विज्ञप्तिः समाप्ता ॥ ३ ॥

## अथ चतुर्थी विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

या दग्भाग्यं पुरा मेऽभूत्तन्महत्त्वं न वेद्म्यहम् ॥
येनासीत्त्वत्कृपा पूर्णा सुदुर्लभतरा मयि ॥ १ ॥
मा जीवतात्त्वदीयो यस्तव सेवाविवर्जितः ॥
सत्या विज्ञप्तिरेषा मे नाथ त्वं मनुपे यदि ॥ २ ॥
स्वस्थित्ययोगं मत्वापि मच्छरीरं ममासवः ॥
यन्न त्यजंति तेनाहं मन्ये तान्निरपत्रपान् ॥ ३ ॥
त्वत्कृपातः पुरा नाथ मया कालादयः प्रभो ॥
तुच्छीकृताः सांप्रतं मां बाधंते त्वत्कृपां विना ॥ ४ ॥
त्वत्सेवायामयोग्यस्य त्वदीयस्य मम प्रभो ॥
इत्येव हि परा काष्ठा अभाग्यस्येति मे मति ॥ ५ ॥
इत्थं जीवनमस्तु क्षणमपि भवदंघ्रिविप्रयोगे तु ॥
मरणं भवतादेवं भावे शरणं त्वमेवास्तु ॥ ६ ॥
गतान्यपि बहुन्यहान्यहह यांति यास्यंत्यपि त्रिभंग
ललिताकृतिप्रियतमांगसंगं विना ॥ न कोऽपि मम

स क्षणो भवति यत्र भाग्योदयः कदा नु निजजीवनं दृशि निवेशयिष्याम्यहम् ॥ ७ ॥ इयदवधि कदापि गोकुलेशः स्वजनकृते समकारि नो विलंबम् ॥ परमिह सुतरामुपेक्षितोऽहं कथमिति खिद्यति मानसं मुहुर्मे ॥ ८ ॥ बहुधैव ममापराधवृंदस्तदपि त्वं न विमुंचसि स्वकीयान् ॥ अत एव न कापि कापि चिंता भवति प्राणपते ममेदृशस्य ॥ ९ ॥ हृदयं विरहं तवेच्छतीदं न दृशौ मे व्रजनाथ किं करोमि ॥ न हि कोऽपि परस्परं विरोधे त्यजति स्वार्थमतिप्रबोधितोऽपि ॥ १० ॥ हा नाथ जीविताधीश राजीवदललोचन ॥ यथोचितं विधेहीति प्रार्थनं तावकस्य मे ॥ ११ ॥ अजनि रजनिःप्रादुर्भूतं तमो विजना दिशस्त्वमसि चतुरा चाहं संगामिलाषवती चिरात् ॥ तदपि तु यदप्राप्तिः प्रेष्ठस्य मे सुविचारितं प्रियसखि परीरंभारंभे विधेरविधेयता ॥ १२ ॥ त्वत्तो नान्यां प्रपश्यामि राधाबाधाविरोधिनी ॥ तत्त्वं यथैव मत्प्राणो मिलत्येव तथा कुरु ॥ १३ ॥ त्वदीयमधुसूक्तिभिर्व्रजजनेशसंगाशया मनोजशरपीडिताः कथमपि स्थिता मेऽसवः ॥ अतः

परमये यदि प्रियतमांगसंगो भवेत्तदैव मम जीवितं विरहितादशाहृत्करम् ॥१४॥ किं ब्रवाणि सखि प्रेष्ठ-विरहानलदाहिता ॥ यज्जीवामि तदेवात्र निरपत्रपता-स्पदम् ॥१५॥ सख्येतल्लिखनीयं त्वयातियत्नेन राधि-कानाथ ॥ कृपयिष्यत्यथवा मन्मनोरथेनैव जन्मनि-र्वाहः ॥ १६ ॥ व्रजेश त्वद्वियोगाग्निदाहो ह्यप्रिय एव मे ॥ त्वत्संगमवियोगे यद्बाधते नान्यथा क्वचित् ॥१७॥ बलीयसी जीवनाशा गोपीशविरहेऽस्ति हि॥ सांप्रतं मे त्वमस्येका यदार्तशरणा सखि ॥ १८ ॥

त्वद्भावो नाथ सर्वेषां मुक्त्यादिफलकः स्मृतः ॥
विरहाधिफलो जातः स एव व्रजनाथ मे ॥ १९ ॥
त्वत्प्रियापादरेणूनां संचयो हृदये न चेत् ॥
भवद्वियोगदावाग्निस्तदा किं ज्वालयेन्न माम् ॥२०॥
त्वद्वियोगेऽपि मे प्राणास्तिष्ठेयुरिति नोचितम् ॥
परं तत्संभवं दुःखं तैर्विना नैव संति ते ॥ २१ ॥
संतोषो जायते प्राणप्रिय त्वत्क्लेशदर्शनात् ॥
सर्वेषां मे तथा जाते हा कष्टमिति किं वद ॥ २२ ॥
मदीयहृद्गतं ज्ञानरत्नं चिंतांबुधौ सखे ॥
पातयित्वा स्वहस्तेन कगतः कंजलोचनः ॥ २३ ॥

त्वद्वियोगाग्निविज्वालाविदग्धा अपि मेऽसवः ॥
तिष्ठेयुरिति नो चित्रं यतोऽहं निरपत्रपः ॥ २४ ॥
प्राणेशविरहक्लिष्टाः प्राणास्तिष्ठंति मे कथम् ॥
वियोगाग्निविदग्धानामंतकोऽपि न संस्पृशेत् ॥२५॥
इति श्रीविठ्ठलेश्वरकृता चतुर्थी विज्ञप्तिः समाप्ता ॥ ४ ॥

## अथ पंचमी विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

असमशरज्वरजर्जरदेहा विरहाग्निजालसंतप्ता ॥ त्वत्प्रणयसर्पदष्टा कं वा शरणं व्रजामीश ॥ १ ॥ व्रजनाथ तवाधरामृतं मे सकृदास्वादितमिंदिराद्दुरापम् ॥ अभवन्मरणाय किं न कुर्यादसकृत्पीतमिदं व्रजांगनाभिः ॥ २ ॥ शुभाशय विनाशय त्वदधरामृतास्वादनोद्गतप्रचुरमन्मथप्रथितत्राणपूगव्यथाम् ॥ कदंबनवमंजरीकुसुममंजुकुंजोदरेनिजांगपरिरंभणामृतरसादिदानेन मे ॥ ३ ॥ कथमपि पुनरप्युदारलील प्रिय परिशीलय खेलनं पुरेव ॥ अमलकमलगर्भगंधवाहः प्रसरति मारुत एष मारबंधुः ॥ ४ ॥ परिरंभणचुंबनादिभावा भवता प्रेष्ठ कृता विमोहनं च ॥ स्मरसुंदर मोहनं परं मय्यवशिष्टं न च ते मनोज्ञ

भावाः ॥ ५ ॥ मदमंथरवारणेंद्रलीला यमुनाकूल-
निकुंजदेशगा ॥ व्रजजीव नया त्वया कृता सा मर-
णायैव किमीश मेऽधुना ॥ ६ ॥ किमर्थं पायिता
मह्यं निजाधरसुधासवः ॥ श्रावितः श्रवणानंदो
वेणोश्च कलनिःस्वनः ॥ ७ ॥ दूरीकृता रुचिर्मे निज-
वदनादन्यवस्तुतो भवता ॥ तदपि न ददासि गोपी-
परिवृढ ते मोहनं कठिनम् ॥ ८ ॥ वितर वीर निजा-
धरसीधु मे विरहकुंकुमितस्तनमंडले ॥ हर वियोगरुजं
मम वक्षसि स्मरनिवासगृहे विलस प्रभो ॥ ९ ॥
विषमो वियोगरोगस्तदङ्गजनतासमागमश्चायम् ॥
यदिह भवंतं भिषजं विना मरिष्याम्यहं सत्यम् ॥१०॥
व्रजनाथ वदस्व किं नु कुर्यां क्व नु यामि क्व मनः स्थिरं
मम स्यात् ॥ वदनांबुरुहं विना तवेमाः ककुभः शून्य-
तमास्तमालनील ॥ ११ ॥ प्रेष्ठ त्वद्वदनांबुजं हृदि
समागच्छेत्कथंचिन्मम प्राणां स्थापयति स्वभावशि-
शिरस्निग्धालकालिश्रितम् ॥ नो चेत्त्वद्विरहेण दाव-
दहनज्वालायितेन द्रुतं जीर्णाः पंच शिलीमुखान्त-
रुजा गच्छेयुरेवातुराः ॥ १२ ॥ तांस्त्वन्मधुराला-
पांस्तां गतिमीक्षां च तांश्च परिरंभान् ॥ हसिता-

न्यनुस्मरंती जीवामि न हि प्रिये चाहम् ॥ १३ ॥ भवदीयं यत्किंचित्स्मरणपथारूढमंग मेंगानि ॥ अंतश्चूर्णीकुरुते हंति विवेकत्रपाधैर्यम् ॥ १४ ॥ वियोगदुःखजाश्रूणां निरोधो दुष्करः परः ॥ प्राकट्ये हाहजनता लज्जेति करवाणि किम् ॥ १५ ॥ त्वद्वदनसुष्टुदया विहारमंदस्मितादिहृत्प्राणा ॥ मग्ना विरहसमुद्रे जीवामि कथं विना त्वाहम् ॥ १६ ॥ प्राणप्रिय त्वदनुरागसमुल्लसद्भ्रूमंदस्मितेक्षण विलक्षणमोहनास्यम् ॥ द्रक्ष्याम्यहं यदि न हंत कथं भविष्याम्यंग त्वदंगपरिरंभणसुष्टचित्ता ॥१७॥ अंग त्वदंगसंगेन विना विरहपीडिता ॥ जन्म निर्वाहयिष्यामि कथमेतद्व्रजाधिप ॥ १८ ॥ न हीदमुचितं नाथ त्वदीया त्वयि सत्यपि ॥ भवत्यनिशमुद्विग्ना त्वद्वियोगार्तिपीडिता ॥ १९ ॥ सकृदपि वदनसुधानिधिमतिदीनायै दुरंतदुःखेन ॥ दर्शय मे निजविभ्रममोहितगोपांगनानिचयम् ॥२०॥ वृंदावने मिलनमाशु भविष्यतीति चित्तेऽवलंबनमरिंदम सर्वदासीत् ॥ तत्रापि मे सपदि नाऽभवदीश यत्तत्किं नो मनीषितमिदं नु तव व्रजेश ॥ २१ ॥ भवद्विलंबि

तमहाप्रहारदलिताशयाम् ॥ प्रतिक्षणमहामोहमग्नां जीवयिता नु कः ॥ २२ ॥ अतीते परं प्राणप्रिय त्वत्संगमावधौ ॥ जाने न शतधापन्नो दलत्याशुम-दाशयः ॥ २३ ॥ भवानजभवादिभिर्दुरधिगम्यवार्तः क वा क मूढहृदया विभो पशुसमाहमाभीरिका ॥ तथापि तव विभ्रमस्मितविमोहितं मे मनस्त्वयि प्रिय विशृंखलं भवति किं करोम्यातुरम् ॥ २४ ॥ प्रेष्ठ त्वयि प्रणयिता ममास्तीत्यपि नो मतिः ॥ त्वदं-गसंगविरहेऽप्यंग जीवामि यद्वृथा ॥ २५ ॥

इति श्रीविट्ठलेश्वरकृता पंचमी विज्ञप्तिः समाप्ता ॥ ५ ॥

## अथ षष्ठी विज्ञप्तिः।

श्रीकृष्णाय नमः।

क्षणमपि न वियुक्ता जातु तस्माद्भविष्याम्यह-मिति हृदये मे निश्चयः सर्वदासीत् ॥ व्यरचि यदि विधात्रा केवलो विप्रयोगः कथय किमथ कार्यं दुःखिना जीवितेन ॥ १ ॥ सखि बहुधापि निरुक्त-श्चरणस्पृष्टोऽपि जीविताधीशः ॥ नो मनुते निज-संगममहह कथं तत्र किं कुर्मः ॥ २ ॥ सखि त्वया महानेव प्रयत्नो मत्कृते कृतः ॥ तथापि यत्तदप्राप्ति-

स्तत्र ते किन्नु दूषणम् ॥ ३ ॥ सखि स ऋतुः स च दिवसः सा घटिका हंत स क्षणः कोऽपि ॥ भविता यस्मिन् व्रजपतिमादरपूर्वं समाश्लिष्ये ॥ ४ ॥ दधौ कमपराधं वा हृदये हृदयप्रियः ॥ तन्न जाने यन्निजांगसंगमंगीकरोति न ॥ ५ ॥ सखि वद यादवपुंगवमतिचिरविरहादहानि गणयंती ॥ प्रणयभुजंगमदष्टा त्वदधरसुधया परं जीवेत् ॥ ६ ॥ नान्यद्वक्तुमहं शक्ता किमपि प्राणवल्लभम् ॥ जीयासुः परमंभोजनेत्रापांगाश्चिरं तव ॥ ७ ॥ कदाचिद्गोपीशः स्मरति यदि मामंबुजदृशां सभायामत्यार्तिप्रणयभरसंभावितहृदम् ॥ तदा मन्ये धन्ये प्रियमुखसरोजं स्वनयनैः कदाचित्पश्यामि प्रियविरहतप्तैरिति सखि ॥ ८ ॥ सत्स्वपि सरस्सु विमलेष्वलिहंसालीविनोदमधुरेषु ॥ अंबुदविमुक्तपाथसि चातक ते दुर्ग्रहः कोऽयम् ॥९॥ तं न पश्यामि यं श्यामसुंदरं दर्शयेत्सखी ॥ यद्वा हृत्तापहृत्कृष्णसंदेशं कथयेदपि ॥ १० ॥ भवदुक्तिसुधाधाराशिशिरीकृतमप्यहम् ॥ क्षणमप्याशयं शक्ता न स्थापयितुमातुरम् ॥११॥ कर्तव्यमेव तव तावदये कथंचित्प्राणेशसंगविरहाकुलमानसायाः

प्रेष्ठावलोकनभये सकृदप्यनंगकोटिस्मयापहमुखांबुजसुष्टहृष्टेः ॥ १२ ॥ ग्रीष्मेऽप्युदग्रतापे नवनीरददर्शनाशया रहिते ॥ आर्तश्चातकविहगो नाशां त्यजति प्रिये जीवन् ॥ १३ ॥ दूरे जलास्वादकथा यत्र नाप्यभ्रदर्शनम् ॥ तथापि चातको जीवत्यहो कठिनता हृदः ॥ १४ ॥ इदमेव बहुत्वेन जानामि न तु चातकः ॥ मुहुः स्वप्रेष्ठनामापि कंठे यदनुवर्तते ॥१५॥ प्रियावमानिता याति यद्यपि प्रमदा मदात् ॥ तथापि तामनन्यं स नेष्टे नाथ उपेक्षितुम् ॥ १६ ॥ यथाकथंचित्तामेव सनाथीकुरु ते वशे ॥ तत्प्राणा सापि तेनैव पूर्णा भवति नान्यतः ॥ १७ ॥ चातकी यदि महानिलवेगात्प्राप्तवत्यचलतो मरुदेशम् ॥ कस्तदा जलमुचो ननु दोषः प्राणितीयमिदमेव हि चित्रम् ॥ १८ ॥ ज्ञानिनो विगतरागिणो मनोरोधका वदत बोधका नृणाम् ॥ प्राप्तमुक्तिहरिभक्तयोऽस्ति किं गोत्रनाथचरणं विनारणम् ॥ १९ ॥ गोवर्धनाचलशिरोमणिरेष यावन्मत्स्वामिनीहृदयकुंकुमपंकिलांगः ॥ मन्मूर्ध्नि मद्धृदयपंकजमंडलेषु संशोभते न भयमस्ति कुतोऽपि तावत् ॥ २० ॥ कृतज्ञताकृपा-

लुप्तविश्रामस्य प्रियस्य मे ॥ प्राप्तिस्तत्कृपयैवालि भाविनीति मतिर्मम ॥ २१ ॥ अनाज्ञप्तैवाहं प्रियतम मनोवाक्कृतिभिरप्यभाग्यैरद्याहं प्रचलितवती यत्प्रियपदात् ॥ न तच्चित्रं दुःखं भवति भवतांकिं तु कथमप्युदारं तद्वक्त्रं नयनपथ आस्तामचिरतः ॥२२॥ प्रतिगच्छत्विह लोकः परलोकाशापि सर्वथैवाद्य ॥ मा त्यजतु मामनन्यां जातु परं गोकुलाधीशः ॥२३॥ यादृशी तादृशी नाथ त्वत्पदाब्जैककिंकरी ॥ त्वद्वक्त्रं कथमप्याशु कुरु दृग्गोचरं मम ॥ २४ ॥ यदवधि गोपीनाथो दृग्विषयोऽभून्ममापि मंदायाः ॥ तदवधि शिवमेवासीदग्रे किं वा विधास्यति प्रेष्ठः ॥ २५ ॥

इति श्रीविट्ठलेश्वरकृता षष्ठी विज्ञप्तिः समाप्ता ॥ ६ ॥

## अथ सप्तमी विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

प्रतिक्षणनवं मुदा मुहुरहर्निशं यत्पिबस्ययि प्रियमुखांबुजासवमतोऽसि धन्या सखि ॥ कदाचिदतिसुंदरस्मितमुखः सुखेनास्थितो भवत्सदसि मत्प्रियः स्मरति मां कृपावारिधिः ॥ १ ॥ प्रियवदनांबुजदर्शनकातरचित्तां तथापि संविमाम् ॥ तत्सखि नो

जानेऽहं किं नु विधास्यत्ययं प्रेष्ठः ॥ २ ॥ वियुक्ते नाथे यद्विपदनुपदं तत्समुचितं वियोगस्तेनायं मम समुचितोऽन्यत्र नु परम् ॥ तथापि श्रीराधाहृदयमणिरत्यंतकृपया स्वचक्रेऽदं गोपीपतिरचिरतो दर्शयतु मे ॥ ३ ॥ किं बहुना सखि पांथोऽप्येतद्वार्ता स विघ्नकर्तैव ॥ तत्किं करोमि मग्ना दुःखाब्धौ तत्प्रियः शरणम् ॥ ४ ॥ प्रियनिकटे सखि काचिद्यदि मां कृपया स्मरिष्यति प्रीता ॥ तत्क्षण एव मनोरथनिचयान् पश्याम्यहं सत्यम् ॥ ५ ॥ परिजनहसनद्वेषैर्दुःखितमप्येतदातुरं चेतः ॥ न जहाति तत्स्वभावं तत्साधु न वेति नो विद्मः ॥ ६ ॥ यावत्स्वकार्यं तावत्तु कृतमेव सखि त्वया ॥ मद्भाग्योन्नतिकाले स स्वयं मे कृपयिष्यति ॥ ७ ॥ न सुलमाप रमा न च चातुरी मयि मनोभवयुद्धविदग्धता ॥ न मधुरोक्तिरथो न रसश्च कोऽप्ययि कथं भविता प्रियसंगमः ॥ ८ ॥ रतिपतिमंगलकलशौ कुचकुंभौ मीनकेतुरसपूर्णौ ॥ कमलावरकरकमलस्पृष्टौ भवता वृथैवेमौ ॥ ९ ॥ गता बुद्धिः शुद्धिर्जगति विहणद्धि स्वपतिरप्यपे लज्जा गुर्वी गुरुपतिसुतानां न गणिता ॥

यदर्थं तत्संगः सखि न भविता यद्यचिरतस्तदा नाहं पश्याम्यहह मरणादन्यदरणम् ॥ १० ॥ वरं नेत्रे मुद्रा न पुनरितरालोकनमपि वरं शून्यारण्यं स्थितिरिह वरं नान्यमिलनम् ॥ वरं मूकीभावो न पुनरपरा काचन कथा वरं प्राणत्यागः क्षणमपि न तत्संगविगमः ॥ ११ ॥ भगवत्पदपङ्कजरागजुषो न हि शुक्कतरं मरणेऽपि तराम् ॥ इतराश्रयणं गजराजगतो न हि रासभमप्युररीकुरुते ॥ १२ ॥ अनन्यगोकुलस्वामिन्ननन्यीकृतगोकुल ॥ मां कुरुष्व दयासिंधो त्वत्पदांबुजरेणुषु ॥ १३ ॥ स्वतः कृता कृपा नाथ किशोरे मयि या त्वया ॥ सा किमाशालता शुष्कफलिकेवोत सत्फला ॥१४॥ भवतीति न जानामि सर्वसामर्थ्यसंयुता ॥
त्वदीयास्मि त्वदीयास्मि त्वदीयास्मि व्रजाधिप १५
यादृशांस्तादृशस्त्वं तु मा त्यजास्मान् दयानिधे ॥
एतावदेव विज्ञाप्यं सर्वथा सर्वदेव नः ॥ १६ ॥
स्वल्पेनेवापराधेन महता वा व्रजेश्वर ॥
अस्मानुपेक्षसे त्वं तु स्वकीया किं ब्रुवे तदा ॥१७॥
त्वदीयत्वं निश्चितं नस्तव भर्तत्वमच्युत ॥

कालकर्मस्वभावानामीशितृत्वमपि प्रभो ॥ १८ ॥
अतः कालादिजं दुःखं भवितुं च न नोऽर्हति ॥
अपराधेष्युपेक्षा तु नोचिता सेवकेषु ते ॥ १९ ॥
उपेक्षयैव कालादिर्भक्षयत्यन्यथा न हि ॥
बाहिर्मुख्यात्कालजातं दुःखं चेत्सहजं हि तत् ॥२०॥
तद्वैपरीत्यं कृपया भाविन्यैवान्यथा न हि ॥
दोषाश्रयत्वं सहजं ज्ञात्वैव ह्युरीकृतिः ॥ २१ ॥
अतो दोषक्षयोपेक्षा कृपालौ त्वयि नोचिता ॥
उपेक्षां किं नु सहजप्रभुत्वेन करोषि वा ॥ २२ ॥
दंडं स्वकीयतां मत्वेत्येवं चेदिष्टमेव नः ॥
अस्मासु स्वीयतां मत्वा यत्र कुत्र यदा तदा ॥२३॥
यद्यत्करिष्यत्यखिलं तदस्तु प्रतिजन्मनि ॥
इदमेव सदा प्रार्थ्यं त्वदीयत्वं व्रजेश्वर ॥ २४ ॥
दुःखासहिष्णुस्त्वत्तोऽहं तथापि प्रार्थये प्रभो ॥
तथैव संपादय नो नापराधो यथा भवेत् ॥ २५ ॥

इति श्रीविट्ठलेश्वरकृता सप्तमी विज्ञप्तिः समाप्ता ॥ ७ ॥

## अथाष्टमी विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

अपराधेऽपि गणना नैव कार्या व्रजाधिप ॥
सहजैश्वर्यभावेन स्वस्य क्षुद्रतया च नः ॥ १ ॥

त्वदीयत्वं यन्नस्तदतिशयितं भाग्यमतुलं समीप-
स्थानामप्यहह न विलासेक्षणमिदम् ॥ अभाग्यं
वात्युच्चं सपदि गणयामः किमधिकैर्वचोभिः
सर्वस्वं त्वमसि यदि गोविंद मनुपे ॥ २ ॥
सर्वे परिगृहीताः स्मो गोकुलस्वामिना वयम् ॥
न त्यक्ष्यति दयासिंधुरस्मानन्यायिनोऽपि हि ॥ ३ ॥
स्वकृत्याभिर्भवत्येव तथापि करवाणि किम् ॥ तथापि
गतिरस्माकं स एवेति न भीरपि ॥ ४ ॥ यथा वयं
तदीयाः स्मस्तथा सोऽपि निसर्गतः ॥ अस्मात्प्रभु-
रतश्चिंता नैहिके पारलौकिके ॥ ५ ॥ चिकीर्षितं
कारयित्वा शीघ्रमानेष्यति प्रभुः ॥ अस्मानतो न
चिंता वः कार्या सर्वात्मना प्रियाः ॥ ६ ॥ एतेषा-
महमेवास्मि सर्वस्वमिति सुंदरम् ॥ जानास्यस्माक-
मज्ञानेऽप्यतः कर्ता स्वतोऽखिलम् ॥ ७ ॥ अंगीकृ-
तजनजनिताऽपराधकृत्क्षमाविनोदस्य ॥ अंगीकृति-
श्वनित्या वदंतु कोऽन्योऽस्य साम्यमियात् ॥ ८ ॥
न स्वाध्यायबलं न यागजबलं नो वा तपस्याबलं नो
वैराग्यबलं न योगजबलं नाप्युक्तभक्तेर्बलम् ॥ नैव
ज्ञानबलं न चान्यदपि यत्किंचिद्बलं मेऽस्ति किं त्वद्य

श्वोपि यदा तदा तव कृपाकूतेक्षणं मे बलम् ॥ ९ ॥ तुच्छीकृतास्त्वत्कृपातः पूर्वं कालादयो मया ॥ स्मृत्वा तद्वैरमधुना बाधंते त्वत्कृपां विना ॥ १० ॥ यस्य देयो लोभ एव तस्यौदार्यस्य का कथा ॥ सर्वस्वदानशीलत्वं चित्रं पात्रपरं परम् ॥ ११ ॥ ततः काचिदनंगाग्नितप्ता त्वं यदवीवदत् ॥ मत्पुरस्तच्छृणुष्वेति वद यादवपुंगवम् ॥ १२ ॥ शिशिरत्वं शशिनस्त्वत्कृपावलोकनकृतं मन्ये ॥ नो चेद्गतवति भवति प्रचंडकिरणाः कथं सपदि ॥ १३ ॥ त्वदधरसुधापानेन श्रीमुखांबुजशोभया तुहिनकिरणस्तुच्छीभूतो बभूव परं प्रिय ॥ सपदि मम तद्वैरं स्मृत्वाशुशुक्षणिसंनिभैर्मदनदहनो दग्धुं ह्येतद्दुनोति निजांशुभिः ॥ १४ ॥ यदि कृपयति राधा बाधिताशेषबाधा किमपरमवशिष्टं पुष्टिमर्यादयोर्मे ॥ वदति यदि कथंचित्स्मेरहासोदितश्रीद्विजवरमणिपंक्त्या मुक्तिशुक्त्या तदा किम् ॥ १५ ॥ स्मेरस्नहासप्रभयाखिलांगे तच्चुंबनैस्तत्प्रतिबिंबितैश्च ॥ तासां कटाक्षैश्च चतुर्युगीयरूपाणि धत्से क्षणशो व्रजेश ॥ १६ ॥ त्वमीश्वरोऽसि गीतं ते क्षुद्रोऽहं किं वदामि हि ॥ यादृशोऽसि हरे कृष्ण तादृशाय नमो-

नमः ॥१७॥ स कोऽपि सखि सानंदनंदाद्युत्संगलालितः ॥ करोति सुषमासीमा मन्मथोन्मथिता दिशः १८ अधरांजनदीप्तिमत्सुनासापुटमुक्ताफलभूषणं तवास्यम् ॥ सदृशं भवतीति गोपिगुंजाफलमुक्ता उरसीद्रिये बिभर्ति ॥१९॥ रूपं तवैतदतिसुंदरनीलमेघप्रोद्यत्तडिन्मदहरं व्रजभूषणांगि ॥ एतत्समानमिति पीतवरं दुकूलमूरावुरस्यपि बिभर्ति सदा स नाथः ॥२०॥ पुरोवातप्रावृट्समयविरहे मेघविरहात्सुतप्ताहं गंतुं पदमपि न शक्ता तदिह चेत् ॥ समानो यो मेघः पुनरपि कृपाशक्त्यखिलकृत्ततो मामेव त्वं नय निजगृहं तस्य झटिति ॥ २१ ॥ नाथेऽनुकूलतां याते सर्वं यात्यनुकूलताम् ॥ तस्मिंस्तद्विपरीते तु सर्वमेव भवेत्तथा ॥ २२ ॥ यदि प्रियसखीजनो मयि कृपां करोति स्वयं विरुद्धशतमप्यहं न गणये तथापि क्षणम् ॥ मनोरथलताश्रये व्रजवधूवृतेऽस्मिन्नपि व्रजाधिपतिरेव मे शरणमस्तु दास्याः सदा ॥२३॥ अपि कापि सापि संप्रति वरिवर्ति सखि व्रजाधिपप्राणा ॥ या नंदसूनुमुरलीतरलं चेतः समादध्यात् ॥ २४ ॥

आविर्भूतानुरागा वा किं वा नगनवांकुरः ॥ समु-
च्चयपदं वेति न स निश्चयमूरभूत् ॥ २५ ॥

इति श्रीविट्ठलेश्वरकृता अष्टमी विज्ञप्तिः समाप्ता ॥ ८ ॥

## अथ नवमी विज्ञप्तिः ।

श्रीकृष्णाय नमः ।

स देशः कोऽन्वभूद्यत्र रमणं ते सखीजनैः ॥
स कालोऽपि यदा नास्ते समाहूता स्ववेणुना ॥ १ ॥
यः सर्वज्ञः सर्वशक्तिर्यमवादीदिति श्रुतिः ॥
तं प्रपन्नस्य मेऽद्यापि कथं दुःखं न वेद तत् ॥ २ ॥
हरे त्वन्नाम निर्वक्ति यथा श्रुतिरहं सदा ॥
गृह्णामि यद्यदा नाथ तत्तथैवास्तु नान्यथा ॥ ३ ॥
कथं स भुंक्षे सस्नेहमद्य त्वं प्रत्यहं यथा ॥
इति पृष्टस्मितः पातु हरिश्चौर्यभुजिस्मृतिः ॥ ४ ॥
किमिदं कुरुषे वत्स मृत्सासंवृन्मुखांबुजम् ॥
स्वलंकृतं गंधतैलकज्जलैः कंजलोचन ॥ ५ ॥
किं नाश्रावि त्वया वेणुस्वरः स्मरविकस्वरः ॥
सदागतिगतिस्तंभो नगस्थिरगतिर्यतः ॥ ६ ॥
किं त्वया मृग्यते कुंजे तमःपुंजेंबुजेक्षणे ॥
त्वन्मनोमणिहर्ता यः स इदानीं वनांतरे ॥ ७ ॥

करोति कमलाकांतः कामिनां करुणाकरः ॥ यत्कृतं विकृतं नैव कदाचिदपि कस्यचित ॥ ८॥ सोऽस्मानवतु सर्वत्र ददात्वभिमतं सदा ॥ यः प्रार्थितो भक्तजनैः पपौ वह्निं दधौ गिरिम् ॥९॥ स्वविश्रांतिस्थानं त्रिजगति विचिन्वंन्त्यतिचिरादतिश्रांता शीतानिलमभिलपत्यालिसुपमा ॥ शनैर्या नासायामकृन तदयं स्वेदजकणस्त्वदग्रे मुक्तावद्विधुमुखि चकास्ते पिपतिपु ॥ १० ॥ गणये कुचयोरेव त्वत्परायणतां प्रिय ॥ त्वत्करस्पर्शसमयं ज्ञात्वैवास्तां बहिःस्फुटौ ॥११॥ प्रायः सत्पात्रतोत्कर्षो यच्छोभाऽयादुदारताम् ॥ दातर्यप्यत एवासीदनंते देयमुत्तमम् ॥१२॥ माद्रुर्भवति वकारस्त्वदधरपीयूपदशनसंयोगात् ॥ तेनामृतबीजत्वं युक्तं प्राणप्रिये तस्य ॥१३॥ मुहुर्गतागतज्ञानस्नेहभावेपु तत्किणैः॥ व्यासेष्वात्मादिपु व्रीडा मूढी तिष्ठेत्कथं वद ॥१४॥ यथायथा प्रियापांगशरपातस्तथातथा ॥ तदाभिमुख्यं भजसे व्रजेश क्षत्रियोऽसि किम् ॥ १५ ॥ प्रियत्वदधरामृतादतिविलक्षणा किं नु सास्त्यहो नयननीलनीरजयुते मदीये तु यत् ॥ यदेव मम लोचने त्वदधरं सुसंगच्छते तदेव मधु

पावृतो भवति नान्यदा सुंदर ॥ १६ ॥ श्रुत्युक्ता सान्यथा नैव कर्तुं शक्येति चेत्तदा ॥ कंसादिकालवच्छ्रया तवैवेति वदाम्यहम् ॥१७॥ विजातीयजनाक्रांते निजधर्मस्य गोपनम् ॥ देशे विधाय सततं स्थैर्यमित्येव भासते ॥१८॥ सुस्थिरे नीलजलदे स्थिरसौदामनीयुते ॥ स्थिरं मनो यदि भवेत्स्थिरं भाग्यं तदैव हि ॥१९॥ निवेदितात्मभिन्नेषु सदौदासीन्यमाचरेत् ॥ प्रावाहिकास्तेऽपि चेत्स्युरुपेक्षैवोचिता तदा ॥ २० ॥ श्यामकंचुकनिदर्शनेन मन्मानसेऽप्यणुतरेऽपि महान्सः ॥ गोकुलैकजनजीवनमूर्तिर्मास्यति स्वकृपयैव कृपालुः ॥ २१ ॥ शश्वदपिपासितापांगध्यानावस्थितचेतसा ॥ प्राप्तनिजरूपाय गोविंदाय नमोनमः ॥ २२ ॥ सख्यादिवांबुजाश्लिष्टप्रियापांगैरिवार्चितः ॥ परिधाय बभौ नीलकंचुकं गोपिकापतिः ॥ २३ ॥ राधागुणैः सहाविष्टे माधवांतर्हृदि स्मरे ॥ तत्र गंतुमशक्तं तद्यानं कर्णावलंब्यभूत् ॥२४॥ ज्ञानेन साधनैश्चान्यैः शून्यानस्मान्मुदा स्वयम् ॥ अनुगृह्णाति सोऽस्माकं प्रभुः श्रीविठ्ठलेश्वरः ॥२५॥ एके कर्मप्रवृत्ताः सततमिह परे भक्तिपूर्णार्द्रचित्ताः केचिज्ज्ञानैक-

वित्ताः प्रभुचरणनमस्यार्तवृत्तौघवित्ताः ॥ तत्तन्निष्ठाविहीनं जगदुदधिपयःसंसृतौ दीनमीनं मा कश्चित्क्षणहेतुः कृपयितुमिह ते वल्लभीया ममेति ॥ २६ ॥

इति श्रीविट्ठलेश्वरकृता नवमी विज्ञप्तिः समाप्ता ।

## अथ द्वितीयपर्यंकः ( पालनो ) ।

लालयति दोलिकामंचशयनम् ॥ ध्रु० ॥ तिलकगोरोचनं भालमुक्ताफलं, कुटिलकुन्तलमुखं चकितनयनम् ॥१॥ चरणसंचालनं मोदभरगायनं प्रतिबिंबदर्शने मृदुलहासम् ॥ बाललीलापरं मधुरनूपुरधरं, भाषणे स्फुरितनासाविकासम् ॥२॥ अंगुष्ठचोपकं गूढरसपोषकं, स्वल्पसंतोषकं कृष्णचंद्रम् ॥ गोपिकाजनमनोमोदसंपादनं, तदभिलषिताकृतौ विगततंद्रम् ॥३॥

## अथ श्रीविट्ठलेश्वरस्य जन्मपत्रिका ।

श्रीकृष्णाय नमः ।

वर्षे नेत्राश्वभूतद्विजपतिगणिते पौषकृष्णे नवम्यां हस्तर्क्षे तैतिलेऽह्न्यधिकृतमृगजे शोभने गोविलग्ने ॥ रंध्रस्थेऽर्के सचान्द्रे कविकुजशनिषु द्यूनगेष्वात्मजस्थे सोमे जीवे धनस्थे तमसि सहजगे विट्ठलः प्रादुरा-

सीत् ॥ १ ॥ शुक्रारार्किषु सप्तमेषु धनगे जीवे च कर्के तमस्यर्के धन्विनि चांद्रिणा सह सहस्याश्शुक्लपक्षे वृषे ॥ अब्दे नेत्रमुनीषु चंद्र गणिते हस्ते नवम्यां भृगौ विश्वोद्धारकृते स्फुटोऽभवदिह श्रीविठ्ठलेशो हरिः ॥ २ ॥ संवत् १५७२ शके १४३७ पौषकृष्णे ९ शुक्रे हस्तनक्षत्रे शोभनयोगे तैतिलकरणे एवं पंचांगे–श्रीसूर्योदयात् गतघ. २१ पलानि २५ वृषलग्ने श्री ७ श्रीविठ्ठलनाथ (जी) प्राकट्यम् । स्थितिः वर्षा०७०दिना० २८ (पर्यंतम्)। सं० १६४२ माघकृष्णे ७ दिने अंतर्धानम् ॥






॥ श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरे

## गोस्वामिश्रीरघुनाथ (जी) कृतग्रंथाः ।

## तत्र श्रीमद्वल्लभभुजंगप्रयाताष्टकम् ।

श्रीकृष्णाय नमः ।

महोदारचित्तं चतुर्वेदवित्तं समस्तेष्टदातारमग्निस्वरूपम् ॥ पुराणेतिहासस्मृतिख्यातकीर्तिं सदा श्रीयुतं वल्लभं संभजेऽहम् ॥ १ ॥ घनश्यामदेहं महद्धर्मगेहं कलौ सोमयागस्य कर्तारमीशम् ॥ कलारूपकृष्णस्य सूत्रार्थकारं सदा श्रीयुतं वल्लभं संभजेऽहम् ॥ २ ॥ महाघोरसंसारसिंधौ सुनावं जगत्तारकं लक्ष्मणात्मोद्भवं च ॥ महासुंदरं देवदेवेशपूज्यं सदा श्रीयुतं वल्लभं संभजेहम् ॥ ३ ॥ महासूर्यकोटिप्रभं कृष्णतुल्यं जगत्प्रेमसंतोषितस्वीयभक्तम् ॥ कृपासागरं दक्षिणं कामरूपं सदा श्रीयुतं वल्लभं संभजेऽहम् ॥ ४ ॥ स्वदेशस्थराजाज्ञया विप्रवर्यान्विनिर्जित्य संकारितस्वैपिकं च ॥ तदर्थव्ययोपेक्षितस्वीयकार्यं सदा श्रीयुतं वल्लभं संभजेऽहम् ॥ ५ ॥ महास्थानतीर्थाटने भक्तियुक्तं

सदाभावगंतारमापद्धरं तम् ॥ महत्त्वप्रदं ब्रह्मवादैकनिष्ठं सदा श्रीयुतं वल्लभं संभजेऽहम् ॥ ६ ॥ महत्काननेसंकुलांगाशरीरं तदानीं च शोभाढ्यतद्भूमिदेशम् ॥ तदंशेन दूरीकृतव्याघ्रसिंहं सदा श्रीयुतं वल्लभं संभजेऽहम् ॥ ७ ॥ उपस्येव पित्रोर्हृदानंदकंदं मखे सोमयाजिप्रदृष्टस्वरूपम् ॥ जगत्कारणं चंद्रवच्छीतलाक्षं सदा श्रीयुतं वल्लभं संभजेऽहम् ॥८॥ सदा प्रातरुत्थाय ये संपठेयुः कलौ संलभंते च कृष्णस्य भक्तिः ॥ भुजंगप्रयातं जगद्वल्लभस्य प्रयांत्यास्पदं देवदेवस्य नूनम् ॥ ९ ॥

इति श्रीरघुनाथ (जी) कृतं वल्लभाष्टकं संपूर्णम्।

## अथ विठ्ठलेशस्तवः।

श्रीकृष्णाय नमः।

न मंत्रे न तंत्रे न च ज्ञानसिद्धौ न वैकुंठबुद्धेस्तु वैकुंठलोके ॥ गतिर्विठ्ठलेशे रतिर्विठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ १ ॥ पदांभोरुहांभोविभिन्नार्तितापे कृपादृक्स्वकेताहृशोदारशीले ॥ गतिर्विठ्ठलेशे रतिर्विठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ २ ॥ न नाके वराके न राकेशयांके पिनाकेश-

लोके न वा केलिरम्ये ॥ गतिर्विठ्ठलेशे रतिर्विठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ ३ ॥ यदालोकत-स्तोकतोऽपि क्षणेन प्रमुक्तीभवेल्लोकतः शोकतोऽयम् ॥ गतिर्विठ्ठलेशे रतिर्विठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ ४ ॥ स्मृतिर्वा मतिर्वा कदा वा यदा वा यथा वा तथा स्यात्पदार्थाः कियंतः ॥ गति विठ्ठलेशे रति-विठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ ५ ॥ महामोहदग्धोऽपि कालाग्निदग्धो विदग्धो भवेत्स्ने-हदृष्ट्याऽपि यस्य ॥ गतिर्विठ्ठलेशे रतिर्विठ्ठलेशे मति-विठ्ठलेशे सदा वै ममास्तु ॥ ६ ॥ यदंगीकृतं जीव-मंगीकरोति त्रिभंगी स्वयं वेणुरंगी प्रभुर्यत् ॥ गति-विठ्ठलेशे रतिर्विठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ ७ ॥ शरण्योऽतिधन्यो धरण्या वरेण्यो वरीवर्ति गण्या यदन्यो न कोऽपि ॥ गतिर्विठ्ठलेशे रतिर्वि-ठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ ८ ॥ सदा-नंदरूपः सदानंदरूपात्मनानंदलीलारसं यो ददाति ॥ गतिर्विठ्ठलेशे रतिर्विठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ ९ ॥ न भक्तिर्न मुक्तिर्न वै सर्वशक्ति-

विरक्तिर्न युक्तिस्ततो भक्तिरुक्ता ॥ गतिर्विठ्ठलेशे रतिर्विठ्ठलेशे मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ १० ॥

इति श्रीरघुनाथ ( जी ) कृतो विठ्ठलेशस्तवः समाप्तः ।

## अथ श्रीविठ्ठलेशाष्टकम् ।

श्रीकृष्णाय नमः ।

कुरुसदसि कृताभूद्द्रौपदीवस्त्रशेषा सकलनृपवरेंद्रा यत्र वक्तुं न शक्ताः ॥ हरिचरणरतांगी येन तत्रा-त्मधीरा स भवतु मतभूत्यै विठ्ठलेशः सहायः ॥ १ ॥ प्रथमजननपापप्राप्तसंप्रेतदेहौ समय इह ममास्मि-न्कृष्णभक्त्या समेतौ ॥ गलितपतितवेपावुद्धृतौ येन सद्यः स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ २ ॥ कमलदलसुनेत्रेणेव भूतेशमायात-तिमिरिह हि येन भ्रामितः सर्वलोकः ॥ अखिलज-गति सर्वस्वीयभक्ताः कृतार्थाः स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ ३ ॥ सकलयदुकुलेंद्रो येन कंसो हतोऽभूज्जननसमयपूर्वं देवकीशूरयोश्च ॥ परिहृतमपि दुःखं यामिका मोहिताश्च स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ ४ ॥ तपनदुहितुरंतः कालियो मारितः सन्नलिगणसुहितेऽस्मिंस्तत्फणे येन

नृत्यम् ॥ कृतमपि च तदंभो लंभितं निर्विषत्वं स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ ५ ॥ कपट-कृतशरीरा पूतना प्रापिताऽभ्रं व्रजपतिगृहसुप्तावेक-पादेन येन ॥ शकट असुरखेयः प्रेपितः स्थाननाशं स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ ६ ॥ पद-नतियुतहस्ता तोषिता येन कुंती ह्यसुरकुलसमूहा हिंसिता वीर्यवंतः ॥ अखिलभुवनभारः प्रेपितः संल-घुत्वं स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥७॥ अखिलसुरकुलेंद्रस्यैव येनाभिमानो गिरिवरधरणेन क्षीणतां प्रापितश्च ॥ जलधरभवधाराः संहता ग्राव-युक्ताः स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥८॥ विठ्ठलेशाष्टकमिदं प्रातरुत्थाय यः पठेत् ॥ भक्त्या नत्वा च सुमनाः स याति परमां गतिम् ॥ ९ ॥

इति श्रीरघुनाथ ( जी ) कृतं विठ्ठलेशाष्टकं संपूर्णम् ।

## अथ वन्हिसूनुस्तवः ।

श्रीकृष्णाय नमः ।

यः कृष्णसेवार्थमगाधबोधं जगाद शास्त्रं भगवत्प्र-णीतम् ॥ निश्चित्य तद्भावमनन्यभावं तं वह्निसूनुं शरणं प्रपद्ये ॥ १ ॥ यः प्रार्थितो भक्तजनैः समस्तं

करोति कार्यं करुणाकटाक्षः ॥ क्षणं विना कृष्णकथां न चास्ति तं वह्निसूनुं शरणं प्रपद्ये ॥२॥ यो गोकुलं गोपपतिर्यथा पुरा पुराणपुंसं प्रियमेत्य सादरम् ॥ चकार वासं कमलानिवासं तं वह्निसूनुं शरणं प्रपद्ये ॥३॥ यो रासलीलाकुमुदौषधीशो भक्तार्थमाविष्कृतगोकुलेशः॥ तिरस्कृतानेकमहासुरेशस्तं वह्निसूनुं शरणं प्रपद्ये ॥ ४ ॥ यः संस्मृतः क्लेशमशेषमस्तं करोति सुस्थं निजभृत्यवर्गम् ॥ तद्दुःखविध्वंसकृतोद्यमः सदा तं वह्निसूनुं शरणं प्रपद्ये ॥ ५ ॥ यः सर्वदास्ते हरिदासवर्ये गोगोपगोपीजनराजिराजिते ॥ शृण्वन् सुगीतानि यशोयुतानि तं वह्निसूनुं शरणं प्रपद्ये॥६॥ यो धर्मरक्षार्थमतिप्रवृद्धैर्यज्ञैः समीजे जनकं कृशानुम्॥ भक्तैककामः श्रुतितंत्रविज्ञस्तं वह्निसूनुं शरणं प्रपद्ये ॥ ७ ॥ यो रासलीलामृतसिंधुवृद्धिं करोति पूर्णेंदुगुणैस्तु पूर्णः ॥ भक्तेंगितज्ञः शुभवांछितप्रदस्तं वह्निसूनुं शरणं प्रपद्ये ॥ ८ ॥ इमं स्तवं यः प्रपठेत्त्वदंघ्रिध्यानैकनिष्ठः शरणं प्रलिप्सुः ॥ तं भावय श्रेष्ठमतं स्वभक्तं प्रार्थ्यं त्विदं त्वद्रघुनायकस्य ॥ ९ ॥

इति श्रीरघुनाथ ( जी ) कृतो वह्निसूनुस्तवः समाप्तः ।

# अथ नामरत्नाख्यस्तोत्रम् ।

श्रीकृष्णाय नमः ।

यन्नामार्कोदयात्पापध्वांतराशिः प्रशाम्यति ॥
विकसंति हृदब्जानि तन्नामानि सदाश्रये ॥ १ ॥
आनुष्टुभमिह च्छंद ऋषिरग्निकुमारजः ॥
सर्वशक्तिसमायुक्तो देवः श्रीवल्लभात्मजः ॥ २ ॥
विनियोगः समस्तेष्टसिद्ध्यर्थे विनिरूपितः ॥
श्रीविट्ठलः कृपासिंधुर्भक्तवश्योऽतिसुंदरः ॥ ३ ॥
कृष्णलीलारसाविष्टः श्रीमान्वल्लभनंदनः ॥
दुर्दर्शो भक्तसंदृश्यो भक्तिगम्यो भयापहः ॥ ४ ॥
अनन्यभक्तहृदयो दीनानाथैकसंश्रयः ॥
राजीवलोचनो रासलीलारसमहोदधिः ॥ ५ ॥
धर्मसेतुर्भक्तिसेतुः सुखसेव्यो व्रजेश्वरः ॥
भक्तशोकापहः शांतः सर्वज्ञः सर्वकामदः ॥ ६ ॥
रुक्मिणीरमणः श्रीशो भक्तरत्नपरीक्षकः ॥
भक्तरक्षैकदक्षः श्रीकृष्णभक्तिप्रवर्तकः ॥ ७ ॥
महासुरतिरस्कर्ता सर्वशास्त्रविदग्रणीः ॥
कर्मजाड्यभिदुष्णांशुर्भक्तनेत्रसुधाकरः ॥ ८ ॥
महालक्ष्मीगर्भरत्नं कृष्णवर्त्मसमुद्भवः ॥

भक्तचिंतामणिर्भक्तिकल्पद्रुमनवांकुरः ॥ ९ ॥
श्रीगोकुलकृतावासः कालिंदीपुलिनप्रियः ॥
गोवर्धनागमरतः प्रियवृंदावनाचलः ॥ १० ॥
गोवर्धनाद्रिमखकृन्महेंद्रमदभित्प्रियः ॥
कृष्णलीलैकसर्वस्वः श्रीभागवतभाववित् ॥ ११ ॥
पितृप्रवर्तितपथप्रचारसुविचारकः ॥
व्रजेश्वरप्रीतिकर्ता तन्निमंत्रणभोजकः ॥ १२ ॥
बाललीलादिसुप्रीतो गोपीसंबंधिसत्कथः ॥
अतिगंभीरतात्पर्यः कथनीयगुणाकरः ॥ १३ ॥
पितृवंशोदधिविधुः स्वानुरूपसुतप्रसूः ॥
दिक्चक्रवर्ती सत्कीर्तिर्महोज्ज्वलचरित्रवान् ॥ १४ ॥
अनेकक्षितिपश्रेणीमूर्धासक्तपदांबुजः ॥
विप्रदारिद्र्यदावाग्निर्भूदेवाग्निप्रपूजकः ॥ १५ ॥
गोब्राह्मणप्राणरक्षापरः सत्यपरायणः ॥
प्रियश्रुतिपथः शश्वन्महामखकरः प्रभुः ॥ १६ ॥
कृष्णानुग्रहसंलभ्यो महापतितपावनः ॥
अनेकमार्गसंक्लिष्टजीवस्वास्थ्यप्रदो महान् ॥ १७ ॥
नानाभ्रमनिराकर्ता भक्ताज्ञानभिदुत्तमः ॥
महापुरुषसत्ख्यातिर्महापुरुषविग्रहः ॥ १८ ॥

दर्शनीयतमो'वाग्मी मयावादनिरासकृत् ॥
सदा प्रसन्नवदनो मुग्धस्मितमुखांबुदः ॥ १९ ॥
प्रेमार्द्रदृग्विशालाक्षः क्षितिमंडलमंडनः ॥
त्रिजगद्व्यापिसत्कीर्तिर्धवलीकृतमेचकः ॥ २० ॥
वाक्सुधाकृष्टभक्तांतःकरणः शत्रुतापनः ॥
भक्तसंप्रार्थितकरो दासदासीप्सितकृद्ः ॥ २१ ॥
अचिंत्यमहिमाऽमेयो विस्मयास्पदविग्रहः ॥
भक्तक्लेशासहः सर्वसहो भक्तकृते वशः ॥ २२ ॥
आचार्यरत्नं सर्वानुग्रहकृन्मंत्रवित्तमः ॥
सर्वस्वदानकुशलो गीतसंगीतसागरः ॥ २३ ॥
गोवर्धनाचलसखो गोपगोगोपिकाप्रियः ॥
चिंतितज्ञो महाबुद्धिर्जगद्वंद्यपदांबुजः ॥ २४ ॥
जगदाश्चर्यरसकृत्सदाकृष्णकथाप्रियः ॥
सुखोदर्ककृतिः सर्वसंदेहच्छेददक्षिणः ॥ २५ ॥
स्वपक्षरक्षणे दक्षः प्रतिपक्षक्षयंकरः ॥
गोपिकाविरहाविष्टः कृष्णात्मा स्वसमर्पकः ॥ २६ ॥
निवेदितस्वसर्वस्वः शरणाध्वप्रदर्शकः ॥
श्रीकृष्णानुगृहीतैकप्रार्थनीयपदांबुजः ॥ २७ ॥
इमानि नामरत्नानिश्रीविट्ठलपदांबुजम् ॥

ध्यात्वा तदेकशरणो यः पठेत्स हरिं लभेत् ॥२८॥
यद्यन्मनस्यभिध्यायेत्तत्तदाप्नोत्यसंशयम् ॥
नामरत्नाभिधमिदं स्तोत्रं यः प्रपठेत्सुधीः ॥ २९ ॥
तदीयत्वं गृहाणाशु प्रार्थ्यमेतन्मम प्रभो ॥
श्रीविठ्ठलपदांभोजमकरंदजुषोऽनिशम् ॥
इयं श्रीरघुनाथस्य कृतिर्विजयतेतराम् ॥ ३० ॥

इति श्रीरघुनाथ (जी) विरचितं नामरत्नाख्यं स्तोत्रं संपूर्णम् ।

## अथ नामचिंतामणिस्तोत्रम् ।

श्रीकृष्णाय नमः ।

यन्नामाब्जोदयेनैव दारहृत्कुमुदावली ॥
तन्नामाष्टाधिकशतं वदामि शिशिरीकृता ॥ १ ॥
प्राकृतं दिनजं दुःखमश्नतां संप्रसारणात् ॥
हतं तदज्ञानतमस्तत्प्रजाप्यधरीकृता ॥ २ ॥
ऋषिः श्रीरघुनाथश्चाऽनुष्टुप् छंद इहोच्यते ॥
बीजं श्रीकृष्णदेवश्च राधुनाथिश्च देवता ॥ ३ ॥
निवेदनांतसिद्ध्यर्थं विनियोगः प्रकीर्तितः ॥
शक्तिः श्रीराधिकाकांतो नीलमेघातिसुंदरः ॥ ४ ॥
देवकीनंदनः श्रीमाञ्जानकीगर्भसंभवः ॥

रघुनाथात्मजः पुण्यो भक्तपांघ्रिसरोरुहः ॥ ५ ॥
श्रीमन्नंदात्मभूभक्तिदर्शको ह्यतिसुंदरः ॥
विठ्ठलेशकरांभोजसंलालितमुखांबुजः ॥ ६ ॥
श्रीमद्वल्लभसंभूतमार्गदो भक्तसेवितः ॥
गोपालादिषु संभूतदयः प्रेमाब्धिरत्नदः ॥ ७ ॥
शृंगारोदधिमग्नानामुद्धर्ता सर्वशक्तिदः ॥
गोपस्त्रीभावसंतुष्टो गोकुलाधीशहार्दवित् ॥ ८ ॥
चंद्रावलीप्राणपतिर्देवपूज्यो दयानिधिः ॥
कृपालुर्मोहसंतुष्टो भक्तपीयूषसेचकः ॥ ९ ॥
कृष्णैकदैवतः सत्यवक्ता भक्तसुखप्रदः ॥
सर्वकामप्रदः श्रीशः सर्वज्ञः कंजलोचनः ॥ १० ॥
अतिगंभीरकथनो मोहिताखिलसज्जनः ॥
प्रसन्नास्यः कृपासिंधुर्भक्तक्लेशनिवारकः ॥ ११ ॥
अचिंत्यमानो यो गीर्भिर्ज्ञानिमोहप्रवर्तकः ॥
चिंतिताखिलकर्ता च सुप्रसन्नकलेवरः ॥ १२ ॥
गोगोपगोपिकाधीशप्रियः श्रीकृष्णवर्त्मवित् ॥
महामनीषः सद्वृत्तः संप्रार्थितकरो विभुः ॥ १३ ॥
अदेयवस्तुदाता च दक्षिणो जगदाश्रयः ॥
सर्वमार्गनिराकर्ता भक्तदुःखातिकातरः ॥ १४ ॥

श्रुतिस्मृतिपुराणेतिहासवेत्तोद्धतोद्धतः ॥
श्रीकृष्णकोशस्तन्मार्गकमले सुमधुव्रतः ॥ १५ ॥
प्रियवृंदावनः कामकोटिमोहनविग्रहः ॥
स्वीयेष्टबालबोधार्थप्रकाशनपरायणः ॥ १६ ॥
श्रीभागवततत्त्वार्थज्ञाता मित्रसुताप्रियः ॥
धृतगोवर्धनाधीशो देवो ह्युदितसद्गुणः ॥ १७ ॥
शरणागतभक्तानां त्राता कलिमलापहः ॥
आचार्यकुलपीयूषपारावारतमीपतिः ॥ १८ ॥
शरण्यपदपद्मश्रीर्जगदानंददायकः ॥
अभयेष्टप्रदाता च भक्तदोषहरः प्रभुः ॥ १९ ॥
स्वभक्ताज्ञानभेत्ता च नानारसफलप्रदः ॥
गोपालाद्यग्रजे सर्वस्वदानकुशलः कृती ॥ २० ॥
ईप्सितार्थप्रदाता च महोदारचरित्रवान् ॥
मायावादतमःपुंजनिराकरणभास्करः ॥ २१ ॥
कलिकल्मषसंहर्ता व्रजवासिसुखालयः ॥
यमुनाष्टककर्ता च स्वीयवंद्यपदांबुजः ॥ २२ ॥
संगीतादिसदासक्तः पूतात्मा पुरुषोत्तमः ॥
सुखसेव्यः प्रतापी च रसाब्धिकरणक्षमः ॥ २३ ॥
वाग्सुधासिक्तभक्तौघहृदयः कुलमंडनः ॥

प्रतिपक्षाब्धिवडवानलः कल्याणकारकः ॥ २४ ॥
संसारपोषको देवः सच्चिदानंदविग्रहः ॥
द्विजराजसुकर्मा च सर्वतीर्थकरोऽजयः ॥ २५ ॥
षड्गुणैश्वर्यसंपन्नः सूत्रभाष्यार्थभाववित् ॥
महाबुद्धिश्चक्रवर्ती कृष्णात्मा भक्तवत्सलः ॥ २६ ॥
अनंतकीर्तिः सद्व्याप्तिः सर्वशास्त्रार्थदर्शकः ॥
नित्यानंदः सर्वरूपो नीलकंठसुखस्थितिः ॥ २७ ॥
राधिकापतिसंसर्गो रसदानैकदीक्षितः ॥
तस्माच्छ्रीकृष्णदेवस्य सद्दशतं मयाकृतम् ॥ २८ ॥
नामचिंतामणिस्तोत्रं प्रोक्तं यस्तु पठेन्नरः ॥
प्रातरुत्थाय सुमनाः स याति परमां गतिम् ॥ २९ ॥
नामचिंतामणीनां तु देवकीनंदनस्य वै ॥
सम्यक् प्रोक्ता मया माला तदीयानां कृते कलौ॥३०॥
चरंतु सुखिता भूत्वा तां गृहीत्वा दयानिधेः ॥
स्वीयानां प्रेमयुक्तानां सिद्धिरत्र न संशयः ॥ ३१ ॥
रघुनाथपदांभोजं भक्त्या नत्वा विचारितम् ॥
तस्मादनन्यभक्तानां बुद्धिर्भवतु मत्कृतौ ॥ ३२ ॥
इति श्रीरघुनाथ ( जी ) कृतं नामचिंतामणिनामकं स्तोत्रं संपूर्णम् ॥

# अथ श्रीगोकुलेशाष्टकम् ।

श्रीकृष्णाय नमः ।

नंदगोपभूपवंशभूषणं विदूषणंभूमिभूतिभूरिभाग्यभाजनं भयापहम्॥धेनुधर्मरक्षणावतीर्णपूर्णविग्रहं नीलवारिवाहकांतिगोकुलेशमाश्रये ॥१॥ गोपबालसुंदरीगणावृतं कलानिधिं रासमंडलीविहारकारिकामसुंदरम्॥ पद्मयोनिशंकरादिदेववृंदवंदितं नीलवारिवाहकांतिगोकुलेशमाश्रये॥२॥ गोपराजरत्नराजिमंदिरानुरिंगणं गोपबालबालिकाकलानुरुद्धगायनम् ॥ सुंदरीमनोजभावभाजनांबुजाननं नीलवारिवाहकांतिगोकुलेशमाश्रये ॥ ३ ॥ कंसकेशिकुंजराजदुष्टदैत्यदारणं चेंद्रसृष्टवृष्टिवारिवारणोद्धृताचलम् ॥ कामधेनुकारिताभिधानगानशोभितं नीलवारिवाहकांतिगोकुलेशमाश्रये॥४॥ गोपिकागृहांतगुप्तगव्यचौर्यचंचलं दुग्धभांडभेदभीतलज्जितास्यपंकजम् ॥ धेनुधूलिधूसरांगशोभिहारनूपुरं नीलवारिवाहकांतिगोकुलेशमाश्रये ॥५॥ वत्सधेनुगोपबालभीषणास्यवह्निपं केकिपिच्छकल्पितावतंसशोभिताननम् ॥ वेणुवाद्यमत्तघोषसुंदरीम-

१ कुंजरादि. २ भीनि. ३ भीषणोत्य.

नोहरं नीलवारिवाहकांतिगोकुलेशमाश्रये ॥ ६ ॥ गर्वितामरेंद्रकल्पकल्पितान्नभोजनं शारदारविंदवृंदशोभिहंसजारतम् ॥ दिव्यगंधलुब्धभृंगपारिजातमालिनं नीलवारिवाहकांतिगोकुलेशमाश्रये ॥ ७ ॥ वासरावसानगोष्ठगामिगोगणानुगं धेनुदोहदेहगेहमोहविस्मयक्रियम् ॥ स्वीयगोकुलेशदानदत्तभक्तरक्षणं नीलवारिवाहकांतिगोकुलेशमाश्रये ॥ ८ ॥

इति श्रीरघुनाथ (जी) कृतं श्रीगोकुलेशाष्टकं संपूर्णम् ।

## अथ श्रीगिरिधार्यष्टकम् ।

श्रीकृष्णाय नमः ।

त्रैलोक्यलक्ष्मीमदभृत्सुरेश्वरो यदा घनैरंतकरैर्ववर्ष ह ॥ तदाऽकरोद्यः स्वबलेन रक्षणं तं गोपबालं गिरिधारिणं भजे ॥ १ ॥ यः पाययंतीमधिरुह्य पूतनां स्तन्यं पपौ प्राणपरायणः शिशुः ॥ जघान वातायितदैत्यपुंगवं तं गोपबालं गिरिधारिणं भजे ॥ २ ॥ नंदव्रजं यः स्वरुचेंदिरालयं चक्रे दिवीशां दिवि मोहवृद्धये ॥ गोगोपगोपीजनसर्वसौख्यकृत्तं गोपबालं गिरिधारिणं भजे ॥ ३ ॥ यं कामदोग्भी गगनाहृतैर्जलैः

१ दस.

स्वज्ञातिराज्ये मुदिताभ्यषिंचत् ॥ गोविंदनामोत्सवकृद्व्रजौकसां तं गोपबालं गिरिधारिणं भजे ॥ ४ ॥ यस्याननाब्जं व्रजसुंदरीजना दिनक्षये लोचनषट्पदैर्मुदा ॥ पिबंत्यधीरा विरहातुरा भृशं तं गोपबालं गिरिधारिणं भजे ॥ ५ ॥ वृंदावने निर्जरवृंदवंदिते गाश्चारयन्यः कलवेणुनिःस्वनः ॥ गोपांगनाचित्तविमोहमन्मथस्तं गोपबालं गिरिधारिणं भजे ॥ ६ ॥ यः स्वात्मलीलारसदित्सया सतामाविश्चकाराऽग्निकुमारविग्रहम् ॥ श्रीवल्लभाध्वानुसृतैकपालकस्तं गोपबालं गिरिधारिणं भजे ॥ ७ ॥ गोपेंद्रसूनोर्गिरिधारिणोऽष्टकं पठेदिदं यस्तदनन्यमानसः ॥ स मुच्यते दुःखमहार्णवाद्भृशं प्राप्नोति दास्यं गिरिधारिणो ध्रुवम् ॥ ८ ॥ प्रणम्य संप्रार्थयते तवाग्रतस्त्वदंघ्रिरेणुं रघुनाथनामकः ॥ श्रीविठ्ठलानुग्रहलब्धसन्मतिस्तत्पूरयैतस्य मनोरथार्णवम् ॥ ९ ॥

इति श्रीरघुनाथ (जी) कृतं श्रीगिरिधार्यष्टकं सम्पूर्णम् ।

## अथ श्रीकृष्णचंद्राष्टकम् ।

श्रीकृष्णाय नमः ।

महानीलमेघातिभव्यं सुहासं शिवब्रह्मदेवादिभिः संस्तुतं च ॥ रमामंदिरं देवनंदापदार्हं भजे राधिकाव-

ल्लभं कृष्णचंद्रम् ॥१॥ रसं वेदवेदांतवेद्यं दुरापं सुगम्यं तदीयादिभिर्दानवघ्नम् ॥ चलत्कुंडलं सोमवंशप्रदीपं भजे राधिका वल्लभं कृष्ण चंद्रम् ॥२॥ यशोदादिसंलालितं पूर्णकामं दृशोरंजनं प्राकृतस्थस्वरूपम् ॥ दिनांते समायांतमेकांतभक्तैर्भजे राधिकावल्लभं कृष्णचंद्रम् ॥३॥ कृपादृष्टिसंपातसिक्तस्वकुंजं तदंतःस्थितस्वीयसख्यङ्कदशादम् ॥ पुनस्तत्र तैः सत्कृतैकांतलीलं भजे राधिकावल्लभं कृष्णचंद्रम् ॥ ४ ॥ गृहे गोपिकाभिर्धृते चौर्यकाले तदक्ष्णोश्च निक्षिप्य दुग्धं चलंतम् ॥ तदा तद्वियोगादिसंपत्तिकारं भजे राधिकावल्लभं कृष्णचंद्रम् ॥ ५ ॥ चलत्कौस्तुभव्याप्तवक्षःप्रदेशं महावैजयंतीलसत्पादयुग्मम् ॥ सुकस्तूरिकादीप्तभालप्रदेशं भजे राधिकावल्लभं कृष्णचंद्रम् ॥ ६ ॥ गवां दोहने दृष्टराधामुखाब्जं तदानीं च तन्मेलनव्यग्रचित्तम् ॥ समुत्पन्नतन्मानसैकांतभावं भजे राधिकावल्लभं कृष्णचंद्रम् ॥ ७ ॥ अदः कृष्णचंद्राष्टकं प्रेमयुक्तः पठेत्कृष्णसान्निध्यमाप्नोति नित्यम् ॥ कलौ यः स संसारदुःखातिरिक्तं प्रयात्येव विष्णोः पदं निर्भयं तत् ॥८॥

इति श्रीरघुनाथ (जी) कृतं कृष्णचंद्राष्टकं सम्पूर्णम् ॥

# अथ गोपालस्तवः ।

श्रीकृष्णाय नमः ।

येन मीनस्वरूपेण वेदाः संरक्षिताः पुरा ॥
स एव वेदसंहर्ता गोपालः शरणं मम ॥ १ ॥
पृष्ठे यः कूर्मरूपेण दधार धरणीतलम् ॥
स एव सृष्टिसंहर्ता गोपालः शरणं मम ॥ २ ॥
वराहरूपः संभूत्या दंष्ट्राग्रे यो महीं दधौ ॥
स भूमिभारहरणो गोपालः शरणं मम ॥ ३ ॥
जग्राह यो नृसिंहस्य रूपं प्रह्लादहेतवे ॥
स योद्धुमुद्यतः सम्यग्गोपालः शरणं मम ॥ ४ ॥
येन वामनरूपेण वंचितो बलिभूमिपः ॥
स एव गोपनारीभिर्गोपालः शरणं मम ॥ ५ ॥
येनेयं जामदग्न्येन पृथ्वी निःक्षत्रिया कृता ॥
स एव क्षत्रियहितो गोपालः शरणं मम ॥ ६ ॥
दशास्यो दाशरथिना येन रामेण मारितः ॥
स पंचास्यप्रासबलो गोपालः शरणं मम ॥ ७ ॥
कालिंदी कर्षिता येन रामरूपेण कौतुकात् ॥
तज्जलक्रीडनासक्तो गोपालः शरणं मम ॥ ८ ॥
येन बौद्धस्वरूपेण लोकाः पाखंडमार्गगाः ॥

स एव पाखंडहरो गोपालः शरणं मम ॥ ९ ॥
गमिष्यंति क्षयं येन राक्षसाः कल्किरूपिणा ॥
स रक्षसां गतेर्दाता गोपालः शरणं मम ॥ १० ॥
गोवर्धनो गिरिर्येन स्थापितः कंजवत्करे ॥
उलूखलेन सहितो गोपालः शरणं मम ॥ ११ ॥
एकादशस्वीयधाम्नामावलिं यो लिखेद्धृदि ॥
कृष्णप्रसादयुक्तश्च स याति परमां गतिम् ॥ १२ ॥

इति श्रीरघुनाथ ( जी ) कृतो गोपालस्तवः सम्पूर्णः ।

## अथ राघवेंद्रस्तोत्रम् ।

श्रीकृष्णाय नमः ।

द्विजश्रेष्ठसद्भक्तियुक्तं प्रसन्नं सदा देयदानादिभिः संयुतं च ॥ कलावेकपत्नीव्रतं सौम्यरूपं भजे जानकीनायकं राघवेंद्रम् ॥ १ ॥ पुरा दुर्दशास्ये कृतात्यंतकोपं तदानीं च तद्भ्रातृसंदत्तराज्यम् ॥ हृदा धर्मगेनाऽनृतव्यग्रचित्तं भजे जानकीनायकं राघवेंद्रम् ॥ २ ॥ ज्वलत्स्वर्णतुल्यस्वकांतिं प्रशांतं कुले भानुवत्तेजसाच्छादितान्यम् ॥ महानेत्रयुग्मेन संनिर्जिताब्जं भजे जानकीनायकं राघवेंद्रम् ॥ ३ ॥ सुधादृष्टिसंपातसिक्तस्वभक्तं भवांभोधिमग्नोद्धृतौ कर्णधा-

रम् ॥ तदंतःस्थपापप्रणाशे बलिष्ठं भजे जानकीनायकं राघवेंद्रम् ॥ ४ ॥ पुरि द्वारकायां च दुष्टप्रवृत्तिक्षतौ स्वस्वरूपप्रकाशे समर्थम् ॥ पुनस्तेन संभूतवाणीविलासं भजे जानकीनायकं राघवेंद्रम् ॥ ५ ॥ प्रतापे दिनेशं च दाने महेशं समस्तासु विद्यासु वाचस्पतिं च ॥ स्वरूपे समासक्तकंदर्पचित्तं भजे जानकीनायकं राघवेंद्रम् ॥६॥ सदा वल्लभाचार्यमार्गे प्रसक्तं पुनस्तत्कृतग्रंथसम्यग्विवृत्त्या ॥ प्रसिद्धं च तत्पादपद्मे नतांगं भजे जानकीनायकं राघवेंद्रम्॥७॥ समस्तेषु तीर्थेषु सम्यग्व्यवस्थं तदुत्थेन धर्मेण संपत्तियुक्तम् ॥ सदा संततिप्राप्तसम्यक्सुखाब्धिं भजे जानकीनायकं राघवेंद्रम् ॥ ८ ॥ कलौ राघवेंद्राष्टकं संपठेद्यो यदा प्रीतियुक्तः स संसारदूरम् ॥ प्रयात्येव गोवर्धनाद्रेः समीपं तदा तत्सुशृंगस्थकेलिव्रजेशम् ॥ ९ ॥

इति श्रीरघुनाथ (जी) कृतं राघवेंद्राष्टकं संपूर्णम् ।

## अथ श्रीयमुनाष्टकम् ।

श्रीकृष्णाय नमः ।

यया तमीशवंशजः समार्पितो बृहद्वनं मरुन्मलज्जलप्रभूतवीचिविप्रुषां मिपात् ॥ तदंघ्रिकंजभक्तियुक्तया-

सुदत्तमार्गया कलौ कलिंदनंदिनी कृपाकुलं करोतु नः ॥ १ ॥ यदंबुपानमात्रतोऽतिभक्तियुक्तचेतसां कृतैनसामहो निजस्वभावतः कृपायुता ॥ प्रधाव्य धर्मराजतो महद्भयं निवर्त्य सा कलौ कलिंदनंदिनी कृपाकुलं करोतु नः ॥ २ ॥ यदीयनीरकेलितो दधार नंदनंदनः समस्तसुंदरीजने स्वभावमद्भुतं मुदा ॥ परस्परावलोकनं विवर्धयन्सुदृष्टितः कलौ कलिंदनंदिनी कृपाकुलं करोतु नः ॥ ३ ॥ यदंघ्रिफुल्लकंजसेवनप्रभावतः सदा समस्तभक्तसंग्रहं पुनाति सा जगत्त्रयम् ॥ गिरीशधारिसंगमं प्रबोधयत्सुखप्रदं कलौ कलिंदनंदिनी कृपाकुलं करोतु नः ॥ ४ ॥ यया पदश्च दूरतो ज्वलंति संपदः सदा वसंति नंदनंदने दृढा रतिश्च जायते ॥ महाष्टसिद्धिदाप्यशेषघोरपापसंक्षयात्कलौ कलिंदनंदिनी कृपाकुलं करोतु नः ॥ ५ ॥ यदंकतो विनिःसृतस्य पापिनोऽपि शोभया जगत्त्रयं विमोहितं तदीयकांतियुक्तया ॥ प्रफुल्लसारसा प्रभूतरुद्रदेवसंस्तुता कलौ कलिंदनंदिनी कृपाकुलं करोतु नः ॥ ६ ॥ यदीयभक्तसेवने कृते हरिः प्रसन्नतामवाप गोपिकापतिः समस्तकामदायिनी ॥

तदंबुमध्यखेलनप्रभूतभावलज्जितः कलौ कलिंदनंदिनी कृपाकुलं करोतु नः ॥ ७ ॥ यदंतिकस्थवालुकाः प्रयांति यत्र भूतले गृहेगृहे वसत्यसौ हरिस्तदन्वगश्च सा ॥ यदा तदा सदैव तत्र भक्तवृंदवंदिता कलौ कलिंदनंदिनी कृपाकुलं करोतु नः ॥ ८ ॥ हरिप्रिये तवाष्टकं सदा पठेत्स शुद्धधीर्य एव गोकुलाधिपस्य लेढि संगमं शुभम् ॥ पुनः प्रयाति तत्सुखं तटस्थरासमंडलस्थितस्त्रिभंगिमोहनं दधाति तद्विचेष्टितम् ॥ ९ ॥

इति श्रीरघुनाथ (जी) कृतं यमुनाष्टकं संपूर्णम् ।

## अथ नामकौस्तुभस्तोत्रम् ।

श्रीकृष्णाय नमः ।

यदंघ्रिकंजविलसदलित्वं प्राप मे मनः ॥
तं विठ्ठलमहं वंदे श्रीवल्लभतनूद्भवम् ॥ १ ॥
यन्नामनावमारुह्य भवाब्धिमतरन्निजाः ॥
तस्याहं संप्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ॥ २ ॥
छंदोऽनुष्टुप् ऋषिः कर्ता देवो गोपीजनप्रियः ॥....
कामार्तो बीजमेकांतनिष्ठो गोपालनंदनः ॥ ३ ॥
शक्तिः श्रीराधिकाकांतो नीलमेघातिसुंदरः ॥

उग्रो जगद्गुरुः पूज्यो भक्तध्येयांघ्रिपंकजः ॥
आकर्णकंजनयनस्तत्पाताद्दृतसेवकः ॥ २४ ॥
अचिंत्यमहिमा ज्ञानकर्ममार्गातिरिक्तदः ॥
प्रतिपक्षाब्धिवडवानलः कल्याणकारकः ॥ २५ ॥
स्थापितब्रह्मवादैकपक्षः परमसुंदरः ॥
निस्तारिततिलंगाख्यदेशोऽतिचतुरो विभुः ॥ २६ ॥
श्रीरुक्मिणीपतिः श्रीदः कुलीनः सर्ववल्लभः ॥
पद्मावतीप्राणनाथः सर्वलोकैकमंडनः ॥ २७ ॥
श्रीमत्पुराणपुरुषप्राणसंतोषकारकः ॥
भुवि प्रसिद्धगोपीशस्तत्पादासक्तमानसः ॥ २८ ॥
लौकिकालौकिकार्थादिदाता कालात्मवर्जितः ॥
संसारसागरावर्तमग्नजीवोद्धृतिक्षमः ॥ २९ ॥
ब्रह्मानंदमयः पूर्णः कालिंदीवल्लभप्रियः ॥
व्रजप्रियोव्रजासक्तो हरिवक्त्राब्जसंभवः ॥ ३० ॥
श्रीमद्राधापतिपदांभोजयुग्मावलंबकः ॥
सर्वस्वीयनियंता च भगवन्मर्मवित्स्तुतः ॥ ३१ ॥
श्रुतिस्मृतिपुराणेतिहासवेत्ता ऽतापवान् ॥

प्राप्नुवंति रतिकुंजमंडपे तद्वचःश्रवणयोग्यतां पुनः॥३३
हृदये धार्यते येन नामकौस्तुभभूषणम् ॥
स भक्तः कृष्णतुल्यात्मा दृश्यते सर्वभूतले ॥ ३४ ॥
जन्मजन्मसु गोपालोपासनं यैः कृतं पुरा ॥
नामकौस्तुभसारस्यं ज्ञातुं तेऽत्राधिकारिणः ॥ ३५ ॥
भर्गावलंबकः केचित्केचिच्छत्तयवलंबकाः ॥
वयं तु विठ्ठलेशस्य दासदासावलंबकाः ॥ ३६ ॥
इति श्रीरघुनाथ (जी) प्रोक्तं श्रीनामकौस्तुभस्तोत्रं संपूर्णम् ।
॥ गोस्वामिदेवकीनंदनात्मजश्रीरघुनाथ (जी) कृतमंथाः ॥

## तत्र विठ्ठलस्तोत्रम् ।

श्रीकृष्णाय नमः ।

श्रीमद्वल्लभसागरसमुदितकुमुदौघजीवदानपरः ॥
विश्वसमुद्धृतदीनो जगति श्रीविठ्ठलो जयति ॥ १ ॥
मायावादतमःकुलनाशनकरणे प्रसिद्धदिननाथः ॥
अपरः कृष्णावतारो जगति श्रीविठ्ठलो जयति ॥२॥
श्रीमद्गिरिधरपदयुगसेवनपरिनिष्ठहृत्सरोजश्च ॥
वंशस्थापितमहिमा जगति श्रीविठ्ठलो जयति ॥३॥
श्रीमद्गोकुलहिमरुचिरुचिकरलब्धैकसच्चकोरपदः ॥
परिलसदद्भुतचरितो जगति श्रीविठ्ठलो जयति ॥४॥
शारदचंद्रसमानः शिशिरीकृतदग्धसकललोकः ॥

विद्याजितसुरवंद्यो जगति श्रीविठ्ठलो जयति ॥५॥
गोवर्धनधरमिलनत्यागविधानेऽतिकातरः सुभगः ॥
प्रकटितपुष्टिजभक्तिर्जगति श्रीविठ्ठलो जयति ॥६॥
यज्ञविधायकचेताः सकलप्रतिपक्षसिंधुवडवाग्निः ॥
कुंडलशोभितगल्लो जगति श्रीविठ्ठलो जयति ॥७॥
पालितभक्तसमाजो व्रजभुवि विशदीकृतैकनवरत्नः॥
वासितगोकुलनगरो जगति श्रीविठ्ठलो जयति ॥८॥
नित्यं स्तोत्रवरं तद्भक्तिनियुक्तः पठेत् स्वकीयेष्टम् ॥
परमपदं लभते स च यः किल निष्ठोऽपि विठ्ठलस्येदम्॥

इति श्रीमद्देवकीनंदनात्मजश्रीरघुनाथ (जी) कृतं
विठ्ठलस्तोत्रं संपूर्णम् ।

## अथ श्रीकृष्णशरणाष्टकम् ।

श्रीकृष्णाय नमः ।

द्विदलीकृतदृक्स्वास्यः पन्नगीकृतपन्नगः ॥
कृशीकृतकृशानुश्च श्रीकृष्णः शरणं मम ॥ १ ॥
फलीकृतफलार्थी च कुपूतीकृतकौरवः ॥
निर्वातीकृतवातारिः श्रीकृष्णः शरणं मम ॥ २ ॥
कृतार्थीकृतकुंतीजः अपूतीकृतपूतनः ॥
कलंकीकृतकंसादिः श्रीकृष्णः शरणं मम ॥ ३ ॥

सुखीकृतसुदामा च शंकरीकृतशंकरः ॥
सितीकृतसरिन्नाथः श्रीकृष्णः शरणं मम ॥ ४ ॥
छलीकृतबलिद्यौर्यो निधनीकृतधेनुकः ॥
कंदर्पीकृतकुब्जादिः श्रीकृष्णः शरणं मम ॥ ५ ॥
महेंद्रीकृतमाहेयः शिथिलीकृतमैथिलः ॥
आनंदीकृतनंदाद्यः श्रीकृष्णः शरणं मम ॥ ६ ॥
वराकीकृतराकेशो विपक्षीकृतराक्षसः ॥
संतोषीकृतसद्भक्तः श्रीकृष्णः शरणं मम ॥ ७ ॥
जरीकृतजरासंधः कमलीकृतकार्मुकः ॥
प्रभ्रष्टीकृतभीष्मादिः श्रीकृष्णः शरणं मम ॥ ८ ॥
श्रीकृष्णः शरणं ममाष्टकमिदं प्रोत्थाय यः संपठेत्स श्रीगोकुलनायकस्य पदवीं संयाति भूमीतले ॥ पश्यत्येव निरंतरं तरणिजातीरस्थकेलिं प्रभोः संप्राप्नोति तदीयतां प्रतिदिनं गोपीशतैरावृताम् ॥ ९ ॥

इति श्रीदेवकीनंदनात्मजश्रीरघुनाथ (जी) कृतं श्रीकृष्णशरणाष्टकं संपूर्णम् ।

## अथ राधाकृष्णाष्टकम् ।

श्रीकृष्णाय नमः ।

यः श्रीगोवर्धनाद्रिं सकलसुरपतिं त्रस्तगोगोपवृंदं
स्वीयं संरक्षितुं चेत्यमरसुखकरं मोहयन् संदधार ॥

तन्मानं खंडयित्वा विजितरिपुकुलो नीलधाराधराभः कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ १ ॥ यं दृष्ट्वा कंसभूपः स्वकृततितिमहो संस्मरन्मंत्रिवर्यान्किं वाऽपूर्वं मयेदं कृतमिति वचनं दुःखितः प्रत्युवाच ॥ आज्ञप्तो नारदेन स्मितयुतवदनः पूरयन्सर्वकामान् कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ २ ॥ येन प्रोद्यत्प्रतापा नृपतिकुलभवाः पांडवाः कौरवाब्धिं तीर्त्वा पारं तदीयं जगदखिलनृणां दुस्तरं चेति जग्मुः ॥ तत्पत्नीचीरवृद्धिप्रविदितमहिमा भूतले भूपतीशः कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ३ ॥ यस्मै चोद्धृत्य पात्राद्दधियुतनवनीतं करैर्गोपिकाभिर्दत्तं तद्भावपूर्तौ विनिहितहृदयः सत्यमेवं निरोधात् ॥ मुक्तागुंजावलीभिः प्रचुरतमरुचिः कुंडलाक्रांतगंडः कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ४ ॥ यस्माद्विश्वाभिरामादिह जननविधौ सर्वनंदादिगोपाः संसारार्तेर्विमुक्ताः सकलसुखकराः संपदः प्रापुरेव ॥ इत्थं पूर्णेंदुवक्त्रः कलकमलदृशः स्वीयजन्म स्तुवंतः कृष्णो राधासमेतो

विलसतु हृदये सोऽस्मदीये सदैव ॥ ५ ॥ यस्य श्रीनंदसूनोर्व्रजयुवतिजनाश्चागता भर्तृपुत्रांस्त्यक्त्वा श्रुत्वा समीपे विचकितनयनाः सप्रमोदाः स्वगेहे ॥ रंतुं रासादिलीला मनसिजदलिता वेणुनादं च रम्यं कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ६ ॥ यस्मिन् दृष्टे समस्ते जगति युवतयः प्राणनाथव्रता यास्ता अप्येवं हि नूनं किमपि च हृदये कामभावं दधत्यः ॥ तत्स्नेहार्द्रं वपुश्चेदविदितधरणौ सूर्यबिंबस्वरूपाः कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ७ ॥ यः स्वीये गोकुलेऽस्मिन्विदितनिजकुलोद्भूतबालैः समेतो मातर्येवं चकार प्रसृततमगुणान्बाललीलाविलासान् ॥ हत्वा वत्सप्रलंबद्विविदबकखरान्गोपवृंदं जुगोप कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ८ ॥ कृष्णराधाष्टकं प्रातरुत्थाय प्रपठेन्नरः ॥ य एव सर्वदा नूनं स प्राप्नोति परां गतिम् ॥ ९ ॥

इति श्रीमद्देवकीनंदनात्मजरघुनाथ ( जी )
कृतं राधाकृष्णाष्टकं संपूर्णम् ।

---

॥ श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरे

## गोस्वामिश्रीहरिराय (जी) कृतग्रंथाः ।

## तत्र प्रातःस्मरणम् ।

श्रीकृष्णाय नमः ।

प्रातः स्मरेद्भगवतो वरविठ्ठलस्य पादारविंदयुगलं सकलार्थसिद्ध्यै ॥ यो वै वितर्कतमसा विहितं स्वभक्तं प्रीतः शमादिनपुरोदिततिग्मरश्मिः ॥ १ ॥ प्रातः स्मरेन्नमननिर्वृतिदं मुरारेः पूर्णावतारवरविठ्ठलपादपद्मम् ॥ मायाविकृत्यगहनं गतबंधुलोके यो वै स्वमार्गमनयत्कृपया प्रपन्नम् ॥ २ ॥ प्रातर्भजेदमलमूर्तिमनंतशक्तेः श्रीविठ्ठलस्य जनतापहरस्य नित्यम् ॥ यो वै जनस्य शतजन्मकृतापराधं पादानतस्य कृपयाऽपनुनोद सत्यम् ॥ ३ ॥ प्रातर्नता भजत भक्तजनाः सशिष्या नारायणं नरवरं द्विजविठ्ठलेशम् ॥ धर्मार्थकामभवमोक्षदमंहसोऽरिं संसारदुःखशमनं गुरुमादिदेवम् ॥ ४ ॥ प्रातर्जना गदत नाम नरोत्तमस्य श्रीविठ्ठलस्य हरिवल्लभवल्लभस्य ॥ इष्टार्थदं सुख-

करं मतिमानदं च सर्वाघशोकशमनं गदतो नरस्य ॥ ५ ॥ यः श्लोकपंचकमिदं सततं पठेच्चेत्स स्यात्सुखी सुविषयी विदुषां वरिष्ठः ॥ देवोपदेवगणभीतिहरं च हारं सर्वावतारशमनं हरितोषणं च ॥ ६ ॥

इति श्रीविठ्ठलेश्वराणां प्रातःस्मरणस्तोत्रं संपूर्णम् ।

## अथ श्रीगुरुदेवाष्टकम् ।

श्रीकृष्णाय नमः ।

पुष्टिमार्गीयसर्वज्ञः करुणारसपूरितः ॥
श्रेष्ठः फलप्रदाता च तस्मै श्रीगुरवे नमः ॥ १ ॥
दैवजीवसमुद्धर्ता आनंदमयविग्रहः ॥
ध्येयोऽसि मे सदा स्वामिन् रसिकैकशिरोमणिः ॥२॥
प्रतिबंधनिराकर्ता पुष्टिज्ञानप्रदीपकः ॥
सर्वसिद्धांतवक्ता च दीनदुःखासहः प्रभुः ॥ ३ ॥
सर्वदोषप्रहंता च सर्वातीतसुखप्रदः ॥
बुद्धिप्रेरकभावात्मा नमामि तमहं गुरुम् ॥ ४ ॥
स्वरूपज्ञानशून्यस्य कृपया निखिलाघहृत् ॥
कार्यमात्रसमर्थात्मा निजनाथ नमोनमः ॥ ५ ॥
रसमग्नो भग्नदुःखः सर्वदानविलक्षणः ॥
सर्वांगसुंदर विभो रतिनाथविमोहनः ॥ ६ ॥

भक्तिप्रियो भावगम्यो रसज्ञो रसदायकः ॥
अतिमाधुर्यनिचयो दुर्लभो भावबोधकः ॥ ७ ॥
अनन्यधर्मदाता च व्यभिचारनिवारकः ॥
शरणागतसंत्राता कालादिभयनाशकः ॥ ८ ॥
श्रीविठ्ठलप्राप्तिकर्ता निजदासावलंकःश्च ॥ ९ ॥

इति श्रीनिजदासविरचितं गुरुदेवाष्टकं समाप्तम् ।

## अथ श्रीनवनीतप्रियाष्टकम् ।

श्रीकृष्णाय नमः ।

अलकावृतलसदलिके विरचितकस्तूरिकातिलके ॥
चपलयशोदाबाले शोभितमाले मतिर्मेऽस्तु ॥ १ ॥
सुस्वरितनूपुरचरणे कटिबद्धक्षुद्रघंटिकावरणे ॥
द्वीपिकरजकृतभूषणभूपितहृदये मतिर्मेऽस्तु ॥ २ ॥
करधृतनवनवनीते हितकृतजननीविभीषिकाभीते ॥
रतिमुद्रहताचेतो गोपीभिर्वश्यतां नीते ॥ ३ ॥
बालदशामतिमुग्धे चोरितदुग्धे व्रजांगनाभवनात् ॥
तद्बुपालंभवचोभयविभ्रमनयने मतिर्मेऽस्तु ॥ ४ ॥
व्रजकर्दमलिप्तांगे स्वरूपसुषमाजितानंगे ॥
कृतनंदांगणरिंगणविविधविहारे मतिर्मेऽस्तु ॥ ५ ॥

१ सुषमा.

करवरधृतलघुलकुटे विचित्रमायूरचंद्रिकामुकुटे ॥
नासागतमुक्तामणिजटितविभूषे मतिर्मेऽस्तु ॥ ६ ॥
अभिनंदनकृतनृत्ये विरचितनिजगोपिकाकृत्ये ॥
आनंदितनिजभृत्ये प्रहसनमुदिते मतिर्मेऽस्तु ॥७॥
कामादपि कमनीये नमनीये ब्रह्मरुद्राद्यैः ॥
निःसाधनभजनीये भावतनौ मे मतिर्भूयात् ॥८॥
इति श्रीहरिदासोदितं नवनीतप्रियाष्टकं संपूर्णम् ।

## अथ जन्मवैफल्यनिरूपणाष्टकम् ।

श्रीकृष्णाय नमः ।

नाश्रितो वल्लभाधीशो न च दृष्टा सुबोधिनी ॥
नाराधि राधिकानाथो वृथा तज्जन्म भूतले ॥ १ ॥
न गृहीतं हरेर्नाम नात्माद्यखिलमर्पितम् ॥
न कृष्णसेवा विहिता वृथा तज्जन्म भूतले ॥ २ ॥
न लीलाचिंतनं नैव दीनता विरहाद्धरेः ॥
न वा कृष्णाश्रयः पूर्णो वृथा तज्जन्म भूतले ॥ ३ ॥
न नीता वार्तया घस्राः साधवो नैव सेविताः ॥
न गोविंदगुणा गीता वृथा तज्जन्म भूतले ॥ ४ ॥
न कृष्णरूपसौंदर्ये मनो नैव विरागिता[1] ॥

१ रागता.

न दुःसंगपरित्यागो वृथा तज्जन्म भूतले ॥ ५ ॥
न भक्तिः पुष्टिमार्गीया न निःसाधनता हृदि ॥
न विस्मृतिः प्रपंचस्य वृथा तज्जन्म भूतले ॥ ६ ॥
न धर्मपरता नैव धर्ममार्गे मनोगतिः ॥
न भक्तिर्ज्ञानवैराग्ये वृथा तज्जन्म भूतले ॥ ७ ॥
न निजस्वामिविरहपरितापो न भावना ॥
न दैन्यं परमं यस्य वृथा तज्जन्म भूतले ॥ ८ ॥
इति श्रीहरिदासोदितं जन्मवैफल्यनिरूपणाष्टकं संपूर्णम् ।

## अथ कामाख्यदोषविवरणम् ।

श्रीकृष्णाय नमः ।

दोषेषु प्रथमः कामो विविच्य विनिरूप्यते ॥
यस्मिन्नुत्पद्यते तस्य नाशकः सर्वथा मतः ॥ १ ॥
विषयावेशहेतुत्वाद्विक्षेपोत्पत्तिकारणम् ॥
रजोगुणसमुत्पन्नो रजःप्रक्षेपको मुखे ॥ २ ॥
ब्रह्मावेशविरोधी च सद्बुद्धेर्बाधको मतः ॥
सत्कर्मनाशकः सर्वप्राकृतासक्तिसाधकः ॥ ३ ॥
चित्ताशुद्धिनिदानत्वात् चिद्वृत्तौ च बाधकः ॥
भक्तिमार्गमहाद्वेष्टा वैराग्याभावसाधनात् ॥ ४ ॥
सर्वत्रापरितोषश्चानेन लोभसमुद्भवात् ॥

यथाकथंचित्सांमुख्येंद्रियवैमुख्यकारकः ॥ ५ ॥
कामलोभौ हरिप्राप्तिप्रतिबंधकपर्वतौ ॥
तावुल्लंघ्य न शक्नोति गंतुं कृष्णांतिकं जनः ॥ ६ ॥
संसारमोहहेतुत्वात् मनो दूषणसाधनम् ॥
अतः सेवाविरोधी च यतः सा मानसी मता ॥ ७ ॥
निरोधस्य महाञ्छत्रुरन्यस्फूर्तिकरो यतः ॥
गुणगायनसपत्नोऽपि न रोचंते गुणा यतः ॥ ८ ॥
वैराग्यसाधकाः सर्वे कामिनस्ते कथं प्रियाः ॥
अत एव हि दृश्यंते गुणश्रवणवैरिणः ॥ ९ ॥
क्रोधः स्वकार्यकरणाल्लोभः प्राप्यापि शाम्यति ॥
घृतहोमे वह्निरिव कामो भोगेन वर्धते ॥ १० ॥
कामेन नाशितमतिः प्रतिषिद्धे प्रवर्तते ॥
अगम्यागमने चौर्ये तथैवाभक्ष्यभक्षणे ॥ ११ ॥
यत उत्पद्यते क्रोधो महद्द्रोहसमुद्भवः ॥
लोभोऽपि जायते तस्मात् स चार्थविषयो भवेत् ॥ १२ ॥
सोऽर्थः पंचदशानर्थमूलं तत्र प्रवर्तते ॥
कामेनैव हि कार्पण्यं कामिनीषु सतां मतम् ॥ १३ ॥
प्रार्थयंति यतस्तुच्छां प्रवेश्य वदने करम् ॥
प्रियव्रतसुतो राजा भ्रष्टः कामेन सत्फलात् ॥ १४ ॥

आग्नीध्रो विषयावेशादुर्वशीलोकमापितः ॥
कामेन कश्यपो दैत्योत्पादने हेतुतां गतः ॥ १५ ॥
निवृत्तसंध्यानियमः पत्नीप्रार्थनमोहितः ॥
कामेन च शिवः कृष्णयुवतीरूपवंचितः ॥ १६ ॥
कामेन नारदः षष्टिपुत्रानजनयत्स्वतः ॥
गर्वाभावाय हरिणा दत्तः कामो महाशनः ॥ १७ ॥
कामेन भरतस्यापि हरिणत्वं भवांतरे ॥
पुरंजनोऽपि कामेन स्त्रीयोनिमुपलब्धवान् ॥ १८ ॥
कामेन वेदगर्भोऽपि स्वसुतायां तथाकरोत् ॥
तेनैव रावणो बुद्धिं रमायामन्यथाकरोत् ॥ १९ ॥
एवं हि बहवो नष्टाः कामेनैव हि साधवः ॥
भक्तिमार्गे विरोधस्तु तत्र कामकृतो महान् ॥ २० ॥
कामिनः फलवांछातः शरणं नैव सिध्यति ॥
सापेक्षस्य तु सर्वत्र दुर्लभं हि समर्पणम् ॥ २१ ॥
तदभावे तदीयत्वं सर्वथैव हि दुर्लभम् ॥
साधारण्येव बुद्धिः स्यात्तेन लीलास्थितेष्वपि ॥२२॥
कामलेनं[1] यथा पीतप्रतीतिरखिले भवेत् ॥
पंचाध्याय्यामतः प्रोक्तं हृद्रोगत्वं शुकेरपि ॥ २३ ॥

[1] कामले नयने पीतप्रतीतिः इत्यपि पाठः.

दोषबुद्धिः कामिनस्तु भवेल्लीलाकृतौ हरेः ॥
निबंधे श्रीमदाचार्यैरत इंद्रियनिग्रहे ॥ २४ ॥
अत्यागः सर्वथा प्रोक्तो भगवद्भक्तिसाधकः ॥
कौतुकार्थमपि त्यागो धर्मार्थमपि वर्जितः ॥ २५ ॥
स्वयमिंद्रियकार्याणीत्युक्त्या धैर्यविभंजनः ॥
विवेकस्य विरोध्येव तदस्फूर्तिकरो यतः ॥ २६ ॥
आश्रयस्तु कथं सिध्येन्मनोविक्षेपसंभवात् ॥
भक्तिमार्गेऽपि मूलत्वात्त्यागस्य नहि सिध्यति ॥२७॥
बाह्यपक्षे कृष्णयोगः सर्वथा त्वांतरे मतः ॥
परंतूभयथा त्यागो मूलमत्र न संशयः ॥ २८ ॥
कामे सति कथं त्यागः सापेक्षस्य प्रसिद्ध्यति ॥
तस्माद्विचार्य तद्रूपं दुरतिक्रमणं स्वतः ॥ २९ ॥
शरणीकरणीयं श्रीनिजाचार्यपदांबुजम् ॥
साधनानामभावेऽपि स्वनलाऽखिलसाधकम् ॥ ३० ॥
तत एव च निस्तारो दोषपोषयुतात्मनाम् ॥
नान्या गतिर्गोकुलेशभजनानंदकांक्षिणाम् ॥ ३१ ॥

इति श्रीहरिदासविरचितं कामाख्यदोषविवरणं संपूर्णम् ।

---

१ मार्गो.

# अथ वल्लभशरणाष्टकम् ।

श्रीकृष्णाय नमः ।

निःसाधनजनोद्धारकरणप्रकटीकृतः ॥
गोकुलेशस्वरूपः श्रीवल्लभः शरणं मम ॥ १ ॥
भजनानंददानार्थं पुष्टिमार्गप्रकाशकः ॥
करुणावरणीयः श्रीवल्लभः शरणं मम ॥ २ ॥
स्वामिनीभावसंयुक्तभगवद्भावभावितः ॥
अत्यलौकिकमूर्तिः श्रीवल्लभः शरणं मम ॥ ३ ॥
श्रीकृष्णवदनानंदो वियोगानलमूर्तिमान् ॥
भक्तिमार्गाब्जभानुः श्रीवल्लभः शरणं मम ॥ ४ ॥
रासलीलारसभरसमाक्रांताऽखिलांगभृत् ॥
भावरूपाखिलांगः श्रीवल्लभः शरणं मम ॥ ५ ॥
श्रीभागवतभावार्थाविर्भावार्थावतारितः ॥
स्वामिसंतोषहेतुः श्रीवल्लभः शरणं मम ॥ ६ ॥
वल्लवीवल्लभांतःस्थलीलानुभववल्लभः ॥
अन्यास्फुरणरूपः श्रीवल्लभः शरणं मम ॥ ७ ॥
जितांभोजपदांभोजविभूषितवसुंधरः ॥
सदा गोवर्धनस्थः श्रीवल्लभः शरणं मम ॥ ८ ॥

अनन्यस्तन्मना नित्यं पठेद्यः शरणाष्टकम् ॥
स लभेत्साधनाभावयुक्तोऽप्येतत्पदाश्रयः ॥ ९ ॥
इति श्रीहरिरायजीविरचितं श्रीवल्लभशरणाष्टकं संपूर्णम् ।

# अथ श्रीनिजाचार्याष्टकम् ।

श्रीकृष्णाय नमः ।

श्रीवल्लभीवल्लभभावभाविसंतापभावात्मक एव योऽग्निः ॥ प्रादुर्भवद्भक्तिसुधासमुद्रमुद्भावयन् सोऽस्तु सदाऽरणं मे ॥ १ ॥ न यस्य कुत्रापि च धर्मयुक्तता रहस्यतद्भावनभावनक्षमः ॥ सदैव लीलालयलीननित्यविक्षेपयुक्तः शरणं सदा मे ॥२॥ वियोगसंयोगविशेषभोगसंसाधनासादितनित्यविग्रहः ॥ तत्साध्यसर्वोत्तमपुष्टिमार्गविकाशनाकारणकारणं गतिः ॥ ३ ॥ निःसाधनः स्वीयनिजाननस्मृतिप्रमाणनिःसारितमार्गसंशयः ॥ सदा दयार्द्राऽरुणलोचनद्वयप्रकाशितांतःकरणःसदाश्रयः ॥४॥ श्रीगोकुलेशांघ्रिसरोजसेवाविशेषदोषादरदोषदाहकः ॥ संशोधको शुद्धिविशुद्धचेतसां स वल्लभो वल्लभ एव मेऽस्तु ॥ ५ ॥ कृष्णाभिमर्शजनिताविचित्रभावसद्भावभावितनिजाद्भुतसत्प्रतीकः ॥ सर्वात्मभावविहि-

तात्मतनुस्थितिः श्रीमद्विठ्ठलेशजनको ह्यवलंबनं मे ॥ ६ ॥ अस्मत्पतिः स्वपरपालनदत्तबुद्धिरत्यंतसार्द्रहृदयो दयितः स्वकीयः ॥ मच्चित्तधामविलसन्निजनामसामगानप्रियः प्रियजने करुणां करोतु ॥७॥ स्वचरणकमलं फलं सदा मे स यदि ददातु कृपाविशेषयुक्तः ॥ विहितनिजजनाघसंघहर्ता हरतु रतिप्रतिबंधकं हरिर्नः ॥ ८ ॥

इति श्रीहरिदासोक्तं निजाचार्याष्टकं संपूर्णम् ॥

## अथ श्रीवल्लभपंचाक्षरस्तोत्रम् ।

श्रीकृष्णाय नमः ।

श्रीवल्लवीवल्लभास्य वियोगाग्ने कृपाकर ॥
अलौकिकनिजानंद श्रीवल्लभ तवास्म्यहम् ॥ १ ॥
कृष्णाधरसुधागारभरितावयवावृत ॥
श्रीभागवतभावाब्धे श्रीवल्लभ तवास्म्यहम् ॥ २ ॥
भावात्मकस्वरूपार्तिभावसेवाप्रदर्शक ॥
भाववल्लभपादाब्ज श्रीवल्लभ तवास्म्यहम् ॥ ३ ॥
करुणाश्रुतदृक्प्रांतपातपातकनाशकं ॥

१ करुणाश्रुतदृक्पातादुपपातकनाशक.

निःसाधनजनाधीश श्रीवल्लभ तवास्म्यहम् ॥ ४ ॥
मधुरास्यातिमधुरदृगंतं मधुराधर ॥
स्वरूपमधुराकार श्रीवल्लभ तवास्म्यहम् ॥ ५ ॥
दीनतामात्रसंतुष्ट दीनतामार्गबोधक ॥
दीनतापूर्णहृदय श्रीवल्लभ तवास्म्यहम् ॥ ६ ॥
अंगीकृतकृतानेकापराधविहतिक्षम ॥
गृहीतहस्तनिर्वाह श्रीवल्लभ तवास्म्यहम् ॥ ७ ॥
अशेषहरिदासैकसेवितस्वपदांबुज ॥
अदेयफलदानार्थं श्रीवल्लभ तवास्म्यहम् ॥ ८ ॥

इति श्रीहरिदासोक्तं श्रीवल्लभपंचाक्षरस्तोत्रं संपूर्णम् ।

## अथ श्रीवल्लभभावाष्टकम् ।

श्रीकृष्णाय नमः ।

श्रीपतिर्वल्लभोऽस्माकं गतिः श्रीवल्लभः सदा ॥
मतिः श्रीवल्लभे ह्यास्तां रतिः श्रीवल्लभेऽस्तु मे ॥ १ ॥
वृत्तिः श्रीवल्लभीयैव कृतिः श्रीवल्लभार्थिनी ॥
दर्शनं श्रीवल्लभस्य स्मरणं वल्लभप्रभोः ॥ २ ॥
त्वत्प्रसादसुमाघ्राणमस्तूच्छिष्टरसाग्रहः ॥
श्रवणं त्वद्गुणानां हि स्मरणं त्वत्पदाब्जयोः ॥ ३ ॥

१ साधनज्ञानधीशैक. २ दृग्गान.

गृणनं तन्महित्वस्य सेवनं कस्योर्भवेत् ॥
त्वत्स्वरूपांतरे भोगो गमनं तस्य सन्निधौ ॥ ४ ॥
तदग्रे सर्वदा स्थानं संगस्त्वत्सेवकैः सदा ॥
तद्वार्ताऽतिरुचिर्निष्ठा भूयात्त्वद्वाक्यमात्रगा ॥ ५ ॥
श्रद्धा त्वदेकसंबंधे विश्वासस्त्वत्पदाब्जयोः ॥
दास्यं त्वदीयमेवास्तु भूयात्त्वच्चरणाश्रयः ॥ ६ ॥
मस्तके श्रीवल्लभोऽस्तु हृदि तिष्ठतु वल्लभः ॥
अभितः श्रीवल्लभोऽस्तु सर्वं श्रीवल्लभो मम ॥७॥
नमः श्रीवल्लभायेव दैन्यं श्रीवल्लभे सदा ॥
प्रार्थनाश्रीवल्लभेऽस्तु तत्पदाधीनता मम ॥ ८ ॥
एतदष्टकपाठेन श्रीवल्लभपदांबुजे ॥
भवेद्भावो विनायासं भक्तिमार्गवृतात्मनाम् ॥ ९ ॥

इति श्रीहरिदासोक्तं श्रीवल्लभभावाष्टकं संपूर्णम् ।

## अथ श्रीवल्लभभावाष्टकम् ।

श्रीकृष्णाय नमः ।

तरेयुः संसारं कथमगतपारं सुरजनाः कथं भावा-
त्मानं हरिमनुसरेयुश्च सरसाः ॥ कथं वा माहात्म्यं
निजहृदि नयेयुर्व्रजभुवां भवेदाविर्भावो यदि न
भुवि वागीश भवतः ॥१॥ श्रयेयुः सन्मार्गं कथ-

मनुभवेयुः सुखभरं कथं वा सर्वस्वं निजमहह कुर्युश्च सफलम् ॥ त्यजेयुः कर्मादेः फलमपि कथं दुःखसहितं भवेदाविर्भावो यदि न भुवि वागीश भवतः ॥ २ ॥ वदेयुः सद्वादं कथमपहरेयुश्च कुमतिं कथं वा सद्बुद्धिं भगवति विदध्युः कृतधियः ॥ कथं लोकासक्तिं सपदि शमयेयुः शमयुता भवेदाविर्भावो यदि न भुवि वागीश भवतः ॥ ३ ॥ व्रजेयुर्विश्वासं परमफलनिःसाधनपथे कथं वेदालोकात् जगति विचरेयुर्गतभयाः ॥ कथं लीलाः सर्वाः सदसि कथयेयुः प्रमुदिता भवेदाविर्भावो यदि न भुवि वागीश भवतः ॥ ४ ॥ स्मरेयुः सद्भावं कथमखिललीलामुत विभोरनंतत्वं रूपे कथमपि च जानीयुरखिलाः ॥ कथं वा गायेयुर्गुणगणमिहालौकिकरसा भवेदाविर्भावो यदि न भुवि वागीश भवतः ॥ ५ ॥ पठेयुः श्रीकृष्णोदितमथ पुराणं नियमिताः कथं तस्याप्यर्थं निजहृदि धरेयुर्धृतियुताः ॥ कथं वा गोपीशं सदयमु भजेयुः फलतया भवेदाविर्भावो यदि न भुवि वागीश भवतः ॥ ६ ॥ वहेयुः स्वं धर्मं कथमितरसंबंधरतिहं सहेयुः पारुष्यं कथमसुरसंबंधिवचसाम् ॥

दहेयुः स्यान्दोपान्कथमिह विना साधनबलं भवेदा-
विर्भावो यदि न भुवि वागीश भवतः ॥ ७ ॥ जये-
युर्दुर्जेयान् दनुजमनुजातानपि कथं कथं वा मार्गीयं
फलमुपदिशेयुश्च परमम् ॥ कथं वै गच्छेयुः शरण-
मतिभावेन सततं भवेदाविर्भावो यदि न भुवि वागी-
श भवतः ॥ ८ ॥

इति श्रीहरिदासोक्तं निजाचार्यस्तोत्रं संपूर्णम् ।

## अथ श्रीवल्लभचरणविज्ञप्तिः ।

श्रीकृष्णाय नमः ।

निजाचार्यपदांभोजद्वयं सर्वसुखावहम् ॥
वहामि शिरसा तेन फलं मे सकलं ध्रुवम् ॥ १ ॥
हुनोमि दीनदीनोऽहं भयाद्यवनसंभवात् ॥
ततो निवर्तयास्मांस्त्वमार्तानामार्तिनाशन ॥ २ ॥
न स्थातुं शक्यते नैव गंतुं वा गोकुलेश्वर ॥
मीनस्येव गतिर्जाता ह्यस्माकं करुणा प्रभो ॥ ३ ॥
खेद कृतहृद्द्वंद्वे सुखसंभेदवर्जिते ॥
विगतस्वीयसंभेदे भवानेव गतिः प्रभो ॥ ४ ॥
न सोढुं शक्यते नाथ धैर्यादिरहितैः स्वकैः ॥

दुःखं भयसमुद्भूतं प्रभो त्वं संनिवर्तय ॥ ५ ॥
नाथ त्वत्स्मरणोपायः सर्वपापनिवारकः ॥
नेदानीं संभवत्यस्तद्भयात्काऽत्र गतिर्मम ॥ ६ ॥

इति श्रीहरिदासोक्ता श्रीमद्वल्लभचरणविज्ञप्तिः समाप्ता ।

---

# अथ दैन्याष्टकम् ।

श्रीकृष्णाय नमः ।

वृंदावने रजोयुक्तं यमुनाजलपंकिलम् ॥
कदा पदतलं मूर्ध्नि श्रीमद्वल्लभ धास्यसि ॥ १ ॥
सरागसार्द्रहृदये सर्वदा परिभावितम् ॥
कदा पदतलं मूर्ध्नि श्रीमद्वल्लभ धास्यसि ॥ २ ॥
निजावनेजनजलामृतसंजीविताश्रितम् ॥
कदा पदतलं मूर्ध्नि श्रीमद्वल्लभ धास्यसि ॥ ३ ॥
कृतपुण्यचयैः प्राप्तं सर्वदा परिसेवितम् ॥
कदा पदतलं मूर्ध्नि श्रीमद्वल्लभ धास्यसि ॥ ४ ॥
सभक्तिपंचसंख्याकपुमार्थाञ्जलिसंयुतम् ॥
कदा पदतलं मूर्ध्नि श्रीमद्वल्लभ धास्यसि ॥ ५ ॥
स्वभक्तिरागसंदोहसततस्थितिरंजनम् ॥

---

१ निवर्तय दयानिधे. २ नाथ त्वत्स्मरणोपाया सर्वापायविवर्जित ॥ नेदानीं संभवन्त्येतद्भयात्काऽत्र गतिर्मम.

कदा पदतलं मूर्ध्नि श्रीमद्वल्लभ धास्यसि ॥ ६ ॥
नखचंद्रप्रकाशेन स्वतः स्वीयप्रकाशनम् ॥
कदा पदतलं मूर्ध्नि श्रीमद्वल्लभ धास्यसि ॥ ७ ॥
पुष्टिकल्पद्रुमात्मत्वं मूलवद्भुवि संगतम् ॥
कदा पदतलं मूर्ध्नि श्रीमद्वल्लभ धास्यसि ॥ ८ ॥

इति श्रीहरिदासोक्तं दैन्याष्टकं संपूर्णम् ।

## अथ विज्ञप्तिः ।

श्रीकृष्णाय नमः ॥

पादयोर्मस्तकं धृत्वा प्रार्थये निजवल्लभ ॥
अतः परं तु नोपेक्षा स्वकीयानां विधीयताम् ॥ १ ॥
दशांगुलिचयं वक्रे निधाय प्रार्थयाम्यहम् ॥
निजाचार्यकुलोद्भूता न हेयाः सर्वथा त्वया ॥ २ ॥
प्रार्थये वल्लभाधीश भूमावुद्धर्ष्य नासिकाम् ॥
अस्माकमपराधा ये न ते धार्या हृदि प्रभो ॥ ३ ॥
पतितः प्रार्थये भूमौ साष्टांगनमनेन हि ॥
दयैवाचार्यवंशीयदासेषु न विधीयताम् ॥ ४ ॥
अंधः पंगुर्जडो मूको निष्क्रियो गतसन्मतिः ॥
श्रीवल्लभकुलोद्भूतो रक्षणीयः कृपालुना ॥ ५ ॥

अकृताराधनो नाथ विपरीतैकसाधनः ॥
निःसाधनो नो विधेयः कृपाधनविवर्जितः ॥ ६ ॥
उपस्थिते भये नाथ कं वदाम स्वपीडनम् ॥
ईदृशानामपि स्वाम्यं त्वयैवांगीकृतं यतः ॥ ७ ॥
बुद्धिदोषाद्वयं नाथ चिंतयामः स्वसाधनम् ॥
भवताद्रक्षणं स्वेषां भवता स्वामिनैव हि ॥ ८ ॥
न हि सर्वसमर्थस्य श्रमः स्वजनरक्षणे ॥
अस्मद्दोषादुपेक्षां त्वं मा कुरु स्वजनेषु हि ॥ ९ ॥
प्रभो नास्मत्कृतिं चित्ते स्मराचार्यनिवेदनम् ॥
तदग्राहितकरानस्मान्मा त्यजानन्यतां गतान् ॥१०॥
दयालोः प्रार्थना नैव रक्षणायोपयुज्यते ॥
तथापि धीरताभावादाश्रिताः प्रार्थयामहे ॥ ११ ॥
प्रसार्य वदनं दीनाः कं वदामस्त्वदाश्रिताः ॥
स्वरक्षणाय शिरसि यत आस्ते भवादृशः ॥ १२ ॥
यथा क्रोधेनासुराणां दोषान्दूरीकरोषि हि ॥
तथा निजानां कृपया द्रुतं तानन्यथा कुरु ॥ १३ ॥
निजाचार्यकुलोद्भूता गताश्चेत्सर्वथा प्रभो ॥
त्रपा तवैव नास्माकं सर्वथा पक्षपातिनः ॥ १४ ॥

---

१ उपस्थितं भयम्.

स्वबलेन स्वदासास्तु रक्षणीयाः स्वरक्षया ॥
तृणावर्तवधेनैव यथा गोकुलवासिनः ॥ १५ ॥
अंगीकृता वयं दुष्टा ज्ञात्वैवाचार्यवंशजाः ॥
अतः परं न कर्तव्यो विचारः कोऽपि रक्षणे ॥ १६॥
यद्यप्यस्मासु सततं बाहिर्मुख्यादसन्मतिः ॥
बुद्धिप्रेरक कर्तव्यं तथा तत्प्रेरणं विभो ॥ १७ ॥
उपायैरेव कर्तव्या स्वजनाः स्वपराः प्रभो ॥
न तु त्याज्या यतो भार्यान्यपरत्वे त्रपा तव ॥१८॥
यतो वल्लभता तत्र तदीयेष्वपि जायते ॥
असत्स्वपि तथाऽस्मासु विधेया निर्गुणेष्वपि ॥१९॥
रक्ष्यंते शरणायाता यादृशास्तादृशा अपि ॥
तदुपेक्षाकृतौ नाथ तवापेयाच्छरण्यता ॥ २० ॥
निजाचार्यकुलं नाथ स्वकुलत्वेन मन्यसे ॥
अतोऽस्मांस्तत्समुद्भूतान् दीनान् कथमुपेक्षसे ॥२१॥
त्वदुपेक्षितदासानां त्रिलोक्यां न क्वचित् स्थलम् ॥
अबलानामिव स्वामिन् यतः स्वामिबलं बलम् ॥२२॥
व्योमासुरमुखे याता यथा गोकुलवासिनः ॥
रक्षिताः कालमुखगा रक्ष्याः स्वाचार्यवंशजाः ॥२३॥
न विवेको न वा धैर्यं नाथयोऽपि तथाविधः ॥

तथापि करुणाहेतुरस्ति स्वाचार्यवंशता ॥ २४ ॥
यद्यपि प्रार्थनं नैव घटते सर्वकर्तरि ॥
तथापि दीनतां नाथ ज्ञापयामो वयं हरे ॥ २५ ॥
एतावदेव दासानां कृत्यं यत्स्वामिनं निजम् ॥
ज्ञापयंति कृतिः सर्वा स्वाम्यधीनैव नान्यथा ॥२६॥
स्वामिन् निजाचार्यकुलं नोपेक्ष्यं सर्वथा तव ॥
यतो बाला न जानंति वक्तुं कर्तुं च सेवितम् ॥२७॥
निजसेवारसाभासैर्मोहयित्वाधुना प्रभो ॥
कथमस्मांश्चोपभुक्तानिव त्यजसि वल्लभ ॥ २८ ॥
सान्निध्यमेव वांछामः स्वाचार्यचरणाश्रिताः ॥
दूरस्थिताः कथं नाथ स्थास्यामो विधवा इव ॥२९॥
अनंतपूर्णगुणभूः सर्वसामर्थ्यसंयुतः ॥
पतिर्येषां कथं तेऽद्य स्थास्यंति विरहार्दिताः ॥३०॥
न जानामि कुतो हेतोरुपेक्षा जायतेऽधुना ॥
बहुधा रक्षिताः पूर्वं त्वया दुस्तरदुःखतः ॥ ३१ ॥
दीननाथ न वै दैन्यमितोऽधिकमिहास्ति हि ॥
उपेक्षयाधुनास्त्वेषां पुनः किं कर्तुमिच्छसि ॥ ३२ ॥
आविर्भूतोऽसि मन्नाथ निजार्थेन प्रयोजनम् ॥
अन्यत्ततः कथं तेषामुपेक्षां कुरुषेऽधुना ॥ ३३ ॥

पतिता अपि मत्ताश्चेदप्रमत्तेन सर्वथा ॥
उत्थाप्याः सर्वतः स्वीया यतो लज्जाऽखिला तव ३४
पार्था वहिर्मुखाः पूर्वं वृथासंबंधतो यथा ॥
रक्षिता मत्प्रभो रक्ष्यास्तथा स्वाचार्यवंशजाः ॥ ३५ ॥
कियद्वदामि सर्वज्ञे दयालौ निजदीनताम् ॥
दर्शयामः प्रभो यत्ते हृद्यायाति विधेहि तत् ॥ ३६ ॥
निजान्विधाय किं नाथ कालाधीनान् करोषि हि ॥
भक्षयिष्यत्यसौ स्वीयानिति नैव विचारितम् ॥३७॥
जीवस्वभावदोषेण वयं यद्यपि न स्थिराः ॥
तथाप्यंगीकृतिस्थैर्यं निजं नाथ विचारय ॥ ३८ ॥
अंगीकृतापराधानामदोषत्वं हि मन्यते ॥
लोके भवान् भावयतु गुणत्वमधिकं ततः ॥ ३९ ॥
सर्वज्ञत्वात्त्वया ज्ञातं पुरा दुष्टा इति स्वतः ॥
स्वाचार्यवंशसंबंधस्त्विदानीमपि वर्तते ॥ ४० ॥
दुष्टा अपि निजा नैव त्यज्यंते दोषनाशकैः ॥
न ह्यग्निस्तादृशान्नैव निर्मलीकुरुते क्षणात् ॥ ४१ ॥
नाथ त्वदाननात्मानं वयमग्निकलौकिकम् ॥
संबंधास्तु कथं दुष्टाः स्थिता इति विचारय ॥ ४२ ॥
अद्यापि दोषसंबंधे भवानेव निवारकः ॥

नान्यः प्रभो यतः स्वाम्यमस्माकं भवदेकगम् ॥४३॥
भावेन न वयं नाथ भवदीयास्तु यद्यपि ॥
तथापि देहसंबंधाद्यतस्त्वद्वदनान्निजाः ॥ ४४ ॥
यद्यसौ कठिनः कालस्त्वदीयान् भक्षयिष्यति ॥
तदा तद्वाक्यविश्वासः शास्त्रमार्गविदां कथम् ॥४५॥
नाथ नाथ न मे तावत् सनाथानां दयानिधे ॥
अनुग्रहो वा दंडो वा स्वयमेव विधीयताम् ॥४६॥
नान्याधीनत्वमुचितं त्वदीयानां सति त्वयि ॥
यथा कथंचित्करुणानिधे स्वीयान् करे कुरु ॥४७॥
हाहा गजोद्धृते हाहा द्रौपदीवस्त्रपूरक ॥
हाहा सुदामभार्यार्थदायकाऽस्मान् हि पालय ॥४८॥
व्रजनाथ व्रजस्वामिन् व्रजजीवन जीवय ॥
निजानतिजडान्दीनानिति विज्ञापयाम्यहम् ॥४९॥
सदानंद कथं दुःखं निजानां द्रक्ष्यसि प्रभो ॥
अतः कदाऽपि सान्निध्यं निवर्तय हरे निजम् ॥५०॥
श्रीवल्लभ निजस्वामिसहितान्निजवंशजान् ॥
निजस्वरूपबलतः पालयासुरजाड्यतात् ॥ ५१ ॥

इति श्रीहरिदासविरचिता विज्ञप्तिः समाप्ता ।

१ देह. २ यद्यपि. ३ अनुग्रहोऽथ.

# अथ श्रीमहाप्रभोरष्टोत्तरशतनामावलिः ।

श्रीकृष्णाय नमः ।

श्रीवल्लभाख्यस्वस्वामिनामानि स्वीयतुष्टये ॥ यथामति वदिष्यामि तदाश्रितजनाश्रितः ॥ १ ॥ श्रीवल्लभाय नमः ॥१॥ श्रीमहालक्ष्मीपतये नमः ॥२॥ श्रीगोपीनाथजनकाय नमः ॥ ३ ॥ श्रीविठ्ठलेशे स्वाखिलमाहात्म्यस्थापकाय नमः ॥ ४ ॥ तीर्थयात्राचरणसंचारकर्त्रे नमः ॥ ५ ॥ वादिवृंदमुखध्वंसकाय नमः ॥ ६ ॥ मायामतखंडकाय नमः ॥ ७ ॥ भक्तिपथप्रवर्तकाय नमः ॥८॥ शुद्धब्रह्मवादबोधकाय नमः ॥ ९ ॥ स्वजनहृदयशोधकाय नमः ॥ १० ॥ स्वसन्निधिमात्रदत्तस्वभावाय नमः ॥११॥ स्वतंत्रभक्तिरूपाय तमः ॥१२॥ सर्वोद्धारकाय नमः ॥१३॥ श्रीकृष्णाज्ञामात्रप्रकटाय नमः ॥१४॥ करुणानिधये नमः ॥१५॥ श्रीकृष्णास्याय नमः ॥१६॥ कृष्णविरहविरक्ताय नमः ॥१७॥ सदानंदासक्ताय नमः १८ दैवजीवजनिसार्थकतासंपादकाय नमः ॥ १९ ॥ अतिकरुणाय नमः ॥ २० ॥ अलौकिकवह्नये नमः

॥ २१ ॥ विषयासक्तिविदूषकाय नमः॥ २२॥ निज-जनहृदयविभूषकाय नमः ॥ २३ ॥ तापात्मने नमः ॥ २४ ॥ सर्वनिरपेक्षाय नमः ॥ २५ ॥ भक्तरक्षकाय नमः ॥ २६ ॥ पतितसंग्रहणाय नमः ॥ २७ ॥ अशरणशरणाय नमः ॥ २८ ॥ सर्वकारणाय नमः ॥ २९ ॥ अंतःस्थितकृष्णाय नमः ॥ ३० ॥ अखि-ललीलारसभराक्रांताय नमः ॥ ३१ ॥ अनुगृहीत-भ्रांताय नमः ॥ ३२ ॥ आनंदमात्राय नमः॥३३॥ निजानंदहेतवे नमः ॥ ३४ ॥ रतिपथकेतवे नमः ॥ ३५ ॥ भगवद्धर्मसेतवे नमः ॥ ३६ ॥ ब्रह्मसं-बंधकरणाय नमः ॥ ३७ ॥ सर्वदोषनाशकाय नमः ॥ ३८ ॥ शुद्धभावविकाशकाय नमः ॥ ३९ ॥ श्रीभागवततामरसतरणये नमः ॥ ४० ॥ स्थापि-तभक्तिसरणये नमः ॥ ४१ ॥ स्वजनभाग्यरूपाय नमः ॥ ४२ ॥ निजजनदत्तवैराग्याय नमः ॥ ४३ ॥ रसज्ञशिरोमणये नमः ॥४४॥ निःसाधनस्वकीयार्थ-कृताखिलप्रयत्नाय नमः ॥ ४५ ॥ असमत्पतये नमः ॥ ४६ ॥ स्वजनैकगतये नमः ॥ ४७ ॥ रहोरतये नमः ॥ ४८ ॥ भावभावनैकमतये नमः ॥ ४९ ॥ शुद्धपु-

ष्टिपतये नमः ॥ ५० ॥ वियोगयोगिने नमः ॥ ५१ ॥ भावरसभोगिने नमः ॥ ५२ ॥ भावात्मकानंदाय नमः ॥ ५३ ॥ भाववदाश्रयाय नमः ॥ ५४ ॥ भावदात्रे नमः ॥ ५५ ॥ स्त्रीशूद्रादिहितकर्त्रे नमः ॥ ५६ ॥ फलरूपाय नमः ॥ ५७ ॥ फलसेवाप्रदर्शकाय नमः ॥ ५८ ॥ मनोमात्रसेव्याय नमः ॥५९॥ मनोविनोदहेतवे नमः ॥ ६० ॥ अखिलस्मारकाय नमः ॥ ६१ ॥ पतिततारकाय नमः ॥ ६२ ॥ श्रुतिपथमर्यादाधारकाय नमः ॥ ६३ ॥ निजजनक्लेशहारकाय नमः ॥ ६४ ॥ अपारसुखकारकाय नमः ॥ ६५ ॥ कृपापूर्णाय नमः ॥ ६६ ॥ विविधापराधक्षमाय नमः ॥ ६७ ॥ भक्तवश्याय नमः ॥६८॥ भक्तकृपार्थकृतकृष्णाज्ञाद्ययोल्लंघनाय नमः ॥ ६९ ॥ रसघनाय नमः ॥ ७० ॥ स्वजनजीवनधनाय नमः ॥ ७१ ॥ विहितस्वजनावनाय नमः ॥ ७२ ॥ स्मरणमात्रार्तिनाशनाय नमः ॥ ७३ ॥ हरिप्रियाय नमः ॥ ७४ ॥ यमुनाप्रार्थकाय नमः ॥ ७५ ॥ तत्संपादितनूतनतनवे नमः ॥ ७६ ॥ राजीवलोचनाय नमः ॥ ७७ ॥ भक्तदुःखविमोचकाय नमः

॥ ७८ ॥ रासलीलारसपरायणाय नमः ॥ ७९ ॥ निजजनसमूहसेवितचरणाय नमः ॥ ८० ॥ फल॰ रूपचरणरेणवे नमः ॥ ८१ ॥ कृष्णाश्रयहृदयाय नमः ॥ ८२ ॥ लीलामयाय नमः ॥ ८३ ॥ लीलाश्रयस्वहृदयैकविचारकाय नमः ॥ ८४ ॥ आनंदमूर्तये नमः ॥ ८५ ॥ विरचितस्वजनमनोरथपूर्तये नमः ॥ ८६ ॥ स्वजनद्वेषिदाहकाय नमः ॥ ८७ ॥ स्वपक्षपोषकाय नमः ॥ ८८ ॥ वाक्पीयूषवृष्टिकर्त्रे नमः ॥ ८९ ॥ स्वजनहृदयसंतोषकाय नमः ॥ ९० ॥ मदनाभिरामाय नमः ॥ ९१ ॥ पूर्णकामाय नमः ॥ ९२ ॥ कृतदिग्विजयाय नमः ॥९३॥ विहितस्वजनदुरितविलयाय नमः ॥ ९४ ॥ अभय॰ प्रदायकाय नमः ॥ ९५ ॥ कालादिभयहेतवे नमः ॥ ९६ ॥ निःसाधनावलंबनाय नमः ॥ ९७ ॥ भावभूषणभूषिताय नमः ॥ ९८ ॥ सौभाग्यभाजनस्वज॰ नाय नमः ॥ ९९ ॥ दास्यकरणोचितस्वरूपाय नमः ॥ १०० ॥ फलरूपदास्याय नमः ॥ १०१ ॥ मुखशोभितमंदहास्याय नमः ॥ १०२ ॥ सानुकंपनयनाय नमः ॥१०३॥ विस्मृतलौकिकाय नमः॥१०४॥

वारितस्वजनसंसाराय नमः ॥ १०५ ॥ नित्यनिवृत्तलोकवेदकृतस्मृतये नमः ॥ १०६ ॥ परमानंदसुधाभरभरितमूर्तये नमः ॥ १०७ ॥ अस्मत्सर्वस्वरूपाय नमः ॥ १०८ ॥ इति नामानि जाप्यानि श्रीवल्लभमहाप्रभोः ॥ तत्पदांभोजयुगलं भक्तिमात्रार्थिभिः सदा ॥ १ ॥

इतिश्रीहरिरायजीकृतं श्रीमद्वल्लभाचार्यनामावल्यष्टोत्तरशतं संपूर्णम्।

## अथ हाहादैन्याष्टकम् ।

श्रीकृष्णाय नमः ।

हाहा श्रीवल्लभाधीश हाहा कृष्णमुखांबुज ॥
हाहा वियोगभावाभे देहि मे निजदर्शनम् ॥ १ ॥
हाहा विशालनयन हाहा फुल्लतमानन ॥
हाहा सुनासिकाशोभ देहि मे निजदर्शनम् ॥ २ ॥
हाहाऽलकावृतमुख हाहामितसुधाधर ॥
हाहाऽतिरम्यचिबुक देहि मे निजदर्शनम् ॥ ३ ॥
हाहा निजजनाधार हाहा दीनजनाश्रय ॥
हाहा दयार्द्रहृदय देहि मे निजदर्शनम् ॥ ४ ॥
हाहा स्वकीयसर्वस्व हाहाऽधनमनोधन ॥
हाहाऽतिमृदुलस्वांत देहि मे निजदर्शनम् ॥ ५ ॥

हाहा कृतस्वकीयार्ते हाहा भवार्तिदायक ॥
हाहा हृदयभावज्ञ देहि मे निजदर्शनम् ॥ ६ ॥
हाहा निजजनप्राण हाहा निजजनावृत ॥
हाहा पुष्टिपथाचार्य देहि मे निजदर्शनम् ॥ ७ ॥
हाहा विजितकंदर्प हाहा स्वानंदतुंदिल ॥
हाहा हरिविहारात्मन् देहि मे निजदर्शनम् ॥ ८ ॥

इति श्रीहरिदासोक्तं हाहादैन्याष्टकं संपूर्णम् ।

## अथ स्वस्वामिपाणियुगलाष्टकम् ।

श्रीकृष्णाय नमः ।

आसातामेकशरणे विहिताकरणे हृदि ॥
स्वामिनौ वल्लभाधीशविठ्ठलेशाभिधौ सदा ॥ १ ॥
कृपां प्रकुरुतां दीने स्वत एव कृपाकरौ ॥
स्वामिनौ वल्लभाधीशविठ्ठलेशाभिधौ सदा ॥ २ ॥
प्रसीदेतां मयि श्रीमन्व्रजेशचरणाश्रये ॥
स्वामिनौ वल्लभाधीशविठ्ठलेशाभिधौ सदा ॥ ३ ॥
दास्यं प्रयच्छतां मह्यं समस्तफलमूर्धगम् ॥
स्वामिनौ वल्लभाधीशविठ्ठलेशाभिधौ सदा ॥ ४ ॥
कदापि मामनन्यं मा त्यजेतां निजसेवकम् ॥
स्वामिनौ वल्लभाधीशविठ्ठलेशाभिधौ मम ॥ ५ ॥

प्रमेयबलमात्रेण गृहीतां मत्करं दृढम् ॥
स्वामिनौ वल्लभाधीशविठ्ठलेशाभिधौ मम ॥ ६ ॥
आर्तिं निवारयेतां मे मस्तके हस्तधारणैः ॥
स्वामिनौ वल्लभाधीशविठ्ठलेशाभिधौ मम ॥ ७ ॥
मन्मूर्धनि विराजेतां प्रभू लोकंविलक्षणौ[1] ॥
स्वामिनौ वल्लभाधीशविठ्ठलेशाभिधौ मम ॥ ८ ॥
इति श्रीमद्धरिदासविरचितं स्वस्वामिपाणियुगलाष्टकं संपूर्णम् ।

# अथ श्रीविठ्ठलेश्वराष्टोत्तरशत- नामावलिः ।

श्रीकृष्णाय नमः ।

श्रीविठ्ठलेशमत्स्वामिनामानि सुखदानि मे॥ संतोषाय निरूप्यंते तन्नामाष्टोत्तरं[2] शतम् ॥ १ ॥ श्रीविठ्ठलाय नमः ॥ १ ॥ श्रीवल्लभात्मजाय नमः ॥२॥ श्रीगोपीनाथानुजाय नमः ॥ ३ ॥ श्रीरुक्मिणीरमणाय नमः ॥ ४ ॥ श्रीपद्मावतीप्राणप्रियाय नमः ॥ ५ ॥ सर्वांगसुंदराय नमः ॥ ६ ॥ सहजारक्तनयनाय नमः ॥ ७ ॥ स्निग्धनीरदश्यामाय नमः ॥८॥ मदनाभिरामाय नमः ॥ ९ ॥ हसद्वदनपंकजाय, नमः

१ लौकिकलक्षणौ. २ सनामपि च तुष्टये.

॥ १० ॥ करुणारसपूरितहृदयाय नमः ॥११॥ व्रजस्त्रीभावपूर्णाय नमः ॥ १२ ॥ भावविघूर्णितलोचनाय नमः ॥१३॥ विस्मिताखिललौकिकाय नमः ॥१४॥ सततस्मृतकृष्णलीलाय नमः ॥ १५ ॥ लीलांव्यवहिताखिलकृतये नमः ॥ १६ ॥ गोवर्धनस्थितिप्रियाय नमः ॥१७॥ गोत्रनाथसहचराय नमः ॥१८॥ तदतुलप्रीतिपात्राय नमः ॥१९॥ तल्लीलापूरितविग्रहाय नमः॥२०॥ गोवर्धनगमनोत्साहसंयुताय नमः ॥२१॥ लीलाभावविभावनाज्ञातमार्गाय नमः ॥२२॥ सम्मुखागतगोवर्धननाथाय नमः ॥ २३ ॥ परस्परयोजितकरकमलाय नमः ॥ २४ ॥ निजमंदिरसहजस्थितये नमः ॥ २५ ॥ विविधभावभावुकाय नमः ॥ २६ ॥ अनुभूताऽखिललीलाय नमः ॥ २७ ॥ स्वप्रेष्ठक्षणवियोगाऽसहिष्णवे नमः ॥२८॥ विहितविविधशृंगाराय नमः ॥ २९ ॥ सेवासंतोषितपुष्टिपतये नमः ॥३०॥ लीलांतरानुभावार्थगोकुलगतये नमः ॥३१॥ प्रार्थितगमनाज्ञाय नमः ॥ ३२ ॥ यथाकथंचिल्लब्धाज्ञाय नमः ॥ ३३ ॥ सन्मुखस्थितविहिताचरणसंचराय

१ लीलांवेपविहिताखिल. २ यमुना.

॥ ८१ ॥ रसमार्गस्वरूपप्रकाशकाय नमः ॥ ८२ ॥ निरपेक्षजनवल्लभाय नमः ॥ ८३ ॥ स्वाज्ञापरपुत्रवत्सलाय नमः ॥ ८४ ॥ सर्वांतःकरणज्ञाय नमः ॥ ८५ ॥ सेवकजनकल्पवृक्षाय नमः ॥ ८६ ॥ स्वजनलौकिकालौकिकफलहेतवे नमः ॥ ८७ ॥ निःसाधनजनचिंतापराय नमः ॥ ८८ ॥ भार्यावियोगव्याजत्यक्ताखिलभोगाय नमः ॥ ८९ ॥ परमरसज्ञाय नमः ॥ ९० ॥ विहितस्वमार्गसंन्यासधर्माय नमः ॥ ९१ ॥ जनकोपममूर्तये नमः ॥ ९२ ॥ कृतस्वजनसेवकजनसन्मानाय नमः ॥ ९३ ॥ वंदितस्वतातस्वरूपाय नमः ॥ ९४ ॥ निजभावसंगोपनपराय नमः ॥ ९५ ॥ कापट्यकृतकर्ममार्गधर्माय नमः ॥ ९६ ॥ अनासक्तिविहितलौकिकाय नमः ॥ ९७ ॥ परमादरणीयपदांबुजाय नमः ॥ ९८ ॥ ब्रह्मादिदुर्लभचरणरेणवे नमः ॥ ९९ ॥ सेवकजनभाग्याय नमः ॥ १०० ॥ आनंदनिधये नमः ॥ १०१ ॥ परमानंदाग्निपुत्राय नमः ॥ १०२ ॥ विश्वोद्धरणदक्षाय नमः ॥ १०३ ॥ मायामतखंडकाय नमः ॥ १०४ ॥ भक्तिपथप्रकाशकाय नमः ॥ १०५ ॥ अग्निकुमाराय

नमः ॥ १०६ ॥ अस्मत्स्वामिने नमः ॥ १०७ ॥ सहजकस्तूरीतिलकाय नमः ॥ १०८ ॥ इति श्रीविठ्ठलाधीशस्वामिनामशतं शुभम् ॥ अष्टोत्तरं सदा चिंत्यं सर्वचिंतानिवृत्तये ॥

इति श्रीहरिरायजीविरचिता श्रीविठ्ठलेश्वरनामावलिः समाप्ता ।

## अथ भुजंगप्रयाताष्टकम् ।

श्रीकृष्णाय नमः ।

सदा गोपिकामंडले राजमानं लसन्नृत्यबंधादिलीलानिदानम् ॥ गलद्दर्पकंदर्पशोभाऽभिदानं भजे नंदसूनुं सदानंदरूपम् ॥ १ ॥ व्रजस्त्रीजनानंदसंदोहसक्तं सुधावर्षिवंशीनिनादानुरक्तम् ॥ त्रिभंगाकृतिस्वीकृतस्वीयभक्तं भजे नंदसूनुं सदानंदरूपम् २ स्फुरद्रासलीलाविलासातिरम्यं परित्यक्तगेहादिदासैकगम्यम् ॥ विमानस्थिताशेषदेवादिनम्यं भजे नंदसूनुं सदानंदरूपम् ॥ ३ ॥ स्वलीलारसानंददुग्धोदमग्नं प्रियस्वामिनीबाहुकंठैकलग्नम् ॥ रसात्मैकरूपाऽव्रबोधं त्रिभंगं भजे नंदसूनुं सदानंदरूपम् ॥ ४ ॥ रसामोदसंपादकं मंदहासं कृताभीरनारीविहारैकरासम् ॥ प्रकाशीकृतस्वीयनानाविलासं भजे नंदसूनुं

सदानंदरूपम् ॥ ५ ॥ जिताऽनंगसर्वांगशोभाभिरामं क्षपापूरितस्वामिनीवृंदकामम् ॥ निजाधीनतावर्तिरामातिवामं भजे नंदसूनुं सदानंदरूपम् ॥ ६ ॥ स्वसंगीकृतानंतगोपालबालं वृतस्वीयगोपीमनोवृत्तिपालम् ॥ कृतानंदचौर्यादिलीलारसालं भजे नंदसूनुं सदानंदरूपम् ॥ ७ ॥ धृताद्रीशगोवर्धनाधारहस्तं परित्रातगोगोपगोपीसमस्तम् ॥ सुराधीशसर्वादिदेवप्रशस्तं भजे नंदसूनुं सदानंदरूपम् ॥ ८ ॥

इति श्रीहरिदासोक्तं भुजंगप्रयाताष्टकं संपूर्णम् ॥

## अथ स्वप्रभुस्वरूपनिरूपणाष्टकम् ।

श्रीकृष्णाय नमः ।

स्वामिनीभावगौरस्य स्वस्वरूपं प्रपश्यतः ॥
कटाक्षैर्विठ्ठलेशस्य श्यामताचित्रितं वपुः ॥ १ ॥
स्वस्मिन्नुभयभावेन स्वेषामुभयरूपताम् ॥
स्पष्टं बोधयितुं गौरश्यामः श्रीविठ्ठलेश्वरः ॥ २ ॥
निजाचार्योदितस्वीयमार्गसेव्यस्वरूपताम् ॥
बोधयन्नुभयात्माऽयं गौरश्यामो विराजते ॥ ३ ॥
रसस्य द्विविधस्यापि स्वरूपे बोधयन् स्थितिम् ॥
ऐक्यं विरुद्धधर्मत्वाद्गौरश्यामः कृपानिधिः ॥ ४ ॥

स्त्रीभावभगवद्भावोभयात्मेति विबोधितुम् ॥
स्वस्वरूपं हरिर्गौरश्यामः श्रीविठ्ठलेश्वरः ॥ ५ ॥
भावात्मकत्वतो दृष्टिर्हासाधरकृतिस्तथा ॥
अतो विलोक्यते गौरश्यामः श्रीविठ्ठलेश्वरः ॥ ६ ॥
निजानंदप्रदानेन व्यवधानं दिवानिशम् ॥
न करोति व्रजस्थानामिति श्रीमत्प्रभुस्तथा ॥ ७ ॥
सर्वात्मकामभावात्मस्वरूपं बोधयन् प्रभुः ॥
श्रीविठ्ठलेश्वरोऽस्माकं गौरश्यामो विराजते ॥ ८ ॥
इति श्रीहरिदासोदितं स्वप्रभुस्वरूपनिरूपणाष्टकं संपूर्णम् ।

# अथ गोपीजनवल्लभाष्टकम् ।

श्रीकृष्णाय नमः ।

सरोजनेत्राय कृपायुताय मंदारमालापरिभूषिताय ॥ उदारहासाय लसन्मुखाय नमोऽस्तु गोपीजनवल्लभाय ॥१॥ आनंदनंदादिकदायकाय बकीबकप्राणविनाशकाय॥मृगेंद्रहस्ताग्रजभूषणाय नमोऽस्तु गोपीजनवल्लभाय ॥२॥ गोपाललीलाकृतकौतुकाय गोपालकाजीवनजीवनाय ॥ भक्तैकगम्याय नवप्रियाय नमोऽस्तु गोपीजनवल्लभाय ॥ ३ ॥ मंथानभंडाऽखिलभंजनाय हैयंगवीनाशनरंजनाय ॥ गोस्वादुदुग्धामृतपोषिताय

नमोऽस्तु गोपीजनवल्लभाय ॥ ४ ॥ कलिंदजाकूलकुतूहलाय किशोररूपाय मनोहराय ॥ पिशंगवस्त्राय नरोत्तमाय नमोऽस्तु गोपीजनवल्लभाय ॥ ५ ॥ धाराधराभाय धराधराय शृंगारहारावलिशोभिताय ॥ समस्तगर्गोक्तिसुलक्षणाय नमोऽस्तु गोपीजनवल्लभाय ॥ ६ ॥ इभेंद्रकुंभस्थलखंडनाय विदेशवृंदावनमंडनाय ॥ हंसाय कंसासुरमर्दनाय नमोऽस्तु गोपीजनवल्लभाय ॥ ७ ॥ श्रीदेवकीसूनुविमोक्षणाय क्षत्तोद्धवाऽक्रूरवरप्रदाय ॥ गदासिशंखाऽब्जचतुर्भुजाय नमोऽस्तु गोपीजनवल्लभाय ॥ ८ ॥

इति श्रीहरिदासोक्तं गोपीजनवल्लभाष्टकं संपूर्णम् ।

---

## अथ द्वितीयं गोपीजनवल्लभाष्टकम् ।

श्रीकृष्णाय नमः ।

नवांबुदानीकमनोहराय प्रफुल्लराजीवविलोचनाय ॥ वेणुस्वनामोदितगोपिकाय नमोऽस्तु गोपीजनवल्लभाय ॥ १ ॥ किरीटकेयूरविभूषिताय ग्रैवेयमालामणिरंजिताय ॥ स्फुरच्चलत्कांचनकुंडलाय नमोऽस्तु गोपीजनवल्लभाय ॥ २ ॥ दिव्यांगनावृंदनिषेवि-

ताय स्मितप्रभाचारुमुखांबुजाय ॥ त्रैलोक्यसंमोहनसुंदराय नमोऽस्तु गोपीजनवल्लभाय ॥ ३ ॥ रत्नादिमूलालयसंगिताय कल्पद्रुमच्छायसमाश्रिताय ॥ हेमस्फुरन्मंडलमध्यगाय नमोऽस्तु गोपीजनवल्लभाय ॥ ४ ॥ श्रीवत्सरोमावलिरंजिताय वक्षःस्थले कौस्तुभभूषिताय ॥ सरोजकिंजल्कनिभांशुकाय नमोऽस्तु गोपीजनवल्लभाय ॥ ५ ॥ दिव्यांगुलीयांगुलिरंजिताय मयूरपिच्छच्छविशोभिताय ॥ वन्यस्त्रजालंकृतविग्रहाय नमोऽस्तु गोपीजनवल्लभाय ॥६॥ मुनींद्रवृंदैरभिसंश्रिताय क्षरत्पयोगोकुलसंकुलाय ॥ धर्मार्थकामामृतसाधकाय नमोऽस्तु गोपीजनवल्लभाय ॥ ७ ॥ एतत्तमस्सोमदिवाकराय भक्तस्य चिंतामणिसाधकाय ॥ अशेषदुःखामयभेषजाय नमोऽस्तु गोपीजनवल्लभाय ॥ ८ ॥

इति श्रीहरिदासोदित श्रीगोपीजनवल्लभाष्टकं संपूर्णम् ॥

## अथस्मरणाष्टकम् ।

श्रीकृष्णाय नमः ।

यदीयसौभाग्यभरेण गोकुलस्त्रियो न योग्यानि वचांसि सत्पतेः ॥ न मानयामासुरुदारमानसास्त-

दंघ्रिसेवासमयं स्मरामि ॥ १ ॥ यद्रूपसौंदर्यवशीकृताशया मृगीगणाः पूजनमादधुर्मुदा ॥ हित्वा समीपस्थितभर्तृभीतिं तदंघ्रिसेवासमयं स्मरामि ॥ २ ॥ यद्वेणुनादश्रवणैकजातभावांकुरा देववधूसमूहाः ॥ प्रवृद्धभावा मुमुहुः सभर्तृकास्तदंघ्रिसेवासमयं स्मरामि ॥ ३ ॥ यत्पादसंचारणजातकामभावा यदंके न नयत्यनल्पाम् ॥ शांतिं विचित्रां व्रजभूमिरेषा तदंघ्रिसेवासमयं स्मरामि ॥ ४ ॥ यद्बाललीलाकृतचौर्यजातसंतोषभावा व्रजगोपवध्वः ॥ उपालभंते समयं यमर्भकं तदंघ्रिसेवासमयं स्मरामि ॥ ५ ॥ यं गोपनारीगणदर्शनीयलीलं मुदा गोसुतपुच्छकपुंकम् ॥ प्रेक्षंत्य एवोज्झितगेहकृत्यास्तदंघ्रिसेवासमयं स्मरामि ॥ ६ ॥ यद्बाहुसंस्पर्शनजातभावरसालतावर्तुलभूतविग्रहः ॥ गोवर्धनो वेद न वृष्टिपातं तदंघ्रिसेवासमयं स्मरामि ॥ ७ ॥ यदधरसंगतवेणुनिनादं विहितविपर्ययसुखभरनिर्वादम् ॥ श्रुतवत्यो मुववक्ष्या गावः किं नहि कुरुते तद्गतभावः ॥ ८ ॥

इति श्रीहरिदासोदितं स्मरणाष्टकं समाप्तम् ।

# अथ श्रीकृष्णशरणाष्टकम् ।

श्रीकृष्णाय नमः ।

सर्वसाधनहीनस्य पराधीनस्य सर्वतः ॥
पापपीनस्य दीनस्य श्रीकृष्णः शरणं मम ॥ १ ॥
संसारसुखसंप्राप्तिसन्मुखस्य विशेषतः ॥
बहिर्मुखस्य सततं श्रीकृष्णः शरणं मम ॥ २ ॥
सदा विषयकामस्य देहारामस्य सर्वथा ॥
दुष्टस्वभाववामस्य श्रीकृष्णः शरणं मम ॥ ३ ॥
संसारसर्पदष्टस्य धर्मभ्रष्टस्य दुर्मतेः ॥
लौकिकप्राप्तिकष्टस्य श्रीकृष्णः शरणं मम ॥ ४ ॥
विस्मृतस्वीयधर्मस्य कर्ममोहितचेतसः ॥
स्वरूपज्ञानशून्यस्य श्रीकृष्णः शरणं मम ॥ ५ ॥
संसारसिंधुमग्नस्य भग्नभावस्य दुष्कृतेः ॥
दुर्भावलग्नमनसः श्रीकृष्णः शरणं मम ॥ ६ ॥
विवेकधैर्यभक्त्यादिरहितस्य निरंतरम् ॥
विरुद्धकरणासक्तेः श्रीकृष्णः शरणं मम ॥ ७ ॥
विषयाक्रांतदेहस्य वैमुख्यहृतसन्मतेः ॥
इंद्रियाश्वगृहीतस्य श्रीकृष्णः शरणं मम ॥ ८ ॥

एतदष्टकपाठेन ह्येतदुक्तार्थभावनात् ॥
निजाचार्यपदांभोजसेवकोऽदैन्यमाप्नुयात् ॥ ९ ॥
इति श्रीहरिदासविरचितं शरणाष्टकं संपूर्णम् ।

## अथ द्वितीयं श्रीकृष्णशरणाष्टकम् ।

श्रीकृष्णाय नमः ।

स्वामिनीचिंतया चित्तखेदखिन्नमुखांबुजः ॥
नमन्नयनयुगलः स कृष्णः शरणं मम ॥ १ ॥
मनोजभावभरितो भावयन्मनसा रतिम् ॥
मिलनव्याकुलमनाः स कृष्णः शरणं मम ॥ २ ॥
निःश्वासशुष्यद्वदनो मधुराधरपल्लवः ॥
मुरलीनादनिरतः स कृष्णः शरणं मम ॥ ३ ॥
निकुंजमंदिरांतस्थकुसुमपल्लवतल्पकृत् ॥
प्रतीक्षमाणः स्वप्रार्तिं स कृष्णः शरणं मम ॥ ४ ॥
वियोगभावविहसद्वदनांबुजसुंदरः ॥
आकर्णयन्नलिरुतं स कृष्णः शरणं मम ॥ ५ ॥
मुंचन्नश्रूणि विलुठन् गायन् मत्त इव क्वचित् ॥
नृत्यन् रसासक्तमनाः स कृष्णः शरणं मम ॥ ६ ॥
शयान एकलस्तल्पे स्वप्रसंबंधसिद्धये ॥

१ पात्र.

प्रबोधपश्चात्ततो[१] यः स कृष्णः शरणं मम ॥ ७ ॥
रसात्मा रसरीतिज्ञो रसलीलापरायणः ॥
रसात्मगोपीरसिकः स कृष्णः शरणं मम ॥ ८ ॥

इतिश्री हरिदासोक्तं शरणाष्टकं संपूर्णम्।

## अथ स्वप्रभुविज्ञप्तिः।

श्रीगोकुलोत्सवाय नमः।

श्रीवल्लभपदाम्भोजं विचिंत्य सकलोत्तमम् ॥
स्वनाथसविधे दुःखं स्वकीयं विनिवेदये ॥ १ ॥
पुरा कृपा मयि कृता दोषवत्यपि मत्प्रभो ॥
ततः किमधिकं जातं दोषजातसमुद्भवात् ॥ २ ॥
दोषा एव हिलक्ष्यंते त्वत्कृपायां कृपानिधे ॥
हेतवः स्वीकृतो यस्मदतिदुष्टोऽप्यजामिलः ॥ ३ ॥
कथं सदोषं स्वीकुर्यान्निर्दोषानंदरूपवान् ॥
लोकेऽपि प्रभवो वस्तु स्वीकुर्वंतु सदैव हि ॥ ४ ॥
अंगीकारे तु संबंधात्सदोषत्वं च संभवेत् ॥
अंगीकृत्य स्वबलतः स्वत्वसंपादने हरे ॥ ५ ॥
प्रक्षालनादिति न्यायो बाधकत्वेन संस्फुरेत् ॥
अस्मदर्थं कथं कुर्यादात्मानं दोषसंश्रितम् ॥ ६ ॥

१ ताती.

एतावानाग्रहः को वा मदंगीकरणं हरेः ॥
त्वन्नामसमनामाभिधानं हेतुरजामिले ॥ ७ ॥
संसारासक्तविकले मयि कुत्र तथाविधम् ॥
साधनं येन भगवान् दययेत्करुणाकरः ॥ ८ ॥
अंगीकृत्य स्वानुभावं प्रदर्श्य दयया स्वतः ॥
कथं त्यजसि मन्नाथ मामाचार्यपदाश्रितम् ॥ ९ ॥
दंडेनाहं प्रसन्नोऽस्मि स्वकीयत्वविनिश्चयात् ॥
किं तु ब्रूये दयाधीनं कालवैयर्थ्यचिंतया ॥ १० ॥
पुनः कुत्रेदृशं जन्म काचार्यचरणाश्रयः ॥
कुतः साधनसंपत्तिः सामग्री दुर्लभाऽखिला ॥ ११ ॥
दयालो दीनसौहार्दस्वसेवाविमुखं जनम् ॥
सेवायामेव सततं प्रवर्तय परात्पर ॥ १२ ॥

इति श्रीहरिदासविरचिता स्वप्रभुविज्ञप्तिः समाप्ता ।

## अथ द्वितीया स्वप्रभुविज्ञप्तिः ।

श्रीकृष्णाय नमः ।

कृपानाथ कृपाकाले किमित्यस्मानुपेक्षसे ॥
पदलमानातिमम्मान् दुष्टमम्मान् विशेषतः ॥ १ ॥
त्वदुपेक्षावशादेव कालकर्मादयोऽखिलाः ॥
विदित्वा निर्बलानस्मान्पीडयंति क्षणे क्षणे ॥ २ ॥

येषां विराजते मूर्ध्नि पतिर्युष्मद्विधः सदा ॥
भवंति तेऽपि चेद्दीना हीनता महती प्रभो ॥ ३ ॥
मा विचारय चित्तेऽस्मद्दोषान् दीनदयानिधे ॥
सहजो दीनदोषस्तु निवर्त्यो भवतैव हि ॥ ४ ॥
न साधनैस्त्वदीयाः स्मः किं त्वनुग्रहतस्तव ॥
साधनं वा फलं वापि केवलाचार्यसंश्रयः ॥ ५ ॥
गृहदासेषु नैवास्ति गुणदोषविचारणम् ॥
प्रभूणामुचितं कर्तुं यतस्तेषां गतिः प्रभुः ॥ ६ ॥
कुसेवका भवंत्येव नहि स्वामी तथाविधः ॥
अतो विधेयमखिलं स्वामित्वमवलोक्य हि ॥ ७ ॥
कं प्रार्थयेयुः कृपणाः पतिं हित्वाऽखिलेश्वरम् ॥
दासाः स्वदुःखसंप्राप्तावनन्यगतयो यतः ॥ ८ ॥
यद्यप्यनुचिता कर्तुं प्रार्थना सर्वकर्तरि ॥
स्वतस्तथापि कार्पण्यं दर्शयामो निजं हरे ॥ ९ ॥
आचार्यं शरणं यातान् सदागतान् स्वतस्त्वया ॥
तद्वंशजातानधुना मोपेक्षाविषयान्कुरु ॥ १० ॥

इति श्रीहरिदासविरचिता स्वप्रभुविज्ञप्तिः समाप्ता ।

# अथ दैन्याष्टकम् ।

श्रीकृष्णाय नमः ।

श्रीकृष्ण गोकुलाधीश नंदगोपतनूद्भव ॥
यशोदागर्भसंभूत मयि दीने कृपां कुरु ॥ १ ॥
व्रजानंद व्रजावास व्रजस्त्रीहृदयस्थित ॥
व्रजलीलाकृते नित्यं मयि दीने कृपां कुरु ॥ २ ॥
श्रीभागवतभावार्थरसात्मन् रसिकात्मक ॥
नामलीलाविलासार्थं मयि दीने कृपां कुरु ॥ ३ ॥
यशोदाहृदयानंद विहितांगणरिंगण ॥
अलकावृतवक्त्राब्ज मयि दीने कृपां कुरु ॥ ४ ॥
विरहार्तिव्रतस्यात्मन् गुणगानश्रुतिप्रिय ॥
महादैन्यदयोद्भूत मयि दीने कृपां कुरु ॥ ५ ॥
अत्यासक्तजनासक्त परोक्षभजनप्रिय ॥
परमानंदसंदोह मयि दीने कृपां कुरु ॥ ६ ॥
निरोधशुद्धहृदय दयितागीतमोहित ॥
आत्यंतिकवियोगात्मन्मयि दीने कृपां कुरु ॥ ७ ॥
स्वाचार्यहृदयस्थायिलीलाशतयुत प्रभो ॥
सर्वथा शरणं याते मयि दीने कृपां कुरु ॥ ८ ॥

इति श्रीहरिदासोक्तं दैन्याष्टकं संपूर्णम् ।

---

१ रसात्माकारताकृते.

# अथ श्रीपंचाक्षरमंत्रगर्भस्तोत्रम् ।

श्रीकृष्णाय नमः ।

दुष्टतमोऽपि दयारहितोऽपि विधर्मविशेषकृतिप्रथितोऽपि दुर्जनसंगरतोऽप्यवरोऽपि कृष्ण तवाऽस्मि न चाऽस्मि परस्य ॥ १ ॥ लोभरतोऽप्यभिमानयुतोऽपि परहितकारणकृत्यकरोऽपि ॥ क्रोधपरोऽप्यविवेकहतोऽपि कृष्ण तवाऽस्मि न चाऽस्मि परस्य ॥ २ ॥ कामभयोऽपि गताश्रयणोऽपि पराश्रयगाशयचंचलितोऽपि ॥ वैषयिकादरसंवलितोऽपि कृष्ण तवाऽस्मि न चाऽस्मि परस्य ॥ ३ ॥ उत्तमधैर्यविभिन्नतरोऽपि निजोदरपोषणहेतुपरोऽपि ॥स्वीकृतमत्सरमोहमदोऽपि कृष्ण तवास्मि न चास्मि परस्य ॥ ४ ॥ भक्तिपथादरमात्रकृतोऽपि व्यर्थविरुद्धकृतिप्रसृतोऽपि ॥ त्वत्पदसन्मुखतापतितोऽपि कृष्ण तवास्मि न चास्मि परस्य ॥ ५ ॥ संसृतिगेहकलत्ररतोऽपि व्यर्थधनार्जनखेदसहोऽपि ॥ उन्मदमानससंश्रयणोऽपि कृष्ण तवास्मि न चास्मि परस्य ॥ ६ ॥ कृष्णपथेतरधर्मरतोऽपि स्वस्थितविस्मृतिसद्धृदयोऽपि ॥ दुर्जनदुर्व-

१ मंत्रनिर्मंननिगेवरतोऽपि.

चनादरणोऽपि कृष्ण तवास्मि न चास्मि परस्य ॥७॥ वल्लभवंशजनुःसबलोऽपि स्वप्रभुपादसरोजफलोऽपि॥ लौकिकवैदिकधर्मखलोऽपि कृष्ण तवास्मि न चास्मि परस्य ॥ ८ ॥ पंचाक्षरमहामंत्रगर्भितस्तोत्रपाठतः ॥ श्रीमदाचार्यदासानां तदीयत्वं भवेद्ध्रुवम् ॥ ९ ॥

इति श्रीहरिदासोक्तं पंचाक्षरमंत्रगर्भस्तोत्रं समाप्तम् ॥

## अथ श्रीमद्राधाष्टकम् ।

श्रीकृष्णाय नमः ।

निकुंजे मंजूपद्विविधमृदुपुष्पैकनिचयैः समाकीर्णं[1] दांतं सुमणिजटितं केलिशयनम् ॥ हृदि प्रादुर्भूतो-द्भटविरहभावैः सपदि यत् करे कृत्वा पत्रव्यजनमु विशंती हृदि भजे ॥ १ ॥ विविश्वा गोपीशं श्रम-विहितनिद्रं हृदि भिया रणत्कारैर्भूयान्न खलु गत-निद्रः परमिति ॥ द्वितीयेन स्तंभाचलनचपलं कंक-णचयं वितन्वंती मंदं व्यजनमथराधां हृदि भजे ॥ २ ॥ विधायाच्छैः पुष्पैर्विविधरचनां चारुमृदुलां पदप्रांतालंबां स्वकरकमलाभ्यां पुनरसौ ॥ स्थितं स्वप्राणानां प्रियतममनन्यं निजपुरोऽवगत्यातन्वं-

१ याद. २ ननाप्यपरस्य इत्यपि सर्वत्र पाठोऽस्ति. ३ यांत.

तीमुरसि वनमालां हृदि भजे ॥ ३ ॥ पुरा रासा-रंभे शरदमलरात्रिष्वपि हरिप्रभावोद्यल्लीलास्मरणकृतचिंताशंतयुताम् ॥ हृदि प्रादुर्भूतं बहिरपि समुद्वीक्षितुमिव स्वतो वारंवारं विकसितदृगब्जां हृदि भजे ॥ ४ ॥ विचिन्वंतीं नाथ निरतिशयलीलाकृतिरतं प्रपश्यंतीं चिह्नं चरणयुगसंभूतमतुलम् ॥ प्रकुर्वंतीं मूर्धन्यहह पदरेणूत्करमपि प्रियां गोपीशस्य प्रणतनिजनाथां हृदि भजे ॥ ५ ॥ निजप्राणाधीशप्रसमनिलनानंदविकसत्समस्तांगप्रेमोद्गतमतनुरोमावलिमपि ॥ स्फुरत्सीत्कारांतः स्थितसभयभावैकनयनां पुनः पश्चात्तप्तामतुलरसपात्रं हृदि भजे ॥ ६ ॥ लसद्गोपीनाथाननकमलसंयोजितमुखां सुखांभोधिप्रादुर्भवदमृतपानैकचतुराम् ॥ परीरंभप्राप्तप्रियतमशरीरैक्यरसिकां तृतीयार्थप्राप्तिप्रकटहरिसिद्धिं हृदि भजे ॥ ७ ॥ न मे वांछ्यो मोक्षः श्रुतिषु चतुरात्मा निगदितो न शास्त्रीया भक्तिर्न पुनरिह विज्ञानमपि मे ॥ कदाचिन्मां स्वामिन्यहह मयि दासे कृपयतु स्वतः स्वाचार्याणां चरणशरणे दीनकरुणा ॥ ८ ॥

इति श्रीहरिदासोदितं श्रीमद्राधाष्टकं संपूर्णम् ।

---

१ शय.

# अथ श्रीमुख्यशक्तिस्तोत्रम् ।

श्रीकृष्णाय नमः ।

जयति सदा सा राधा हरिहृदये या विलक्षणाऽदर्शे ॥
प्रतिबिंबितेव दृष्टा बिंबपरोक्षे वयस्थाभिः ॥ १ ॥
व्रजपतिहृदयसरोजे सदा वसंती प्रिया राधा ॥
कमलालयेव लोकैरलोकि लोकत्रयातीता ॥ २ ॥
वक्षसि लक्षणमिषतो लक्ष्मीमुपरिस्थिता तनुते ॥
यद्गोपनाय सततं सा जयति स्वामिनी राधा ॥३॥
श्रीवत्सेन बिभर्ति स्फुटां बहिः सर्वथा लक्ष्मीम् ॥
यामंतःस्थितिरूपां बोधयितुं राधिका जयति ॥४॥
हरिहृदयप्रतिबिंबितनिजरूपप्रेक्षणामोदा ॥
तत्रास्थितमीक्षंती प्रियमतिविमना मनस्यास्ते ॥५॥
निजहृद्गतहरिरूपं विलोकयंती बहिः स्वं च ॥
विरहे विस्मितचित्ता जयति सदा स्वामिनी राधा॥६॥
जयति सदा यन्नाम स्वयं निकुंजस्थितो नाथः ॥
मंत्रमिव भाप्यर्थ सा जयति स्वामिनी राधा ॥ ७ ॥
यत्सहितो गोपीनां हृदयांभोधौ सदा क्रीडाम् ॥
कुरुते भावतरंगैर्जयति हरेरर्धमंगं सा ॥ ८ ॥
यद्भुजदंडावृतियुतकंठा कृष्णस्य नीलमेघस्य ॥

वहति पुरंदरधनुषावृतस्य शोभां प्रभौ श्यामे ॥ ९ ॥
यद्रूपस्मरणाहितसंस्कारः कामिनीकांतः ॥
भजति जितेंद्रियतायाः पदं हरिः सा सदा जयति १०
हरति हरेरपि चेतस्तथापि न हरिर्हरिर्यस्याः ॥
न क्षणभेदसहिष्णुः सा वृषभानोः सुता जयति ॥११॥
जयति जिताखिलयुवती परिवृढदृढसंभ्रमचित्ता ॥
न क्षणरमणविमुक्ता दोषविमुक्ताश्रया सततम्॥१२॥
भावतनौ भावात्मा स्थिता स्वभावेन भाविता सततम्॥
श्रीवल्लभाभिधाने तद्रूपा वा सदा जयति ॥ १३ ॥
श्रीवल्लभासंश्रयणादेतत्करुणायुतानां हि ॥
कृष्णः करोति शीघ्रं निजफलदानं न संशयः कश्चित्१४

इति श्रीहरिदासोदितं मुख्यशक्तिस्तोत्रं संपूर्णम् ।

## अथ श्रीस्वामिनीप्रार्थनाष्टकम् ।

श्रीकृष्णाय नमः ।

विभावयंत्याः प्रियरूपमंतः संतोषफुल्लाननलोचनायाः ॥ लीलासमारोपितचेतसः स्यां कदा तवाहं पदपांशुजन्मा ॥ १ ॥ रसालपत्रे शतपत्रपत्रे प्रियं लिखंत्या मृगनाभिना रहः ॥ आयातनीराकुल-

हृद्दृशः स्यां कदा तवाहं पदपांशुजन्मा ॥ २ ॥ विधाय शय्यादिकमच्छपुष्पैर्हृदश्रुनेत्रैर्निजनाथमार्गम् ॥ स्यां सर्वभावैरवलोकयंत्याः कदा तवाहं पदपांशुजन्मा ॥ ३ ॥ गुणैर्युतायाः स्ववपुःसमाश्रितैर्वोढुं व्रजाधीश्वरमात्मवश्यम् ॥ स्यां राधिकायाः सकलाधिकायाः कदा तवाहं पदपांशुजन्मा ॥४॥ सखीसदासेवितपादपद्मालसन्नखाग्रेण भुवं लिखंत्याः ॥ वियोगभावैकगतात्मनः स्यां कदा तवाहं पदपांशुजन्मा ॥ ५ ॥ प्रतिक्षणप्राप्तसदार्तचेतः स्वप्राणनाथोदयजाततद्व्रते ॥ गुणानुवादं सततं रटंत्याः कदा तवाहं पदपांशुजन्मा ॥ ६ ॥ स्वाधीनगोपीजनवल्लभाया निःसाधनानुग्रहकारणायाः ॥ स्वद्धोरसं[१] प्रापितमत्प्रभोः स्यां कदा तवाहं पदपांशुजन्मा ॥७॥ इति श्रीमत्स्वामिन्नतिशयितदीने मयि परं पराधीने पीनेऽखिलभजनदोषैरपि सदा ॥ कृपा कार्या धार्या हृदि च मम चित्तं मुररिपुप्रियस्वाचार्याणां चरणशरणोऽहं हरिरतिः ॥ ८ ॥

इति श्री हरिदासोदितं स्वामिनीपार्थनाष्टकं संपूर्णम् ।

---

१ सुधारस.

# अथ श्रीयमुनाविज्ञप्तिः ।

श्रीकृष्णाय नमः ।

कृष्णां कृष्णसमां कृष्णरूपां कृष्णरसात्मिकाम् ॥
कृष्णलीलामृतजलां कृष्णसंबंधकारिणीम् ॥ १ ॥
कृष्णप्रियां कृष्णमुख्यरससंगमदायिनीम् ॥
कृष्णक्रीडाश्रयां कृष्णपदवीप्रापिकामपि ॥ २ ॥
कृष्णस्थितां कृष्णवासहृदयां कृष्णकामुकाम् ॥
कृष्णप्रियाप्रियां कृष्णस्थायिभावसमुद्भवाम् ॥ ३ ॥
कृष्णैकमिलनस्थानभूतां कृष्णसुखार्थिनीम् ॥
कृष्णगोपीसहचरीं कृष्णसन्मानवर्धिनीम् ॥ ४ ॥
कृष्णकार्यपरां कृष्णलीलास्थलविशोधिकाम् ॥
कृष्णक्रीडाकुंकुमादियुतां कृष्णरसांतराम् ॥ ५ ॥
कृष्णगोपीपूज्यदेवीं कृष्णव्रतफलप्रदाम् ॥
कृष्णलीलार्थमायातां कृष्णनीरधिसंगताम् ॥ ६ ॥
कृष्णपादस्पर्शकामां कृष्णमानससंश्रिताम् ॥
कृष्णासक्तां कृष्णभक्तकृष्णप्रीतिप्रसाधिनीम् ॥ ७ ॥
कृष्णांघ्रिरेणुबहुलां कृष्णसेवकसन्मुखाम् ॥
कृष्णभावविरोधिस्वदासप्रकृतिनाशिनीम् ॥ ८ ॥

---

१ कृष्णमातुकाम्. २ कृष्णकृष्णां.

नमामि यमुनां कृष्णतुर्यप्रियतमामहम् ॥
निजाचार्यपदांभोजदासे भावं प्रयच्छतु ॥ ९ ॥

इति श्रीहरिदासोक्ता श्रीयमुनाविज्ञप्तिः समाप्ता ।

## अथ चतुःश्लोकी ।

श्रीकृष्णाय नमः ।

निजाचार्येषु सततं मनस्तत्प्रियसूनुषु ॥
स्थापनीयं न चान्येषु सममत्या कदाचन ॥ १ ॥
विधेया कृष्णसेवैव स्वमार्गेण स्वभावतः ॥
अन्याश्रयः परित्याज्यो ह्यसमर्पितभक्षणम् ॥ २ ॥
स्वमार्गे वसतामेव सतां संगो विधीयताम् ॥
मनसा नाऽसता कार्यो बलवद्बाधकत्वतः ॥ ३ ॥
निवेदनानुसंधानं देहादेरन्ययोगतः ॥
जातान्यथाभावबाधाभावाय क्रियतां सदा ॥ ४ ॥

इति श्रीहरिदासोदिता चतुःश्लोकी समाप्ता ।

## अथ पुष्टिमार्गलक्षणानि ।

श्रीकृष्णाय नमः ।

सर्वसाधनराहित्यं फलाप्तौ यत्र साधनम् ॥
फलं वा साधनं यत्र पुष्टिमार्गः स कथ्यते ॥ १ ॥

१ मौननम्.

अनुग्रहेणैव सिद्धिर्लौकिकी यत्र वैदिकी ॥
न यत्नादन्यथा विघ्नः पुष्टिमार्गः स कथ्यते ॥ २॥
स्वरूपमात्रपरता तात्पर्यज्ञानपूर्वकम् ॥
धर्मनिष्ठा यत्र नैव पुष्टिमार्गः स कथ्यते ॥ ३ ॥
यत्रांगीकरणे नैव योग्यतादिविचारणम् ॥
अविलंबः प्रभुकृतः पुष्टिमार्गः स कथ्यते ॥ ४ ॥
यत्र प्रभुकृतं नैव मूढदोषविचारणम् ॥
तत्कृताद्भुतमज्ञानं पुष्टिमार्गः स कथ्यते ॥ ५ ॥
न लोकवेदसापेक्ष्यं सर्वथा यत्र वर्तते ॥
सापेक्षता स्वामिसुखे पुष्टिमार्गः स कथ्यते ॥ ६ ॥
वरणे दृश्यते यत्र हेतुर्नाणुरपि स्वतः ॥
वरणं च निजेच्छातः पुष्टिमार्गः स कथ्यते ॥ ७ ॥
यत्र स्वतंत्रता भक्तेराविर्भावानपेक्षणात् ॥
सानुभावस्वरूपत्वं[1] पुष्टिमार्गः स कथ्यते ॥ ८ ॥
लोकवेदभयाभावो यत्र भावातिरेकतः ॥
सर्वबाधकतास्फूर्तिः पुष्टिमार्गः स कथ्यते ॥ ९ ॥
संबंधः साधनं यत्र फलं संबंध एव हि ॥
सोऽपि कृष्णेच्छया जातः पुष्टिमार्गः स कथ्यते॥१०॥

१ सर्वानुभावरूपत्वं.

तत्संबंधिषु तद्भावस्तद्भिन्नेषु विरोधितः ॥
उदासीनेषु समता पुष्टिमार्गः स कथ्यते ॥ ११ ॥
विद्यमानस्य देहादेर्न स्वीयत्वेन भावनम् ॥
परोक्षेऽपि तदर्थित्वं पुष्टिमार्गः स कथ्यते ॥ १२ ॥
भजने यत्र सेव्यस्य नोपकारकृतिः क्वचित् ॥
पोषणं भावमात्रस्य पुष्टिमार्गः स कथ्यते ॥ १३ ॥
भजनस्यापवादो न क्रियते फलदानतः ॥
प्रभुणा यत्र तद्भावात्पुष्टिमार्गः स कथ्यते ॥ १४ ॥
यत्र वा सुखसंबंधो वियोगे संगमादपि ॥
सर्वलीलानुभावेन पुष्टिमार्गः स कथ्यते ॥ १५ ॥
फले च साधने चैव सर्वत्र विपरीतता ॥
फलभावः साधनस्य पुष्टिमार्गः स कथ्यते ॥ १६ ॥
पश्चात्तापः सदा यत्र तत्संबंधिकृतावपि ॥
दैन्योद्भावाय सततं पुष्टिमार्गः सः कथ्यते ॥ १७ ॥
आविर्भावाय सापेक्षं दैन्यं यत्र हि साधनम् ॥
फलं वियोगजं दैन्यं पुष्टिमार्गः स कथ्यते ॥ १८ ॥
विषयत्वेन तत्त्यागः स्वस्मिन् विषयतास्मृतेः ॥
यत्र वै सर्वभावेन पुष्टिमार्गः स कथ्यते ॥ १९ ॥

१ प्रभुता. २ दैन्योद्बोधाय.

एवंविधैर्विशेषेण प्रकारैस्तु सदाश्रितः ॥
हृदि धृत्वा निजाचार्यान् पुष्टिमार्गो हि बुध्यताम्॥२०

इति श्रीहरिदासनिरूपितपुष्टिमार्गलक्षणानि संपूर्णानि ।

## श्रीभागवतपुस्तकनित्यपूजनविधिः ।

श्रीकृष्णाय नमः ।

आचम्य प्राणायामं कुर्यात् ॥ ॐ भद्रं कर्णेभिरिति शांतिं पठेत् ॥ ततः संकल्पः ॐ विष्णुर्विष्णुर्विष्णुः ॥ अद्येत्यादि पूर्वोच्चरितएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम सकुटुंबस्य सपरिवारस्य श्रीगोवर्धनधरणचरणारविंदप्रसादात् सर्वसमृद्धिप्राप्त्यर्थं प्रारब्धानुसारादनुग्रहपूर्वकश्रीभगवन्नामात्मकस्वरूपश्रीभागवतस्य पाठसांगतासिद्ध्यर्थं श्रीमद्भागवतस्य प्रतिष्ठां पूजनं चाहं करिष्ये ॥ तदस्तु मित्रावरुणेति प्रतिष्ठां कुर्यात् ॥ ततः पुरुषसूक्तेन आवाहनादिषोडशोपचारैः पूजयेत् ॥ ॐसहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् ॥ सभूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशांगुलम् ॥ १ ॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ आवाहनम् ॥ १ ॥ ॐपुरुष

एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् ॥ उतामृतत्वस्ये-
शानः । यदन्नेनातिरोहति ॥ २ ॥ श्रीभगवन्नामात्मक-
स्वरूपिणे श्रीभागवताय नमः ॥ आसनम् ॥ २ ॥
एतावानस्य महिमा ॥ अतो ज्यायाꣳश्च पूरुषः ॥
पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ॥३॥
श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥
पाद्यम् ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहा-
भवात्पुनः ॥ ततो विष्वꣳ व्यक्रामत् । साशनानशने
अभि ॥ ४ ॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभाग-
वताय नमः ॥ अर्घ्यम् ॥ ४ ॥ तस्माद्विराडजायत ।
विराजोऽअधि पूरुषः ॥ स जातो अत्यरिच्यत ।
पश्चाद्भूमिमथो पुरः ॥५॥ श्रीभगवन्नामात्मकस्वरू-
पिणे श्रीभागवताय नमः ॥ आचमनीयम् ॥ ५ ॥
यत्पुरुषेण हविषा । देवा यज्ञमतन्वत ॥ वसंतोअस्या-
सीदाज्यम् । ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥ श्रीभ-
गवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ स्ना-
नम् ॥ ६ ॥ तं यज्ञं बर्हिषि प्रौक्षन् ॥ पुरुषं जातम-
ग्रतः ॥ तेन देवा अयजंत । साध्या ऋषयश्च ये ॥७॥
श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥

वस्त्रम्॥७॥तस्माद्यज्ञात्सर्वहुतः। संभृतं पृषदाज्यम् ॥ पशूꣳस्ताꣳश्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये ८ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ यज्ञोपवीतम् ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे ॥ छंदाꣳसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ ९ ॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ चंदनम् ॥ ९ ॥ तस्मादश्वा अजायंत । ये के चोभयादतः ॥ गावोहजज्ञिरे तस्मात् तस्माज्जाता अजावयः॥ १० ॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ पुष्पम् ॥ १० ॥ यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् ॥ मुखं किमस्यकौ बाहू । काऊरू पादावुच्येते ११ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः॥ धूपम् ॥ ११ ॥ ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः । पद्भ्याꣳशूद्रो अजायत ॥ १२ ॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ दीपम् ॥ १२ ॥ चंद्रमा मनसो जातः । चक्षोः सुर्यो अजायत ॥ मुखादिंद्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥ १३ ॥ श्रीभगवन्नामात्मकस्व-

रूपिणे श्रीभागवताय नमः ॥ नैवेद्यम् ॥ १३ ॥ नाभ्या आसीदंतरिक्षम् । शीर्ष्णो द्यौः समवर्तत ॥ पद्भ्यां भूमिर्दिशः श्रोत्रात् ॥ तथा लोकाँ अकल्पयन् ॥ १४॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ पूगीफलतांबूलम् ॥ १४ ॥ सप्तास्यासन् परिधयः । त्रिःसप्त समिधः कृताः ॥ देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुम् ॥ १५ ॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ दक्षिणाम् ॥ १५ ॥ वेदाहमेतं पुरुषं महांतम् । आदित्यवर्णं तमसस्तु पारे ॥ सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन् यदास्ते ॥ १६ ॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ नमस्कारम् ॥ १६ ॥ धातापुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान् प्रदिशश्चतस्रः ॥ तमेवं विद्वानमृत इह भवति । नान्यः पंथा अयनाय विद्यते ॥ १७॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ प्रदक्षिणाम् ॥ १७ ॥ यज्ञेन यज्ञमयजंत देवाः । तानि धर्माणि प्रथमान्यासन् ॥ ते ह नाकं महिमानः सचंते । यत्र पूर्वे साध्याः संति देवाः ॥ १८ ॥ श्रीभ-

गवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ मंत्रपुष्पम् ॥ १८ ॥ ततः प्रार्थना ॥ वंदे श्रीकृष्णदेवं मुरनरकभिदं वेदवेदांतवेद्यं लोके भक्तिप्रसिद्धौ यदुकुलजलधौ प्रादुरासीदपारः ॥ यस्यासीद्रूपमेवं त्रिभुवनतरणे भक्तिवच्च स्वतंत्रं शास्त्रं रूपं च लोके प्रकटयति मुदा यः स नो भूतहेतुः ॥ १ ॥ नमः श्रीकृष्णपादाब्जतलकुंकुमपंकजे ॥ रुचयेदरुणं शश्वन्मामके[1] हृदयांबुजे ॥ २ ॥ श्रीभागवतरूपं च पूजयेद्भक्तिपूर्वकः ॥ सर्वान् कामान् प्रयच्छंति कुर्वते नात्र संशयः ॥ ३ ॥

इति श्रीहरिदासविरचितः श्रीभागवतपुस्तकरूपोडशोपचारपूजनविधिः समाप्तः ।

## अथ श्रीकृष्णचरणविज्ञप्तिः ।

श्रीकृष्णाय नमः ।

स्वयं रक्षाकृतौ नाथ न विचारमपेक्षसे ॥
अस्मान्निजाचार्यकुलप्रसूतान् किमुपेक्षसे ॥ १ ॥
अचिंत्यानंतशक्तेः किमशक्यं स्वीयरक्षणम् ॥
विलंबं कुरुषे नाथ वद को वा तवाशयः ॥ २ ॥

१ विलंबकरणे.

पृथा संबंधमात्रेण पांडवा रक्षिता मुहुः ॥
कुतः श्रीमन्निजाचार्यवंशजान्नाद्य रक्षसे ॥ ३ ॥
महेंद्रक्रोधसंजातमहावर्षाद्व्रजस्थिताः ॥
गोवर्धनधरेणैवाविता नास्मान् कुतोवसि ॥ ४ ॥
ग्राहग्रस्तो गजपतिः स्वयमागत्य रक्षितः ॥
तथैवास्मानिहागत्य प्रभो रक्षातिकातरान् ॥ ५ ॥
यथा स्वधर्मो द्रौपद्याः स्थापितो वस्त्रवर्द्धनात् ॥
अस्मद्धर्मं तथा नाथ स्थापयातिकृपायुतः ॥ ६ ॥
गतिरन्या निजस्वामिन्नाश्रयामः कमुत्तमम् ॥
त्वां विहाय न चास्माकमैहिके पारलौकिके ॥ ७ ॥
वयं दुष्टा दोषगणैस्तथापि त्वं कृपानिधिः ॥
अतो विस्मृत्य दोषान् स्वानव स्मृत्वा निजान्गुणान्॥८
विचारयंति न स्वामिन् स्वरक्षायां तु किंचन ॥
निसर्गकरुणाःस्वीयदासमात्रदयालवः ॥ ९ ॥
वयं न दुःखिताः स्यामः समर्थं प्रभुमाश्रिताः ॥
तथापि जीवभावेन भ्रमामो लौल्यकातराः ॥ १० ॥
त्वत्सुखेनैव दासानां सुखं नाथ न चान्यथा ॥
तथा तिष्ठ निजस्थाने भासेतास्मदृशा सुखी ॥ ११ ॥
आर्तानामार्तिहरणं धर्मस्ते सहजः प्रभो ॥

विशेषतः स्वदासानां तथात्वे तं विचिंतय ॥ १२ ॥
क्व यामः किं करिष्यामस्त्वत्सेवारहिता वयम् ॥
तथा संपादय हरे यथा सेवैव निर्वहेत् ॥ १३ ॥
प्रकटीभूतभावेन कारयित्वा तु सेवनम् ॥
अनुभाव्य सुखं कस्मादिदानीं तानुपेक्षसे ॥ १४ ॥
लोकत्रये प्रसिद्धं ते प्रभो स्वजनरक्षणम् ॥
उपेक्षणमिदानीं त्वं कीर्तिमन्यथयिष्यसि ॥ १५ ॥
यद्यपि प्रार्थनं नैवोचितं सहजकर्तरि ॥
अस्मद्दोषमिमं नाथ दैन्यान्मा हृदि धारय ॥ १६ ॥
क्षुद्राअधीराअविवेकिनश्च भवंतिजीवाः करुणानिधान
तथापिदासाःसमुपाश्रितास्तेनोपेक्षणीयामहदंगजाताः
वयमन्यं न जानीमो न सक्तत्वं च भासते ॥
अन्यस्मिन्केवलानन्यगतयोऽन्यास्ततस्त्वया ॥१८॥
दीनेषु दीननाथस्य करुणैव सदोचिता ॥
तत्रापि सर्वदा धैर्यविवेकरहितेषु च ॥ १९ ॥
न दैन्यं भक्तिमार्गीयं यतस्त्वद्दर्शनार्थकम् ॥
तथापि लोकतो दीना दासा इति विचिंत्यताम् ॥२०॥
न वयं शास्त्रतो दासा न भक्त्या न विवेकतः ॥
न स्वधर्मस्थितेः किंतु निजाचार्यनिवेदनात् ॥ २१ ॥

तन्निवेदनतो यं वै स्वत एवात्मसात्कृताः ॥
नित्यांगीकृतिना ते वै त्यक्ष्याः कृतिना कथम् २२
जानीमः प्रार्थनां कर्तुं प्रभो त्वय्युचितां वयम् ॥
विकलास्तु वदामोऽत्र यत्किंचित्क्षम्यतां प्रभो ॥२३॥
यवनारण्यसंजातवह्निभीता विशेषतः ॥
कृपादृग्वर्षणेनैव निजाः कार्या अमी यतः ॥ २४ ॥
अनागसो वयं नित्यं पीडयंतेऽधर्मवादिभिः ॥
स्थास्यामः केन जगति हेतुना त्वदुपेक्षया ॥ २५ ॥
अस्मान् हृदि स्वतो दुष्टान्मानया दोषविग्रहः ॥
किंत्वस्मत्पूर्वजाचार्यान् विचिंत्य करुणां कुरु ॥२६॥
दुष्टापि चेन्निजा भार्या भ्रियते स्वाश्रया स्वतः ॥
भर्त्रैव लोकलज्जातस्तथाऽस्मासु विचारय ॥ २७ ॥
लोका उपहसिष्यंति त्वदीयान्वीक्ष्य दुःखितान् ॥
आरोपं त्वयि दोषस्य करिष्यंति भ्रमाज्जनाः ॥२८॥
अस्माकं महती लज्जा स्वामिन्स्वपतिनिंदनात् ॥
अतो यथा न चास्माकं भवेत्सा क्रियतां तथा ॥२९॥
दृष्टं श्रुतं च बहुधा दुष्टस्वजनरक्षणम् ॥

---

१ त्रिभू नायक. २ निजाचार्याभिमानत. ३ अनागसा वयं नित्यं धार्यंते धर्मधारिभिः ।

अत एव भवंत्याशास्तदाशाः सफलीकुरु ॥ ३० ॥
आशयैव वयं वर्तामहे धैर्येण मत्प्रभो ॥
तस्यां सपदि भग्नायां विगताशाः कुतो वयम् ॥ ३१ ॥
महेंद्रेमदभेत्तुस्ते किमशक्यं जगत्त्रये ॥
अस्माद्दोषवशेनैव भवामो दुःखिता वयम् ॥ ३२ ॥
दोषा अथास्मदीयास्ते निवार्याः स्वसद्युक्तिभिः ॥
अंगीकृतजनोद्धारभारः सर्वो निजोऽधिपे ॥ ३३ ॥
प्रतिज्ञैव स्वकीया ते न मे भक्तः प्रणश्यति ॥
सर्वं विस्मृत्य तामेव करुणाकर चिंतय ॥ ३४ ॥
अन्याऽपि या प्रतिज्ञा ते प्रसिद्धा गोकुलेश्वर ॥
अभयं सर्वभूतेभ्यो ददामीति न विस्मर ॥ ३५ ॥
प्रार्थनां वा कृतिं वाऽपि साधनं चान्यदेव वा ॥
स्वीयानां स्वीयतामेव स्मर स्मरणदुःखहृत् ॥ ३६ ॥
यद्यपि स्वीयताऽस्मासु दुर्लभा भक्तिशास्त्रतः ॥
तथाप्याचार्यवंशत्वादस्ति तन्निखिलार्पणात् ॥३७॥
वयमज्ञा न जानीमो बाला इव महात्मनाम् ॥
त्वद्यां नाथ जानासि त्वं तु स्वजनमूढताम् ॥३८॥

---

१ महारमद्भाल्स्ये. २ दोषादस्मात्त्वदीयास्ते. ३ निजोपरि.
४ चान्यवेदनम्.

मूढा अपि त्वया नाथ रक्षिता बहवः स्वकाः ॥
गवादयो दवाग्न्यादेस्तथा रक्ष्या वयं विभो ॥३९॥
उपस्थितं भयं नाथ सन्निधौ धर्महानिजम् ॥
भवानेव स्वकीयानां धर्मं रक्ष भयागतौ ॥ ४० ॥
चिंतासंतानहरणं शरणं यस्य सर्वतः ॥
त्वदेकशरणाश्रितां प्राप्नुमः शिरसि स्थिते ॥ ४१ ॥
कृपानाथ निजं हस्तमभयं स्वीयमूर्धनि ॥
चिंतानिवृत्तये धेहि पीयूषस्रावि सर्वतः ॥ ४२ ॥

श्रीवल्लभाचार्यकृपाबला अपि
प्रभो बलं नैव विवेकवर्जिताः ॥
चित्ते स्मरामः स्मरणीयपूर्ण-
गुण त्वमेव स्वबलं विबोधय ॥ ४३ ॥

न जानाति जनो नाथ करुणां स्वामिनः स्वतः ॥
परतो वाऽपि सततं ज्ञापनीयः कृपालुना ॥ ४४ ॥
तदज्ञानात्प्रकुरुते जीवश्चिंतां स्वदोषतः ॥
निवारय हरे चिंतां ज्ञापनाद्रक्षणादपि ॥ ४५ ॥
चिंतया यदि लौकिक्या स्थितया हृदि सर्वदा ॥
सेवनं स्मरणं वापि कीर्तनं वा कुतस्तव ॥ ४६ ॥

१ स्मरणम्. २ तनो सारेरधिता.

सर्वेषां हृदयं नाथ वेत्सि सर्वहृदि स्थितः ॥
यथोचितं यथा नाथ येषु तत्र तथा कुरु ॥ ४७ ॥
नौदास्यं श्रीमदाचार्यदासेषु तव सांप्रतम् ॥
यतस्तेषु महानेव पक्षपातः प्रभोऽस्ति हि ॥ ४८ ॥
हा कृष्ण हा निजाधार हा गोविंद दयानिधे ॥
हा समर्थ स्वकीयानां न विधेयमुपेक्षणम् ॥ ४९ ॥

इति श्रीहरिरायजीकृता श्रीकृष्णचरणविज्ञप्तिः संपूर्णा ।

## अथ गवां स्वरूपवर्णनम् ।

श्रीगोपीजनवल्लभाय नमः ।

लसच्चलत्पुच्छगुच्छा धृतकर्णा मुखोपरि ॥
उत्तुंगतीक्ष्णशृंगाग्रा गावो दृग्विषयाः कदा ॥ १ ॥
व्रजनाथमुखांभोजं पश्यंत्यः स्मितसुंदरम् ॥
निमीलयंत्यो नेत्राणि गावो दृग्विषयाः कदा ॥ २ ॥
शृण्वंत्यो वेणुगानानि हृष्यंत्यश्चेतनापरम् ॥
स्पृश्यंत्यो हृदि गोपीशं गावो दृग्विषयाः कदा ॥३॥
गच्छंत्यश्चरणांभोजचिह्नमार्गेण काननम् ॥
भक्षयंत्यस्तृणानीह गावो दृग्विषयाः कदा ॥ ४ ॥
आकर्णयंत्यो नामानि पतिगीतानि वेणुना ॥
दंतदष्टार्धकवला गावो दृग्विषयाः कदा ॥ ५ ॥

विस्मरंत्यः स्वजात्यादि भावयंत्यः स्वयोग्यताम् ॥
ख्यापयंत्यः स्वसंबंधं गावो दृग्विषयाः कदा ॥ ६ ॥
उत्तंभयंत्यः श्रवणे स्थगयंत्यो गतिं स्वकाम् ॥
पिबंत्यो वेणुपीयूषं गावो दृग्विषयाः कदा ॥ ७ ॥
चरंत्यश्चेतसासक्ता गोवर्धनगिरेस्तृणम् ॥
धावंत्यो वेणुनाहूता गावो दृग्विषयाः कदा ॥ ८ ॥
वेष्टयंत्यो विशेषेण सदार्ता गोकुलाधिपम् ॥
चेष्टयंत्योऽतिवात्सल्याद्गावो दृग्विषयाः कदा ॥ ९ ॥
निजनाथकरांभोजसंमार्जितनिजाननाः ॥
गणयंत्यो न दुःखानि गावो दृग्विषयाः कदा ॥१०॥
पतिहस्तयुगभ्राम्यद्दूर्वादलमुखावपुः ॥
मज्जयंत्यो रसांभोधौ गावो दृग्विषयाः कदा ॥११॥
विशंत्यस्तृणलोभेन विपिनं गह्वरं मुदा ॥
रक्षिता गोकुलेशेन गावो दृग्विषयाः कदा ॥ १२ ॥
पीत्वानलं मलंभूतं बलाद्दावानलात्स्वतः ॥
अविता रविजातीरे[1] गावो दृग्विषयाः कदा ॥१३॥
पायिता यमुनातीरे जीविताः स्वदृशा पुनः ॥
परीक्षिता व्रजप्रेम्णा गावो दृग्विषयाः कदा ॥१४॥

१ कूले.

स्वनाथवदनांभोजदर्शनोत्कंठ्यकातराः ॥
विस्मरत्स्वशरीराद्या गावो दृग्विषयाः कदा ॥ १५ ॥
मणिमालाधरेण स्वकरेण गणिता मुदा ॥
स्मृतप्रियास्वरूपेण गावो दृग्विषयाः कदा ॥ १६ ॥
अलौकिकरसप्राप्तिसाधनैः कर्णसंपुटैः ॥
सुधाधिकरणैर्युक्ता गावो दृग्विषयाः कदा ॥ १७ ॥
एकैकक्षणसंबंधलीलालीना व्रजात्मना ॥
वनान्निवर्तिताः स्वार्थं गावो दृग्विषयाः कदा ॥१८॥
हरिण्य इव नादेन दूरादतिक्रमागताः ॥
स्थिताश्चित्रस्थितिप्राप्ता गावो दृग्विषयाः कदा॥१९॥
तमनूत्थाय चलिता वलिता वृषभैरपि ॥
ललिता गतिभिर्मार्गे गावो दृग्विषयाः कदा ॥२०॥
वादयंत्यः कंठघंटां नादयंत्योऽथ नूपुरम् ॥
आह्लादयंत्यः स्वपतिं गावो दृग्विषयाः कदा ॥२१॥
भासयंत्यः स्वशृंगाणि सुवर्णाभरणैः पुनः ॥
ललाटपट्टिकायुक्ता गावो दृग्विषयाः कदा ॥ २२ ॥
ललाटलंबमानेन स्वर्णपर्णेन शोभिताः ॥
सिंदूररंजितमुखा गावो दृग्विषयाः कदा ॥ २३ ॥
पुनः सकलदेहेषु गैरिकादिविचित्रिताः ॥

केकिपिच्छशिरोगुच्छा गावो दृग्विपयाः कदा ॥२४॥
ग्रथितानेकपुष्पादिमालादिभिरलंकृताः ॥
दर्शयंत्यः स्वमाहात्म्यं गावो दृग्विपयाः कदा ॥२५॥
निरुद्धा गोकुलेशास्ये निरुद्धा विपिने क्वचित् ॥
न विरुद्धाः स्वकीयेपु गावो दृग्विपयाः कदा ॥२६॥
अग्रेकृत्य स्वगोविंदं नृत्यंतं स्वजनैः सह ॥
परावृत्य समीक्षंत्यो गावो दृग्विपयाः कदा ॥२७॥
स्वखुरोद्धूतरजसाऽलंकृतस्वामिकुंतलाः ॥
संबंधातिशयोन्मत्ता गावो दृग्विपयाः कदा ॥२८॥
व्रजांतिकगतिप्राप्तप्रमोदपुलकांकिताः ॥
विलोकिताः स्वामिनीभिर्गावो दृग्विपयाः कदा ॥२९॥
तद्दर्शनमहानंदसंदोहशिथिलीकृताः ॥
विस्मृतस्वेष्टगतयो गावो दृग्विपयाः कदा ॥ ३० ॥
स्वामिनीमुखचंद्रैकचकोर्यो धैर्यवर्जिताः ॥
न लीलाप्रतिबंधिन्यो गावो दृग्विपयाः कदा ॥३१॥
लीलांतरचिकीर्षोः स्वप्रभोरग्रे गृहं गताः ॥
तदागतिं बोधयंत्यो गावो दृग्विपयाः कदा ॥३२॥
समागतनिजप्रेष्ठदर्शनानंदसंप्लुताः ॥
स्वदोहनायाभिमुखा गावो दृग्विपयाः कदा ॥३३॥

तत्र कृष्णे मतिः कार्या ब्रह्मवादेन सर्वथा ॥ २ ॥
ब्रह्मवादे हि भगवानानंदाकार उच्यते ॥
तन्मात्रमुखपादादि सर्वं तस्य निरूप्यते ॥ ३ ॥
कोटिकंदर्पलावण्यरूपं चानंद एव हि ॥
ऐश्वर्यादिगुणाः सर्वे तद्रूपा नैव संशयः ॥ ४ ॥
तथाविधाकृति ब्रह्मात्मकत्वं जगतः स्मृतम् ॥
मुख्यो हि जगदाकारो ब्रह्माकारो निरूपितः ॥ ५ ॥
घटकुड्याद्याकृतीनां वाचारंभणतोच्यते ॥
आनंदो हि ब्रह्मवादे सर्वत्राकारबोधकः ॥ ६ ॥
न किंचिदीदृशं वस्तु निराकारं तु यद्भवेत् ॥
साकारब्रह्मरूपत्वात्तदाकारेण सा कृतिः ॥ ७ ॥
अतएवोक्तमाचार्यैर्निबंधे तत्त्वदीपके ॥
अखंडं कृष्णवत्सर्वमिति निर्गलितं वचः ॥ ८ ॥
भगवद्धर्मशक्तीनामिति तद्रूपतोच्यते ॥
सर्वस्वरूपमानंदस्तदाकारस्तदाकृतिः ॥ ९ ॥
एवं रसात्मकं ब्रह्म साकारं ज्ञेयमास्तिकैः ॥
रसश्च द्विविधः सिद्धस्तच्छास्त्रे यादृशस्तथा ॥ १० ॥
संयोगविप्रयोगाभ्यां शृंगारो विनिरूपितः ॥
संयोगवच्च विरहः स्वरूपात्मेति निश्चयः ॥ ११ ॥

इयानेव विभेदो हि मंतव्यस्तत्स्वरूपयोः ॥
क्रियात्मकस्तु संयोगो लोकवेदनिरूपितः ॥ १२ ॥
विप्रयोगस्तु भावात्मा केवलानुभवैकदृक् ॥
भावात्मकस्वरूपस्य भावात्मानो व्रजस्थिताः ॥१३॥
सदा तदेकसहितास्तद्रूपा न हि संशयः ॥
तस्य सर्वैव सामग्री मंतव्या हि तथाविधा ॥ १४ ॥
कदाचिन्मूललीलायाः कर्तुः प्राकट्यमीशितुः ॥
श्रुतिष्वग्निकुमारेषु तत्फलमापणेच्छया ॥ १५ ॥
स्वदत्तवरसाफल्यविधानाय विशेषतः ॥
स्वभावात्मव्रजजनाः प्रथमं प्रकटीकृताः ॥ १६ ॥
संयोगात्मा स्वयं जातो वसुदेवगृहे ततः ॥
नंदगेहे समागत्य भावात्मव्रजसंश्रयम् ॥ १७ ॥
गोपिकाभावरूपं स्वमात्मानं स्वस्थितं व्यधात् ॥
स्वस्थितेन स्वरूपेण सततं रमते व्रजे ॥ १८ ॥
श्रुतीनामग्निपुत्राणां प्रथमाधिकृतिर्यतः ॥
अतः क्वचित्क्वचित्तस्याविर्भावोऽत्र निरूप्यते ॥ १९ ॥
यथा स्वरूपसेवायां कदाचिद्रूपदर्शनम् ॥
देहस्य भौतिकत्वेन तथाऽत्रापि विबुध्यताम् ॥ २० ॥
लीलां कृत्वा प्रमाणादिफलप्रकरणावधि ॥

निरोधेन तथाऽविद्यां सपर्वां विनिवार्य च ॥ २१ ॥
स्वानंदं पूरयित्वेव शरीरमनआदिषु ॥
श्रुतयोऽग्निकुमाराश्च निर्दोषानंदरूपिणः ॥ २२ ॥
कृपास्तेषां ततो भावं केवलं विरहात्मकम् ॥
आत्यंतिकवियोगाख्यं मुक्त्यापि फलमूर्धगम् ॥२३॥
फलं दत्त्वा भावरूपा व्रजस्थाः स्वस्थिताः कृताः ॥
अक्रूरनयने प्रोक्ता अन्यथाभावमापिताः ॥ २४ ॥
सिद्धं विदित्वा भगवान् तत्प्राकट्यप्रयोजनम् ॥
प्रायः प्राणानिति श्लोके तास्तत्रैव ह्यनूदिताः ॥२५॥
श्रुतयोऽग्निकुमारास्तु स्वात्मरूपव्रजस्थिताः ॥
आत्यंतिकस्वविरहफलभाजस्तथाकृताः ॥ २६ ॥
अंतर्गृहगताः स्वस्मिन् क्रियारूपेण वेशिताः ॥
तेषां स्वावसरे स्वस्मान्निष्कास्ये रमणं पुनः ॥ २७ ॥
प्रवेशनित्यसंयोगरूपेणैव व्यवस्थितिः ॥
भावरूपास्तु तेनेव रूपेणेति विबुध्यताम् ॥ २८ ॥
उभयोः साकृतित्वं हि मंतव्यं ब्रह्मवादिभिः ॥
सर्वाधारो लोकवेदप्रथितः पुरुषोत्तमः ॥ २९ ॥
तदाधारोऽक्षरस्तस्य प्रपंचस्तद्धृतेः पुनः ॥
जीवैरक्षरतो ज्ञेयस्तदतीतः परः पुमान् ॥ ३० ॥

ततः श्रीगोपिकावृंदगूढभाव परो हरिः ॥
श्रीमदाचार्यकृपया विज्ञेयः कृष्ण एव हि ॥ ३१ ॥
इति श्रीहरिदासविरचितं स्वमार्गमूलरूपनिरूपणं समाप्तम् ।

# अथ श्रीकृष्णशब्दार्थनिरूपणम् ।

श्रीकृष्णाय नमः ।

स्वाचार्यकृपया कृष्णशब्दार्थो विनिरूप्यते ॥
रसो वै स इति श्रुत्या रसात्मा स निरूपितः ॥ १ ॥
कृषिर्भूवाचकः शब्द इति श्रुत्यंतरेण च ॥
सदानंदो हि भगवान् स्फुटं कृष्णो निरूपितः ॥ २ ॥
सत्ता तथानंद इति विवृतं नैव कुत्रचित् ॥
इत्युक्तमस्मदाचार्यैरतो विवरणे मतिः ॥ ३ ॥
न भवेदेव जीवस्य तथापि तदुदीरितम् ॥
येमाः स्त्रिय इति श्लोकेऽवगत्याचार्यसंश्रयात् ॥ ४ ॥
वदामि कृष्णशब्दार्थं वस्तुतोऽनु वदामि हि ॥
एकवाक्यत्वमुभयोः श्रुत्योरेव हि भासते ॥ ५ ॥
रससत्ता रसवतां हृदि संभवति स्वतः ॥
भगवद्रसवत्यस्तु स्वामिन्यो नात्र संशयः ॥ ६ ॥
अतस्तद्धृदये सत्ता कृषिशब्दान्निरूप्यते ॥
रसानंदश्च तत्रैव णकारेणेव बोध्यते ॥ ७ ॥

अतः कृष्णः सदानंदः स्वामिनीहृदयस्थितः ॥
सत्ता भगवतो वाच्या नित्या त्रैकालिकी यतः ॥८॥
आनंदश्च तथोपाधिरहितो नित्य एव हि ॥
अतो हि स्थायिभावात्मा प्रभुर्वाच्यः श्रुतेर्मतः ॥ ९ ॥
भरतोऽप्याह तद्रूपं स्थायिभावो रसः स्मृतः ॥
स भावः प्रकृते वाच्यो यशोदोत्संगलालितः ॥१०॥
अतो हि परमं तत्त्वमेतदेव निरूपितम् ॥
जानीत परमं तत्त्वमिति मत्प्रभुभिर्मुदा ॥ ११ ॥
तत्त्वं हि सकलो भावः स्थायी स परमो मतः ॥
अतोवेदांतभाष्यांते पद्यमेतन्निरूपितम् ॥ १२ ॥
यतः प्राथमिको भावो ह्ययमेव हि दृश्यते ॥
एतद्भावेन भगवानाविर्भूतो विराजते ॥ १३ ॥
स भावः कथितस्तत्र यशोदायाः सुतोद्भवत् ॥
इति पद्ये तद्विशिष्टः स्थायिभावो निगद्यते ॥ १४ ॥
यमालंब्याऽखिलानां हि भावानामिह चोद्भवः ॥
स एव स्थायिभावोऽसौ गूढभावो निरूप्यते ॥ १५ ॥
तदंकुरस्तदुत्पन्नः कामात्मा ह्यधिदेवतम् ॥
तद्गतो यो रसः प्रोक्तस्तदेतत्त्रितयं पुनः ॥ १६ ॥
मिलितं कृष्णशब्दार्थो भावात्मा मन्मथो रसः ॥

तल्लक्षणारस शृंगारः साकारः श्रुतिबोधितः ॥१७॥
भावेनांतःस्थितेनैव पोष्यतेऽतर्गतो रसः ॥
अतो हि स्वामिनीभावे रसात्मपरिशोषणम् ॥१८॥
इयमेव हरेर्लीला सर्वगूढा निरूप्यते ॥
यदंतःस्थितरूपेण भावैर्विक्रीडनं हृदि ॥ १९ ॥
तद्विशिष्टः प्रभुः कृष्णशब्दार्थः परिभाव्यताम् ॥
एवंविधार्थवन्नाम मद्वाचि सततं स्थिरम् ॥ २० ॥
प्रकाशयतु मच्चित्ते स्वामिनीभावभावनम् ॥
यद्यप्ययोग्यतैवास्ति मयि तत्फलभावने ॥ २१ ॥
तथापि निश्चयश्चित्ते नाममाहात्म्यदर्शनात् ॥
यतस्तन्निःसृतं नाम कृष्णचंद्राननाननात् ॥ २२ ॥
आदिदैविकमित्येव दोषदूरीकृतिक्षमम् ॥
अयोग्ययोग्यतासिद्धिकारणं तत्त्वतः सदा ॥ २३ ॥
इति विज्ञाय तन्नाम ग्राह्यं रसनया सदा ॥
मनसा भावनीयोऽर्थः श्रीमदाचार्यसंश्रितैः ॥ २४ ॥

इति श्रीदासानुदासविरचितं कृष्णशब्दार्थनिरूपणं समाप्तम् ।

---

१ रसात्मपरिपोषणमिति पाठः समीचीनो भाति तथापि प्राचीन-पुस्तकस्थित्वात्तथा रक्षितः.

# अथ गर्वापहाराष्टकम् ।

श्रीकृष्णाय नमः ।

स्थूलं विलोक्य वपुरात्मभुवां समूहं जायां धनानि कुपथे पतितानि भूयः ॥ किं तोपमेपि मनसा सकलं समाप्ते पुण्ये वृथा तव भविष्यति मूढबुद्धे ॥ १ ॥ ईशं भजांध विनियुंक्ष्व धनानि तत्र साधून्समर्च्य परिपूजय विप्रवृंदम् ॥ दीनान् दयायुतदृशा परिपश्य नित्यं नेयं दशा तव दशाननतो विशिष्टा ॥ २ ॥ धनानि संगृह्य रसं विगृह्य निगृह्य लोकं परिगृह्य मोहे ॥ देहं वृथा पुष्टमिमं विधाय न साधवो मूढ सभाजिताः किम् ॥ ३ ॥ न नम्रता कृष्णजनेतिकृ-र्मधने परं नैव दयाऽतिदीने ॥ कुटुंबपोषैकमते सदा न ते विधेहि बुद्धीव विमर्षमंतः ॥ ४ ॥ नैते हया नैव रथा न चोष्ट्रा न वारणा नेतरवाहनानि ॥ विहाय देहं समये गते ते परं प्रपातस्य तु साधनानि ॥ ५ ॥ कृष्णस्य मायामवगत्य माया समूढतांतं हृदये विधाय॥ तदर्थमेवाखिललौकिकं ते विदेहि रे वैदिकमप्यशेषम् ॥ ६ ॥ आयुः प्रयाति न हि याति सुतादिरात्मा रायोऽखिला अपि विहाय मृतं व्रजंति ॥ इत्थं विचिंत्य

विषयेषु विसृज्य शक्तिं भक्तिं हरेः कुरु परां करुणार्णवस्य ॥ ७ ॥ विधाय महदाश्रयं समवहाय सक्तिं सृतेर्निधाय चरणांबुजं हृदि हरेः सुखं संविश ॥ किमर्थमतिचंचलं प्रकुरुषे मनः संपदो विलोक्य न हिताश्चलाः सुखयितुं क्षमा दुर्मद ॥ ८ ॥

इति श्रीहरिदासविरचितं गर्वापहाराष्टकं संपूर्णम् ।

# अथ मार्गस्वरूपनिर्णयः ।

श्रीकृष्णाय नमः ।

स्वमार्गः सर्वथा ज्ञेयः सर्वेभ्योऽतिविलक्षणः ॥
तत्स्वरूपं तु दुर्ज्ञेयं स्वसामर्थ्येन सर्वथा ॥ १ ॥
इति चिंताकृपायुक्तः कृष्णः स्वास्यं चकार ह ॥
प्रकटं सर्वसामर्थ्यसहितं विधिवद्भुवि ॥ २ ॥
रसो वै स इति श्रुत्या कृष्णो भावात्मको मतः ॥
तथा तदास्यं मंतव्यं भक्तानुभवतोऽनुगैः ॥ ३ ॥
तेन भावात्मको मार्गः सर्वोऽपि प्रकटीकृतः ॥
मुख्यो हि ब्रह्मसंबंधः स भावात्मक एव हि ॥ ४ ॥
भावो विवाहतो नार्या यथा स्वपुरुषे भवेत् ॥
तथा मम पतिः कृष्ण इति संबंधतोऽत्र हि ॥ ५ ॥

यथा स्वभर्तृसंबंधे तस्या निर्दुष्टता तथा ॥
भगवद्भावसंबंधे देहास्वात्मवतामिह ॥ ६ ॥
चांडाली चेद्राजपत्नीत्यादिना प्रभुणोदितम् ॥
पूर्वदोपस्तदा नैव संबंधः प्रतिबंधकः ॥ ७ ॥
तस्यायं धान्यसंबंधे तदनुच्छिष्टभक्षणे ॥
स्वस्वामिभुक्तदाने च स्वदेहादन्ययोगतः ॥ ८ ॥
महान्दोपस्तथाऽत्रापि मंतव्यं भगवज्जनैः ॥
यथा मध्यस्थिताभिः साऽर्पयत्यात्मानमुत्तमम् ॥ ९ ॥
तथा संबंधिभिः कृत्वा सर्ववस्तु समर्पयेत् ॥
स्वानन्यतानुसंबंधाभावो बाधक इष्यते ॥ १० ॥
यथा संबंधिभिः साकं स्वपातिव्रत्यरक्षणम् ॥
तथाऽत्र ब्रह्मसंबंधचिंतनं तादृशैर्जनैः ॥ ११ ॥
अतस्तत्रैव हि स्थेयं यत्र तत्संगसंभवः ॥
ते दुर्लभाः खलु कलौ तान् परामृश्य संवसेत् ॥ १२ ॥
अतः स्थेयं हरिस्थाने इति प्रभुवचः स्फुटम् ॥
यतो भावः सुसंरक्ष्यो वर्धनीयश्च सर्वथा ॥ १३ ॥
सबीजभावो वचनैर्व्यावृत्तिरहितैः सदा ॥
प्रेमासक्तिव्यसनतां लभते भजनक्रमात् ॥ १४ ॥
तदर्थं सेवना प्रोक्ता साऽपि भावात्मिका पुनः ॥

तत्प्राप्यफलरूपोऽपि प्रभुर्भावात्मको मतः ॥ १५ ॥
तल्लीलाऽपि तथाभूता मंतव्या रसकोविदैः ॥
तस्माद्यदेव स्वाचार्यचरणैकप्रकाशितम् ॥ १६ ॥
भावात्मकं हि वेत्तव्यं विद्वद्भिरिह सर्वथा ॥
यथा मूलं ततो जातं कार्यं चापि तथा भवेत् ॥१७॥
स्वाचार्यास्तत्कृतो मार्गस्तत्प्राप्य पुरुषोत्तमः ॥
सर्वमत्युष्णभावाढ्यमिति मंतव्यमुत्तमैः ॥ १८ ॥
स्वाचार्यशरणैर्जातवरणैर्भगवज्जनैः ॥
एतावानेव विज्ञेयः सिद्धांतोऽत्र विचक्षणैः ॥ १९ ॥

इति श्रीहरिदासविरचितो मार्गस्वरूपनिर्णयः समाप्तः ।

## अथ स्वमार्गीयकर्तव्यनिरूपणम् ।

श्रीकृष्णाय नमः ।

अथ श्रीवल्लभाचार्यकृपया विनिरूप्यते ॥
सन्मार्गनिष्ठकर्तव्यं स्वसंतोषाय सर्वथा ॥ १ ॥
सेव्यः कृष्णः सदानंदो भक्तैकहृदयाश्रयः ॥
तद्भावात्मा तथाभूतः सर्वलीलायुतः सदा ॥ २ ॥
अनुरागस्त्रिधा लोके श्रवणाद्दर्शनात्तथा ॥
तासां यः सहजो रागः स एव भगवानजः ॥ ३ ॥
नंदस्य भवने जातः सुखदानाय भूतले ॥

तत्स्वरूपं तथा वक्तुं श्रुतयोऽपीह नेशते ॥ ४ ॥
यतोऽभिवृत्तिर्वचसां मनसा सहरूपता ॥
किंचिदाचार्यचरणप्रसादात्तन्निरूपितम् ॥ ५ ॥
अर्थं बुध्वा स्वबुध्यैव मया किंचिन्निरूप्यते ॥
गोपिकानामेव भावः स यशोदांकसंस्थितः ॥ ६ ॥
यशोदाऽपि च तद्भावरूपैवेति विबुध्यताम् ॥
नंदस्तदीयास्तद्भूमिस्तद्गृहं तद्वनं च तत् ॥ ७ ॥
तदुत्सवस्तथा सर्वं तत्र तद्भाव एव हि ॥
सोऽतिगुप्तो बहिः स्थातुं न शक्नोतीति मेलनम् ॥८॥
पूर्वरूपेण नैवास्ति ततो भेदनिरूपणम् ॥
उत्पत्तिः केवलस्येति स्पष्टं नैव निरूपिता ॥ ९ ॥
अतो हि गोपिकाभावः सामग्रीसहितस्तथा ॥
प्रकटः सन्व्रजे चक्रे लीलां स्वानंदरूपिणीम् ॥१०॥
अवतारचरित्रं यत्पूतनामारणादिकम् ॥
प्रादुर्भूय स्वयं कृष्णः पुनः सर्वं चकार ह ॥ ११ ॥
तदेव रूपितं सर्वं तत्र प्रकरणोत्तमे ॥
कस्याश्चित्पूतनायंत्या इति संदर्भतस्तथा ॥ १२ ॥
अतो हि भावरूपत्वं लीलामात्रस्य युज्यते ॥
यथा श्रुत्या गुणद्वाराऽगुणवानपि रूप्यते ॥ १३ ॥

तथा भागवतेनापि सहजं तन्निरूप्यते ॥
अवतीर्णचरित्रेण विभेदज्ञापनं तयोः ॥ १४ ॥
तदपि श्रीमदाचार्यकृपयैव विबुध्यते ॥
तस्य सेवैव कर्तव्या भावसेवा हि मानसी ॥ १५ ॥
स भावो दुर्लभस्तस्य कथं सेवा भवेदिह ॥
इति चेत्तत्र युज्येत समाधानमिदं पुनः ॥ १६ ॥
भावो हि सहजः सिद्धः स्वामिनीष्वेव सर्वथा ॥
तस्य चान्यस्थितस्यात्र कथं ह्यागतिर्भवेत् ॥१७॥
न वा तथाविधाऽन्येषां योग्यता तेन कल्प्यताम् ॥
अतस्तासां प्रसादेन कथंचित्तु भवेदपि ॥ १८ ॥
हरेरिव नरस्यास्य कठिनं तत्प्रसादनम् ॥
तस्मात्कृपानिधिः कृष्णः स्वास्यमाविश्चकार ह ॥१९॥
स्वामिनीहृदयस्थस्य भावरूपस्य यन्मुखम् ॥
भावाग्निरूपं तदास्यं स भावो विरहात्मकः ॥ २० ॥
तद्दानाय तदात्मा स्वसान्निध्यफलभावनः ॥
अस्मत्प्रभुः कदा श्रीमदाचार्यः शिरसि स्थितः॥२१॥
तन्निवेदनतस्तस्य सन्निधानाद्भवेदसौ ॥
भावस्तथाविधो मुख्यसेवासाधनतां गतः ॥ २२ ॥
तत्सिद्धिर्गोकुलाधीशे सर्ववस्तुसमर्पणात् ॥

तत्सिद्ध्यति स्वसर्वस्वविनियोगेन सर्वथा ॥ २३ ॥
तदर्थं कायिकी सेवा तनुवित्तश्रुतोदिता ॥
एवं तन्मानसः सर्वं कुर्वन् चिंताविवर्जितः ॥ २४ ॥
सेवापरस्तथा कुर्वन्वियोगानुभवं हृदा ॥
सेवानवसरे यद्वद्गोचारणगते हरौ ॥ २५ ॥
संन्यासेन विधेया स्यादनुभूतिः परा पुनः ॥
आत्यंतिकवियोगस्य परा काष्ठा फलस्य सा ॥२६॥
एवं विज्ञाय विधिना विहिताशः सदादृतः ॥
आश्रित्य वल्लभाचार्यांश्चिरं तिष्ठेत्समाहितः ॥ २७ ॥
इति श्रीवल्लभाचार्यप्रसादेन निरूपितम् ॥
संतां संतोषतः स्वांते स्थापनीयं प्रयत्नतः ॥ २८ ॥
इति श्रीहरिदासविरचितं स्वमार्गीयकर्तव्यनिरूपणं समाप्तम् ॥

---

## अथ श्रीमत्प्रभोः सर्वांतरत्वनिरूपणम् ।

श्रीकृष्णाय नमः ।

प्रपंचो भगवत्कार्यस्तथा नित्यस्तदात्मकः ॥
सर्ववेदांतवेद्यो हि तदंतःस्थितरक्षकः ॥ १ ॥
कूटस्थः सच्चिदानंदोऽव्यक्तो व्यक्तसमाश्रयः ॥

---

१ सदा.

पुरुषोत्तमरूपांघ्रितल्लोकस्तस्य चासनम् ॥ २ ॥
तदंतःस्थो लोकवेदप्रथितः पुरुषोत्तमः ॥
सरसात्मतया प्रोक्तः शृंगारः सर्वसंमतः ॥ ३ ॥
स द्विधा संगविरहाभ्यामित्येव प्रतीयते ॥
संयोगात्मा यथानंदाकारः श्रुतिनिरूपितः ॥ ४ ॥
सर्वलीलादिसामग्रीसहितो भक्तसंयुतः ॥
तदंतःस्थो वियोगात्मा मंतव्यश्च तथाविधः ॥ ५ ॥
तस्य या काचिदेवास्ति सामग्री सापि तादृशी ॥
तद्रूपानुभवोऽप्यत्रेंद्रियैरपि तथाविधैः ॥ ६ ॥
भावात्मकत्वाद्रूपस्य तस्य सेवापि मानसी ॥
तत्संयोगोऽपि भावेन लीलाभिर्विरहात्मनः ॥ ७ ॥
सर्वांतरं चैतदेव रूपं सद्भिर्विबुध्यताम् ॥
श्रीमदाचार्यचरणैः श्रुतिसारं प्रकाशितम् ॥ ८ ॥
तदर्थं ब्रह्मसंबंधो भावः सेवाधिकारकृत् ॥
भावेन भावसेवायां भावरूपस्य मत्प्रभोः ॥ ९ ॥
यः सर्वांतर्गूढभावः स्थायी कृष्णो निरूपितः ॥
तत्प्राप्तिर्भात्रसंप्राप्तिर्नान्यदित्येष निश्चयः ॥ १० ॥

इति श्रीहरिदासविरचितं श्रीमत्प्रभोः सर्वांतरत्व-
निरूपणं समाप्तम् ।

# अथ श्रीपुरुषोत्तमस्वरूपाविर्भाव-निर्णयः ।

श्रीकृष्णाय नमः ।

अथ स्वाचार्यचरणावलंबनबलान्मया ॥
पुरुषोत्तमरूपाविर्भावे किंचिन्निरूप्यते ॥ १ ॥
रसात्मकः श्रुतिशिरःसिद्धः स पुरुषोत्तमः ॥
रसः शृंगार एवास्ति नाट्यसिद्धांतसंमतः ॥ २ ॥
अन्येषु रसता नैव मन्यंते भरतादयः ॥
शृंगाररससंबंधादन्येऽपि स्यू रसा इति ॥ ३ ॥
यथैवोपकृतिः सर्वा महतां स्वर्णनिर्मिता ॥
शृंगारस्य तथा कार्ये रसा एवोपयोगिनः ॥ ४ ॥
स एव श्रुतिवाक्यैकवाक्यताबलतः स्फुटः ॥
साकारः सच्चिदानंदो विरुद्धाखिलधर्मधृक् ॥ ५ ॥
रूपवानखिलाधारोऽनंतशक्तिः स्वभावतः ॥
अप्राकृतनिजानंदरूपदेहेंद्रियादिकः ॥ ६ ॥
स शास्त्रे द्विविधः प्रोक्तः संयोगो विरहस्तथा ॥
रसे यथा तारतम्यं संयोगाद्विरहे तथा ॥ ७ ॥
तत्स्वरूपेऽपि मंतव्यं भक्तानुभवतः स्फुटम् ॥

पूर्वोऽखिलस्य शास्त्रीयक्रियाधारस्तथोत्तरः ॥ ८ ॥
भावात्मा भावरूपैकक्रियामात्राश्रयः स्मृतः ॥
लोकवेदप्रसिद्धो हि पूर्वस्तस्मात्तथामतः ॥ ९ ॥
श्रुतिसिद्धाखिलब्रह्मधर्माधारो जगत्कृतिः ॥
चतुर्व्यूहादिसहितः सर्वाश्चर्यमयो हरिः ॥ १० ॥
उत्तरो गूढभावत्वाद्भक्तैकहृदयस्थितः ॥
अनुभूतिप्रमाणैकवेद्यो मानांतरातिगः ॥ ११ ॥
अनंतकोटिलीलानामाश्रयो नित्यनूतनः ॥
प्रकृते सर्वरूपेण प्रादुर्भावो हरेर्मतः ॥ १२ ॥
व्यवस्था तत्र रचिता श्रीमदाचार्यपंडितैः ॥
लोकवेदप्रसिद्धस्तु व्यूहयुक्तो हरिस्तथा ॥ १३ ॥
वसुदेवगृहे जातो वाक्यसत्यत्वसिद्धये ॥
व्यूहत्रयस्य तत्रास्ति कार्यं तद्धि निरूपितम् ॥ १४ ॥
तत्रातएव व्यूहानामाविर्भावोऽपि रूपितः ॥
वासुदेवस्य कार्यं तु व्रजेऽप्यस्ति न संशयः ॥ १५ ॥
पूतनादिमहादैत्यमुक्तिदानान्निरूप्यते ॥
अग्रे राजन्यदैत्यांशमारणं यन्निरूपितम् ॥ १६ ॥
तत्संकर्षणरूपेण भूभारहरणं मतम् ॥
अतो हि वासुदेवाख्यः शुद्धसत्वात्मकः परः ॥१७॥

आविर्भावाय कृष्णस्य प्रादुरासीदितीर्यते ॥
भावात्मा तु भवत्येव शुद्धे सत्वे स्वयं प्रभुः ॥ १८ ॥
इति बोधयितुं वासुदेवोत्पत्तिर्निरूपिता ॥
तमादाय शुकेनोक्तमुत्पन्न इति सिद्धवत् ॥ १९ ॥
स्तन्योत्पत्तिश्च तेनैव न प्रभोर्भावरूपतः ॥
इयमेव खलूत्पत्तिः शुद्धे सत्वे स्थितिर्हरेः ॥ २० ॥
आविर्भावे तदेवात्र मन्त्रार्थैरुपवर्णितम् ॥
अन्यथा भावरूपस्य का वाच्योत्पत्तिशब्दिता ॥२१॥
अत आत्मन उत्पन्न इति नंदमतिस्तदा ॥
युज्यते नान्यथा साक्षादुत्पन्ने मतिवर्णनम् ॥ २२ ॥
कथं च विवृतावस्मदाचार्याणां हि युज्यते ॥
वासुदेवस्तु भक्तानामंतःकरणमूर्तिमान् ॥ २३ ॥
तमादौ स्वाश्रयीकृत्य भावात्मा व्यक्ततां गतः ॥
अत उत्सवगीतेषु सोऽजनत्वेन कीर्तितः ॥ २४ ॥
विवृतं च तथा ताभिर्ज्ञातमित्यस्मदीश्वरैः ॥
एतदेवोक्तमाचार्यैर्मायया सह सूर्यया ॥ २५ ॥
नंदगेहे मूलरूपः स जातः पुरुषोत्तमः ॥
एतस्यैव प्रभोः पूर्वरूपस्यानकदुंदुभेः ॥ २६ ॥

गृहेऽवतारश्चाद्यो हि नंदगेहे समागतः ॥
स एव गतिसिध्यर्थं बभूव प्राकृतः शिशुः ॥ २७ ॥
यशोदोत्संगललितमूलप्रतिकृतित्वतः ॥
गमनानंतरं तत्र भावरूपेण योजनम् ॥ २८ ॥
अतएव हि संयोगवियोगानुभवो मतः ॥
केवलस्तु ततः पश्चात्पूर्वस्मिन्मथुरां गते ॥ २९ ॥
वासुदेवोऽपि तत्रास्ति सर्वमेकीभवत्तदा ॥
ज्ञानिनामपि भक्तानां मोहमुत्पादयत्यतः ॥ ३० ॥
एवं सर्वचरित्राणां संनिवेशोऽपि सेत्स्यति ॥
अतो भावात्मनो लीला क्वचिदेव निरूपिता ॥३१॥
यर्ह्यंगनेत्यादिपद्येष्वेषा भावात्मिका मता ॥
एवं विज्ञेयमखिलं श्रीमदाचार्यसंस्थितैः ॥ ३२ ॥
जीवाशक्यं सर्वथैव यद्यप्येतन्निरूपणम् ॥
तत्प्रसादप्रभावेण हरिदासेन रूपितम् ॥ ३३ ॥
इति कृष्णस्वरूपस्याविर्भावोऽत्र विवेचितः ॥
विज्ञाय तं तदीयास्तन्निरुद्धाः संभवंतु हि ॥ ३४ ॥

इति श्रीहरिदासविरचितः श्रीपुरुषोत्तम-
स्वरूपाविर्भावनिर्णयः समाप्तः ।

# अथ स्वमार्गीयसेवाफलरूपनिर्णयः ।

श्रीकृष्णाय नमः ।

अथ श्रीवल्लभाचार्यमार्गसर्वस्वरूपिणी ॥
सेवा ससाधना सर्वा रूप्यते सनिदर्शना ॥ १ ॥
चेतस्तत्प्रणवं सेवा मानसी फलरूपिणी ॥
प्रोक्ता निरोधरूपा सा व्रजस्थेष्वेव दृश्यते ॥ २ ॥
प्रमेयबलजस्तेषु निरोधः प्रभुणा कृतः ॥
तत्स्वरूपं तु भावेनानुभावस्तु तदात्मनः ॥ ३ ॥
भावस्तु विप्रयोगेण तापक्लेशैर्विचारणम् ॥
तदोद्भवः प्रभोस्तत्र हृदये स्याद्रसात्मनः ॥ ४ ॥
बाह्यास्फूर्तौ वियोगेन रसे हृदयदेशगे ॥
रसात्मकप्रभोस्तत्र प्रादुर्भावः स्वतो भवेत् ॥ ५ ॥
तेनैव प्रभुणा सर्वलीलानुभवतो हृदि ॥
रसात्मकस्वरूपस्य स्थितिस्त्रैकालिकी भवेत् ॥ ६ ॥
एवमेव स्थितिर्ज्ञेया स्वामिनीहृदयेषु हि ॥
सैवास्मदाचार्यवर्यैर्नमामित्यत्र रूपिता ॥ ७ ॥
स्वतंत्रभक्तास्ते वाच्या येष्वेवं भगवत्स्थितिः ॥
एवमेव हि तद्भक्तेः स्वातंत्र्यं नान्यथा भवेत् ॥८॥
यतो न हि प्रभोस्तत्र बहिः प्राकट्यमिष्यते ॥

स्वतंत्रा भक्तिरधुना व्रजस्त्रीष्वेव दृश्यते ॥ ९ ॥
रासस्थास्तु तथान्यत्र स्थापिता स्वमुखांबुजे ॥
तदाश्रयवतां नृणां तत्कृपातो भवत्यपि ॥ १० ॥
यतो भगवा प्रोक्तं तान्प्रत्येव समर्पणम् ॥
श्रीमत्प्रभोस्तु तद्दानमाचार्येभ्यो न संशयः ॥ ११ ॥
अन्येषां तत्कृपातस्तु भविष्यति न संशयः ॥
कृपा हि मार्गरूप्येव निश्चिता भवति ध्रुवम् ॥१२॥
तत्रादावधिकारत्वात्प्रथमं यत्समर्पणम् ॥
तदाचार्येभ्य एवोक्तमतस्तद्वारकं फलेत् ॥ १३ ॥
अतस्तेभ्यस्तद्विधाय प्रेमसेवां प्रसाधयेत् ॥
तस्याधिकाररूपत्वादाधिकारिकरूपिणी ॥ १४ ॥
तनुवित्तयुता सेवा समर्पणफला हि सा ॥
समर्पणं तु भवति विनियोगेन सार्थकम् ॥ १५ ॥
विनियोगाद्भवेदेव प्रेमासक्त्यादि चाखिलम् ॥
कृपाविशेषाद्व्यसनं प्रपंचे विस्मृते भवेत् ॥ १६ ॥
अयमेव निरोधो हि मानसी सेवनापि वा ॥
आसक्तेर्व्यसनादौ तु कारणत्वं हि गम्यते ॥१७॥
प्रपंचविस्मृतिस्तत्र सुलभाऽऽसक्तितो भवेत् ॥
एतदेव स्वामिनीषु प्रभुणा विहितं पुरा ॥ १८ ॥

दृष्टांतार्थक्रमेणैव तत्सर्वमिह रूप्यते ॥
प्रादुर्भूय स्वयं नंदगेहे तासां समर्पणम् ॥ १९ ॥
कारयित्वा स्वयं तत्र लीलां कुर्वन्नभौ प्रभुः ॥
आत्मानं भूषयांचक्रुरित्यत्रोक्तं समर्पणम् ॥ २० ॥
यावत्प्रभोः समर्थत्वं सुखदाने भवेत्पुनः ॥
समर्पणफलं तावत्तापक्लेशो निरूपितः ॥ २१ ॥
आविर्भावो हि बाल्येऽपि स्वेष्टरूपस्य तेन हि ॥
सर्वाभिरग्रे भाव्याभिर्लीलाभिः सुखसंभवः ॥ २२ ॥
यद्बंगनेत्यादिभिस्तु तदेव विनिरूपितम् ॥
अग्रे क्रमेण सर्वोऽपि निरोधः सुनिरूपितः ॥ २३ ॥
निरोधेऽपि न यास्विच्छा तासां मुक्तिर्निरूपिता ॥
अंतर्गृहगतानां तु तथा देहविधारणम् ॥ २४ ॥
प्रभ्विच्छातः स्वतो नेति स्थापयित्वेति चोदितम् ॥
मुक्तिस्तु प्रभुणा स्वस्मिन्नित्यसंयोजनं स्वतः ॥ २५ ॥
संयोगानुभवार्थं हि ततो निष्कासनं क्वचित् ॥
अनुभूय तया लीलास्तत्स्वरूपे व्यवस्थितिः ॥ २६ ॥
फलभक्तिस्ततो भिन्ना प्रभोर्भक्तहृदि स्थितिः ॥
यावल्लीलाकृतिर्नित्यपूर्वरूपनियोजनम् ॥ २७ ॥
आत्यंतिको वियोगोऽयं सर्वत्र विनिरूपितः ॥

एतत्फलं तु बहुधा सेवायामपि सर्वथा ॥ २८ ॥
दानसाध्यमतः प्रोक्तं दाने चाद्य इति स्फुटम् ॥
दानमाननवद्धेस्तु प्रादुर्भावादिनिश्चितम् ॥ २९ ॥
तदाश्रयः सदा कार्यः सर्वभावेन सर्वथा ॥
भविष्यति तदेकात्मविश्वाससयुजां नृणाम् ॥ ३० ॥
कृपासाध्यमतः सर्वं तथा चेन्न कृपा भवेत् ॥
मुक्तिरेव फलं तस्य सायुज्यमिति निश्चयः ॥ ३१ ॥
सायुज्यमक्षरे नैव किं तु तत्पुरुषोत्तमे ॥
भक्तिमार्गफलेष्वेतन्मध्यमं फलमीर्यते ॥ ३२ ॥
सायुज्यकाम्ययेत्यादिनिबंधेऽपि निरूपितम् ॥
भक्तेर्दुर्लभता प्रोक्ता दुर्लभेति न सोच्यते ॥ ३३ ॥
तस्मात्कृपातारतम्यात्फलमुक्तमनेकधा ॥
फलद्वयाधिकारो हि योग्यगेहादिकं पुनः ॥ ३४ ॥
भक्तिमार्गीयसेवायाः साधारणकृपाफलम् ॥
फलत्रयेऽपि नैवास्ति कालादिकनियम्यता ॥ ३५ ॥
एवं विज्ञाप्य च फलं फलसेवाश्रितैर्जनैः ॥
फलदाचार्यचरणौ शरणीक्रियतां सदा ॥ ३६ ॥

इति श्रीहरिदासोदितः स्वमार्गीयसेवाफलरूप-
निर्णयः समाप्तः ।

# अथ पुष्टिमार्गीयस्वरूपनिरूपणम् ।

श्रीकृष्णाय नमः ।

अथ श्रीवल्लभाचार्यचरणाब्जप्रसादतः ॥
क्रियते पुष्टिमार्गीयप्राप्यरूपविनिर्णयः ॥ १ ॥
शृंगाररससंस्थानं स्थायिभावः प्रभुर्मतः ॥
रसो निरूपितः शास्त्रे यादृशस्तादृगेव हि ॥ २ ॥
नृत्यबंधादिभिर्बोध्यः क्रिया तत्रापि कारणम् ॥
क्रियया नृत्यबंधाद्यैः शास्त्रादुद्रेकतोऽपि च ॥ ३ ॥
उद्दोद्भयः स्वामिनीभावः सोऽस्माकं मन्मथः प्रभुः ॥
गूढभावो हृदि स्थायी स्त्रीभावात्मा कृपाकरः ॥ ४ ॥
सुखरूपस्तु तत्पश्चात् भावी तदनुभावकः ॥
भक्तसंबंधजनितस्तद्भोक्ता प्रभुरुच्यते ॥ ५ ॥
कामाख्यं सुखमुत्कृष्टमित्यत्र विनिरूपितम् ॥
तस्य भावैकभोग्यत्वाद्भोक्तृत्वमुपपद्यते ॥ ६ ॥
अतिगूढः स भगवानेवं ज्ञेयः कृपाबलात् ॥
तदाश्रितैः सदा सिद्धैः सेव्यश्च प्रीतिसेवया ॥ ७ ॥

इति श्रीहरिदासविरचितं पुष्टिमार्गीयस्वरूपनिरूपणं समाप्तम् ।

# अथ स्वमार्गीयस्वरूपस्थापनप्रकारः ।

श्रीकृष्णाय नमः ।

समानीय स्वयं हट्टान्मूर्तिं सर्वांगशोभानाम् ॥
कृष्णस्य बाल्यकैशोरावस्थापन्नां विशेषतः ॥ १ ॥
बाल्यस्यैकाकिनीमन्यां सद्वितीयामथापि वा ॥
यतो मूलचरित्रं हि बाल्यकैशोरयोः कृतम् ॥ २ ॥
स्नापयित्वा तु विधिवत्पंचामृतजलादिभिः ॥
शंखेन च ततः पश्चाच्चंदनेनानुलेपनम् ॥ ३ ॥
पुनरुष्णजलेनापि स्नापयित्वा तदुत्तरम् ॥
संप्रोक्ष्य सूक्ष्मवस्त्रेण स्थापयेदासनोपरि ॥ ४ ॥
प्रार्थयित्वा निजाचार्यान्ध्यात्वा तद्धृदयस्थितम् ॥
भावात्मकं प्रभो रूपं सर्वलीलायुतं सदा ॥ ५ ॥
लक्ष्मीसहस्रसंसेव्यं तापक्लेशयुतात्मना ॥
बध्वांजलिं तथाभूतः पठेच्च तदनंतरम् ॥ ६ ॥
अव्यादजोंघ्रिमणिमानित्यादिन्यासपूर्वकम् ॥
विभाव्य स्वामिनीरक्षां प्रत्यंगे स्थापितांगुलिः ॥७॥
रक्षामिषेण विहितं भावात्मस्थापनं प्रभौ ॥
स्वाचार्यसंश्रितैस्तद्वन्मूर्तावपि हरिस्थितिः ॥ ८ ॥

इदमेवोक्तमाचार्यैर्भक्तिमार्गप्रकारतः ॥
तत्र च स्थितमित्यादि स भावात्मा हरिर्मतः ॥ ९ ॥
पठित्वा तु त्रिरावृत्त्या शृंगारं रचयेत्तदा ॥
वस्त्रैराभरणैर्वापि प्रेम्णा सौंदर्यसूचकैः ॥ १० ॥
आस्तीर्य वस्त्रैर्विधिवदासनं तत्र भावयेत् ॥
तदुत्तरीयवस्त्राणि ततस्तामुपवेशयेत् ॥ ११ ॥
तद्दर्शनेति तत्रत्य पद्ययुग्ममुदीर्य च ॥
ततः सज्जीकृतं सम्यगोदनव्यंजनादिके ॥ १२ ॥
भावयित्वा तु तत्रत्य स्वामिनीविहितार्चनम् ॥
हृदि कृत्य निजाचार्यान् दैन्यवानेकतत्परः ॥१३॥
स्वयं समर्पयेत्कायमाचार्यद्वारकं जनः ॥
तांबूलमुत्तमं दद्यादाचम्य प्रोंछ्य चाननम् ॥ १४ ॥
तत उत्थाय च करौ संयोज्य विधिवत्पठेत् ॥
कृष्णाश्रयाभिधं स्तोत्रं प्रणमेद्दंडवद्भुवि ॥ १५ ॥
अदंभः सर्वथापेक्षारहितः करुणापरः ॥
विचार्य वरणं श्रीमदाचार्यपदसंश्रयः ॥ १६ ॥
स्वसेवकाय शुद्धाय सततं प्रयतात्मने ॥
प्रयच्छेत्तत्स्वरूपं तु फलरूपतया पुनः ॥ १७ ॥

भक्तिमार्गस्थितैः श्रीमदाचार्यपदसंश्रयः ॥
सेव्यमानं सदा भावैर्निरोधं साधयेद्ध्रुवम् ॥ १८ ॥

इति श्रीहरिदासविरचितः स्वमार्गीयस्वरूपस्थापनप्रकारः समाप्तः॥

## अथ श्रीमत्प्रभोश्चिंतनप्रकारः ।

श्रीकृष्णाय नमः ।

अथ श्रीवल्लभाचार्यचरणाब्जप्रसादतः ॥
स्वमार्गसेव्यरूपस्य चिंतने रीतिरुच्यते ॥ १ ॥
विपिने विपिने वृक्षलतादिषु विशेषतः ॥
परिभ्रमंती विरहे विकला गोपबालिका ॥ २ ॥
विस्रस्तवसना शुष्करसना रसनायका ॥
विकीर्णकेशा सद्वेपा नाथ नाथेति वादिनी ॥ ३ ॥
चलत्पदयुगा दुःखान्मुहुर्मीलितलोचना ॥
लसल्लक्ष्मपदांभोजचिह्नदर्शनकातरा ॥ ४ ॥
दृष्टदावाग्निविशिखा निःश्वासग्रहणातुरा ॥
धरणीपतिताऽत्यंतविरहाकुलचेतना ॥ ५ ॥
हृदि प्रादुर्भवद्भावदृष्टगोकुलनायका ॥
नाथोत्थापय मामेवं मुहुर्विक्लववादिनी ॥ ६ ॥
विचाररहिता चित्तचिंताकुलितमानसा ॥

मनोजगूढभावात्मप्रियप्राकट्यकांक्षिणी ॥ ७ ॥
समस्तलीलानुकृतिकृतिस्वप्रियभावुका ॥
कोटिकंदर्पलावण्यभावरूपप्रियाश्रया ॥ ८ ॥
नित्यलीलाश्रया नित्यरतिसेवनतत्परा ॥
परमार्द्रतमप्रेमक्लिन्नहृत्पंकजादरा ॥ ९ ॥
भावनीया नित्यमेवंभूता मत्स्वामिनी हरेः ॥
तदेकहृदयस्थायी तद्भावः कृष्ण एव हि ॥ १० ॥
लीलासहस्रवलितः सामग्रीसहितस्तथा ॥
भावनीयः सदानंदः सदानंदादिलालितः ॥ ११ ॥
इदमेवोक्तमाचार्यैः सिद्धांतस्य निरूपणे ॥
आत्मानंदसमुद्रस्थं कृष्णमेवेति यद्वचः ॥ १२ ॥
तदाशयस्तु विवृतः कृपयैव प्रभोर्मया ॥
अवगम्य जनाः सर्वे चिंतयंतु हरिं सदा ॥ १३ ॥
इति श्रीहरिदासविरचितः श्रीमत्प्रभोर्श्रितचमत्कारः समाप्तः ॥

तथाभूतव्रजश्रीमद्गोवर्धनविलासकृत् ॥
यथा ह्यग्निसुतान्सर्वान्कृपया कोसलेंद्रतः ॥ २ ॥
अनुगृह्य स्वरूपात्मभक्तावेशं विधाय च ॥
तदा तद्रूपतापत्तिः मूललीलापरायणः ॥ ३ ॥
यथा वा पूर्वरूपेऽपि स्वयमाविश्य सर्वतः ॥
मूलरूपेण कृतवाँल्लीलास्तद्वत्स्वयं हरिः ॥ ४ ॥
तथा श्रुतिषु सर्वासु भावात्मा स्वीयरूपताम् ॥
संपाद्य मूलरूपेण रमते तादृशीषु वै ॥ ५ ॥
आश्रयत्वं तथाभावे प्रभोस्तत्र तथाऽत्र हि ॥
उभयोर्भावरूपत्वं मंतव्यं ब्रह्मवादिभिः ॥ ६ ॥
मुख्यशक्तिस्वरूपं तु स्त्रीभावो हरिरुच्यते ॥
तत्र स्वंशः परा शक्तिर्भावांशः कृष्णशब्दितः ॥ ७ ॥
यथा हि सर्वभावात्मा कृष्णः साऽपि च तादृशी ॥
विशिष्टस्यैव सर्वेषां कृष्णस्य हृदयस्थितेः ॥ ८ ॥
द्वयोर्मिलितयोर्वाच्यं मन्मथत्वमभेदतः ॥
द्विपत्रत्वाद्रसस्यालंबने द्वैविध्यमुच्यते ॥ ९ ॥
एवं हि संशयः सर्वश्छेत्तव्यः प्रभुसंश्रितैः ॥
विशिष्टे गोकुलाधीशरूपे सर्वत्र सर्वथा ॥ १० ॥

इति श्रीहरिदासविर० मूलरूपसंशयनिराकरणं समाप्तम् ।

# अथ स्वमार्गीयमुक्तिद्वैविध्यनिरूपणम् ।

श्रीकृष्णाय नमः ।

जीवानां कृष्णसंबंधो भक्तिमार्गे विमोचनम् ॥
स द्वेधा जीवविहितो भगवद्विहितस्तथा ॥ १ ॥
जीवस्य कृष्णसंबंधो मार्गनिष्ठतया क्रमात् ॥
प्रवेशः परमानंदे तद्धि सायुज्यशब्दितम् ॥ २ ॥
कृष्णप्रवेशाद्या मुक्तिः सा सद्योमुक्तिरुच्यते ॥
न तत्र भक्तसहितः कश्चिद्वै साधनक्रमः ॥ ३ ॥
अत्यंतकृपया कृष्णो विशते स्वप्रमेयतः ॥
तदेव तत्र भवति मुक्ततावेशनक्षणे ॥ ४ ॥
अंतर्गृहस्थास्तु यथा पुण्यपापक्षयः क्रमात् ॥
रासस्थास्तु तथावेशादभवन्मुक्तता क्षणात् ॥ ५ ॥
अनेनैव प्रकारेण ज्ञातव्या मोक्षयोर्भिदा ॥
जीवस्य भगवत्प्राप्तिः पूर्वा भगवतः परा ॥ ६ ॥
अत एवास्मदाचार्यैरुक्तं संन्यासनिर्णये ॥
बहिश्चेत्प्रकटः स्वात्मेत्यादिना मुक्तिलक्षणम् ॥ ७ ॥

इति श्रीहरिदासविरचितं स्वमार्गीयमुक्तिद्वैविध्यनिरूपणं समाप्तम् ।

# अथ भक्तिद्वैविध्यनिरूपणम् ।

श्रीकृष्णाय नमः ।

भक्तिर्द्विधा पदांभोजवदनांबुजभेदतः ॥
प्रथमा शीतला भक्तिर्यतः श्रवणकीर्तनात् ॥ १ ॥
तत्रैव सुखसंबंधः सुलभा नारदादिषु ॥
द्वितीया दुर्लभा यस्मादधरामृतसेवात् ॥ २ ॥
तद्भावभावनारूपा विरहानुभवात्मिका ॥
गोपसीमंतिनीनां च सा दत्ता हरिणा स्वतः ॥ ३ ॥
तदर्थं करुणः कृष्णो भावात्मा स्वास्यमुत्तमम् ॥
भावाग्निरूपं जगति कृपयाऽऽविश्चकार सः ॥ ४ ॥
श्रीवल्लभाख्यानाचार्यान् विश्वोद्धारकृते यतः ॥
दर्शयित्वा स्ववदनं वचनामृतबिंदुभिः ॥ ५ ॥
वेणुनादैरिव स्वीयान्पाययित्वाऽधरामृतम् ॥
मुखारविंदरूपां तां भक्तिं भावात्मिकां ददौ ॥ ६ ॥
तथाविधस्ववदनभक्तिदानेन चाखिलान् ॥
दैवजीवानंतरगान् कृतार्थान् विदधे हरिः ॥ ७ ॥
एवंविधस्वरूपान् श्रीवल्लभाख्यान् कृपानिधीन् ॥
आश्रितोऽहं विनिश्चित्य ऐहिके पारलौकिके ॥ ८ ॥

इति श्रीहरिदासविरचितं भक्तिद्वैविध्यनिरूपणं समाप्तम् ।

# अथ स्वमार्गीयसाधनरहस्यम् ।

श्रीकृष्णाय नमः ।

श्रीमदाचार्यमार्गोऽयं निःसाधनकलात्मकः ॥
तत्र तद्भावनं भावसाधनं तत्कृपावताम् ॥ १ ॥
स भावः संगराहित्यान्न भविष्यति सर्वथा ॥
संगस्य साधनं सर्वरागभावो गृहादिषु ॥ २ ॥
रागाभावस्तु सततं सेवया तत्कृपावताम् ॥
तत्कृपासाधनं सा तु भवेत्तत्तोषणेन हि ॥ ३ ॥
तत्तोषणं तु तद्भक्तिभाववर्धनजो भवेत् ॥
भावो हि मार्गसर्वस्वं कर्तव्यं तस्य रक्षणम् ॥ ४ ॥
सेवापि सततं चित्ते भावनात्मा तदा भवेत् ॥
निवेदनं तु स्मर्तव्यमिति यत्साधनं परम् ॥ ५ ॥
तादृशैरिति वाक्येन संगस्तत्राप्यपेक्षितः ॥
स एव साधनं संगो मोक्षोऽस्मिन्मार्ग एव च ॥६॥
ममोत्तमेति वाक्येन तदभावे वृथाऽखिलम् ॥
तस्मात्सर्वं परित्यज्य सत्संगेन सदा हरिम् ॥ ७ ॥
सेवयेदांतरेणापि बाह्येन मनसा पुनः ॥
स्वतःफलं हि तत्संगं विदित्वा विदधीत हि ॥ ८ ॥

इति श्रीहरिदासविरचितं स्वमार्गीयसाधनरहस्यं समाप्तम् ।

# अथ स्वमार्गरहस्यनिरूपणम् ।

श्रीकृष्णाय नमः ।

रसो वै स इति श्रुत्या रसरूपो निरूपितः ॥
स मंतव्यः स्वशास्त्रेण यथा सिद्धस्तथा पुनः ॥ १ ॥
द्विधा पूर्वस्तु संयोगो विरहश्च तथोत्तरः ॥
क्रियाप्रधानसंयोगे रसोद्बोधाय रूपिताः ॥ २ ॥
भावास्तथोत्तरे शुक्तस्वरूपमपि तादृशम् ॥
भावात्मकं तु तत्प्राप्तिर्भावप्राप्तिर्न चेतरत् ॥ ३ ॥
स भावः सर्वथा पूर्वदेहं स्वेनानिवर्त्य च ॥
विदध्यान्नूतनं देहं सर्वसामर्थ्यसंयुतम् ॥ ४ ॥
निष्प्रत्यूहं यथा तस्य वियोगानुभवो भवेत् ॥
स एव शब्दितः सर्वग्रंथे रोधः प्रभुप्रियैः ॥ ५ ॥
विरोधस्तस्य सततं प्रपंचस्मरणेन हि ॥
तदभावो निरोधैकलीलया गुणगानजः ॥ ६ ॥
दैन्यभावतयैव स्यात्सुलभा भावसंगतिः ॥
ब्रह्मादिदुर्लभो भावः कथं साध्यो हि तादृशैः ॥७॥
इति चिंताकृपायुक्तश्चकार प्रादुराननम् ॥
तदाश्रयादिह प्रायः सर्वेषां तापसंभवः ॥ ८ ॥
तापेन सर्वथा सर्वपरित्यागो भविष्यति ॥

परित्यक्तेऽखिले नूनं प्रपंचास्मरणं भवेत् ॥ ९ ॥
तदस्मृतौ तदासक्तौ सर्वथैव भविष्यति ॥
आसक्तौ व्यसने जाते परं किमवशिष्यते ॥१० ॥
बाधिका सैव सततं न दुर्लभतमा रतिः ॥
अतो विधेयः सुधिया श्रीमदाचार्यसंश्रयः ॥ ११ ॥
तस्मात्स एव मनुजैरनन्यैः साधनोज्झितैः ॥
सर्वदा सर्वभावेन सेवनीयस्तदाश्रितैः ॥ १२ ॥

इति श्रीहरिदासविरचितं स्वमार्गरहस्यनिरूपणं समाप्तम् ।

# अथ स्वमार्गीयशरणसमर्पणसेवादिनिरूपणम् ।

श्रीकृष्णाय नमः ।

अथ स्वकीयबोधाय सूक्ष्मरीत्या विचार्य च ॥
स्वमार्गीयप्रकारोयं सर्वोऽपि हि निरूप्यते ॥ १ ॥
गृहीत्वा नाम शरणं गत्वा सर्वं समर्प्य च ॥
सेवासार्थकतासिद्ध्यै देहादीनां तथा पुनः ॥ २ ।
अन्यत्राविनियोगाय क्रियतां ननु वित्तजा ॥
तया तु मानसी सिध्येत्सैवात्र फलरूपिणी ॥ ३ ।
सा प्रकारत्रयेणेति तेषां तन्मध्यया ततः ॥

फलत्वमिति ते प्रोक्ताः सेवायां तु फलत्रयम् ॥४॥
सेवा तु सा समानत्वात्सैवांते न विलक्षणा ॥
फलं नातः प्रकाराणां पश्चाद्भावितयोच्यते ॥ ५ ॥
यादृशं वरणं तादृक्प्रकारापन्नसेवना ॥
मानसी फलरूपेति तारतम्येन चोच्यते ॥ ६ ॥
ते प्रकारास्तु विज्ञेया ग्रंथात्सेवाफलाभिधात् ॥
अलौकिकं हि सामर्थ्यं सायुज्यं पुरुषोत्तमे ॥ ७ ॥
वैकुंठादिषु सेवायाः शरीरमधिकारकृत् ॥
एतावानेव मार्गेऽस्मिन्सूक्ष्मः सिद्धांतसंग्रहः ॥ ८ ॥
तत्रादौ शरणं यातः किं कुर्यादिति चोच्यते ॥
श्रीमदाचार्यमार्गीयगुरुणा शरणं गतः ॥ ९ ॥
स्वामित्वेन हरिं-स्वं तु सेवकत्वेन भावयेत् ॥
लौकिकं वैदिकं वाऽपि विदध्याद्भक्तिसिद्धये ॥ १० ॥
नान्यमार्गाश्रयो नैव देशांतरसमाश्रयः ॥
नैव तीर्थाश्रयो नैवाभिमतेः कर्तृताश्रयः ॥ ११ ॥
नैव मंत्रसमाधारो न च कर्मादिकाश्रयः ॥
सर्वदोषनिवृत्त्यर्थं धर्मत्वेन हरौ दृशिः ॥ १२ ॥
विवेकादेरभावेन दैन्येनार्थत्वभावनम् ॥
स्वकामपूरणार्थाय पूर्णानंदत्ववेदनम् ॥ १३ ॥

न साधनैर्भवेन्मोक्षो हरिरेव तदात्मकः ॥
तदीयतायाः संपत्तौ मुक्तत्वेनैव चिंतनम् ॥ १४ ॥
अत एव निराकांक्षा मोक्षतः कृष्णसेवकाः ॥
देशादिसाधनं कृष्णः पुरुषार्थश्चतुर्विधः ॥ १५ ॥
एवं मनसि सततं चिंतनीयं प्रयत्नतः ॥
प्रायश्चित्तादिषु मतिर्न कार्या शरणं व्रजेत् ॥ १६ ॥
उपस्थितेषु दोषेषु सर्वेष्वथ विशेषतः ॥
सुशक्येष्वप्यशक्येषु हरिं गतिमथ स्मरेत् ॥ १७ ॥
अन्याश्रयो नैव कार्यो नैवान्यत्र स्वतो व्रजेत् ॥
प्रार्थना नैव कुत्रापि कर्तव्या भगवत्यपि ॥ १८ ॥
अविश्वासो न कर्तव्यो ब्रह्मास्त्रस्य निदर्शनात् ॥
लौकिके वैदिके वाऽपि कार्ये संगं विवर्जयेत् ॥ १९ ॥
यथाकथंचित्कर्तव्ये भास्वत्तत्र भावनम् ॥
सर्वत्र ममतां त्यक्त्वा सर्वं कार्यं प्रसाधयेत् ॥ २० ॥
लोभं च हृदये नैव कुर्यात्प्राप्तं हि सेवयेत् ॥
शरणस्यापि ये धर्मास्तत्सिद्धौ शरणं व्रजेत् ॥ २१ ॥
विवेकधैर्येऽपि सदा श्रीकृष्णाश्रयपोषके ॥
तद्ग्रंथेभ्योऽवगत्यापि प्रयत्नाद्धृदि भावयेत् ॥ २२ ॥
एवमाश्रितधर्मोऽयं संक्षेपेण निरूपितः ॥

आश्रित्य वल्लभाचार्यान्बुद्धैवं कृष्णमाश्रयेत् ॥ २३ ॥
अतःपरं क्रमेणैव जीवः कृतसमर्पणः ॥
तत्साधनाय सततं किं कुर्यादिति चोच्यते ॥ २४ ॥
सेवासंस्काररूपत्वाद्विदध्यात्सेवनां सदा ॥
ब्रह्मसंबंधिता जीवदेहसंबंधिवस्तुषु ॥ २५ ॥
सर्वदोषविमुक्तत्वं स्वस्मिन्नपि विभावयेत् ॥
सर्वथा सर्वदैवापि न चाद्यादसमर्पितम् ॥ २६ ॥
तद्भक्षणे भवेदेवाब्रह्मसंबंधि वस्तुतः ॥
सर्वत्र ब्रह्मसंबंधभावनानाश एव हि ॥ २७ ॥
लौकिकं वैदिकं वाऽपि कुर्यात्सर्वं समर्पितम् ॥
अतः सर्वेषु कार्येषु कुर्यादादौ समर्पणम् ॥ २८ ॥
यथा समर्पणे योग्यं यत्तथा तत्समर्पयेत् ॥
यज्ञादिषु विवाहादौ प्रदर्श्य निखिलं हरेः ॥ २९ ॥
गृहीत्वैव तदादेशात्पश्चात्कार्याणि साधयेत् ॥
न स्वार्धभुक्तं कृष्णाय समर्प्यमिति निश्चयः ॥ ३० ॥
न सामिभोगः संप्राप्तो ह्यसमर्पितवर्जनात् ॥
तथापि मानसं पूर्वमादाय च समर्पणम् ॥ ३१ ॥
अभुक्तमप्यतो ब्रह्मसंबंधी विभ्रमात्पुरा ॥
गृह्णीयादवशिष्टं तु प्रभवेऽपि समर्पयेत् ॥ ३२ ॥

तदर्थं वर्जितं भेदेनार्धभुक्तसमर्पणम् ॥
असमर्पितवस्तूनामत्र सामान्यमुच्यते ॥ ३३ ॥
भुक्तेत्यनेनात्र भोग्यो वस्तुभोगो निरूप्यते ॥
स चोपयोगरूपो हि तस्माद्भेदो विबुध्यताम् ॥ ३४ ॥
निवेदितपदार्थानां ग्रहणं मार्गभेदतः ॥
पूजामार्गनिषेधानामत्रानवसरो मतः ॥ ३५ ॥
एवं जन्मावधि नृणां भावनातो भविष्यति ॥
सर्वत्र ब्रह्मसंबंधो गंगातोऽन्जललेष्विव ॥ ३६ ॥
चिंतानिवेदिभिर्नैव नवरत्ने निरूपिताः ॥
तत एवावगत्येह कार्या इति विनिश्चयः ॥ ३७ ॥
ततो हि जातसंस्कारः सर्वचिंताविवर्जितः ॥
साक्षिवत्तत्कृतिं पश्यन्सुखं सेवापरो भवेत् ॥ ३८ ॥
सेवाविधिः समग्रोऽपि क्रमेणैव विलिख्यते ॥
प्रकारोत्तमतः पूर्वं मूर्तौ पूजा विधीयते ॥ ३९ ॥
मूर्तौ भगवतो ज्ञानं साकारावेशतो मतम् ॥
भक्तिमार्गप्रकारेण जानतस्तु तदात्मनाम् ॥ ४० ॥
पूजामार्गे भवेन्मंत्रविधानात्पूज्यवेशनम् ॥
विशेषो भक्तिमार्गेऽयं पुरुषोत्तमरूपिणः ॥ ४१ ॥
मणिस्पर्शेन ताम्रादिसौवर्णमिव तत्त्वता ॥

अतस्तत्र कृतं सर्वं साक्षात्कृष्णे कृतं भवेत् ॥ ४२ ॥
सेवा तु तस्य द्विविधा त्यागात्यागविभेदतः ॥
अत्यागोऽपि यथात्वं हि व्यावृत्तेस्त्यागतः पुरा ॥४३॥
व्यावृत्तावपि च प्रोक्तो मानसस्त्याग उत्तमः ॥
अत्यागपक्षे गार्हस्थ्यमनुकूलं हि साधने ॥ ४४ ॥
गृहे स्थित्वा सेवनार्थं स्वधर्मेणैव सर्वथा ॥
कृष्णं भजेद्यतोऽधर्मकरणाद्धीनयोनिता ॥ ४५ ॥
कृष्णमूर्तौ यथालब्धैर्द्रव्यैः संपूजयेद्धरिम् ॥
पूर्वं स्थानं मंदिरादि तथा सिंहासनादि च ॥ ४६ ॥
संपाद्य भोगसामग्रीं हरिमुत्थाप्य मंचतः ॥
प्रातरारभ्य सर्वापि सेवा पूजा विधीयताम् ॥ ४७ ॥
सेवायां लौकिकी युक्तिस्तथा स्नेहो नियामकः ॥
पूजायां तु विधिः स्नेहविरुद्ध इति निश्चयः ॥ ४८ ॥
गुरुश्च भक्तिमार्गीयः कृष्णसेवापरायणः ॥
श्रीभागवततत्त्वज्ञो दंभादिरहितो नरः ॥ ४९ ॥
तदभावे तथाभूतोपदेशोऽत्र नियामकः ॥
अथाधुनिकतीर्थानामतथाभूततोऽपि हि ॥ ५० ॥
उपदेशस्तथाभूतगुरोरिव फलिष्यति ॥
यदि दुःसंगदोषेण नान्यथा चेद्भवेन्मतिः ॥ ५१ ॥

सेवायामपि यस्तादृग्गुरुणोक्तः परो विधिः ॥
स एव सर्वथा नान्यः कल्पितः फलसाधकः ॥५२॥
अनुद्वेगाय सप्रेमकृष्णमूर्तावलंकृतिः ॥
वस्त्रैराभरणैर्वापि तथोपहरणैरपि ॥ ५३ ॥
यथा स्वरूपसौंदर्यं स्वमनोरोधकं भवेत् ॥
यतो हि सेवना प्रोक्ता चेतस्तत्प्रवणं हरेः ॥ ५४ ॥
लीलाविशिष्टरूपे हि तदर्थं सेवनोद्यमः ॥
अतः साधनता प्रोक्ता तनुवित्तजसेवने ॥ ५५ ॥
एवमन्नादिवस्तूनामुपयोगे प्रसाधिते ॥
भार्यादीनामानुकूल्ये तैः सेवामेव कारयेत् ॥ ५६ ॥
स्वयं कुर्यादुदासीनतया तेषां पुनः स्थितौ ॥
अपकीर्तिभयात्कृष्णसेवा वैयुग्यसंभवात् ॥ ५७ ॥
स्वकृतब्रह्मसंबंधं विभाव्य हृदि सर्वथा ॥
तत्पोषणं प्रकुर्वीत कृष्णदेहवदातुरः ॥ ५८ ॥
यद्यासुराः कृष्णसेवां कर्तुं न ददति स्वतः ॥
तदा तेषां परित्यागः कर्तव्य इति निश्चयः ॥ ५९ ॥
भक्तिमार्गे न वस्तव्यमभक्तैः सह सर्वथा ॥
अंगीकृत्यापि च स्मार्तवर्जनं भक्तिमार्गिभिः ॥६०॥
धर्मशास्त्रात्तु बलवद्भक्तिशास्त्रमिति स्थितिः ॥

चित्तं हरौ प्रतिष्ठाप्य वृत्तियत्नं च कारयेत् ॥ ६१ ॥
सर्वथा वृत्तभावे नु यामं सेवापरो भवेत् ॥
वृत्तेः सहजतासिध्यै कृष्णमात्ररतो भवेत् ॥ ६२ ॥
हर्यर्थमपि यत्नेन जातवैमुख्यवारणे ॥
श्रीभागवतपाठं च विदध्यान्नियमेन हि ॥ ६३ ॥
चित्तक्षोभजवैमुख्याभावाय परुषं सहेत् ॥
मानयेदपि कृष्णोक्तमित्येवोत्साहसिद्धये ॥ ६४ ॥
वैराग्यं परितोषं च लोभाभावाय भावयेत् ॥
जन्मनोऽप्यंतिमत्वं वै कृतार्थत्वं च चिंतयेत् ॥६५॥
एवं निश्चित्य चित्तेन निरपेक्षो दृढांतरः ॥
स्थिरांतःकरणः कृत्वा विश्वासं पितृवद्धरौ ॥ ६६ ॥
सेवयेत्तत्परो भूत्वा युक्त्या लौकिकया पुरा ॥
देशकालौ विचार्यैवमवस्थां च प्रभोरपि ॥ ६७ ॥
तदर्थं व्यर्थवचनं कृतिसाध्यं परित्यजेत् ॥
कृष्णे समर्पयेन्नैवं क्लिष्टं क्वापि प्रयत्नतः ॥ ६८ ॥
इष्टं लोके तथा स्वस्य यच्चिरं चित्तचिंतितम् ॥
तद्वै समर्पयेद्भक्त्या भक्तिसंबंधि सर्वथा ॥ ६९ ॥
तथाऽनवसरे सेवा बहिरंगेऽपि मुख्यवत् ॥
कार्या बुद्धिः कृष्णकार्यवस्त्रप्रक्षालनादिके ॥ ७० ॥

काले कालद्वये कालत्रये कुर्वीत सेवनम् ॥
स्वधर्ममाचरेदंगं नित्यं नैमित्तिकं तथा ॥ ७१ ॥
निवृत्तिराग्रहेणैव विधर्मादिति निश्चयः ॥
धर्मसिद्धावपि पुनर्वैशिष्ट्यात् कृष्णधर्मतः ॥ ७२ ॥
इंद्रियाश्वविनिग्राहः कर्तव्यः सर्वथा मतः ॥
परोपकारधर्माणां दौर्बल्यं च विभावयेत् ॥ ७३ ॥
एवं प्रकुर्वतः कृष्णावेशाद्यदि भवेत्पुनः ॥
तत्सेवासाधने निष्ठा तस्मान्नित्यं हि सेवयेत् ॥७४॥
कृष्णं सर्वात्मकं ज्ञात्वादीनतां हृदि भावयेत् ॥
अहं करोमीत्येतादृगहंकारं परित्यजेत् ॥ ७५ ॥
सेवायामपि सन्मानं नापेक्षेत हरेः पुनः ॥
गुणान् गायेदथो नाम कीर्तयेत्सदसि स्थितः ॥७६॥
निर्भयो निस्पृहः कृष्णे स्वतश्चित्तं निवेशयेत् ॥
मुख्यं तु साधनं नित्यं श्रीभागवतकीर्तनम् ॥७७॥
अदंभेनानिमित्तेन स्वप्रयत्नेन सर्वथा ॥
सेवांतर्गतपूजांगशंखचक्रादि धारयेत् ॥ ७८ ॥
चिह्नत्वात्तुलसीमाला धार्या तिलकमेव च ॥
वैष्णवेन मतेनैकादश्यादिव्रतमाचरेत् ॥ ७९ ॥
उत्सवत्वेन कृष्णाष्टम्यादीनां व्रतमाचरेत् ॥

अन्येष्वप्युत्सवत्वेन विज्ञानं सर्वथा मतम् ॥ ८० ॥
निर्णयोऽपि तथा कार्यो जयंतीव्रतवन्न हि ॥
एवं कुर्वन् गृहस्थस्तु कृतार्थः स्यान्न संशयः ॥ ८१ ॥
संभवे साधनानां स्याद्वनस्थब्रह्मचारिणोः ॥
यतेस्त्यागात्मको मार्गस्तीर्थाटनविशेषणः ॥ ८२ ॥
स्वतंत्रः संगरहितो नित्यपर्यटकस्तथा ॥
तद्दिनान्नप्रतिग्राही निर्लज्जो नाम कीर्तयेत् ॥ ८३ ॥
पश्यन्गृह्यानि च हरेः शांतः कृष्णपरायणः ॥
अव्यग्रचित्तः कृष्णैकप्रादुर्भावप्रयोजनः ॥ ८४ ॥
एवमादेहसंपातं यतिः कुर्याद्विचक्षणः ॥
विक्षेपाद्यदि दोषाणां संभवे सकलाश्रमे ॥ ८५ ॥
अनेनैव प्रकारेण तीर्थपर्यटनं मतम् ॥
भार्यादिप्रातिकूल्ये तु भिन्नस्त्यागो विधीयते ॥ ८६ ॥
त्यक्त्वा स्वभवनं गत्वा यत्र भागवता जनाः ॥
हरिस्थाने तदीयाश्च कृष्णसेवाकथाप्रियाः ॥ ८७ ॥
कृष्णार्थी सर्वथा त्यक्त्वा गृहं भजनबाधकम् ॥
तैः सदैव वसेत्कृष्णसेवाकृतिकथादिभिः ॥ ८८ ॥
दुःसंगदुष्टवस्त्वान्नसंबंधसभयात्मना ॥
यतः ससाधनस्तिष्ठेत्सावधानतया हरौ ॥ ८९ ॥

ततः सेवाकथासक्त्या सर्वथा प्राप्तिरुत्तमा ॥
नैकांते संस्थितिः कार्या हार्दबाधकसंभवे ॥ ९० ॥
रक्षकत्वं हरेरेव ससंगेऽपि च यास्यति ॥
अथवा केवलं शास्त्रं श्रीभागवतमादरात् ॥ ९१ ॥
त्रिकालं सेवयेद्रूपसेवावदतितत्परः ॥
प्रकारत्रितयाभावे प्रपत्तिरपि चोच्यते ॥ ९२ ॥
महास्थाने यत्र पूजा प्रत्यहं जायते पुनः ॥
तत्र तत्परतास्थित्या कृतार्थत्वं सदा स्थितौ ॥ ९३ ॥
नन्वत्र भक्तिमार्गीयफलाद्भेदो न विद्यते ॥
कृष्णसेवातत्परत्वात्सर्वथा देहयोगतः ॥ ९४ ॥
तथापि मार्गवैधर्म्यं प्रीतेरद्धतोऽत्र हि ॥
चिरकालं सेवितापि मूर्तिर्वैयग्र्यसंभवे ॥ ९५ ॥
तद्दोषदर्शनादाशु त्यजते तदनाग्रहात् ॥
स्थानांतरगतौ नैव फलं ब्रह्मास्त्रदर्शनात् ॥ ९६ ॥
मार्गस्योत्कर्षतास्त्यत्र भक्तिमार्गस्य संभवे ॥
न बुद्धिमांस्तत्र यतेदन्यथा तु स उत्तमः ॥ ९७ ॥
एवं समाश्रये धर्मस्तथा सर्वसमर्पणे ॥
सेवायामपि कृष्णस्य संक्षेपेण निरूपितः ॥ ९८ ॥
श्रीमदाचार्यचरणशरणैस्तु मदुक्तिभिः ॥

अनुवादकरूपाभिर्ज्ञात्वा सर्वं विधीयताम् ॥ ९९ ॥
समुदितनिजमार्गबोधतुष्टःशरणगताखिलजीवसंघ-
जुष्टः ॥ निरुपधिकरुणारसैकपुष्टः कृपयतु मे मयि
वल्लभः प्रभुः सः ॥ १०० ॥

इति श्रीहरिदासविरचितं स्वमार्गीयशरणसमर्पण-
सेवादिनिरूपणं समाप्तम् ।

# अथ स्वमार्गीयसंन्यासवैलक्षण्य-निरूपणम् ।

श्रीकृष्णाय नमः ।

पुष्टिमार्गीयसंन्यासः स्वबुद्ध्याचार्यसंश्रयात् ॥
निरूप्यते यद्विज्ञानाद्भासतेऽनधिकारिता ॥ १ ॥
मर्यादामार्गसंन्यासे वैराग्यमधिकारकृत् ॥
इहामुत्र परं तत्र स्वात्मरक्षा विधीयते ॥ २ ॥
श्रवणं मननं चापि निदिध्यासनमुच्यते ॥
नैकत्रावस्थितिश्चापि चेतसोऽस्वास्थ्यकारणम् ॥ ३ ॥
मनःप्रसादसिद्ध्यर्थमटव्यटनमुच्यते ॥
भिक्षाटनं च वपुषो रक्षायै तत्र रूप्यते ॥ ४ ॥
वेदांतश्रवणं चापि कृष्णमाहात्म्यबोधकम् ॥
संसारदुःखव्यावृत्त्यै स्वात्मसौख्यप्रसिद्धये ॥ ५ ॥

न्यासिनोऽपि परं तत्र धर्माः केचिन्निरूपिताः
वेषोऽपि तत्र विहितः संन्यासांगतया पुनः ॥ ६ ॥
मोक्षकामनया नित्यमवस्थानं निबोधितम् ॥
प्रवेशश्च हरौ नित्यः फलमंते निरूपितम् ॥ ७ ॥
केवलो ज्ञानमार्गीयः संन्यासः स्थितिकारकः ॥
सत्यलोके भक्तियुतः प्रवेशं वापि साधयेत् ॥ ८ ॥
प्रकृते वैपरीत्यं हि रागः प्रेमात्मको हरौ ॥
कृष्णसेवनया सिद्धो न्याससाधनमुच्यते ॥ ९ ॥
सेवाकृष्णस्वरूपस्य परोक्षाध्यक्षरूपिणी ॥
तडिल्लतावच्चपरं तत्राविर्भाव इष्यते ॥ १० ॥
भावात्मकस्य रूपस्य मूर्त्याविष्टस्य वै क्वचित् ॥
एवं सति न तत्रास्ते सर्वथानुभवो हरेः ॥ ११ ॥
यथा रुग्णस्य रुच्यर्थं प्रदर्श्यान्नं विधीयते ॥
तथा कृष्णः स्वानुभवं कारयित्वार्तिवर्धनम् ॥ १२ ॥
गृहाद्यरागं संपाद्य प्रेमभावमवर्धयत् ॥
जातप्रेमा हरौ रागात्सर्वं त्यजति सर्वथा ॥ १३ ॥
अतोऽधिकारभेदोऽस्ति तन्न्यासादत्र सर्वशः ॥
किंच नास्त्यत्रात्मरक्षा हरित्वं काष्ठवह्निवत् ॥ १४ ॥
यथातिरोहिते वह्नौ भस्मता नैव काष्ठता ॥

तथात्रैतत्तिरोभावेऽन्यथाभावो भवेदिति ॥ १५ ॥
श्रवणादिनिषेधोऽत्र स्वास्थ्यसंपादनात्पुनः ॥
एकत्रैवावस्थितिश्च निरोधस्थानतो यथा ॥ १६ ॥
व्रजस्थानामगमनं मथुरायां स्वगोकुलात् ॥
अटन्यटनमत्रापि पद्लीलादिदर्शनात् ॥ १७ ॥
विशेषस्वास्थ्यजनकं तत्र तद्भिन्नमुच्यते ॥
नात्र भिक्षाटनं देहरक्षायै कार्यमिष्यते ॥ १८ ॥
विरहाद्देहपातार्थमत्र सर्वः समुद्यमः ॥
नात्र माहात्म्यबोधाय वेदांतश्रवणं मतम् ॥ १९ ॥
ज्ञानस्य बाधकत्वोक्तेः स्वास्थ्यहेतुतयापि च ॥
संन्यासधर्माः केऽप्यत्र न संतीत्येष निश्चयः ॥२०॥
सर्वधर्मान्परित्यज्येत्येतद्वचनतो हरेः ॥
वेषमात्रनिवृत्त्यर्थमत्र वेषस्तथाविधः ॥ २१ ॥
मोक्षैककामना नास्ति हरेरपि च वांछनम् ॥
तत्र बाधकसद्भावो नात्र कृष्णोऽपि बाधकः ॥२२॥
तत्र प्रणवहृद्ध्यानमत्र क्लेशैकभावनम् ॥
तत्र कृष्णे प्रवेशोऽस्ति भक्तते कृष्णवेशनम् ॥ २३ ॥
तत्र निष्कासनालीलाऽनुभवोऽत्रांतरोऽखिलः ॥
एवं विज्ञाय वैशिष्ट्यं न्यासयोर्विपरीतताम् ॥ २४ ॥

दुर्लभत्वं चावगत्यानधिकारं विभावयेत् ॥
त्यागमात्रं प्रकुर्वीत जनः सर्वाधिकारकृत् ॥ २५ ॥
प्रपंचस्फूर्तिरहितो विदध्यान्न्यसने मतिम् ॥
यावत्प्रपंचः स्फुरति तावन्नैवाधिकारिता ॥ २६ ॥
अतः स पुष्टिमार्गीयः सिद्धो व्रजजनेषु हि ॥
तथा च श्रीमदाचार्यैष्वन्यत्रास्त्येष्वयोग्यता ॥२७॥
अयोग्यमिच्छन्मनुजः पतति स्वफलादपि ॥
तस्मात्स्वयोग्यतां ज्ञात्वा कर्तव्यः स्यान्मनोरथः॥२८॥
स्थैर्यं तयैव वा रीत्या मनुजैर्भाग्यराशिभिः ॥
तन्नाम नैव धर्तव्यमपराधादिति स्थितिः ॥ २९ ॥

इति श्रीहरिदासविरचितं स्वमार्गीयसंन्यासवैल-
क्षण्यनिरूपणं समाप्तम् ।

---

# अथ श्रीमत्प्रभोः प्रादुर्भाव-प्रकारनिरूपणम् ।

श्रीकृष्णाय नमः ।

रसात्मकस्वरूपस्य प्रादुर्भावः कथं भवेत् ॥
हृदये वा स्वरूपे वा तदत्र विनिरूप्यते ॥ १ ॥
अनुरागस्तु सहजस्तासामेवेति निश्चयः ॥
जातमात्रे तयाभावात्सूचितश्चोत्सवे पुनः ॥ २ ॥

कामिनीनामन्यथैवं कथं भावो भवेदिहं ॥
दृष्टानुरागोऽप्यधुना न घटेतैव सर्वथा ॥ ३ ॥
अवतारदशाभावात्स्वरूपेऽपि न संभवः ॥
अनुरागसमुत्पत्तेः पूर्वमित्येष निश्चयः ॥ ४ ॥
अतः श्रवणमात्रैकराग एवावशिष्यते ॥
अत एवोक्तमाचार्यैः शास्त्रद्वारैव मोचकः ॥ ५ ॥
अंगीकृतेः शास्त्रतो कारणत्वं हि गम्यते ॥
उक्तं च भक्तिहंसेऽपि तदर्थित्वं विलक्षणम् ॥ ६ ॥
तस्माच्छ्रुतो हि भगवान् भक्तिं साधयति ध्रुवाम् ॥
अंगीकृतानामधुना सर्वथेति विनिश्चयः ॥ ७ ॥
अंगीकृतिः फलमुखा शरणागतितो भवेत् ॥
लोके स्थाप्यः स्वसेवायामिति संचिंतितोऽपि हि ॥८॥
यदैव शरणं यायात्तदा सेवकता भवेत् ॥
तदीयत्वंसेवयैव मानस्यैवांतरं प्रभोः ॥ ९ ॥
शरणे चात्मसंबंधे वैलक्षण्यमियन्मतम् ॥
मम सर्वं हि भगवानहं भगवतः पुनः ॥ १० ॥
संन्यासरूपशरणं पृथगेव निरूपितम् ॥
तत्र त्यागात्मकत्वेन ममताया निवृत्तितः ॥ ११ ॥

१ दृदि.

शरणे च तदीयत्वेऽप्यहंताविनिवृत्तितः ॥
तस्मादेवं तदीयानां संबंधानां च सर्वशः ॥ १२ ॥
जातभावांकुराणां च तापक्लेशयुजामपि ॥
महापुरुषमुखतः श्रवणाज्जायते रुचिः ॥ १३ ॥
काव्यश्रवणवल्लोके स भावः पल्लवप्रभः ॥
कोमलत्वाद्विरूपत्वाद्दृढताभावतः परम् ॥ १४ ॥
ततस्तत्सेवनाच्छास्त्रजोपणाज्जायते दृढा ॥
स एव कलिकारूपो भावस्तत्र निरूपितः ॥ १५ ॥
स भावस्तापसंबंधाद्विचित्रो हृदये भवेत् ॥
कमलं स्फुटति प्रायः सूर्यसंबंधतो यथा ॥ १६ ॥
ततो दिवानिशं तस्य वासना हृदये यदि ॥
तदा रसः समग्रोऽपि प्रादुर्भूतो हरिर्हृदि ॥ १७ ॥
प्रपंचास्मरणैस्तस्य सर्वदानुभवः फलम् ॥
आच्छादनं माययैव लोकवेदप्रदर्शनैः ॥ १८ ॥
एवं रसात्मनः प्रादुर्भावो हृदि निरूपितः ॥
अतः परं तस्य मूर्तौ प्रादुर्भावो निरूप्यते ॥ १९ ॥
मूर्तिर्हि भगवान् ज्ञानमार्गरीत्या निरूपिता ॥
तस्यां हि भगवद्‌बुद्धौ स्थायिभावो भवेदिह ॥ २० ॥
स्थायिभावस्वरूपं तु मत्पतिर्भगवानयम् ॥

प्रत्यंगेषु तथा भावभावनं च पदादिषु ॥ २१ ॥
स्थिरमूर्तौ तथा सर्वं तदंतर्भाव्यते पुनः ॥
अतो भावस्वरूपस्य तदंतःस्थितिरुच्यते ॥ २२ ॥
अत एवोक्तमाचार्यैस्तद्रूपं तत्र च स्थितम् ॥
तस्य च स्थिरता तत्र स्थायिभावविभावनात् ॥२३॥
एवं भगवतः प्रादुर्भावो हृदि विभाव्यताम् ॥
श्रीमदाचार्यचरणशरणैस्तज्जनैः सदा ॥ २४ ॥

इति श्रीहरिदासविरचितं श्रीमत्प्रभोः प्रादुर्भावप्रकार-निरूपणं समाप्तम् ॥

---

## अथ ब्रह्मसंबंधवाक्यकठिनांश-विवेचनम्।

श्रीकृष्णाय नमः ।

अथ स्ववल्लभाचार्यचरणांबुजचिंतनात् ॥
किंचिन्निरूप्यते स्वीयतुष्टये भावपुष्टये ॥ १ ॥
अनुग्रहः पुष्टिमार्गः स्वीकृतिः सा हरेः पुनः ॥
सर्वेश्वरः स्वीकृता हि दैन्यमेवास्ति कारणम् ॥ २ ॥
सर्वथा साधनाभावे दैन्यभावो भवेदिति ॥
निःसाधनत्वसिद्ध्यर्थं सर्ववस्तुसमर्पणम् ॥ ३ ॥
सर्वत्र ममता भावे साधनस्फूर्तिनाशनम् ॥

ततो दैन्यैकसाध्यं यत्फलं सर्वविलक्षणम् ॥ ४ ॥
तापक्लेशानंत इति तत्स्वरूपं निरूप्यते ॥
कामसर्वात्मभावो हि भगवत्प्राप्तिसाधनम् ॥ ५ ॥
कामः सापेक्षतारूप उत्तरस्तदभाववान् ॥
विरहस्थायिभावत्वात्तापात्मा स निगद्यते ॥ ६ ॥
संबंधस्यापि नापेक्षा तापेनैवाखिलोदयः ॥
विलक्षणस्तत्क्लेशोऽपि कामजातात्तथापरः ॥ ७ ॥
कामजातस्तु यः क्लेशः स शाम्येत्स्पर्शनादिभिः ॥
सर्वात्मभावसंभूतस्तैर्भवेद्द्विगुणस्तथा ॥ ८ ॥
विरहे भावनास्पर्शः क्लेशवृद्धिकरो यतः ॥
लीलोदये तापभावाद्द्विगुणः सोऽनुभूयते ॥ ९ ॥
अतो विलक्षणः क्लेशादानंदोऽपि तथाविधः ॥
कामार्तितः परं कृष्णसायुज्यं नित्ययोगयुक् ॥ १० ॥
पुरुषोत्तमसंबंधो ह्यंतर्गृहगतास्विव ॥
सर्वात्मभावक्लेशेन संयोगेन कृतार्थिता ॥ ११ ॥
क्लेश एव हि संयोगाधिकानंदानुभूतितः ॥
यथाप्राकृतदेहेषु नियताकामसंस्थितिः ॥ १२ ॥
तथालौकिकदेहेषु सर्वभावप्रतिष्ठितिः ॥
अत एव निरूप्यंते निःकामास्ते व्रजस्थिताः ॥१३॥

तादृशैर्भगवल्लीला सर्वथैव हि युज्यते ॥
तस्मादेव हि संपन्नः सर्वोऽप्यर्थो विचारणे ॥ १४ ॥
कामाद्विलक्षणः सर्वभावस्तत्क्लेशभेदतः ॥
संयोगविप्रयोगाभ्यां तदानंदोऽपि भिद्यते ॥ १५ ॥
एतदेवोक्तमाचार्यैः फलं सर्वं समर्पणे ॥
तापक्लेशानंदरूपं तदर्थोऽयं विवेचितः ॥ १६ ॥
तद्दासदासदासोक्त्या तदीया गतसंशयाः ॥
ब्रह्मसंबंधवाक्यार्थविदस्तिष्ठंतु वर्त्मनि ॥ १७ ॥

इति श्रीहरिदासविरचितं ब्रह्मसंबंधवाक्यकठिनांशविवेचनं समाप्तम् ।

## अथ सर्वात्मभावनिरूपणम् ।

श्रीकृष्णाय नमः ।

कृष्णस्य कृपया किंचिद्धृदयागतया मया ॥
सर्वात्मा भावशब्दार्थः कथ्यतात्र विविच्यते ॥ १ ॥
सर्वेषामिंद्रियाणां हि देहादीनां तथा पुनः ॥
आत्मभावो भगवति सर्वभावः स कथ्यते ॥ २ ॥
आत्मभावाश्च सर्वत्र स्वसंबंधविचारणम् ॥
स्वस्य संबंधितास्फूर्तिरस्माकं भगवानिति ॥ ३ ॥
देहेंद्रियाणांप्रत्येकमाकांक्षारहिता हरौ ॥

आकांक्षायां तु विषये भावसत्वान्न सर्वजा ॥ ४ ॥
अत एव हि तद्भावे देहाद्यस्फूर्तिरुच्यते ॥
स्फूर्त्यां तत्रापि वै भावो भवेत्पोषादिहेतुकः ॥ ५ ॥
तथैव विषयत्यागः सर्वतासाधनाय हि ॥
कामभावे कामफले भावतो नहि सर्वता ॥ ६ ॥
अहं भगवतः सर्वं इति सर्वात्मभावनम् ॥
प्रभुर्ममेति भावो हि कामभावो यतो मतः ॥ ७ ॥
अतो विचारकैर्भेदः कामसर्वात्मभावयोः ॥
बोद्धव्यः श्रीमदाचार्यकृपयाऽतिविचक्षणैः ॥ ८ ॥
सर्वात्मभावसाध्यो हि स्वरूपानंद उच्यते ॥
तद्वतामत एवात्र भावानंदो निरूपितः ॥ ९ ॥
भावस्वरूपमेवास्ति भेदबोधेन भिन्नता ॥
कामभावे बहिःस्थे तु स्पष्टा बुध्येत भिन्नता ॥१०॥
अभेदोऽपि स्वरूपस्य कामाद्याश्रयबोधनात् ॥
कामभावफलं नित्यं संयोगः प्रभुणा मतम् ॥ ११ ॥
यतस्तथैव तत्रास्ति ह्यपेक्षा कामभावने ॥
सर्वात्मभावे सततं सर्वत्यागात्मके मतम् ॥ १२ ॥
स्वस्य संबंधितारूपे भावप्राप्तिः फलं पुनः ॥
अनपेक्षत्वतो नैव कामादि दीयते फलम् ॥ १३ ॥

स्वरूपमेव देयं हि स भावः श्रुतिसंमतः ॥
अङ्गः सर्वात्मभावस्य फलभावो न चान्यथा ॥१४॥
स चानपेक्षितारूपो यत्र नापेक्षिता हरेः ॥
विरहे भाववैक्लव्यात्सापेक्षत्वं कथंच न ॥ १५ ॥
संत्यज्य सर्वविषयानित्यत्र निरपेक्षिता ॥
स्वरूपनिरपेक्षत्वं वियोगे दृश्यते हरेः ॥ १६ ॥
अत एवोद्धवैरुक्तं दौत्येन व्रजमागतैः ॥
सर्वात्मभावोऽधिकृतो विरहेणेति तद्वचः ॥ १७ ॥
अतः सर्वात्मभावो हि त्यागात्मोपेक्षया युतः ॥
भावस्वरूपफलकः स्वसंबंधप्रकाशकः ॥ १८ ॥
देहादिस्फूर्तिरहितो विषयत्यागपूर्वकः ॥
भावात्मकामसंबंधिरमणादिक्रियः सदा ॥ १९ ॥
स्वतंत्रभक्तिशब्दाख्यः फलात्मा ज्ञायतां जनैः ॥
प्रवृत्तिः कामभावेऽस्ति निवृत्तिस्तु द्वितीयके ॥ २० ॥
अधिकं लेखितुं नैव शक्यते मंदबुद्धितः ॥
स्वाचार्यकृपयाभिज्ञैः सदा तद्भावभावुकैः ॥ २१ ॥
सुबोधिनीदर्शकैः स विज्ञेयस्तु स्वतो जनैः ॥ २२ ॥

इति श्रीहरिदासविरचितं सर्वात्मभावनिरूपणं समाप्तम् ।

# अथ श्रीमत्स्वमार्गीयभक्तिद्वैविध्यविवेकः ।

श्रीकृष्णाय नमः ।

अथ श्रीकृष्णवदनाचार्यसंश्रितचेतसा ॥
निरूप्यते तन्मार्गीयभक्तिद्वैविध्यमद्भुतम् ॥ १ ॥
वेदसिद्धा स्वतंत्रा च द्विधा भक्तिः प्रतीयते ॥
सृष्टिवाक्यैस्तथा भेदबोधकैः श्रुतिमूर्धभिः ॥ २ ॥
माहात्म्यज्ञानभावाभ्यां प्रथमा प्रतिपद्यते ॥
पुमर्थप्रतिपाद्यत्वाच्छ्रुतेर्मोक्षोपयोगिनी ॥ ३ ॥
आत्मवत्प्रियता तत्र बोध्यते भेदबोधनात् ॥
माहात्म्यज्ञापनं चापि सृष्टिकर्तृत्वबोधनैः ॥ ४ ॥
शब्दार्थोऽपि तथैवात्र प्रकृतिप्रत्ययोदितः ॥
प्रत्ययार्थः प्रेम चोक्तं स्त्रीभावे तद्विधानतः ॥ ५ ॥
भजधातोः प्रकृत्यर्थः स्पष्ट एव हि सेवनम् ॥
सायुज्यकाम्ययेत्युक्तेः परं तत्साधनं मतम् ॥ ६ ॥
प्रेमापि साधनं कृष्णप्राकट्यैकप्रयोजनात् ॥
एतद्विलक्षणा चान्या तादृग्लक्षणलक्षिता ॥ ७ ॥
अन्यथा नैव भक्तिः स्यादतः साऽत्र निरूप्यते ॥
वेदेन बोधिता साऽपि श्रुतिरूपाभिरेव हि ॥ ८ ॥
सृष्टिवाक्यैरिवात्राऽपि माहात्म्यं प्रतिपादितुम् ॥

मैवं विभोऽर्हतीत्याद्यैः सर्वभावनिरूपकैः ॥ ९ ॥
गतिस्मितेत्यादिवाक्यैरभेदाद्भावबोधनम् ॥
भावोऽप्येवंविधस्तत्र यत्रात्मस्फूर्तिनाशनम् ॥ १० ॥
शब्दार्थोऽपि तथाभूतः सेवाप्रेमसमाहृतः ॥
परंतु मानसी सेवा स्त्रीभावः प्रेमशब्दितः ॥ ११ ॥
अस्ति तद्भाववैजात्यं सर्वभावप्रबोधनात् ॥
अत एवाऽत्र सायुज्यसदृशं कामभोजनम् ॥ १२ ॥
नैवास्ति सर्वभावेनाभेदे तदनुभावनम् ॥
स्वतंत्रता च विज्ञेया वेदा बोधनतस्तथा ॥ १३ ॥
फलानपेक्षतातोऽपि मंतव्यातिविचक्षणैः ॥
द्वैविध्यमिदमेवात्र चरणास्यविभेदतः ॥ १४ ॥
भक्तिभेदप्रकथनात्सर्वत्र विनिरूपितम् ॥
श्रीमदाचार्यदासानां हृदये भासते परम् ॥ १५ ॥

इति श्रीहरिदासविरचितः श्रीमत्स्वमार्गीयभक्तिद्वैविध्यविवेकः समाप्तः ।

---

## अथ स्वमार्गमर्यादानिरूपणम् ।

श्रीकृष्णाय नमः ।

भक्तिमार्गस्य मर्यादा विपरीता विशेषतः ॥
विज्ञेया सर्वथा विज्ञैः पूर्वधर्मविबाधनम् ॥ १ ॥

धर्मस्त्यागात्मको ज्ञेयः प्रवृत्तौ शरणं मतः ॥
सेवा च मानसी ज्ञेया पूजा कर्मविलक्षणा ॥ २ ॥
धर्मादिकरणं यत्र तदाज्ञापरिपालनम् ॥
प्रमाणं भगवद्वाक्यमाविर्भूयोदितं हि यत् ॥ ३ ॥
प्रमेयो हरिरेवात्र न स्वर्गादिकमुच्यते ॥
साधनं भगवन्मार्गः फलं साधनमेव हि ॥ ४ ॥
फलं प्रथमतो देयमुत्तरे साधने फलम् ॥
सेवाप्रवृत्तिस्त्यागो हि प्रवृत्तेर्दूरवर्तिता ॥ ५ ॥
दैहिकं चाखिलं कृष्णसेवार्थे च तथेंद्रियम् ॥
विरुद्धकरणं धर्मः कृष्णेंगितविशेषतः ॥ ६ ॥
एतदेवार्जुनव्याजाद्भगवान् सर्वमुक्तवान् ॥
येनैव कृष्णसंबंधो धर्मः सोऽत्र निरूप्यते ॥ ७ ॥
दासत्वे भक्तिमार्गो हि तद्धर्मेण विधिर्मतः ॥
त्यागोऽपि सफलः सोऽपि यथा भगवदिंगितः ॥८॥
वस्तुतः स्वयमेवास्य मार्गस्य त्याग इष्यते ॥
सेवाकृतौ स्वदेहादिनिरपेक्षत्वमादरात् ॥ ९ ॥
ज्ञानमार्गपरित्यागः शून्यत्वात्स निरर्थकः ॥
भक्तिमार्गपरित्यागे सर्वं भगवदर्थकम् ॥ १० ॥
परमानंदसंबंधि सफलं सर्वथा मतम् ॥

उपकारोऽपि संसिध्येद्देहादीनां महानसौ ॥ ११ ॥
सर्वत्र भगवद्बुद्धिर्भगवद्धर्मभावनात् ॥
इंद्रियाणां तथान्यस्य संबंधस्य विनाशनम् ॥ १२ ॥
प्रपंचस्फूर्तिसंबंधेऽप्येव तद्विस्मृतिर्मता ॥
तदर्थं भगवद्धर्माः सर्वे सर्वप्रकारतः ॥ १३ ॥
श्रीभागवततो ज्ञेया स्वाचार्यविवृतेरिह ॥
अन्यथा न भवेत्स्फूर्तिस्तद्धर्माणां हि संसृतौ ॥ १४ ॥
स्वानुभावेन संसारं नाशयित्वा तु सर्वथा ॥
ज्ञापयित्वा हरेर्धर्मान्भावं दत्त्वा तथाविधम् ॥ १५ ॥
प्रकारमपि विज्ञाय भक्तः सर्वं स्वतो बलात् ॥
प्रपंचस्फूर्तिसहिते विस्मृतिस्वार्थसाधकम् ॥ १६ ॥
श्रीभागवतमेवात्र सर्वेषां हि गतिर्मता ॥
ज्ञातं तत्फलदं तत्र हेतुस्तद्गुरुसंश्रयः ॥ १७ ॥
तत्र हेतुः कृपा तेषां तत्र सान्निध्यमिष्यते ॥
सान्निध्ये तत्र संबंधः स तु सेवाकृतौ भवेत् ॥ १८ ॥
सेवा तदिंगितकृतेः सर्वथा तत्र सिध्यति ॥
दासधर्मेण सेवायां विधिर्न हि नियामकः ॥ १९ ॥
यथाकथंचित्स्वस्वामिसंतोषोत्पादनं हितम् ॥
तस्मिंस्तुष्टे फलं सर्वं सिद्धमेव न संशयः ॥ २० ॥

यस्मात्स्वमार्गमर्यादा विज्ञाय च तदाश्रितैः ॥
तत्र मार्गे स्थितिः कार्या ह्यन्यथा भ्रश्यते यतः ॥ २१ ॥
इति श्रीहरिदासविरचितं स्वमार्गमर्यादानिरूपणं समाप्तम् ।

# अथ मधुराष्टकतात्पर्यम् ।

श्रीकृष्णाय नमः ।

स्वरूपगुणभेदेन द्विविधं गानमुच्यते ॥
स्वरूपं तु रसानंदस्तथा लीलासमन्वितः ॥ १ ॥
गुणास्तु भगवद्धर्माः स्वरूपोत्कर्षहेतवः ॥
ते परोक्षे हि गीयंते स्वास्थाहेतुतयात्मनः ॥ २ ॥
स्वरूपं तु तदानंदप्रत्येकावयवैस्तथा ॥
तत्तल्लीलाश्रयत्वेन माधुर्येण विभाव्यते ॥ ३ ॥
निरूप्ये ते समानेषु यदा स्थातुं न शक्यते ॥
तदा तेनैव रूपेण विरहे तापसंयुतैः ॥ ४ ॥
निरूपणं रसस्यात्र माधुर्येणैव जायते ॥
तस्यानुभववेद्यत्वान्न रूपेण कथंचन ॥ ५ ॥
अतः संभूय ताः सर्वाः स्वानुभूतरसात्मकम् ॥
वियोगभावैः स्वं भावं वर्णयंति हरिं तथा ॥ ६ ॥
तत्तल्लीलातरंगस्था स्मृत्वा स्मृत्वा तदंगकम् ॥
अतो माधुर्यरूपेण रूपयंति परस्परम् ॥ ७ ॥

एकाधरं तथैवान्या वदनं नयनं परा ॥
एवमग्रेऽपि विज्ञेयं संपूर्णे मधुराष्टके ॥ ८ ॥
एतदेवास्मदाचार्यैरतिगुप्तं निरूपितम् ॥
तद्भावभावनं सिध्येदेतद्ग्रंथार्थभावनात् ॥ ९ ॥
तद्बोधोऽपि निजाचार्यकृपया प्रभुकारितः ॥
तादृशैर्ज्ञापितो वापि भवेन्नैवान्यथा क्वचित् ॥ १० ॥

इति श्रीहरिदासविरचितं मधुराष्टकतात्पर्यं समाप्तम् ॥

## अथ स्वमार्गशरणद्वयनिर्णयः ।

श्रीकृष्णाय नमः ।

यथा हि शरणं यातैर्विधेया भावना हृदि ॥
स्वाचार्यकरुणामात्रबलात्सात्र निरूप्यते ॥ १ ॥
शरणं द्विविधं प्रोक्तं सिद्धसाधनभेदतः ॥
त्यागात्यागविभेदेन प्रथमे त्याग इष्यते ॥ २ ॥
सर्वधर्मान्परित्यज्येत्यत्र त्यागनिरूपणात् ॥
न्यासादेशेति पद्येन तत्तात्पर्यं निरूपितम् ॥ ३ ॥
स एवात्र च संन्यासः सर्वत्यागात्मको मतः ॥
सर्वोत्तमे प्रभोर्नाम तादृगेव विराजते ॥ ४ ॥
विरहानुभवैकार्थं सर्वत्यागोपदेशकः ॥
यत्र ज्ञानगुणादीनां स्वास्थ्यहेतोरपि स्वतः ॥ ५ ॥

त्यागः शरीररक्षापि न कार्या भोजनादिभिः ॥
लौकिका वैदिका चापि धर्मा भागवता अपि ॥ ६ ॥
त्यज्यंते यत्र न फलमन्यत्तदनुभूतितः ॥
अतो दुर्लभता प्रोक्ता प्रेम्णा सिध्यति नान्यथा॥७॥
पृथक् शरणमार्गोपदेष्टृत्वमिदमेव हि ॥
बुद्धिपूर्वकतत्त्यागे विरहानुभवार्थता ॥ ८ ॥
अग्रे तु तस्याप्यस्फूर्तिः स्वास्फूर्तिर्विरहेण च ॥
एवं हि सिद्धशरणं त्यागेन विनिरूपितम् ॥ ९ ॥
अत्यागेन च संप्रोक्तं साध्यभक्तिप्रसिद्धये ॥
कलौ भक्त्यादिमार्गाणां दुःसाध्यत्वादपि स्वतः॥१०॥
स्वसाधनैर्न संसिद्धिः शरणादखिलं भवेत् ॥
विवेकधैर्यभक्त्यादिरहितस्येति रूपणात् ॥ ११ ॥
निजांगरहितं चापि शरणं भक्तिसाधनम् ॥
नवरत्नेऽपि च प्रोक्तं तस्मात्सर्वात्मनेति हि ॥ १२ ॥
प्रत्येकं साधनं चेति बालबोधे निरूपितम् ॥
तस्मादिदानीं तद्भक्तिर्न सिध्येत्तत्र साधनैः ॥ १३ ॥
इति निःसाधनाधीशः स्वस्यमाविश्चकार ह ॥
तेन चोक्तः कृपादृष्ट्या द्विविधोऽपि तदाश्रयः ॥१४॥
फलात्मा साधनात्मा च स्वतंत्रो भक्तिसाधनः ॥

तत्रापरो विवेकादिसहितः साधयेद्रतिम् ॥ १५ ॥
प्रथमे भावना कार्या शरणे स्वात्मरूपिणः ॥
यतो हि भगवान् कृष्णो विरहात्मा च साकृतिः॥१६॥
देहेंद्रियांतःकरणादिषु तिष्ठति रक्षकः ॥
ततश्च भावयेत्कृष्णं देहजीवेंद्रियात्मकम् ॥ १७ ॥
अत एव वियोगस्यानुभूतौ जीवनं भवेत् ॥
अयमेव च संन्यासः स्वतंत्रः शरणं तथा ॥ १८ ॥
सर्वत्यागेन सततं वियोगानुभवात्मकः
द्वितीये शरणे तु स्यादेतद्देहादिकं मम ॥ १९ ॥
तदेकशरणं तेषां रक्षकश्च प्रवर्तकः ॥
निवर्तकश्च भगवान् निष्प्रयत्नस्ततो भवेत् ॥ २० ॥
इति विज्ञाय शरणद्वयं जीवः सदाश्रितः ॥
निःसाधनो निजाचार्यानाश्रितः सिद्धिमाप्नुयात् २१

इति श्रीहरिदासविरचितः स्वमार्गशरणद्वयनिर्णयः समाप्तः ।

## अथ श्रीमत्प्रभुप्राकट्यहेतुनिर्णयः ।

श्रीकृष्णाय नमः । :

भक्तिमार्गे भगवतः प्राकट्यं फलमुच्यते ॥
परमानंदरूपत्वात्तदाविर्भवनं तथा ॥ १ ॥

तत्र हेतुर्भक्तदुःखं रूपत्रितयके हरेः ॥
अवतारोऽपि भक्तानां दुःखादेव हरेर्मतः ॥ २ ॥
भवदुःखविनाशायेत्यत्रोक्तं प्रभुभिस्तथा ॥
यदान्यविहितं दुःखं भक्तानामिह जायते ॥ ३ ॥
तदासुरविनाशायावतरत्यंजसा हरिः ॥
कामेन यत्र तद्दुःखं स्वरूपविषयं मतम् ॥ ४ ॥
आविर्भावो भवेत्तत्र हरेः पूर्णरसात्मनः ॥
यत्रैव सहजस्नेहाद्दुःखं तत्र स्वयं हरिः ॥ ५ ॥
मूलरूपेण करुणस्तदर्थं प्रकटो भवेत् ॥
यथा महाप्रार्थनया देवकीवसुदेवयोः ॥ ६ ॥
काम्यया श्रुतिरूपाणां सहजस्नेहतो ह्यभूत् ॥
अतो भक्तगतं दुःखं प्राकट्ये हेतुरुच्यते ॥ ७ ॥
दुःखं तु विरहादेव जायते नान्यथा पुनः ॥
विरहोऽपि तदा दुःखहेतुर्हृदि यदि स्फुरेत् ॥ ८ ॥
तत्स्फूर्तिस्तेन भगवत्संबंधो विविधो मतः ॥
देहभावविभेदेन तत्राद्यो हरिणा स्मृतः ॥ ९ ॥
अवतारे द्वितीयः स्यात्परोक्षाध्यक्षयोरपि ॥
यथा परया स्त्रिया भावसंबंधो न हि देहजः ॥ १० ॥
स जायते निरवधिः स्वसर्वस्वनिवेदनात् ॥

यथा कन्या स्वसर्वस्वं निवेद्य च निजाग्रहात् ॥११॥
गृह्णाति तद्गतं भावं परोक्षे तापरूपिणम् ॥
तथात्रापि स्वसर्वस्वं निवेद्य स्वाग्रहादपि ॥ १२ ॥
ऊरीकृत्य च तद्भावं परोक्षे तापरूपिणम् ॥
तस्यानुभावतः कृष्णप्राकट्यं हृदये मतम् ॥ १३ ॥
इति श्रीहरिदासविरचितः श्रीमत्प्रभुप्राकट्यहेतुनिर्णयः समाप्तः ॥

## अथ श्रीमत्प्रभोर्वयोनिरूपणम् ।

श्रीकृष्णाय नमः ।

रसात्मको हि भगवांस्तस्याधररसः पुनः ॥
तस्य मुख्यरसत्वोक्तिरभेदे युज्यते कथम् ॥ १ ॥
न हि प्रभौ स्वभेदोऽस्ति कश्चिदत्र रसात्मभिः ॥
नात्रोच्यते यथैवाम्रफले चैकरसोऽपि हि ॥ २ ॥
बहिरंतःकृतो भेदो रसयोरपि दृश्यते ॥
त्वग्गतो न तथा यद्वदंतर्निःसृतो रसः ॥ ३ ॥
वस्तुतस्तूभयोरैक्यं तारतम्यं च वर्तते ॥
तथात्राप्याधररसतस्तारतम्यं विबुध्यताम् ॥ ४ ॥
ऐक्यं च सर्वथा तस्मादभेदे मुख्यतोच्यते ॥
आनंदसारभूतत्वमत एव प्रभूदितम् ॥ ५ ॥

अत एव स्वामिनीनामाश्लेषेऽतितदादरः ॥
अत एवाधिकारोऽपि तत एव प्रवेशतः ॥ ६ ॥
वेणुद्वारा वियोगे तु जीवनं तत एव हि ॥
एवं मुख्यत्वनिर्धारस्तद्रसे त्ववधीयताम् ॥ ७ ॥
इति सर्वभोग्यसुधाधिक्यस्य विनिरूपणम् ॥
द्विवार्षिकः कुमारोऽत्र मंतव्योऽस्मत्प्रभुः सदा ॥ ८ ॥
सर्वा तदीयसामग्री मंतव्यैव तथाविधा ॥
अतो हि व्रतकामा अप्युक्ता गोपकुमारिकाः ॥ ९ ॥
एवं विहारैरित्यत्र प्रभुभिश्च निरूपितम् ॥
कुमारी च कुमारश्च व्रज एवाभवत्प्रभुः ॥ १० ॥
ब्राह्मणोऽपि क्षत्रियोऽपीत्यादिव्याकृतिकारिका ॥
तासु चास्मत्स्वामिभिस्तु सर्वा लीला निरूपिताः॥११॥
तादृशेऽखिलसामर्थ्यं हरेः कामः स्वरूपतः ॥
कामाश्रये वयोपेक्षा न तु साक्षात्स्वरूपके ॥ १२ ॥
तस्य रूपं तु मंतव्यमेवमप्राकृतत्वतः ॥
स्थायिभावो यशोदाया आकर्ण्य च सुतोद्भवम् ॥१३॥
पद्ये ज्ञानं न तु प्रोक्तं तत्स्वरूपं तथाविधम् ॥
स्वामिनीहृदयस्थस्य रूपमेवंविधं मतम् ॥ १४ ॥
यर्ह्यंगनेत्यादिभिस्तद्बहिर्लीला निरूपिता ॥

वयआदि कथा सर्वा पूर्वरूपे विबुध्यताम् ॥ १५ ॥
एवं निजप्रभो रूपं विज्ञेयं प्रभुसंश्रितैः ॥ १६ ॥
इति श्रीहरिदासविरचितं श्रीमत्प्रभोर्वयोनिरूपणं समाप्तम् ।

# अथ अष्टाक्षरशरणमंत्रपूर्वपक्षनिरासः ।

श्रीकृष्णाय नमः ।

अष्टाक्षरमहामंत्रः शरणैकप्रकाशकः ॥
तंत्रसिद्धः कथं पुष्टिमार्गे साधनमिष्यते ॥ १ ॥
विभूतिवाचिनस्तस्मान्न सिद्धिः पौरुषोत्तमी ॥
भक्तिहंसी प्रपद्येत विरोधः स्पष्ट एव हि ॥ २ ॥
उपासनाद्यगम्यत्वं तत्रोक्तं पुरुषोत्तमे ॥
निःसाधनत्वभंगः स्याद्भक्तिमार्गस्य सर्वथा ॥ ३ ॥
अनुग्रहैकसाध्यत्वमपेयाद्भगवद्रतेः ॥
एवं कृते पूर्वपक्षे सिद्धांतस्तत्र चोच्यते ॥ ४ ॥
पुष्टिमार्गप्रभोरास्यादयं हि पुनरुद्गमः ॥
मंत्रानुग्रहमूलत्वाद्वरणात्मा ततो मतः ॥ ५ ॥
तस्य साधनताया हि नापेयाद्धेतुता वृतेः ॥
विभूतिमात्रवाच्यत्वं चात एव न युज्यते ॥ ६ ॥
अत एवात्र न प्रोक्ता तस्य काचिदुपासना ॥
यथा हि श्रवणादीनां भिन्नत्वं मार्गभेदतः ॥ ७ ॥

तथैव वक्तृभेदेन मंत्रभेदो निरूपितः ॥
स्तोत्रे कृष्णाश्रये चोक्तमिति श्रीवल्लभोऽब्रवीत् ॥ ८ ॥
यथा शुकमुखं प्राप्य पीयूषद्रवतोच्यते ॥
श्रीभागवतशास्त्रस्य तथात्रापि विबुध्यताम् ॥ ९ ॥
श्रीमत्प्रभुभिरप्युक्तमत एव दयालुभिः ॥
यदुक्तं तातचरणैरित्यादिवचनामृतम् ॥ १० ॥
इति श्रीहरिदासविरचितः अष्टाक्षरशरणमंत्रपूर्वपक्षनिरासः समाप्तः ।

## अथ नृसिंहवामनजयंत्युत्सवव्रत-वैशिष्ट्यनिरूपणम् ।

श्रीकृष्णाय नमः ।

देवोद्धृत्यै महामीनः सुरकार्याय कच्छपः ॥
वराहो भुव उद्धृत्यै सृष्टिकृद्ब्रह्मकार्यकृत् ॥ १ ॥
भक्तक्लेशासहिष्णुः श्रीनृसिंहो भक्तकार्यकृत् ॥
वामनः सुरकार्यैकव्याजभक्तवृतिक्रियः ॥ २ ॥
भार्गवो भूमिभारापनयनक्षत्रियांतकृत् ॥
रघुनाथो रसात्मैवधर्ममर्यादया युतः ॥ ३ ॥
बलरामो महादैत्यमारणाद्भूमिभारहा ॥
कृष्णः पुष्टिरसात्मैव रसमर्यादया युतः ॥ ४ ॥

बुद्धः पापंडवक्तैव कलिकालानुरूपकृत् ॥
कल्किर्धर्मपुनःस्थित्यै दुष्टम्लेच्छविनाशकः ॥ ५ ॥
दशावतारा एवैते तत्तत्कार्याय चोदिताः ॥
भक्तिमार्गे तु संसेव्यः कृष्ण एव सदाबुधैः ॥ ६ ॥
सेवायामंगता चोक्ताप्रजाया इति निश्चयः ॥
तत्रावतारजन्मादिजयंतीव्रतमुच्यते ॥ ७ ॥
रामस्तु रसरूपत्वादसमत्प्रभुसमो मतः ॥
नृसिंहवामनौ भक्तकार्यकृत्त्वादिहोदितौ ॥ ८ ॥
अनुकूलौ भक्तिमार्गे तयोरुत्सवमाचरेत् ॥
अत एवास्मदाचार्यैर्निबंधे तदुदीरितम् ॥ ९ ॥
अन्यथान्यावताराणामपि स्याद्व्रतमीरितम् ॥
एवमाचार्यचरणाभिप्रायो ज्ञायते जनैः ॥ १० ॥
तदीयैः कृपया दानैः सान्निध्याद्विट्ठलेशितुः ॥ ११ ॥

इति श्रीहरिदासविरचितं नृसिंहवामनजयंत्यु-
रसत्वत्रतत्त्वनिष्टयनिरूपणं समाप्तम् ।

---

## अथ भक्तिमार्गे पुष्टिमार्गत्वनिश्चयः ।

श्रीकृष्णाय नमः

पुष्टिमार्गः फलं यत्र स्वयं साधनतां व्रजेत् ॥
साक्षात्परोक्षभेदेन स द्विधा विनिरूपितः ॥ १ ॥

आविर्भावदशायां हि साक्षात्त्वेन निगद्यते ॥
अन्यथा तु परोक्षत्वात्तथैव हि निरूप्यते ॥ २ ॥
मानातिरिक्तमार्गत्वमेव तत्र व्यवस्थितिः ॥
तत्रायं संशयः कृष्णः फलं साक्षात्कृतः स्वयम् ॥३॥
यायात्साधनतां नूनं रसलीलासु सर्वशः ॥
परोक्षे भक्तिमार्गे हि कथं साधनता हरेः ॥ ४ ॥
अनाविर्भूतरूपत्वाद्दर्शनस्याप्यभावतः ॥
तदभावे कथं तस्य पुष्टिमार्गत्वमुच्यते ॥ ५ ॥
अन्यथा साधनैः सिद्धौ मर्यादैव तथा भवेत् ॥
सिद्धांतस्तु हरिः साक्षाद्रसात्माश्रुतिसंमतः ॥ ६ ॥
सोऽपि शृंगार एवास्ति स चापि द्विविधो मतः ॥
एवं सति हरेर्भक्तिमार्गे पुष्टयभिधे मतः ॥ ७ ॥
वियोगः साधनं यस्मात्स स्वरूपात्मको यतः ॥
तस्य साधनताया हि स्वरूपसाधनं मतम् ॥ ८ ॥
अतोऽत्र पुष्टिमार्गत्वं निःप्रत्यूहं विभाव्यताम् ॥९॥

इति श्रीहरिदासविरचितो भक्तिमार्गे पुष्टिमार्गत्वनिरूपणः समाप्तः ।

# अथ भक्तानां दुःसंगविज्ञानप्रकारनिरूपणम् ।

श्रीकृष्णाय नमः ।

अथ श्रीवल्लभाचार्यकृपया स्फुरितं हृदि ॥
स्वीयानामभ्रमार्थाय किंचिदत्र निरूप्यते ॥ १ ॥
दैवासुरविभागेन द्विधा जीवाः प्रकीर्तिताः ॥
बंधमोक्षव्यवस्थापि गीतायामेव रूपिता ॥ २ ॥
दैवेष्वपि च जीवेषु यदंगीकरणं पुनः ॥
भक्तिमार्गेऽत एवात्र प्राप्स्यंति पुरुषोत्तमम् ॥ ३ ॥
तत्रापि भेदो विज्ञेयो मर्यादापुष्टिभेदतः ॥
मार्गे फलेऽपि विज्ञेयो भक्तिमोक्षविभेदतः ॥ ४ ॥
भक्तावंगीकृत्यभावे दैवानामपि सर्वथा ॥
कामनिष्कामभेदेन स्वर्गमोक्षौ न संशयः ॥ ५ ॥
विज्ञेयं वरणं भक्तौ तदर्थित्वैककार्यतः ॥
तदर्थित्वं च विज्ञेयं भजनार्थप्रवृत्तितः ॥ ६ ॥
तत्रादौ शरणं गच्छेन्महापुरुषयोगतः ॥
महापुरुषपारोक्ष्ये तन्निष्ठैरपि सर्वथा ॥ ७ ॥
तत आश्रयसंसिद्धौ सेवार्थं स्वसमर्पणम् ॥
समर्पणे जीवदेहतत्संबंधनतामपि ॥ ८ ॥

ब्रह्मसंबंधतः कृष्णसाक्षात्संबंधयोग्यता ॥
ततस्तत्सेवया स्वीयसर्वस्वविनियोगतः ॥ ९ ॥
गृहीतः परमानंदनिधिः कृष्णोऽक्षयः स्वतः ॥
अतस्तु सावधानित्वं विधेयं भगवज्जनैः ॥ १० ॥
संप्राप्तनिधिभिश्चौरवंचकेभ्यो विशेषतः ॥
चौरास्तु द्विविधा ज्ञेया बाह्याभ्यंतरभेदतः ॥ ११ ॥
बाह्याः कुटुंबरूपा ये ते तु वित्तहराः स्मृताः ॥
यतस्तद्विनियोगेन वित्तं याति समर्पितम् ॥ १२ ॥
आंतराः कामलोभाद्याश्चित्तं मात्राहरास्तु ते ॥
यतो बहिर्मुखं चित्तं सेवायां प्रविशेन्न हि ॥ १३ ॥
चित्तवित्तैकसाध्या हि सेवा चापि न सिध्यति ॥
तदभावेऽखिलं व्यर्थं पुरुषार्थपरिक्षयात् ॥ १४ ॥
अतो विवकधैर्यादिशस्त्रयुक्तैस्तथा पुनः ॥
अंतरास्ते निराकार्या बाह्यास्ते तु यथाक्रमम् ॥१५॥
सेवाकारणतद्रोधपरित्यागादिसाधनैः ॥
वंचकस्तु ततोऽप्येष दुष्ट इत्येव बुध्यताम् ॥ १६ ॥
यतस्तदाकृतिश्चेष्टा तथाचारश्च भाषणम् ॥
विनयः शांताता[1]वेशः शंखचक्रादिचिह्नितः ॥ १७ ॥

१ सततावेशः.

एवमाद्यखिलं तुल्यं भगवद्धर्मवर्तिभिः ॥
ततो ज्ञानाभावतोऽपि सर्वथा नाशनं मतम् ॥ १८ ॥
दुर्घटं तस्य विज्ञानं सर्वथा भक्तसाम्यतः ॥
अत एव न कर्तव्यो विश्वासो ह्यविचारितः ॥ १९ ॥
तदीयत्वभ्रमात्तस्मिन्विश्वासे संगदोषतः ॥
असत्यपि च सद्भावात्पतनं भक्तिमार्गतः ॥ २० ॥
अत एवोक्तमाचार्यैर्गुरोरपि च वीक्षणम् ॥
कृष्णसेवापरं वीक्ष्येत्यादिपद्ये निबंधगे ॥ २१ ॥
नन्वेतस्य परिज्ञानं कथं भवति सर्वथा ॥
ज्ञाने सति परित्यागः कर्तव्योऽस्य सतां भवेत् ॥ २२ ॥
भवेच्च चोरविज्ञानं शास्त्रतो धर्मदर्शनात् ॥
न हि वंचकविज्ञानं साम्यतो भगवज्जनैः ॥ २३ ॥
न कोऽपि तादृशो धर्मो वैलक्षण्यावबोधकः ॥
मृगाणामिव साधूनां मृगयोरिव गायने ॥ २४ ॥
अतोऽपि किंचिदाधिक्यं वंचके तु प्रतीयते ॥
प्रदर्शनार्थत्वतस्तु वेषादेरिह सर्वथा ॥ २५ ॥
गृहसंवासतो ज्ञेय इतिचेत्तन्न युज्यते ॥
संसर्गे बुद्धिनाशे तु मोहान्न ज्ञानसंभवः ॥ २६ ॥
ज्ञानाभावे भवेदेव तत्किया सार्थकाखिला ॥

संसर्गमात्रतो नाशे कस्य ज्ञानोदयो भवेत् ॥ २७ ॥
न ज्ञापयति चात्मानं यावन्नाशं स वंचकः ॥
नाशयित्वैव भवति निजरूपसमास्थितः ॥ २८ ॥
मार्गस्थितेर्भवत्येव तादृशोऽत्यंतबाधकः ॥
बलान्न मारयत्येष प्रत्नोप्यैव च घातकः ॥ २९ ॥
छलबुद्धिविनाशाय न बलं तस्य साधनम् ॥
अज्ञातः सर्वथा हिंस्रो ज्ञातो नैव हि बाधकः ॥३०॥
ज्ञानं त्वशक्यं तस्येति न निस्तारः कथंचन ॥
इति चेत्तत्र सिद्धांत उपायः परिकीर्त्यते ॥ ३१ ॥
भगवद्भक्तसाम्येऽपि तदसाधारणो गुणः ॥
निरपेक्षत्वमेतस्मिंस्तदभावाद्धि वंचकः ॥ ३२ ॥
अनाकारित एवासौ संगे लगति सर्वथा ॥
प्रार्थिता भगवद्भक्ताः कृपयंति कथंचन ॥ ३३ ॥
स द्रव्यमेव विज्ञाय सज्जते स्वार्थमोहितः ॥
दीनेषु भगवद्भक्तास्तदर्थैकप्रसादकाः ॥ ३४ ॥
चालयत्यथसुन्मार्गे मायाचाटुकसूक्तिभिः ॥
ते तु मार्गे चालयंति वचोभिः कटुकौषधैः ॥ ३५ ॥
एवं विज्ञाय बुध्येव वैलक्षण्यं हि वंचके ॥
तत्संगं तत्र सद्भावं तन्माहात्म्यं परित्यजेत् ॥ ३६ ॥

अन्यथा मार्गनिष्ठोऽपि विनाशं प्राप्नुयान्नरः ॥
अत एवास्मदाचार्यैरुक्तं स्वीयकृपालुभिः ॥ ३७ ॥
पापंडप्रचुरे लोके कृष्ण एव गतिर्मम ॥
अन्यत्राप्युक्तमेवं हि शिक्षापद्येषु सर्वथा ॥ ३८ ॥
प्रावाहिकास्तेऽपि चेत्स्युरुपेक्ष्यैवोचिता तदा ॥
एवं विज्ञाय सततं स्थेयं वै सावधानिभिः ॥ ३९ ॥
सेवापरैः कथासक्तैः सत्संगपरिशोधकैः ॥
बाह्यव्यापाररहितैर्भगवद्भावभावुकैः ॥ ४० ॥
दैन्यमात्रपरिश्रांतैरसदालापवर्जितैः ॥
श्रीकृष्णदर्शनाद्यार्तैर्निजाचार्याश्रिताश्रितैः ॥ ४१ ॥

इति श्रीहरिदासविरचितं भक्तानां दुःसंगविज्ञानप्रकार-
निरूपणं समाप्तम् ।

# अथ शिक्षापत्राणि तत्र प्रथमं शिक्षापत्रम् ॥ १ ॥

श्रीकृष्णाय नमः ।

सदोद्विग्नमनाः कृष्णदर्शने क्लिष्टमानसः ॥
लौकिकं वैदिकं चापि कार्यं कुर्वन्ननास्थया ॥ १ ॥
निरुद्धवचनो वाक्यमावश्यकमुदाहरन् ॥
मनसा भावयेन्नित्यं लीलाः सर्वाः कृपागताः ॥ २ ॥

सेवापि कायिकी कार्या निरुद्धेनैव चेतसा ॥
दैहिकं कर्म निखिलं प्रभुसेवोपयोगिनाम् ॥ ३ ॥
यथोपकरणादीनां रक्षा तद्वद्विधीयताम् ॥
भार्यादिष्वनुरागोऽपि सेवाहेतुक एव हि ॥ ४ ॥
प्रातिकूल्ये यथा त्यागः प्रभ्वसंबंधिवस्तुनः ॥
धनेषु निस्पृहः सेवोपयोगित्वेन रक्षणम् ॥ ५ ॥
विवाहादिषु कार्येषु वध्वाः सेवार्थमानसः ॥
भगवत्संगिसंगोऽपि स्वप्राणप्रेष्ठवार्तया ॥ ६ ॥
वियोगानुभवं कुर्वन् सेवानवसरे पुनः ॥
मूर्तौ भगवतो दृष्टिर्भाव्या तत्तस्य दर्शनम् ॥ ७ ॥
स्पर्शस्तत्रैव भावेन सर्वास्तत्रैव तत्क्रियाः ॥
भावात्मनो ह्यनुभवः सर्वो भावेन नान्यथा ॥ ८ ॥
हृदयस्यात्यशुद्धत्वान्न तत्रावेशसंभवः ॥
स्वमूर्तावतिशुद्धायामाविश्यानुभवं हरिः ॥ ९ ॥
यावत्साधनसंपत्तिः कारयत्यखिलान्निजान् ॥
शुद्धं विधाय हृदयं पश्चात्तत्राविशेत्स्वयम् ॥ १० ॥
दत्वा दैन्येन संतुष्टो नित्यं देहमलौकिकम् ॥
स्वयं प्रविश्य भावात्माऽनुभवं कारयेत्स्वकम् ॥११॥
एवंविधं फलं नित्यं चिंतयन् चेतसा सदा ॥

कुर्यादत्यादरं कृष्णसेवायामेव सर्वथा ॥ १२ ॥
साक्षात्परोक्षरूपत्वात्सेवा पूर्वविलक्षणा ॥
यथा गायंत्य इत्यत्र भावः स वलितो मतः ॥ १३ ॥
तदुत्तरं यथा भावः केवलो विरहात्मकः ॥
फलं तथैव चात्रापि फलता केवलस्य हि ॥ १४ ॥
फलाशायां फलं कृष्णवदनं हृदि चिंत्यताम् ॥
फलं कृष्णः सदानंदो भक्तभावात्मकत्वतः ॥ १५ ॥
न तत्र ज्ञानसंबंधो यतोऽत्रापि न वैचिलः ॥
सच्चिदानंदरूपस्तु प्रसिद्धः पुरुषोत्तमः ॥ १६ ॥
पूर्वावस्था फलं कृष्णः केवलश्चोत्तरो मतः ॥
तस्यैवास्यं कृपापूर्णः प्रभुः श्रीवल्लभाभिधः ॥ १७ ॥
तदाश्रयः सदा कार्यो मनोवाक्कायवृत्तिभिः ॥
स्वकीयता तदीयेषु तद्भिन्ने भिन्नता मता ॥ १८ ॥
तदीयेषु च तद्बुद्ध्या भरः स्थाप्यो विशेषतः ॥
यथा दूतीषु भवति विषयीणां मतिस्तथा ॥ १९ ॥
धनं गृहं यथा कृष्णे तथा भक्तिस्थितेऽपि च ॥
विनियोक्तव्यमेवं हि प्रभोर्भावो भविष्यति ॥ २० ॥
तदीयाश्चेत्स्वतस्तुष्टास्तुष्टः कृष्णो न संशयः ॥
तदीयास्तु निजाचार्यचरणैकपरायणाः ॥ २१ ॥

अनन्यभजनास्तुष्टाः कामलोभविवर्जिताः ॥
निरपेक्षा विरक्ताश्च सर्वभूतहिते रताः ॥ २२ ॥
निर्मत्सराः कृष्णसेवाकथादिविहितादराः ॥
एवंविधास्तदीयाश्चेत्संगादपि विशेषतः ॥ २३ ॥
सर्वथा शुद्धभावानां स्वीकृतानां कृपालुना ॥
सर्वं श्रीवल्लभाचार्यप्रसादेन भविष्यति ॥ २४ ॥

इति श्रीहरिदासविरचितं प्रथमशिक्षापत्रं संपूर्णम् ॥ १ ॥

## अथ द्वितीयं शिक्षापत्रम् ॥ २ ॥

श्रीकृष्णाय नमः ।

यशोदोत्संगललितः कचग्रंथितवेणिकः ॥
मुक्ताफललसद्भालश्चलत्कुटिलकुंतलः ॥ १ ॥
मुक्ताफलावलीभालप्रांतकर्णविभूषितः ॥
कस्तूरिकातिलकयुग्भालभूषातिसुंदरः ॥ २ ॥
काश्मीररागविलसत्कपोलद्वयचित्रितः ॥
स्फुरच्छ्रुतियुगप्राप्तकुंडलद्युतिमंडितः ॥ ३ ॥
चिबुकांतलसद्वज्रभूषः सांजनलोचनः ॥
नयनप्रांतविलसन्मषीबिंदुसुशोभनः ॥ ४ ॥
लालामिषाधररसस्रावणज्ञानबोधकः ॥
बाल्यभावातिसुलभरसबोधनतत्परः ॥ ५ ॥

मुखांबुजनिजांगुष्ठप्रवेशनपरायणः ॥
भक्तिप्रविष्टस्य गतिक्रियाशक्तिविरोधकः ॥ ६ ॥
ग्रीवालसलसन्मुक्ताफलमालाविभूषणः ॥
तदुत्तरलसत्स्वर्णमणिमालातिमोहनः ॥ ७ ॥
उरस्थललसत्स्वच्छव्रकवैयाघ्रभूषणः ॥
मुक्ताफलस्वर्णमालायुततुंदिलितोदरः ॥ ८ ॥
बाहुमध्यलसद्रत्नजटितांगदसुंदरः ॥
पटगुच्छलसत्स्वल्पकरकंकणभूषणः ॥ ९ ॥
दशांगुलिलसद्रत्नजटितोत्तममुद्रिकः ॥
किंकिणीपटगुच्छातिविराजितकटिस्थलः ॥ १० ॥
सनूपुरपदन्यासध्वनिमोहितगोपिकः ॥
दिगंबरो नखविधुज्योत्स्नाजितनिशापतिः ॥ ११ ॥
स्वरूपप्रतिबिंबैकदृष्टिहास्यमुखांबुजः ॥
पंकांगरागरुचिरः सदा मुग्धशिरोमणिः ॥ १२ ॥
लीलान्यज्ञानरहितः सर्वलीलाविचक्षणः ॥
कंदर्पकोटिलावण्यो मानिनीमानदर्पहा ॥ १३ ॥
स्वगोपिकागूढचौरः कृतसंकेतगोपनः ॥
परमानंदसंदोहः सदा दुःखविवर्जितः ॥ १४ ॥
असमक्षो दुःखितानां प्रपंचसुखिनामपि ॥

दयानिधिर्मुग्धभावः स्वीयवाक्यैककारकः ॥ १५ ॥
प्रपंचनाशनः स्वीयनिरोधकृतितत्परः ॥
बालभावग्रहपरः क्षणक्षणविलक्षणः ॥ १६ ॥
क्षणं क्रुद्धः क्षणं हृष्टः स्वल्पवस्तुसुतोषितः ॥
स्वकीयहृदयाभिज्ञस्तदन्यज्ञानवर्जितः ॥ १७ ॥
गूढलीलापरोभक्तगूढभावरसात्मकः ॥
सेवनीयः सावधानैर्विपरीतगतिक्रियः ॥ १८ ॥
श्रीमदाचार्यकृपया तिष्ठति स्वगृहे हरिः ॥
एवंविधः सदा हस्ते योगिनः पारदो यथा ॥ १९ ॥
चिंतनीयोऽनवसरे सेवायाः सर्वथा धिया ॥
यतो निरोधसंसिद्धिः सेवया हार्दया भवेत् ॥ २० ॥
इति श्रीहरिदासविरचितं द्वितीयं शिक्षापत्रं संपूर्णम् ॥ २ ॥

## अथ तृतीयं शिक्षापत्रम् ॥ ३ ॥

श्रीकृष्णाय नमः ।

निधिः प्राप्तः सुसंरक्ष्यो दुःसंगादिकृतः सदा ॥
त्यक्त्वापि लोकसंकोचं यथा वह्निर्जलादिभिः ॥१॥
वह्निवद्भगवद्भावः सत्संगव्यवधानतः ॥
नाशयेत्संसृतिं यद्वत्पात्रव्यवहितं जलम् ॥ २ ॥
जलवल्लौकिकं प्रोक्तं साक्षात्तन्मेलनेन तु ॥

मूलतो नाशयेद्भावं यथा वैश्वानरं जलम् ॥ ३ ॥
अतः सदैव भेत्तव्यं लौकिकासक्तितो जनैः ॥
सत्संगमग्रतः कृत्वा नाशनीया न चान्यथा ॥ ४ ॥
सतः परोक्षे तत्संगजातभावो विभाव्यताम् ॥
तद्विरुद्धवचो नैव माननीयं सतां क्वचित् ॥ ५ ॥
भरतस्यापि दुःसंगे जाता हरिणजातिता ॥
केवलं कलिदोषाभिभूता अपि जनाः स्वतः ॥ ६ ॥
तत्संगनिरतैर्नैव भवितव्यं विशेषतः ॥
अथवा सर्वतो मौनं तदभावे विधीयताम् ॥ ७ ॥
यो वदत्यन्यथा वाक्यमाचार्यवचनाज्जनः ॥
संसृतिप्रेरको वापि तत्संगोदुष्टसंगजः ॥ ८ ॥
यश्च कृष्णे रतिं नित्यं बोधयत्यप्रयोजनाम् ॥
निरपेक्षः सात्त्विकश्च तत्संगः साधुसंगमः ॥ ९ ॥
एवं निश्चित्य सर्वेषु स्वीयेष्वन्येषु वा पुनः ॥
महत्कुलप्रसूतेषु कर्तव्यः संगनिर्णयः ॥ १० ॥
श्रीमदाचार्यचरणे मतिः स्थाप्या सदा स्वतः ॥
तत एव स्वकीयानां सिद्धिः कार्यस्य सर्वथा ॥ ११ ॥
अवैष्णवत्वं मंतव्यं तद्विरुद्धजनेष्वपि ॥
जीवेषु दोषवत्त्वेवं तथा तत्साम्यवस्तुषु ॥ १२ ॥

श्रीकृष्णः श्रीमदाचार्यस्तथा श्रीविठ्ठलेश्वरः ॥
तथा लीलास्थसामग्री नैतत्साम्यं कदाचन ॥१३॥
यदस्माभिः पुरा प्रोक्तं तच्चित्ते स्थाप्यतां तदा ॥
न कुत्रापि च वक्तव्यं सांप्रतं विमुखा जनाः ॥१४॥
सांमुख्यबोधनं नैव जायते वाह्यधर्मतः ॥
एकोऽपि दोषः सुहृढः सर्वं नाशयति ध्रुवम् ॥१५॥
अस्माभिरेवं लिखितं निरपेक्षैः स्वभावतः ॥
स्नेहेन सर्वथा चित्ते धीयतां यदि रोचते ॥ १६ ॥
इति श्रीहरिदासविरचितं तृतीयं शिक्षापत्रं संपूर्णम् ॥ ३ ॥

## अथ चतुर्थं शिक्षापत्रम् ॥ ४ ॥

श्रीकृष्णाय नमः।

प्रभोर्धर्माः श्रुतौ प्रोक्तास्तथा भागवतेऽपि च ॥
अप्राकृताः स्वरूपैकनिष्ठा भिन्ना न रूपतः ॥ १ ॥
कर्तृत्वसर्वरूपत्वसर्वाधारत्वमुख्यकाः ॥
व्यापकत्वविरुद्धात्मधर्माद्याः श्रुतिरूपिताः ॥ २ ॥
ऐश्वर्याद्या अंतरंगधर्मा भागवते तथा ॥
तेऽपि स्वरूपभेदेन मर्यादापुष्टिभेदतः ॥ ३ ॥
सर्वेऽपि च विभिद्यंत इति श्रीमत्प्रभोर्वचः ॥
अतोऽत्र पुष्टिमार्गीयमंतरंगं विशेषतः ॥ ४ ॥

विरुद्धधर्माश्रयत्वं स्वसुखाय विचारयेत् ॥
प्रभुः कुमार एवास्ति व्रजे मातृपदांकगः ॥ ५ ॥
श्रीभागवतवाक्येन कौमारं जहतुर्व्रजे ॥
व्याख्यातं च तथैवास्मदाचार्यैर्विवृतावपि ॥ ६ ॥
व्रज एव कुमारश्च कुमारी चाभवद्धरिः ॥
एकादशसमास्तत्र गूढार्चिः सबलोऽवसत् ॥ ७ ॥
एतद्वाक्यं मिश्ररूपं कुमारः केवलो हरिः ॥
सामग्र्यापि तथैवास्ति यतो गोप्यः कुमारिकाः ॥ ८ ॥
एवं सतीदृशे रूपे रासलीलादिरूपणम् ॥
विरुद्धधर्माश्रयत्वबोधायैव हि युज्यते ॥ ९ ॥
इदं हि पुष्टिमार्गीयं तदेव ज्ञायते बुधैः ॥
गीतगोविंदाद्यपद्येऽप्येतदेव निरूप्यते ॥ १० ॥
अन्यथा नंदवचनं तादृशे युज्यते कथम् ॥
अतस्तु पुष्टिमार्गीयविरुद्धगुणसंश्रयः ॥ ११ ॥
रसमार्गीयधर्मास्तु ते बोद्धव्या विचक्षणैः ॥
बालोरसिकमूर्धन्यः स्ववशोऽन्यवशः सदा ॥ १२ ॥
अभीतः सर्वथा भीतः सापेक्षो निरपेक्षकः ॥
चतुरोपि महामुग्धः सर्वज्ञोऽप्यज्ञ एव च ॥ १३ ॥

---

१ भावसिद्धरि-

आरामोऽपि स गोपीनां सर्वदा रतिवर्धनः ॥
पूर्णकामोऽपि कामार्तो ह्यदीनो दीनभाषणः ॥ १४ ॥
स्वप्रकाशोऽप्यप्रकाशो बहिष्ठोऽतःस्थितः सदा ॥
अस्वतंत्रः स्वतंत्रोऽपि समर्थो न तथापि च ॥ १५ ॥
एवं हि पुष्टिमार्गीयं विरुद्धस्वगुणालयम् ॥
कृष्णं कृपालुं सततं शरणं भावयेद्धृदि ॥ १६ ॥
असाधनः साधनो वा न साधुः साधुरेव वा ॥
शरणादेव निखिलं फलं प्राप्नोत्यसंशयम् ॥ १७ ॥
भक्तिमार्गे साधनं च फलं शरणमेव हि ॥
सर्वधर्मपरित्यागः स्वतंत्रं चेत्फलं हि तत् ॥ १८ ॥
परोक्षे शरणं तादृङ्महापुरुषयोगतः ॥
कृपा चेत्तादृशानां हि तदा तद्वारकं भवेत् ॥ १९ ॥
तेषामपि तु पारोक्ष्ये तदुक्तैर्वचनैः स्वतः ॥
तत्प्रकाशितमार्गैकस्थितो भवति सर्वथा ॥ २० ॥
संसारिणा सदा दुष्टसंगिनामन्नदोषतः ॥
बहिर्मुखानां मत्तानां कुतो मार्गे स्थितिर्भवेत् ॥ २१ ॥
तदर्थं श्रीमदाचार्यचरणांबुरुहाश्रयः ॥
सदा विधेयस्तेनैव सकलं सिद्धिमेष्यति ॥ २२ ॥
तदाश्रयोऽपि मनसः संगाभावेन चेत्सताम् ॥

तोपाभावेन शिथिलो यदि दैवाद्भविष्यति ॥ २३ ॥
तदास्माकं गतिः कावेत्येवं चिंतास्ति मे हृदि ॥
लौकिकक्लेशसंबंधो ह्यंगीकृतलक्षणम् ॥ २४ ॥
लोके स्वास्थ्यमिति श्रीमदाचार्यवचनामृतात् ॥
तदीयैः स्वामिहार्दज्ञैस्तोपः कार्यस्तु तेन हि ॥ २५ ॥
अतो हि लौकिकक्लेशोऽनांतरः क्रियतां क्वचित् ॥
बाह्यतस्तु प्रकर्तव्यो ह्यौदासीन्यप्रसाधनात् ॥ २६ ॥
दुःखं दुःसंगजं चान्यलौकिकाभिनिवेशजम् ॥
सत्संगाभावजं चापि तथा मार्गस्थितेरपि ॥ २७ ॥
तत्तु मत्प्रभुपादाब्जकृपया सर्वथा मम ॥
तदीयानां च संगेन क्षणाद्दूरीभविष्यति ॥ २८ ॥
ते दुर्लभा इति मनः खिन्नं भवति नित्यदा ॥
यदा प्रभुः कृपापूर्णः कृपयिष्यति दैन्यतः ॥ २९ ॥
तदाचार्यपदासक्तांस्तानुपस्थापयिष्यति ॥
अस्माकं तु गतिर्नान्या श्रीकृष्णः शरणं मम ॥ ३० ॥

इति श्रीहरिरायजीविरचितं चतुर्थं शिक्षापत्रं संपूर्णम् ॥ ४ ॥

## अथ पंचमं शिक्षापत्रम् ॥ ५ ॥

श्रीकृष्णाय नमः ।

सदा विरहभावेन भावात्मा भाव्यतां हरिः ॥
कृष्णो हृदयदेशस्थः स्वामिनीनां कृपानिधिः ॥ १ ॥

अस्माकमतिभाग्येन तदास्यं वह्निरुद्गतः ॥
अतः शीतलभावोऽस्मिन्मार्गे नैवोपयुज्यते ॥ २ ॥
तापभावः परं दैन्यं प्रकाशयति सर्वथा ॥
दैन्येन दयया दीनबंधुः प्रादुर्भवत्यसौ ॥ ३ ॥
तद्दैन्यं स्यात् स्वामिनीनां तापभावविभावनात् ॥
तद्भावनं भवेदेव तापात्मचरणाश्रयात् ॥ ४ ॥
तदाश्रयस्य सिद्धिस्तु तद्वाक्यपरिनिष्ठया ॥
तन्निष्ठा सततं तादृक् तदीयजनसेवया ॥ ५ ॥
तदीया दुर्लभाश्चेत्स्युः श्रीभागवतसेवनम् ॥
अथवा दैन्यभावेन स्मर्तव्यः सततं हरिः ॥ ६ ॥
अष्टाऽक्षरमहामंत्रो वक्तव्य इति निश्चयः ॥
सर्वदा सर्वभावेन तेन सर्वं भविष्यति ॥ ७ ॥
अस्माकं न्यूनतैवासीन्मिलनं यदभून्नहि ॥
एतावती हरिः कृष्णः पूरयिष्यति तामपि ॥ ८ ॥
भवद्भिर्नैव कर्तव्यः क्षोभो मनसि सर्वथा ॥
अस्मिन्मार्गे यथैवाऽऽर्तिस्तथैव फलसंनिधिः ॥९॥
यथाकथंचित् कर्तव्यो व्यवहारो हि लौकिकः ॥
अपकीर्तिभयात्तेन बुद्धिशैथिल्यसंभवात् ॥ १० ॥

इति श्रीहरिरायजीकृतं पंचमं शिक्षापत्रं संपूर्णम् ॥ ५ ॥

# अथ षष्ठं शिक्षापत्रम् ॥ ६ ॥

श्रीकृष्णाय नमः।

गृहभंगसमाचाराः श्रुताः श्रुतिविषायिता ॥
तदर्थं लिख्यते किंचित्समाधानाय चेतसः ॥ १ ॥
सदा यशोदातनुजो द्विभुजः सुद्विजद्वयः ॥
सरोजास्यस्त्वलालः स्मर्यतामार्यवंशजः ॥ २ ॥
सर्वेश्वरश्च सर्वज्ञः कृष्णः सकरुणः समः ॥
असमर्थो ज्ञानशून्यो जीव इत्येव निश्चयः ॥ ३ ॥
तस्येच्छा त्रिविधा प्रोक्ता मूलवेदस्वभेदतः ॥
मूलेच्छाया गृहीतानां नान्यथा कुरुते फलम् ॥ ४ ॥
प्रवाह एव नियतस्तेषु कृष्णविचारितः ॥
मर्यादया गृहीतांस्तु प्रवर्तयति कर्मणि ॥ ५ ॥
स्वरूपेण वृतानां तु स्वतः सर्वं करोति हि ॥
तच्चिंतयैव हि व्यासः कृपालुः सर्वतो विभुः ॥ ६ ॥
निवर्तयत्यनिष्टेभ्यः स्वकीयान्करुणानिधिः ॥
यदि जीवाः स्वभावेन निवर्तेरन्न ते स्वतः ॥ ७ ॥
अनिष्टमेव सर्वज्ञो बलाद्दूरीकरोति हि ॥
इष्टाऽनिष्टविवेको हि जीवबुद्ध्या न जायते ॥ ८ ॥

१ तस्येच्छात्रिविधा श्लोके मूलवेदस्वरूपतः.

अविद्यया गृहीतानामणूनां भ्रमसंभवात् ॥
अत एव हि संसारं मन्यते सुखरूपिणम् ॥ ९ ॥
बालाइव करप्राप्तं सर्पमक्रीडनोचितम् ॥
पितेव सहजस्निग्धस्तान्निवर्तयते बलात् ॥ १० ॥
यथा रुदंति ते बाला भ्रांताः संसारिणस्तथा ॥
अतएव हि सर्वज्ञः कृष्णः संसारमोचकः ॥ ११ ॥
इत्येव रूप्यते नाम तथाविधमतः प्रभोः ॥
संसारवैरी धरणीं प्रति शेषो न्यरूपयत् ॥ १२ ॥
मन्यामहे वयं भ्रांताः कृष्णविस्मृतिकारणम् ॥
संसारमुत्तमं कृष्णस्तं कथं स्थापयेद्धरिः ॥ १३ ॥
एवं तदीयैर्मनसि निधेयः स्वप्रभोर्गुणः ॥
स्वस्मिन्नपि विनिश्चेया प्रभोरंगीकृतिर्ध्रुवा ॥ १४ ॥
अतएवास्मदाचार्यैरुक्तं वरणलक्षणम् ॥
लोके स्वास्थ्यं तथा वेदे हरिस्तु न करिष्यति ॥ १५ ॥

इति श्रीहरिरायजीकृतं षष्ठं शिक्षापत्रं समाप्तम् ॥ ६ ॥

## अथ सप्तमं शिक्षापत्रम् ॥ ७ ॥

श्रीकृष्णाय नमः ।

सदा श्रीगोकुलाधीशः स्मर्तव्यः सर्वथा जनैः ॥
: सर्वदोषचिंताविवर्जितैः ॥ १ ॥

न लौकिके मतिः कार्या भगवद्भावबाधिका ॥
लौकिकं वैदिकं चापि स्वयं साधयिता प्रभुः ॥ २ ॥
इदानीमीदृशः कालः प्रतिकूलः समागतः ॥
यथाकथंचित्स्वमनःस्थापनीयं पदाब्जयोः ॥ ३ ॥
सेवायां च मनः स्थाप्यं तत्साधकतयैव हि ॥
गार्हस्थ्यार्थं विवाहेपि प्रयत्नः क्रियतां द्रुतम् ॥ ४ ॥
न भवेत्प्रायशो भोगे तदीयानां कचिन्मनः ॥
तथाऽपि चेद्भवेद्भोगो निवार्यः सर्वथैव हि ॥ ५ ॥
भावोऽत्र साधनं मार्गे प्रमेयं भगवान् हि सः ॥
प्रमाणं कृष्णसेवाऽऽदौ स एव च फलं पुनः ॥ ६ ॥
तस्मात्स एव संरक्ष्यो निधिरूपस्तु सर्वथा ॥
एतद्विरुद्धं तत्सर्वं ज्ञात्वा ज्ञात्वा निवर्तयेत् ॥ ७ ॥

इति श्रीहरिरायजीकृतं सप्तमं शिक्षापत्रं समाप्तम् ॥ ७ ॥

## अथ अष्टमं शिक्षापत्रम् ॥ ८ ॥

श्रीकृष्णाय नमः ।

ऐहिके पारलोके च सर्वसामर्थ्यसंयुतः ॥
स एव गोकुलाधीशश्चिन्तनीयः सदा हृदि ॥ १ ॥
विश्वासस्तत्र कर्तव्यो भद्रमेव विधास्यति ॥
स्वदोषादेव तत्रापि दोषस्फूर्तिर्यतो भवेत् ॥ २ ॥

आर्तिः फलं साधनं च व्रजाधिपतिसंगमे ॥
अतःसदा तदार्त्यैव स्थीयतां तत्कृपायुतैः ॥ ३ ॥
अन्याश्रयो महानेव बाधको भीयतां ततः ॥
तत्क्षणेनैव सच्चेतो विमुखं वै विधास्यति ॥ ४ ॥
तदीयेषु सदा स्थेयं सद्भावेनैव सर्वथा ॥
त एव भक्तिमार्गस्य सहायत्वे निरूपिताः ॥ ५ ॥
अस्माकं तु तदीयानां प्रसंगोऽपि सुदुर्लभः ॥
चेतोऽपि साधनाऽभावाद्विमुखं तिष्ठति स्वतः ॥ ६ ॥
गतो हि भगवद्दासः स्वकार्याय विदेशके ॥
व्रजपालोऽपि चलितस्तेन मे दुःखितं मनः ॥ ७ ॥
मयि यद्यपि नास्त्येव किंचित्तत्कृपया पुनः ॥
यदस्ति तदपि स्वीयं साधनाऽभावतो गतम् ॥ ८ ॥
एतादृशेऽर्थे संप्राप्ते स हरिः शरणं मम ॥
ऐहिके परलोके च नैश्चित्यं तत एव नः ॥ ९ ॥
कदाचिन्मिलनं चेत्स्यात् सद्भाग्येन भवादृशाम् ॥
तदा को वेद चित्तस्य परावृत्तिः पुनर्भवेत् ॥ १० ॥
कियल्लेख्यं महाचिंतासमुद्रो हृदि वर्तते ॥
स्थितेऽपि शिरसि प्राणनाथे चित्तविभेदतः ॥ ११ ॥
इति श्रीहरिरायजीविरचितं अष्टमं शिक्षापत्रं समाप्तम् ॥ ८ ॥

१ त्वत्कृपया.

# अथ नवमं शिक्षापत्रम् ।

श्रीकृष्णाय नमः ।

कदा निजपतिः कृष्णः स्वचित्रं दर्शयिष्यति ॥
बद्धबर्हशिखं नीलकुंतलावरणाननम् ॥ १ ॥
भ्रूधनुःसंधितशरं कस्तूरीचित्रकांकितम् ॥
इंदीवरदलाहैर्स्यविशालनयनद्वयम् ॥ २ ॥
मौक्तिकाभरणालंबि सुनासं सरसाऽधरम् ॥
त्रिरेखकंठविलसत्कंठाभरणभूषितम् ॥ ३ ॥
प्रफुल्लगल्लयुगलं चिबुकाभरणाऽन्वितम् ॥
सुवर्णसूक्ष्ममणियुग्वनमालाविराजितम् ॥ ४ ॥
उरःस्थललसत्स्वच्छवक्षवैयाघ्रबाहुजम् ॥
रत्नव्यवहितस्थूलमुक्तामालांचितोदरम् ॥ ५ ॥
सुवर्णकृत्रिममणिस्थूलमालाऽतिसुंदरम् ॥
गुंजाफलमहन्मालालसदूरुयुगांतरम् ॥ ६ ॥
अनेकरत्नजटितकरकंकणभूषणम् ॥
बाहुमध्यलसत्स्वर्णनिर्मितप्रथितांगदम् ॥ ७ ॥
अनेकपुष्पतुलसीवनमालाऽतिलालितम् ॥
विचित्रवर्णविलसत्कटिवासोविराजितम् ॥ ८ ॥
कटिभावज्ञापिकाऽऽतिकिंकिणीरवशोभितम् ॥

पदद्वयगतस्वर्णमणिनूपुरमंडितम् ॥ ९ ॥
नखचंद्रप्रकाशैकप्रकाशितजगत्त्रयम् ॥
पीतांबरोत्तरीयेणचलदंचलसुंदरम् ॥ १० ॥
प्रदर्शितशिरोभेदं चलन्मकरकुंडलम् ॥
नृत्यंतं नयनानंदं नितांतरतिसंपदम् ॥ ११ ॥
नितंबिनीवृंदवर्तिरसाऽनुभवलोलुपम् ॥
विहारंतं विशेषेण रासलीलापरायणम् ॥ १२ ॥
त्रिभंगललितं वेणुकलितं भुजयोरपि ॥
वृंदावनैकफलितं वलितं स्वजनैः सह ॥ १३ ॥
वादयंतं मुरलिकां मोहयंतं मनः सताम् ॥
जगज्जडं प्रकुर्वंतं रोधयंतं च भक्षणम् ॥ १४ ॥
पशूनां पक्षिणां चैव मौनसंपादकं तदा ॥
तरूणामंतरानंदमधुधारैकवार्षुकम् ॥ १५ ॥
हरंतं व्रजभूतापं पदस्थापनतस्तथा ॥
यमुनातीरमात्रैकजलक्रीडाकृतिप्रियम् ॥ १६ ॥
रसात्मकरसात्मस्वभक्तवृंदसमन्वितम् ॥
निजाऽनुभवसंवेद्यं प्रकटं तं क्षणेक्षणे ॥ १७ ॥

एवं दिदृक्षा सततं स्थापनीया निजे हृदि ॥
सैवाऽस्माकं प्रेमभावोऽन्यरागविनिवर्तकः ॥ १९ ॥
ततः स्यादार्तिरधिका गेहदैहिकबाधिका ॥
आसक्तिः सैव मार्गेऽस्मिन्गृहस्थाऽस्वास्थ्यकारिका ॥
परितापोदयस्तस्मात्सर्वविस्मृतिकारकः ॥
स एव व्यसनं यत्र प्रपंचस्फूर्तिनाशनम् ॥ २१ ॥
एवंविधस्तु त्रिविधो भावो निःसाधनो मतः ॥
अतस्तु दुर्लभा लोके तत्प्राप्तिर्भजतां नृणाम् ॥ २२ ॥
चक्रे करुणया कृष्णो भावात्माऽऽस्यं तथाविधम् ॥
मूर्तिमद्भावसंबंधात्तत्प्राप्तिरिति वेद यः ॥ २३ ॥
प्रमेयबलतो नान्यत्साधनं तत्र भाव्यताम् ॥
अतः सर्वैः प्रकर्तव्यो निजाचार्यपदाश्रयः ॥ २४ ॥
तदभावे न वै भावि फलमेतन्न संशयः ॥
अत एवाऽस्मदीशैस्तु ग्रंथे श्रीवल्लभाऽष्टके ॥ २५ ॥
स्वामिन् श्रीवल्लभेत्येतत्पद्येऽखिलमुदीरितम् ॥
तदाश्रये न वचनैः किं तु तन्मार्गनिष्ठया ॥ २६ ॥
मार्गनिष्ठा न स्वबोधैः किं तु तादृग्गुरूदितैः ॥
गुरूदितानि वाक्यानि न स्वतो ह्यनुवादतः ॥ २७ ॥
अनुवादो न स्वबुद्ध्या किंतु मूलक्रमागतः ॥

अथापि तत्र चापेक्ष्यो दृढः स्वाचार्यसंश्रयः ॥ २८ ॥
एतादृशेन गुरुणाऽवगत्य निखिलं जनः ॥
आश्रित्य च निजाचार्यान् सदानंदं सदा भजेत् ॥ २९ ॥
भजनं भावरूपस्य भावेनैवोपपद्यते ॥
चेतस्तत्प्रवणं सेवा ह्यत एव निरूपिता ॥ ३० ॥
तस्यां तु विस्मृतिर्भाव्या जगतः सर्वथा ध्रुवम् ॥
तदभावे मानसी तु सेवना नैव सिद्ध्यति ॥ ३१ ॥
तद्बाधकानींद्रियाणि विषया लौकिकी मतिः ॥
प्रतिबंधस्तथोद्वेगो भोगोऽप्यत्रैव लौकिकः ॥ ३२ ॥
दुष्टाऽन्नभक्षणं चाऽपि ह्यसमर्पितभक्षणम् ॥
असत्संगः सर्वथा हि भावबाधक इष्यते ॥ ३३ ॥
तस्मात्त्यक्त्वा दुष्टसंगं कृत्वा स्वाचार्यसंश्रयम् ॥
तदीयजनसंसर्गे स्थित्वा मार्गे तथा गुरौ ॥ ३४ ॥
कृत्वा विषयवैराग्यं परितोषं विधाय च ॥
सदानंदं सदानंदं फलप्राप्त्यै सदा भजेत् ॥ ३५ ॥

इति श्रीहरिरायजीकृतं नवमं शिक्षापत्रं समाप्तम् ॥ ९ ॥

---

## अथ दशमं शिक्षापत्रम् ॥ १० ॥

श्रीकृष्णाय नमः ।

को वेद कीदृशः कृष्णाऽभिप्रायः स्वजने मतः ॥
स्वानंदसिद्ध्ये राति निजार्तिं दर्शनादिषु ॥ १ ॥

संसाररागाऽभावाय लौकिकार्तिं तथा पुनः ॥
मदाभावाय च स्वार्तिं शरीरार्तिं प्रयच्छति ॥ २ ॥
संगाऽभावाय बंध्वार्तिं देशार्तिं दैन्यसिद्धये ॥
मोहाऽभावाय भगवान् साधनार्तिं ददाति हि ॥ ३ ॥
प्रारब्धभोजनार्थं वा परीक्षार्थं विलंबनात् ॥
निर्वाहार्थे तथा वेदसाध्यार्थार्तिं प्रयच्छति ॥ ४ ॥
एवमार्तिप्रदानेऽपि परमानंददायिनः ॥
समाश्रयो न मोक्तव्यो दृढः स्वाचार्यसंश्रयैः ॥ ५ ॥
स्वतः कृष्णः सदानंदो निजानंदं प्रदास्यति ॥
तदाशयैव स्थातव्यं सर्वैश्चातकपक्षिवत् ॥ ६ ॥
लौकिकार्तेरगणनं परमानंदचिंतनात् ॥
यथा न गणयेद्रोगी तिक्तभेषजभक्षणम् ॥ ७ ॥
अहितं निजभक्तानां विदधाति हरिर्नहि ॥
समस्तानां सखा स्वीयभक्तानां न कथं भवेत् ॥ ८ ॥

इति श्रीहरिरायजीकृतं दशमं शिक्षापत्रं समाप्तम् ॥ १० ॥

## अथ एकादशं शिक्षापत्रम् ॥११॥

श्रीकृष्णाय नमः ।

सर्वदा सर्वभावैकहेतुभूतेषु सर्वथा ॥
श्रीमदाचार्यपादेषु स्थाप्यतां तन्मयं मनः ॥ १ ॥

तत एव कृतार्थत्वं निश्चयः क्रियतां हृदि ॥
आसुरत्वं विनिश्चेयमन्यत्तत्साम्यवादिषु ॥ २ ॥
श्रीकृष्णः सर्वदा स्मर्यः सर्वलीलासमन्वितः ॥
भक्तैकहृदयस्थायी सकलः पुरुषोत्तमः ॥ ३ ॥
गुणगानं तथा दुःखभावनं दैन्यमेव च ॥
तथा त्यागः सिद्धदशः कृत्यमेतच्चतुष्टयम् ॥ ४ ॥
गुणगानं भागवतात्सेवया दुःखभावनम् ॥
तद्दैन्यभाववद्दैन्यं त्यागो विरहभावतः ॥ ५ ॥
एतच्चतुष्टयं सिद्धं यदि नाऽन्यदपेक्षितम् ॥
सर्वस्य मूलं सत्संगस्तदभावे न सिद्ध्यति ॥ ६ ॥

इति श्रीहरिरायजीकृतं एकादशं शिक्षापत्रं समाप्तम् ॥ ११ ॥

---

## अथ द्वादशं शिक्षापत्रम् ॥ १२ ॥

श्रीकृष्णाय नमः ।

भावनीयं सदा चित्ते स्वामिनीजल्पितं मुहुः ॥
तापक्लेशैरयं मार्गः श्रीमदाचार्यरूपितः ॥ १ ॥
दर्शनं देहि गोपीश गोकुलानंददायक ॥
गोविंद गोपवनिताप्राणाधिप कृपानिधे ॥ २ ॥
गोपाल पालितव्रज निजव्रजसुखांबुधे ॥
परमानंद नंदादिरुचिरोत्संगलालित ॥ ३ ॥

सदानंद निजानंदसमुदायप्रदायक ॥
दामोदर दयार्द्रार्द्र दीनानाथ दयापर ॥ ४ ॥
पुरुषोत्तम सर्वांगरुचिर प्रेमपूरित ॥
अनंगरूपपरम प्रिय गोपवधूपते ॥ ५ ॥
व्रजावलंबसुकटे लंबकेश कलानिधे ॥
विरहार्तिहर स्वीयमनोहरणतत्पर ॥ ६ ॥
मनोविनोदभावाब्धे भावबद्धृदयस्थित ॥
चंचलीकृतचित्तस्वभावांदोलितरूपधृक् ॥ ७ ॥
महासुग्ध सदा दुग्धपानतत्परमानस ॥
नवनीताऽऽलिप्तमुख पयोबिंदुयुताऽधर ॥ ८ ॥
अलकावृतवदन मदनाऽधिकसुंदर ॥
कपोलविलसद्राग कस्तूरीतिलकांचित ॥ ९ ॥
सिंजन्नूपुरशोभाऽढ्य नखभूषणभूषित ॥
सघोषसूक्ष्मसुकटिविलसत्क्षुद्रघंटिक ॥ १० ॥
राजद्धृदय वैयाघ्रनखभूषणभूषित ॥
कंजलोचन लोलाक्ष विशालाक्ष विलक्षण ॥ ११ ॥
दीनैकशरण स्वीयसर्वसामर्थ्यसंयुत ॥
व्रजराजसुत स्वीयजननीकंठभूषण ॥ १२ ॥
हा कृष्ण हा सदानंद हा वृंदावनभूषण ॥

हा नंदराजतनय हा यशोदांकखेलन ॥ १३ ॥
हा गोपिकेश हा नाथ हा गोकुलपुरंदर ॥
हाहा व्रजजनार्तिघ्न हाहा निःसाधनाऽधिप ॥ १४ ॥
हाहा नंदादिसर्वस्व हाहाऽनंगनवांकुर ॥
हा निरालंबनालंब हाहांधलकुटिप्रिय ॥ १५ ॥
एवंविधानि सततं जल्पितानि मुहुर्मुहुः ॥
अवगत्य च भावेन भावनीयान्यहर्निशम् ॥ १६ ॥
इति श्रीहरिरायजीविरचितं द्वादशं शिक्षापत्रं समाप्तम् ॥ १२ ॥

## अथ त्रयोदशं शिक्षापत्रम् ॥१३॥

श्रीकृष्णाय नमः ।

कालः करालः समुपागतोऽयं मतिं सतां द्रागहरत्सम-स्ताम्॥श्रीवल्लभाचार्यसमाश्रितानां यः कालकालःश-रणं स एव १ न सेवा न कथा नैव भावनं नापि संश्रयः
नित्यमुद्विग्नमनसा कथं कालः प्रयास्यति ॥ २ ॥
सत्संगो दुर्लभो दुष्टसंगः संचिंतनादृते ॥
अनायासेन संसिद्धः का गतिर्मे भविष्यति ॥ ३ ॥
संग्राहयितुमखिलं तैः क्रीडयितुमेव च ॥
शकलीकर्तुमधुना प्रभोर्बालचिकीर्षितम् ॥ ४ ॥
हा नाथ हा कृपानाथ गोपीनाथ दयानिधे ॥

व्रजनाथ रमानाथ निजनाथ जगत्पते ॥ ५ ॥
गोकुलाधीश गोपीश व्रजाधीश व्रजप्रिय ॥
व्रजानंद निजानंद गोकुलानंद गोप्रिय ॥ ६ ॥
हा कृष्ण हा दयासिंधो हा राधावर सुंदर ॥
दीनेषु सततश्रीमन्निजाचार्याऽऽश्रितेषु च ॥ ७ ॥
दुष्टेषु दोषापुष्टेषु भाग्यमुष्टेषु मत्प्रभो ॥
निःसाधनेपून्मतिषु दयां कुरु दयां कुरु ॥ ८ ॥
निवर्त्य सर्वतश्चेतो निरुद्धय चरिते हरेः ॥
हृदिकृत्य कृपावश्यं स्थीयतां सज्जनैः सह ॥ ९ ॥
अदृष्टदुःखितसुखोऽननुभूतसुखेतरः ॥
स्वदुःखिताऽतिकरुणः स कृष्णः शरणं मम ॥ १० ॥
अमंदपरमानंदो निजानंदाश्रयस्थितः ॥
स्वरूपानंददाता च स कृष्णः शरणं मम ॥ ११ ॥

इति श्रीहरिरायजीविरचितं त्रयोदशं शिक्षापत्रं समाप्तम् ॥ १३ ॥

## अथ चतुर्दशं शिक्षापत्रम् ॥१४॥

श्रीकृष्णाय नमः ।

श्रीमत्प्रभुपदयुगले स्थाप्यं चेतश्चमत्कारि ॥
तदनुग्रहणादेव हि भवति तदीयस्य सर्वत सकलम् १

अन्याश्रयस्तदीयैकपदाश्रयविरोधकृत् ॥
प्रभोरुदासीनतायाः कारणं त्यज्यतां द्रुतम् ॥ २ ॥
असत्संगस्य च त्यागो भावबाधकता यतः ॥
यथा व्याघ्रोबाधकः स्याच्छरीरादेः शरीरिणः ॥ ३ ॥
असत्संगस्तथा प्रोक्तः श्रीमदाचार्यपंडितैः ॥
अध्यासःस्वशरीरादौ तदीयत्वप्रकारतः ॥ ४ ॥
विधाय सर्वथा भीतिं विधेयेतरयोगतः ॥
सत्संगेन स्वमार्गैकनिष्ठत्वेन च सर्वथा ॥ ५ ॥
समर्पणाऽनुसंधानं विधेयं मिलितैः सदा ॥
इदमेवाऽस्मदाचार्यमार्गे साधनमुत्तमम् ॥ ६ ॥
स्वाचार्यचरणद्वंद्वदृढाश्रयणमादृतैः ॥
विधेयं तेन सकलमस्मिन्मार्गे भविष्यति ॥ ७ ॥

इति श्रीहरिरायजीविरचितं चतुर्दशं शिक्षापत्रं समाप्तम् ॥ १४ ॥

## अथ पंचदशं शिक्षापत्रम् ॥ १५ ॥

श्रीकृष्णाय नमः ।

यदंगीकृतजीवानां न दुःखं लेशतोऽपि हि ॥
सदानंदः सदानंदात्तत्स्मृतिः क्रियतां सदा ॥ १ ॥
यो निजानतिसंतप्तान्स्त्रकृते वीक्ष्य विस्मितः ॥

प्रादुर्भवत्यचिरतस्तत्स्मृतिः क्रियतां सदा ॥ २ ॥
यः स्वतः सेवकानां हि पराश्रयनिवारकः ॥
कृपासरित्पतिः कृष्णस्तत्स्मृतिः क्रियतां सदा ॥ ३ ॥
हृदयस्थः समस्तानां धुनोति विषयादरम् ॥
दयादामोदरः श्रीमांस्तत्स्मृतिः क्रियतां सदा ॥ ४ ॥
यः प्राणप्रेष्ठगोपीनां संगं गोपयति स्वतः ॥
निलायनादिलीलाभिस्तत्स्मृतिः क्रियतां सदा ॥ ५ ॥
य उद्धवेन भक्तेन स्वस्वरूपमबोधयत् ॥
गोपिकानां हृदंतःस्थस्तत्स्मृतिः क्रियतां सदा ॥ ६ ॥
यः स्वमाहात्म्यबोधाय प्रादुर्भावितवान्स्वयम् ॥
प्रभुः श्रीवल्लभाचार्यस्तत्स्मृतिः क्रियतां सदा ॥ ७ ॥
यस्य स्मरणमात्रेण सकलर्तिविनाशनम् ॥
तत्क्षणादेव भवति तत्स्मृतिः क्रियतां सदा ॥ ८ ॥

इति श्रीहरिरायजीविरचितं पंचदशं शिक्षापत्रं समाप्तम् ॥ १५ ॥

## अथ षोडशं शिक्षापत्रम् ॥ १६ ॥

श्रीकृष्णाय नमः ।

सदा स्वभक्तहृदयावासः स्वाचार्यभावितः ॥
यशोदाऽतिप्रियः श्रीमान् नंदसूनुर्व्रजेश्वरः ॥ १ ॥

स्मरणीयो यथाशक्ति सेवनीयस्तथा पुनः ॥
तादृशैः सह संगेन कथनीयश्च सर्वथा ॥ २ ॥
अहर्निशं व्रजाधीशः प्रपंचाऽस्मृतिसाधकः ॥
स्वकीयपक्षपाती च निजासक्त्या निरोधकृत् ॥ ३ ॥
स्मरणीयः कृपापारावारो विदितरूपवान् ॥
स एवाऽस्मत्सर्वकर्ता चिंताऽणुरपि नो हृदि ॥ ४ ॥
सतामप्यसता वाऽपि स्वकीयानां कृपानिधिः ॥
करिष्यति स्वतः सर्वमतश्चिंता न काऽपि हि ॥ ५ ॥
सत्संगाऽभावतो नित्यमसत्संगस्वभावतः ॥
वर्तते विषयाऽऽवेशैश्चक्राऽऽरूढेव मन्मतिः ॥ ६ ॥
नैतस्मिन्समये कोऽपि सहायो मम वर्तते ॥
विना श्रीवल्लभाचार्यचरणांबुरुहाश्रयात् ॥ ७ ॥
ततश्च्युता मतिः कालबलात्केवललौकिके ॥
नित्यं स्थिता ततो भीतिर्भूयसी जायते हृदि ॥८॥
किंवा को वेद भगवान् करुणात्मा चिकीर्षति ॥
न जाने तेन मे चेतः खिन्नं भवति सर्वथा ॥ ९ ॥
विशेषः प्रेमजित्पत्राद्बोद्धव्यः सकलोऽपि हि ॥
अनेनैव वयं किंचित्स्वास्थ्यं मन्यामहे हृदः ॥१०॥

इति श्रीहरिरायजीकृतं षोडशं शिक्षापत्रं समाप्तम् ।

# अथ सप्तदशं शिक्षापत्रम्॥ १७ ॥

श्रीकृष्णाय नमः ।

यदुक्तमस्मदाचार्यैर्गौणमुख्यविभेदतः ॥
त्यागो गृहधनादीनामथवा कृष्णयोजनम् ॥ १ ॥
वैराग्यपरितोषादेस्त्यागोऽपि निरूपितः ॥
तथा विषयभोगस्य त्यागोऽपि विनिबोधितः ॥ २ ॥
तथा सत्संगमाऽत्यागः सर्वत्रैव विशेषतः ॥
अन्याश्रयपरित्याग उक्तो बाधकरूपतः ॥ ३ ॥
एवं निरूपितौ त्यागाऽत्यागौ सर्वत्र सर्वशः ॥
न जीवाः स्वबलात्किंचित्कर्तुं शक्नुवते स्वतः ॥ ४ ॥
अतः कथं भवेन्मार्गस्थितिर्जीवेषु सर्वथा ॥
फलाशाऽपि कथं कार्या जनैस्तत्राऽस्थितौ पुनः॥५॥
तथाऽपि श्रीमदाचार्यचरणाश्रयणादपि ॥
अशक्यमपि यच्छक्यं तद्भवेत्सर्वथैव हि ॥ ६ ॥
यदि दुःसंगदोषेण न भवेच्छिथिलं मनः ॥
यदि वा कालदोषेणाऽविश्वासोऽपि भवेन्न हि ॥७॥
अविश्वासो न कर्तव्य इत्युक्तेः स तु साधकः ॥
अयमेवाऽस्य मार्गस्य मूलमाश्रयसाधकः ॥ ८ ॥
आश्रयेणैव सकलं सिद्धिमेति न संशयः ॥

पृथक्शरणमार्गोक्तिरतएव प्रभोरपि ॥ ९ ॥
शरणस्थसमुद्धारकृतिविज्ञापनादपि ॥
विवेकधैर्यभक्त्यादिसाधनाऽभाववादतः ॥ १० ॥
सन्मार्गविद्भिः सततं कृतप्रभुपदाश्रयैः ॥
तदुक्तवाक्यभावार्थविभावनपरायणैः ॥ ११ ॥
यथाशक्तिस्वमार्गीयप्रभुसेवापरैरपि ॥
विरुद्धकृतिसंदेहदाहनोद्योगतत्परैः ॥ १२ ॥
निरंतरं स्वमार्गीयसतां संगसमन्वितैः ॥
स्थेयं संसारविमुखैः स्वगुरुं प्रणतैरपि ॥ १३ ॥

इति श्रीहरिराजीविरचितं सप्तदशं शिक्षापत्रं समाप्तम् ॥१७॥

## अथ अष्टादशं शिक्षापत्रम् ॥१८॥

श्रीकृष्णाय नमः ।

कालः स्वकार्यं कुरुते न जानाति जनो यतः ॥
प्रमाद्यति हरेः कार्ये स्वात्मकार्येऽतिविह्वलः ॥ १ ॥
केवलौदरिकत्वं तु तदीयानां न चोचितम् ॥
न पूरयेत् किमुदरं सेवकानां कृपानिधिः ॥ २ ॥
चिंता काऽपि न कार्येति प्रभुवाक्यं विचिंत्यताम् ॥
अज्ञानिनो ज्ञानिनश्च यदि स्यात्समता कुतो ॥ ३ ॥
तदा तु साधनाऽभावात् किं वृत्तं ज्ञानतः फलम् ॥
[illegible] सर्वत्र क्लेशभावनात् ॥ ४ ॥

लीलाऽतिरिक्तसृष्टौ हि निरानंदत्वनिश्चयात् ॥
यथा कथंचिद्विस्मृत्य प्रपंचं हृदये न्यसेत् ॥ ५ ॥
कृष्णं गूढं सदाऽऽनंदं तथा लीलायुतं सदा ॥
रसं स्वसमनामानं भक्तभावाऽऽत्मकं पुनः ॥ ६ ॥
यशोदोत्संगललितं मुग्धभावसमावृतम् ॥
प्रपंचवैरिणं बाधहेतुलौकिकनाशनम् ॥ ७ ॥
स्वप्रवेशाय कामादिसर्वदोषनिवारकम् ॥
स्वार्थत्यक्त्वा ( स्वार्थं त्यक्त्वा ) खिलस्वीयपरमाऽऽर्ति-
महोत्सवम् ॥८॥ श्रीमदाचार्यहृदयशेषपर्यंकशायिनम्
अनंतभावरूपात्मगोपीरमणतत्परम् ॥ ९ ॥
मधुपाऽऽलिजवोद्युक्तरोमाऽऽलिसुविराजितम् ॥
प्रसन्नवदनांभोजं करुणारसवद्दृशम् ॥ १० ॥
बर्हिपिच्छशिरोभूषं शृंगाररसरूपिणम् ॥
एवंविधाऽनंतगुणं विधाय हृदये सदा ॥ ११ ॥
तस्य सेवां प्रकुर्वीत यावज्जीवं स्वधर्मतः ॥
न फलार्थं न भोगार्थं न प्रतिष्ठाप्रसिद्धये ॥ १२ ॥
श्रीमदाचार्यमार्गेण नाऽन्येनापि कदाचन ॥
न कल्पितप्रकारेण न दुर्भावसमन्वयात् ॥ १३ ॥
तत्त्वं विदित्वा परमं यशोदोत्संगलालितम् ॥

श्रीमदाचार्यतत्पुत्रान् हित्वाऽस्मत्स्वामिनीरपि ॥१४॥
तत्तुल्यबुद्ध्या नाशः स्यात्सर्वथेति विनिश्चयः ॥
एतावती सती शिक्षा संक्षिप्ता ध्रियतां हृदि ॥ १५ ॥
अन्येऽपि चोपदेष्टव्या यदि स्युरधिकारिणः ॥
मिलंति स्वेच्छया श्रद्धायुताः पृच्छंति चेत्तदा ॥१६॥
जीवतत्परतासिद्धौ कृपालुस्तेषु तुष्यति ॥
यथा विषयिणां तोषो दूतिकासु तथा हरेः ॥ १७ ॥
इति श्रीहरिरायजीविरचितमष्टादशं शिक्षापत्रं स० ॥१८॥

# अथ एकोनविंशं शिक्षापत्रम् ॥ १९ ॥

श्रीकृष्णाय नमः ।

इदानीं वर्तते कालः करालः कलिरीदृशः ॥
यस्मिन्विनश्यति मतिः सतामपि कुसंगतः ॥ १ ॥
सत्संगो दुर्लभो यत्र सततं सत्प्रसंगतः ॥
कथाः कृष्णचरित्रैकयुता नित्यं भवंति हि ॥ २ ॥
निजाचार्यपदांभोजसेविनस्तु सुदुर्लभाः ॥
अदंभिनः कृष्णसेवाकथाचिंतनतत्पराः ॥ ३ ॥
अहं तु सर्वथा नित्यं तथा सत्संगवर्जितः ॥
क्लिश्यामि मनसा नूनं निरानंदेन नित्यशः ॥ ४ ॥
बाष्पनिःसरणोपायं न पश्यामि महीतले ॥

को वा मदीयहृदयदुःखं दूरीकरिष्यति ॥ ५ ॥
व्रजवासस्तथा श्रीमद्यमुनादर्शनं गतम् ॥
दूरे गोवर्धनदृशिर्दूरे तन्नाथदर्शनम् ॥ ६ ॥
विषयाऽऽक्रांतितो दूरे भगवद्भावसंततिः ॥
देशांतरस्थितस्याद्य दूरे संगः सतामपि ॥ ७ ॥
तदभावात्कथा दूरे ततो विमुखता हृदः ॥
एवंविधस्य सततं श्रीकृष्णः शरणं मम ॥ ८ ॥
को वेद कृष्णः किं कर्ता न जानेऽहं कृपानिधिः ॥
तथाऽपि श्रीमदाचार्यशरणं करवै मनः ॥ ९ ॥
विशेषः प्रेमजित्पत्राद्बोद्धव्यः सर्ववृत्तयुक् ॥
अनेन केवलेनैव किंचित्स्वस्थं मनो मम ॥ १० ॥
इति श्रीहरिरायजीविरचितमेकोनविंशशिक्षापत्रंसमाप्तं ॥१९॥

## अथ विंशतितमं शिक्षापत्रम् ॥ २० ॥

श्रीकृष्णाय नमः ।

समाचाराऽवगत्यैव संतोषो जनितो महान् ॥
सदोषेऽपि हरिर्जीवेऽनुग्रहं कुरुते स्वतः ॥ १ ॥
प्रमेयबलमासाद्य किमसाध्यं तदा भवेत् ॥
अतः प्रथमदोषाणां चिंता नैव विधीयताम् ॥ २ ॥
संजातभगवद्भावमपथ्यमिव सद्गुणम् ॥

लोकनिंदाभवं दुःखं न धर्तव्यं हि मानसे ॥ ३ ॥
अग्रे तु सावधानत्वं विधेयं सर्वथा पुनः ॥
दुःसंगादिमहादोषा नाशयंत्येव तत्क्षणात् ॥ ४ ॥
असज्जनकृता निंदा तुष्ट्यै स त्वविनिश्चयात् ॥
यतस्तेषां न रोचंते संत एव हि सर्वथा ॥ ५ ॥
मार्गविश्वासरहिताः पूर्वदोषैकदृष्टयः ॥
यतो नामैव हि हरेः सर्वदोषनिवर्तकम् ॥ ६ ॥
तदपि श्रीमदाचार्यवदनांबुजनिःसृतम् ॥
तत्प्रकाशितमार्गस्य सर्वसंपादनक्षमम् ॥ ७ ॥
ततोऽपि ब्रह्मसंबंधः सर्वदोषनिवर्तकः ॥
निर्दोषाऽऽनंदसेवाऽपि दोषाऽभावप्रसाधिका ॥ ८ ॥
गुणगानं तु सर्वेषां दोषाणां विनिवारकम् ॥
गुणगाने ज्ञानमार्गादुत्कर्षः प्रभुणोदितः ॥ ९ ॥
ज्ञानं सकलदोषाणां दाहकं परिकीर्तितम् ॥
तथाऽपि न प्रभोः प्रादुर्भावे यत्प्रतिबंधकम् ॥ १० ॥
तन्निवर्तयितुं शक्तमतो न्यूनं निरूपितम् ॥
ततः स्वाचार्यसांनिध्यं क्षणाद्भावप्रदायकम् ॥ ११ ॥
तद्दिदृक्षाऽऽर्तितापानां क्रमादेवेह संभवात् ॥
तत उत्तरभावस्य भावनं वह्निरूपतः ॥ १२ ॥

क्षणेन दोषसंघस्य नाशकं सर्वथा मतम् ॥
एवंभूते स्थिते मार्गे नूनं येषामभाग्यतः ॥ १३ ॥
अविश्वासस्ततस्तेषां न गतिः काऽपि विद्यते ॥
अतः स्वयं श्रुतं यद्वा भाग्याद्धृदि समागतम् ॥ १४ ॥
तदेव हि दृढं स्थाप्यं सर्वथा जीवनाऽवधि ॥
नाऽल्पज्ञवचनाद्वाल्याबुद्धिरापातसुंदरात् ॥ १५ ॥
सत्त्वनिश्चयतः संगः साधको नहि संशयात् ॥
यत्र वै विपरीतैव कृतिस्तत्र भ्रमः कथम् ॥ १६ ॥
तत्र भ्रांताः परं मूढास्तत्संगः खलु बाधकः ॥
अतः सत्संगसहितस्तिष्ठेत्सर्वत्र सर्वदा ॥ १७ ॥
सेवा कुर्वन्सदाचारो धर्ममार्गस्थितोऽपि च ॥
अविरुद्धवचो वक्ता ह्यविरुद्धकृतिप्रियः ॥ १८ ॥
स्वाचार्यमात्रवाक्यैकनिष्ठः सततभावुकः ॥
तदीयजनसंसृष्टः सर्वसंगविवर्जितः ॥ १९ ॥
इति श्रीहरिरायजीविरचितं विंशतितमं शिक्षापत्रं समाप्तम्॥२०॥

## अथ एकविंशतितमं शिक्षापत्रम् ॥२१॥

श्रीकृष्णाय नमः ।

भक्तिमार्गस्तिरोभूतस्तथा संगः सतामपि ॥
ततो भावस्य शैथिल्यं तदभावेऽखिलं वृथा ॥ १ ॥

भक्तिमार्गीयताऽभावे क्रियामात्रं हि कर्मवत् ॥
तत्राऽपि न मनःस्थैर्यं विक्षेपाद्व्यवहारतः ॥ २ ॥
व्यवहारोऽप्यसिद्धश्चेद्विशेषः क्षोभको मतः ॥
तदभावे तु गार्हस्थ्यप्रकारैः सेवनं कुतः ॥ ३ ॥
व्यावृत्यभावपक्षस्तु बुद्ध्यदार्ढ्यात्सुदुर्लभः ॥
बुद्धिदार्ढ्यं तु सततं निवेदनविचिंतनैः ॥ ४ ॥
तत्राऽपि सहभावस्तु सतामेव निरूपितः ॥
ते दुर्लभा दूरगाश्च ततो बुद्धिर्न तादृशी ॥ ५ ॥
स्थिताऽपि शीर्यते नित्यं पोषकाऽभावतो मम ॥
खिन्नं च जायते चित्तं वार्ताश्रवणतोऽन्यथा ॥ ६ ॥
श्रुतोत्तमप्रकाराश्च भगवन्मानसा अपि ॥
अस्मदीया लौकिकेषु प्रतिष्ठामात्रसाधकाः ॥ ७ ॥
चित्तव्ययं प्रकुर्वति वृथा देहं च तद्गतम् ॥
भगवन्मार्गनिष्ठा तु लोकनिष्ठाविरोधिनी ॥ ८ ॥
संसारवैरी कृष्णोऽपि मूढानेतानुपेक्षते ॥
कालः सतामपि हरत्यसौ संप्रति तन्मतिम् ॥ ९ ॥
कालदोषनिराकर्ता न संगोऽस्ति सतामपि ॥
अतः स्थेयं सावधानैः समस्तैर्मार्गवर्तिभिः ॥ १० ॥

इति श्रीहरिरायजीविरचितमेकविंशतितमं
शिक्षापत्रं समाप्तम् ॥ २१ ॥

# अथ द्वाविंशतितमं शिक्षापत्रम् ॥ २२॥

श्रीकृष्णाय नमः ।

भावोऽत्र साधनं मार्गे प्रमेयं भगवान् हि सः ॥
प्रमाणं कृष्णसेवाऽऽदौ (सेवादिः)स एव च फलं पुनः१
तस्मात्स एव संरक्ष्यो निधिरूपस्तु सर्वथा ॥
यत्तद्विरुद्धं तत्सर्वं ज्ञात्वा ज्ञात्वा निवर्तयेत् ॥ २ ॥
हरिकृष्णे यथापूर्वं स्नेहः स्थाप्यो विशेषतः ॥
गोष्ठी च तादृशैः(तादृशी) कार्या ध्रुवमस्मत्प्रयत्नतः ३
एतस्यांतःस्थितिः प्रायः समीचीनाऽवलोक्यते ॥
नाऽन्यच्च लौकिकं चित्ते विचार्यमिह सर्वथा ॥ ४ ॥
विशेषस्तु समग्रोऽपि भांडागारिकपत्रतः ॥
विज्ञेयः सर्वथा शीघ्रं लिख्यतां च तदुत्तरम् ॥ ५ ॥

इति श्रीहरिरायजीविरचितं द्वाविंशतितमं
शिक्षापत्रं समाप्तम् ॥ २२ ॥

---

# अथ त्रयोविंशतितमं शिक्षापत्रम् ॥२३॥

श्रीकृष्णाय नमः ।

भवंतः श्रुतसिद्धांताः कथं मुह्यंति लौकिके ॥
अलौकिके तु चिंता या विषयाऽभावतो न सा ॥१॥
यतः सर्वसमर्थोऽस्मत्प्रभुः सर्वं करोति हि ॥ पितेव

(पतिवत्) निजदासानामैहिकं पारलौकिकम् ॥ २ ॥ अत एवाऽस्मदाचार्यवचनं वै विराजते ॥ "भगवानपि पुष्टिस्थो न करिष्यति लौकिकीं च गतिम्" ॥ ३ ॥ मर्यादामार्गवैराग्याद्यभावेऽपि गतिः सताम् ॥ चिंतासंतानहंतारोऽऽप्याचार्यपदरेणवः ॥ ४ ॥ अतस्तदीयाः किं भ्रातश्चिंतां विदधते जनाः ॥ ज्ञानिनोऽपि न वै दुःखं चित्ते दधति लौकिकम् ॥ ५ ॥ सेवारसादिरहिताश्चित्रं भक्ताः कथं तथा ॥ यैः स्वरूपस्य सेवायां दर्शनस्पर्शनादिकम् ॥ ६ ॥ अनुभूतं सदा तेषां चित्तं दुःखयुतं कथम् ॥ परमानंदसंबंधे दुःखं तिष्ठति नैव हि ॥ ७ ॥ पित्रादयस्तु सर्वेऽपि संबंधाद्दुःखहेतवः ॥ (संबंधाय स्वहेतवः) ॥ बहिर्मुखजनस्यैव बाहिर्मुख्यं ततस्त्यजेत् ॥ ८ ॥
बहिर्मुखस्य बाधंते दोषा दैहिकमानसाः ॥
क्षीणधातोरिवार्तस्य रोगा वातिकपैत्तिकाः ॥ ९ ॥
तन्निवृत्तिस्तु संपाद्या सतां संगेन सेवया ॥
श्रीभागवतपाठेन तदर्थश्रवणादपि ॥ १० ॥
निवेदनस्मरणतः सद्भिः सह कथादिभिः ॥
सदा नामग्रहणतः सदा शरणभावनात् ॥ ११ ॥

अष्टाऽक्षरमहामंत्रकीर्तनेन विशेषतः ॥
पंचाक्षरेण मंत्रेण तदीयत्वविभावनात् ॥ १२ ॥
वैराग्यपरितोषाभ्यां कृष्णसन्निहितस्थितेः ॥
लौकिकक्लेशजौदास्यात् पुत्राद्यननुरागतः ॥ १३ ॥
गृहवित्ताद्यनासक्त्या तदीयेष्वतिरागतः ॥
नवरत्नस्य पाठेन सर्वचिंता निवर्तते ॥ १४ ॥
एवं निवृत्तवैमुख्यं जनं दुःखं न बाधते ॥
अतस्तन्मात्रयत्नैस्तु भवितव्यं भवादृशैः ॥ १५ ॥
दुःखेन न वृथा नेयः कालः परमदुर्लभः ॥
कृष्णसेवानुकूलस्तु निजाऽऽचार्याऽऽश्रयाऽऽश्रितैः १६
द्रुतं हेया वृथा चिंता प्राप्ताऽपि निजदोषतः ॥
चित्तोद्वेगं विधायापीत्येतद्वचनचिंतनात् ॥ १७ ॥

इति श्रीहरिरायजीविरचितं त्रयोविंशतितमं शिक्षापत्रं समाप्तम् ॥ २३ ॥

## अथ चतुर्विंशतितमं शिक्षापत्रम् ॥२४॥

श्रीकृष्णाय नमः ।

भक्तिमार्गे कृपापात्रं कारणं परमुच्यते ॥
तेनैव मार्गे सकलं सिद्धिमेति न संशयः ॥ १ ॥
सा तु स्वाचार्यशरणगतौ तैर्ज्ञापितः प्रभुः ॥

यदैव कुरुते कृष्णस्तदा भवति सर्वथा ॥ २ ॥
अतस्तदाश्रयो जीवैर्दृढ एव विधीयताम् ॥
यथाऽवतारलीलायां तासां श्रीयमुना मता ॥ ३ ॥
यथा वा हरिदासो हि पुलिंदीनां गिरिर्मतः ॥
यथा वाऽग्निकुमाराणां व्रते कात्यायनी मता ॥ ४ ॥
प्रादुर्भूतः स्वयं कृष्णो यथा स्वप्रापणे मतः ॥
यथा वा दैन्यभावाऽऽत्मा प्रादुर्भावे स्वयं मतः ॥ ५ ॥
तथा परोक्षे जीवानां पुष्टिसंबंधसिद्धये ॥
श्रीमदाचार्यसंबंधो नाऽन्यदस्ति हि साधने ॥ ६ ॥
अत एवोक्तमाचार्यैः स्तोत्रे कृष्णाश्रयाभिधे ॥
शरणस्थसमुद्धारे कृष्णं विज्ञापयाम्यहम् ॥ ७ ॥
विश्वासार्थं वरमदादिति श्रीवल्लभोऽब्रवीत् ॥
अतो नाऽन्यप्रकारेण फलं स्वहृदि चिंत्यताम् ॥ ८ ॥
विश्वासेन यथाऽऽप्नोति चातकः स्वातिजं जलम् ॥
तथा चेत्कृष्णजलदः स्वानंदं वर्षयिष्यति ॥ ९ ॥
एवं विश्वाससद्भावे सर्वमेव भविष्यति ॥
यतः परिवृढोऽस्माकं सर्वं कर्तुं क्षमो मतः ॥ १० ॥
स हि स्वतः समर्थत्वान्न साधनमपेक्षते ॥
कालकार्यं विलोक्याऽत्र तदीयानां विशेषतः ॥ ११ ॥

निःसाधनत्वसंस्फूर्त्या दृढः स्यात्तत्पदाश्रयः ॥
अनुगानामविश्वासस्तथा तत्संगिनामपि ॥ १२ ॥
मतिमोहो महादोषनिधानं संभविष्यति ॥
यथा पूर्वकथां श्रुत्वा भगवत्पादसेविनाम् ॥ १३ ॥
स्वस्मिन्दैन्यसमुत्पत्तिस्तथा साधननाशनम् ॥
तदीयानां सर्वमस्ति सदा तद्भावभाविनाम् ॥ १४ ॥
इतरेषां कालिकानां कालेन निखिलं गतम् ॥
यतः कालस्तद्विभूतिः कालः कलयतामहम् ॥ १५ ॥
मुख्याऽधिकार्यपि हरेरिच्छाशक्तिस्वरूपवान् ॥
तदंतरंगदासेषु न तत्सामर्थ्यमिष्यते ॥ १६ ॥
स हि सर्पो यथाऽन्येषां मारकोऽपि न हि क्षमः ॥
पीताऽमृतं जनं जातु स्प्रष्टुमाघ्रातुमेव च ॥ १७ ॥
तथा कालोऽपि मनुजं महापुरुषसंस्थितम् ॥
भक्तिपीयूषपातारं न किंचित्कर्तुमीश्वरः ॥ १८ ॥
तदीयैः सर्वकार्येषु न कालश्चिंत्यता हृदि ॥
तथैव तस्य लीलेति वचनात्सैव चिंत्यताम् ॥ १९ ॥
सर्गादिलीलाकर्तृत्वात्किं चित्रं तादृशि प्रभौ ॥
विवेकोऽप्ययमेवाऽत्र स हितं वै विधास्यति ॥ २० ॥
स्वकीयानां निजेच्छातस्तत्तश्चिंताऽत्र का भवेत् ॥

भवंतः श्रुतसद्वार्ताः सत्संगकृतयोऽपि हि ॥ २१ ॥
प्रभुपादैकगतयस्तेषां का परिदेवना ॥
धर्मसंस्थापनाऽर्थाय यस्य प्राकट्यमुच्यते ॥ २२ ॥
स हि धर्मव्यतिकरं स्वकृतं सहते कथम् ॥
ब्रह्मण्यो धेनुविप्रेशो वेदधर्मैकपालकः ॥ २३ ॥
स कथं सहते कृष्णस्तद्विरोधं जनैः कृतम् ॥
परमानंदसंदोहो दयालुः सुतरामपि ॥ २४ ॥
स कथं सहते कृष्णो दयाऽभावं जनेष्वपि ॥
अतोऽत्र यदिदं जातं तत्स्वदोषेण सर्वथा ॥ २५ ॥
निर्दोषपूर्णगुणता हरौ नित्यं विराजते ॥
कदाचित् स्वप्रभोर्दोषो नाऽऽनेयः सर्वथा हृदि॥२६॥
के वा वयं वराकाये ह्युद्धवाद्या अपि प्रभोः ॥
श्रुतवंतो त्रिसदृशीं लीलां पश्चात्स्थिता अपि ॥ २७ ॥
कुंतीवदीदृशं भाग्यं कस्य भाग्यवतो भवेत् ॥
सद्यः प्राणविमोकोऽत्र श्रीकृष्णविरहेण हि ॥ २८ ॥
अस्माकं तु प्रभुर्नित्यमक्षताऽव्याहतोऽधुना ॥
विराजते ततो दुःखं न विधेयं मनस्यपि ॥ २९ ॥
भवद्भिर्मिलितैः सर्वैरियं शिक्षा विचार्यताम् ॥
ततः संदेहजातं यद्बुद्धिस्थं तद्व्यपोह्यताम् ॥ ३० ॥

अस्माकं साधनं साध्यं श्रीकृष्णः शरणं मम ॥
संपत्स्वापत्स्वपि सदा स्वाचार्यचरणोदितम् ॥ ३१ ॥

इति श्रीहरिरायजीविरचितं चतुर्विंशतितमं शिक्षापत्रं समाप्तम् ॥ २४ ॥

# अथ पंचविंशतितमं शिक्षापत्रम् ॥२५॥

श्रीकृष्णाय नमः ।

श्रीवल्लभपदांभोजभजनाऽऽदरणादपि ॥
दयापरः कदाचित्तं न जहाति जनं हरिः ॥ १ ॥
कृपाकटाक्षसंपातपक्षपातपरो हरिः ॥
क्षमते तत्कृतं दोषलक्षमप्यक्षमं स्वतः ॥ २ ॥
यदीयहृदये श्रीमदाचार्यचरणद्वयम् ॥
त एव शरणं दोषशताऽऽवृत्तिमतो मम ॥ ३ ॥
यदंगुलिनखाऽऽनंदचंद्रशैत्यं सदा हृदि ॥
तापं हरति भक्तानां तदानंदपदांबुजम् ॥ ४ ॥
अस्तु वस्तुशतं लोके वेदे च परिकीर्तितम् ॥
फलत्वेन निजाचार्यचरणाऽब्जद्वयं मम ॥ ५ ॥
न कर्म वेदविहितं फलं जनयति ध्रुवम् ॥
यतो बहिर्मुखं चित्तं जायतेऽन्यश्रुतेर्हरेः ॥ ६ ॥
ज्ञानं तु मुक्तिहेतुत्वात्सा नैव फलरूपिणी ॥
यतो जीवस्य दासत्वहेतुभेदनिवर्तिका ॥ ७ ॥

मर्यादा भक्तिरप्येषा तावदेव फलाऽऽत्मिका ॥
यावन्न जायते (ज्ञायये) पुष्टिभक्तिः सकलमूर्धगा ८
पुष्टिभक्तिर्हरेरास्यं तत्त्वसमत्प्रभवः स्वयम् ॥
त एव संश्रिताः संतः फलरूपाभवंति हि ॥ ९ ॥
तदुत्तरं न कर्तव्यमनुभूतेः परं किमु ॥
यथा लोके फले प्राप्ते न भोगादधिका कृतिः ॥१०॥
तस्मात्फलं निजाऽऽचार्यपदांभोजद्वयं सदा ॥
हृदि धार्यं नैव कार्यं संशयायितमानसम् ॥ ११ ॥
अत्र संशयमापन्नाः सर्वथा ह्यासुरा मताः ॥
देवा अपि पुरा तेऽपि हरिणा पातिताः करात् ॥१२॥
अहो महच्चित्रमिदमवतीर्णे हरौ भुवि ॥
विद्यमाने भागवते विवृतावपि सर्वथा ॥ १३ ॥
सत्यां भुवि सुबोधिन्यां सत्सु सत्सु क्वचित्क्वचित् ॥
ग्रंथेषु विद्यमानेषु सर्वाऽर्थज्ञापकेष्वपि ॥ १४ ॥
तथाऽपि न प्रवर्तंते जना भक्तिपथे पुनः ॥
प्रायः कृपैव हरिणा कारणत्वेन रक्षिता ॥ १५ ॥
मूर्छितेंद्रियवृत्तीनामुद्भवो नासुमंतरा ॥
तथा कृपांविना सर्वसाधनानां न चोद्भवः ॥ १६ ॥
इति श्रीहरिरायजीविरचितं पंचविंशतितमं शिक्षापत्रं समाप्तम् २५

# अथ षट्त्रिंशतितमं शिक्षापत्रम् ॥ ३६ ॥

श्रीकृष्णाय नमः ।

स्वकीयानामैहिकं यदथवा पारलौकिकम् ॥
अकरोत्कुरुते कर्ता प्रभुरेव न संशयः ॥ १ ॥
तथापि कुरुते जीवः प्रयत्नं निजदोषतः ॥
अज्ञानात्करुणावार्धिः क्षमते तादृशं स्वतः ॥ २ ॥
अविरुद्धं प्रकुरुते विरुद्धं वारयत्यपि ॥
दासेषु कृष्णो बालेषु पितेव कुरुते हितम् ॥ ३ ॥
न जानाति निजाज्ञानाचत्कृतिं स कृतघ्नतः ॥
कदोषराशिर्जीवोऽयं क हरिर्गुणवारिधिः ॥ ४ ॥
कथमन्योऽन्यसंबंधः स्यात्तमस्तेजसोरिव ॥
तथापि दोषराशीनां दाहनेन निवेदनात् ॥ ५ ॥
स्वाचार्यद्वारका तु स्याद्योग्यता हरियोजने ॥
अतः स्वाचार्यचरणौ स्थाप्यौ हृदि निरंतरम् ॥ ६ ॥
यथा बालकरक्षार्थे डाकिनीतो बिभेति हि ॥
माता तथैव भेतव्यं दुःसंगाद्भावरक्षकैः ॥ ७ ॥
समस्तेभ्यो निजस्नेहं गोपायति यथा सती ॥
तथैव भगवद्भावगोपनं क्रियतां जनैः ॥ ८ ॥
दूतिकालापसंसर्गे यथा वर्धयते रतिम् ॥

स्वैरिणीभक्तसंसर्गे भाववृद्धिं तथा नयेत् ॥ ९ ॥
असत्या सर्वदा चित्तं गृहउच्चाटितं यथा ॥
तथैव भवनादौ तु चेतः स्थाप्यं तदाश्रितैः ॥ १० ॥
इति श्रीहरिरायजीविरचितं षड्विंशतितमं शिक्षापत्रं समाप्तम् ॥ २६ ॥

## अथ सप्तविंशतितमं शिक्षापत्रम् ॥२७॥

श्रीकृष्णाय नमः ।

निजाऽऽचार्यपदांभोजयुगलाश्रयणं सदा ॥
विधेयं तेन निखिलं फलं भावि विना श्रमम् ॥ १ ॥
धनं गृहं गृहाऽऽसक्तिः प्रतिष्ठा लोकवेदयोः ॥
कर्मादिनिष्ठा मनसः स्वर्गादिफलकांक्षणम् ॥ २ ॥
लौकिके परमा प्रीतिर्विरुद्धविषयेषणा ॥
अविरुद्धे तथाऽऽसक्तिर्विषयैर्भोगभोजनम् ॥ ३ ॥
देहाऽभिमानः कुलजो विद्यादिविहितोऽपि च ॥
भगवत्सेवनाऽभावसहितं देहपोषणम् ॥ ४ ॥
असत्संगैः सदा दुष्टः कृष्णाऽनुच्छिष्टभक्षणम् ॥
निवेदनाऽनुसंधानत्यागः शरणविस्मृतिः ॥ ५ ॥
देवांतराश्रयस्तेभ्यः प्रार्थनाऽपि फलार्थितः ॥
भगवच्चित्तरहिता व्यावृत्तिरपि लौकिकी ॥ ६ ॥

गुरुद्रोहस्तदीयेभ्यः स्वस्याऽऽधिक्यविभावनम् ॥
अत्यंतदेहसामर्थ्यमिंद्रियाणां च पोषणम् ॥ ७ ॥
गृहेष्वभिरतिर्भार्यापुत्रादिषु मनोगतिः ॥
कृष्णाऽनुभावरहितदेशे सततसंस्थितिः ॥ ८ ॥
हर्षशोकौ लोकलाभतदभावकृतौ तथा ॥
स्वातंत्र्यभावनं स्वस्य जीवस्वाभाविको हठः ॥ ९ ॥
अधिकारः पापरतिः पक्षपातो दुरात्मनाम् ॥
हृदयक्रूरता दीनजनोपेक्षाऽक्षमा पुनः ॥ १० ॥
एते चाऽन्ये च बोद्धव्या दोषा विस्मारका हरेः ॥
सावधानीभूय दासैः कृष्णस्य स्थेयमादरात् ॥ ११ ॥
भगवन्मार्गमात्रस्थैस्तन्मार्गफलकांक्षिभिः ॥
विरक्तैरन्यतः कृष्णगुणसक्तांतरात्मभिः ॥ १२ ॥
स्वाचार्यशरणं यातैस्तद्विश्वाससमन्वितैः ॥
परित्यक्ताऽखिलैः स्थेयं सदा तद्दर्शनोत्सुकैः ॥ १३ ॥
इदानीमागतः कालः सर्वबुद्धिविनाशकः ॥
करे पतति दुःसंगो मीलिताक्षस्य चापि हि ॥ १४ ॥
किं कार्यं किमकार्यं वा यतः स्फुरति नैव हि ॥
प्रभुणा स्वबलं तावदुपसंहृतमेव हि ॥ १५ ॥
साधनानि न सिध्यंति कालदोषाद्दुरात्मनः ॥

प्रतिबंधश्च कालादिकृतः प्रत्यहमेधते ॥ १६ ॥
उद्वेगः प्रतिबंधो वा भोगश्चाऽपि प्रजायते ॥
प्रतिबंधसेवनं तैः प्रत्याशा का फलस्य हि ॥१७॥
तथाऽपि श्रीमदाचार्यचरणाऽऽश्रयणान्मम ॥
निवर्तते निराशं सन्न मनः फललब्धितः ॥ १८ ॥

इति श्रीहरिरायजीविरचितं सप्तविंशतितमं शिक्षापत्रं समाप्तम् ॥ २७ ॥

## अथाष्टाविंशतितमं शिक्षापत्रम् ॥ २८॥

श्रीकृष्णाय नमः ।

कदा नंदात्मजः स्वेषु कृपादृष्टिं करिष्यति ॥
प्रतीक्षयैवाऽस्मदादिमनः श्रांतं सहेंद्रियैः ॥ १ ॥
करुणावारिधिः स्वीयनिधिः सर्वाधिकः प्रभुः ॥
उपेक्षते कुतः स्वीयानिति चिंतातुरं मनः ॥ २ ॥
निजाऽऽनंदनिमग्नस्य भवेद्यद्यपि विस्मृतिः ॥
भक्तार्थमवतीर्णस्य कृपालोरुचिता न सा ॥ ३ ॥
कं प्रार्थयेयुस्ते दीना विहाय निजनायकम् ॥
तदेकशरणा नित्यं विमुक्ताः सर्वसाधनैः ॥ ४ ॥
मन्नाथ नाथ ये नूनं भवामि विरहाऽऽकुलः ॥
दर्शनं स्पर्शनं वाऽपि देहि वेणुस्वरश्रुतिम् ॥ ५ ॥

निजाऽऽचार्याश्रितानस्मान्यदि कृष्ण प्रहास्यसि ॥
गमिष्यति हरे नाथ प्रतिज्ञैव तदा तव ॥ ६ ॥
वयं तु सर्वथा दुष्टाः स्वधर्मविमुखा अपि ॥
त्वमस्मदीयान्मा धर्मान्गृहाण गुणपूरितः ॥ ७ ॥
कृपालो पालनीयानां गुणदोषविचारणा ॥
न कार्या स्वीयशरणविहितं वरणं यदि ॥ ८ ॥
अश्रांतोऽपि हरे दोषगणनायां मम प्रभो ॥
श्रममेष्यसि गोपीश ततो विस्मर सर्वथा ॥ ९ ॥
दीनेषु गुणलीनेषु (हीनेषु) तावकीनेषु मत्प्रभो ॥
पराधीनेषु करुणा करणीयैव सर्वथा ॥ १० ॥
निःसाधना गतधना मनोदीनाः सुदुःखिताः ॥
निजाऽऽचार्याऽऽश्रिता शोकलोभमोहभयाकुलाः ११
भवंति ते कृपापात्रं महोदार दयानिधे ॥
प्रयच्छ करुणां तेभ्यो दत्तं पात्रेऽक्षयं भवेत् ॥ १२॥
संसारदावदग्धानां जीमूतजलकांक्षिणाम् ॥
न नीलजलदाऽनंतजलदानं विना सुखम् ॥ १३ ॥
ये मयांगीकृताः सर्वे त्वत्सेवायै गृहस्थिताः ॥
त एव भावनाशाय भवंति कस्मै किमु ॥ १४ ॥

बहिर्मुखाः प्रकुर्वंति स्वसंबंध(धं)बहिर्मुखम् ॥
सहायता भ्रमादेव न हातुमहमुत्सहे ॥ १५ ॥
सहायभ्रममुत्पाद्य वंचयंति यथा जनम् ॥
मार्गस्थितं तथा नाथ वंचितोऽहं गृहस्थितैः ॥ १६ ॥
यथांधकूपपतितं मंडूका दुःस्वैर्जनम् ॥
व्यथयंति तथा मह्यं दुर्वचोभिर्गृहस्थिताः ॥ १७ ॥
कियत्पर्यंतमेवं हि मदुपेक्षां करिष्यसि ॥
त्यक्तो वा दोषसाहित्याद्विमुखोऽहं दयालुना ॥ १८ ॥
त्यक्तः कुत्र गमिष्यामि न मेऽस्ति शरणं क्वचित् ॥
नावमारोप्य दीनं स्वं मध्येधारं न मज्जय ॥ १९ ॥
निजाचार्यकुले जन्म किमर्थं विहितं मम ॥
विहितं चेन्मयि सदा दोषपीने कृपां कुरु ॥ २० ॥
असंगः सर्वथा दूयेऽसत्संगसहितोऽप्यहम् ॥
यथाऽरण्ये परित्यक्तः कांदिशीको मृगादनैः ॥ २१ ॥
जातपक्षाः खगाः स्वीयजननीं च त्यजंति हि ॥
यथा तथा करालेऽस्मिन्कालेऽहं भगवज्जनैः ॥ २२ ॥
चिंतापारावारे पतितस्याऽत्रैव मग्नस्य ॥
एतज्जलवडवाऽग्निः शरणं श्रीवल्लभाचार्याः ॥ २३ ॥

१ जातपक्षान् खगान्स्वीयजननी त्यजति ध्रुवम्.

हा कृष्ण हा नंदसूनो हा यशोदाप्रियाऽर्भक ॥
हा गोपिकाहृदाधार धारयस्व करेण माम् ॥ २४ ॥

इति श्रीहरिरायजीविरचितमष्टाविंशतितमं शिक्षापत्रं समाप्तम् २८

## अथ अथैकोनत्रिंशत्तमं शिक्षा-पत्रम् ॥२९॥

श्रीकृष्णाय नमः ।

बुद्धिनाशककालोऽयं सर्वेषां समुपागतः ॥
अतो हि सर्वथा गोप्यं बुद्धिरत्नं सुबुद्धिभिः ॥ १ ॥
सत्संगकृष्णस्मरणशरणागतिसाधनैः ॥
तदभावे कृतिः सर्वा यतो वैयर्थ्यमेति हि ॥ २ ॥
अतएवोक्तमाचार्यैः स्वकीयकरुणाऽऽत्मभिः ॥
बुद्धिप्रेरककृष्णस्य पादपद्मं प्रसीदतु ॥ ३ ॥
उपकारोऽपि गायत्र्या ध्यानहेतुरयं मतः ॥
गीतायां हरिणाऽप्युक्तमर्जुनं प्रति मोदतः ॥ ४ ॥
ददामि बुद्धियोगं तं येन मामुपयांति ते ॥
बुद्धिस्थैर्ये हृदि स्थैर्यं हरेरिति न संशयः ॥ ५ ॥
तन्नाश एव गीतायां सर्वनाशो निरूपितः ॥
अतो बुद्धिः सुसंरक्ष्या भावभावनकारणम् ॥ ६ ॥

१ उपक्रमोऽपि गायत्र्या.

प्रसादभक्षणैर्नित्यं सेवनाकरणैरपि ॥
सत्संगेन सदा कृष्णकथाश्रवणकीर्तनैः ॥ ७ ॥
इति श्रीहरिरायजीविरचितमेकोनत्रिंशत्तमं शिक्षापत्रं समाप्तम् २९

## अथ त्रिंशत्तमं शिक्षापत्रम् ॥ ३० ॥

श्रीकृष्णाय नमः

स्मर्तव्यः सर्वदा कृष्णो विस्मर्तव्यं जगत् पुनः ॥
प्रपंचस्मरणे कृष्णस्मृतिर्नैव भवेदिति ॥ १ ॥
प्रयतेत ततो जीवस्तदभावाय सर्वथा ॥
कृष्णाऽर्थताभावनेन गृहादेर्विस्मृतिर्भवेत् ॥ २ ॥
अथवा बाधकत्वेन त्यागभावनया पुनः ॥
अखंडाऽद्वैतभावेन कामाद्यावेशतो हरौ ॥ ३ ॥
प्रापंचिकपदार्थेषु लीलासृष्टित्वभावनात् ॥
कृष्णसन्निहितो देशः कालः सत्संगहेतुकः ॥ ४ ॥
द्रव्यं सर्वस्वमेवाऽत्र कर्ताऽभिमतिवर्जितः ॥
मंत्राः श्रीकृष्णनामानि गुणलीलासमन्विताः ॥ ५ ॥
कर्माणि कृष्णसेवैव सर्वसाधनसंग्रहः ॥
एतत्षट्कस्य भक्तौ हि सत्संगः साधनं मतम् ॥ ६ ॥
कृष्णसान्निध्यदेशे तु यतस्तिष्ठंति साधवः ॥
कालःप्रसंगहेतुस्तु मिलितैस्तैरुदेति हि ॥ ७ ॥

सर्वस्वस्योपयोगोऽपि सिध्येत्सद्बुद्धिदातृभिः ॥
अभिमाननिवृत्तिस्तु तदाश्रयवतामिह ॥ ८ ॥
कृष्णनामस्वरूपादिज्ञानं तु तत एव हि ॥
भगवत्सेवनं वाऽपि पुरुषार्थस्तदैव हि ॥ ९ ॥
यदा तथाविधाः संतो दृश्यंते सेवनोन्नताः ॥
अतः सत्संग एवाऽस्मिन्मार्गे सर्वस्य साधनम्॥१०॥
तदभावे सर्वथैव न किंचिदिह सिद्ध्यति ॥
तस्मात्प्रयत्नः कर्तव्यः सत्संगाय सुबुद्धिभिः ॥ ११ ॥
अत एवोक्तमाचार्यैर्हरिस्थाने तदीयकैः ॥
अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ १२ ॥
चित्तदोषे कथं सेवा चेतस्तत्प्रवणं भवेत् ॥
अतो विचारः कर्तव्यः सर्वथैकत्र वासकृत् ॥ १३ ॥
बुद्ध्या विचार्य मत्प्रोक्तं निधाय हृदि सर्वथा ॥
स्वार्थसंपत्तये कार्यो वास एकत्र तत्परैः ॥ १४ ॥
इति श्रीहरिरायजीविरचितं त्रिंशत्तमं शिक्षापत्रं समाप्तम् ॥ ३० ॥

## अथैकत्रिंशत्तमं शिक्षापत्रम् ॥ ३१ ॥

श्रीकृष्णाय नमः ।

निःसाधनफले मार्गे बलं नैवोपयुज्यते ॥
साधनानामतो नायमात्मेत्येषोदिता श्रुतिः ॥ १ ॥

किंतु सर्वस्य मूलं हि हरेर्वरणमुच्यते ॥
यथैव वृणुते कृष्णस्तथा तिष्ठति वै जनः ॥ २ ॥
वरणं तु द्विधा साक्षात्पारंपर्यविभेदतः ॥
लीलास्थितेषु वै साक्षादन्येष्वस्ति परंपरा ॥ ३ ॥
आचार्यद्वारकं तत्र वरणं न हरेः स्वतः ॥
लीलास्थेष्वपि भक्तेषु वृतेर्द्वैविध्यमीक्ष्यते ॥ ४ ॥
साक्षाच्छ्रुतिषु हरिणा वरणं वह्निसूनुषु ॥
परंपराप्रकारेण मर्यादापुरुषोत्तमात् ॥ ५ ॥
अन्यथाऽप्यत्र भेदोऽस्ति दासतात्मीयतादिभिः ॥
आत्मीयत्वेनाऽवतारे दासत्वेनाऽन्यदा वृतिः ॥ ६ ॥
दासत्वेऽप्यस्ति भेदो हि मर्यादापुष्टिभेदतः ॥
अतो न जीवस्वातंत्र्यं दासत्वाद्धि निसर्गतः ॥ ७ ॥
यथा कृतिस्तथा सर्वं कृष्णस्तस्य करोति हि ॥
मर्यादायां वृतो तस्य भवेत् साधननिष्ठता ॥ ८ ॥
पुष्टावनुग्रहे दृष्टिस्तथैव सकलं पुनः ॥
वयं त्वनुग्रहाचार्यैः पुष्टौ मर्यादया सह ॥ ९ ॥
अंगीकृतिसमर्यादैः सर्वेऽप्यंगीकृताः स्वतः ॥
अतस्तदुक्तमर्यादास्थितिर्हि हितकारिणी ॥ १० ॥
पुष्टिमत्त्वादस्माकं लौकिकी पारलौकिकी ॥

सर्वा चिंता हरेरेव निश्चितत्वं विभाव्यताम् ॥ ११ ॥
अत एवोक्तमाचार्यैर्निजेच्छातः करिष्यति ॥
नोपेक्षते निजानार्तबंधुः श्रीगोकुलेश्वरः ॥ १२ ॥
हरीच्छा विपरीताऽपि दासदुःखाऽवलोकनात् ॥
अनुकंपानिधानत्वाद्धरेर्विपरिवर्तते ॥ १३ ॥
आर्तिमात्रमतः स्थाप्यं प्रार्थना न विधीयताम् ॥
कृपालुरेव भविता निजार्तजनशर्मदः ॥ १४ ॥
आर्त्यैव क्रियते यत्तु सेवागुणकथादिकम् ॥
तदेवाऽस्मत्प्रभूक्तेऽस्मिन्मार्गे प्रविशति ध्रुवम्॥१५॥
अन्यथा क्रियमाणं तु कृष्णसायुज्यसाधकम् ॥
न मुख्यफलसंबंधस्ततो भवति निश्चितम् ॥ १६ ॥
तदार्तिप्राप्तिरेतेषां तद्रूपाचार्यसेवनात् ॥
तत्कृपातस्तदुदितवचोवृंदविचारणात् ॥ १७ ॥
निवेदनाऽनुसंधानात्सदा सत्संगसंभवात् ॥
अन्यथा न भवेदेव स्वकृताऽनंतसाधनैः ॥ १८ ॥
ये भावं वर्धयंत्येव दृढं वचनवर्षणैः ॥
संगोऽपि तेषां कर्तव्यो नाऽन्येषामिति निश्चयः॥१९॥
तद्दुर्लभत्वे बाधिर्यं मूकत्वं वा वरं मतम् ॥
वाचः प्रभूणां वदने दुर्जनानां भवंति न ॥ २० ॥

म्लेच्छानामिव गायत्री ततः श्रवणतः किमु ॥
तत्सधर्मास्त्वत्र वर्णा अनुभावतिरोहिताः ॥ २१ ॥
अतः फलं न श्रवणाद्दोषः प्रत्युत जायते ॥
सावधानतमैः स्थेयमीदृक्श्रवणकीर्तनात् ॥ २२ ॥
निरपेक्षाः कृष्णजना निजाचार्यमदाश्रिताः ॥
श्रीभागवततत्त्वज्ञा दुर्लभा एव भूतले ॥ २३ ॥
अतः शरणमात्रं हि कर्तव्यमखिलं ततः ॥
यदुक्तं तातचरणैरिति वाक्याद्भविष्यति ॥ २४ ॥
तथा विधेयं कृपया यथा गोवर्धनेश्वरः ॥
दर्शयत्यचिरादेव निजं रूपं तदाश्रितैः ॥ २५ ॥
इति श्रीहरिरायजीविरचितमेकत्रिंशत्तमं शिक्षापत्रं समाप्तम् ३१

## अथ द्वात्रिंशत्तमं शिक्षापत्रम् ॥ ३२ ॥

श्रीकृष्णाय नमः ।

कामाऽऽविष्टे क्रोधयुते संसाराऽऽसक्तिसंयुते ॥
लोभाऽभिभूते सततं धनाऽर्जनपरायणे ॥ १ ॥
दयाविरहिते रूक्षे नित्यं संतोषवर्जिते ॥
शोकाऽऽकुले भयाऽऽक्रांते विषयध्यानतत्परे ॥ २ ॥
अहंकारयुते क्रूरे दुष्टपक्षैकपोषके ॥
ज्ञानमार्गस्थिते सर्वसामर्थ्यचिंतनभाविते ॥ ३ ॥

लौकिके सन्मुखे कृष्णजनवैमुख्यसंयुते ॥
कृष्णलीलादोषदृष्टौ तथा कर्मजडेऽपि च ॥ ४ ॥
आचार्यविमुखे नित्यमसद्वादविभूषिते ॥
एतादृशे तु हृदये हरिर्नाऽऽविशते क्वचित् ॥ ५ ॥
दीने शुद्धे निःप्रपंचे लीलाचिंतनतत्परे ॥
स्वाचार्यशरणे नित्यं सर्वकामविवर्जिते ॥ ६ ॥
व्रजस्त्रीचरणांभोजरेणुप्राप्त्यभिलाषुके ॥
गुणगानपरे कृष्णनामाऽर्थपरिभावुके ॥ ७ ॥
अनन्येऽनन्यसेवैकनिष्ठातत्परतां गते ॥
भगवद्धर्मनिरते विरक्ते गुणसंगिनि ॥ ८ ॥
कृष्णाऽतिभावसंयुक्ते सरसेऽन्यरसाऽतिगे ॥
अचंचले कृष्णलीलाचंचले दर्शनाऽऽकुले ॥ ९ ॥
मनोरथशताऽऽक्रांते सर्वोदासीन्यसंयुते ॥
एतादृशे तु हृदये हरिराविशते क्षणात् ॥ १० ॥
इति श्रीहरिरायजीविरचितं द्वात्रिंशत्तमं शिक्षापत्रं समाप्तम् ॥३२॥

## अथ त्रयस्त्रिंशत्तमं शिक्षापत्रम् ॥ ३३ ॥

श्रीकृष्णाय नमः ।

अस्मिन्मार्गे प्रभोरिच्छामात्रं सर्वत्र कारणम् ॥
सैव चावरणं यावत् प्रतिकूला फले निजे ॥ १ ॥

तदावरणनाशस्तु दैन्यादेव हरौ कृतात् ॥
सदीनेषु निजामिच्छामनुकूलां करोति हि ॥ २ ॥
तदानुकूल्ये दासानां किं फलं दुर्लभं मतम् ॥
कृपा च जायते दीने लोकसिद्धनिदर्शनात् ॥ ३ ॥
अतो दैन्यं हि मार्गेऽस्मिन्परमं साधनं मतम् ॥
अभिमानो मदश्चाऽपि सततं तद्विरोधिनौ ॥ ४ ॥
तौ विज्ञाय प्रयत्नेन परित्याज्यौ फलाऽर्थिभिः ॥
दौष्टयं समस्तेंद्रियाणां साधनैरेव नाशयेत् ॥ ५ ॥
अथवाऽऽश्रयमात्रेण नाशयिष्यति मत्प्रभुः ॥
निजाचार्याश्रितानां तु दोषा वह्निस्वरूपतः ॥ ६ ॥
संबंधमात्रतो भस्मीभवंति क्षणमात्रतः ॥
अतः स्वाचार्यमात्रैकशरणैस्तत्पराश्रितैः ॥ ७ ॥
तद्ग्रंथाऽर्थावबाधाऽर्थविहिताऽतिप्रयत्नकैः ॥
दुःसंगवर्जितैः संगसंप्राप्त्याशायुतैरपि ॥ ८ ॥
स्थैर्यं सेवापरैरन्याश्रयत्यागविचक्षणैः ॥
कामलोभादिदोषैकपरित्यागेच्छुभिः सदा ॥ ९ ॥

इति श्रीहरिरायजीविरचितं त्रयस्त्रिंशत्तमं शिक्षापत्रं समाप्तम् ॥ ३३ ॥

# अथ चतुस्त्रिंशत्तमं शिक्षापत्रम् ॥३४॥

श्रीकृष्णाय नमः ।

श्रीकृष्णः सर्वदा सेव्यः फलं प्राप्यं स्वतस्तु सः ॥
मुखारविंदभक्त्यैव साक्षात्सेवैकरूपया ॥ १ ॥
चरणाऽऽत्मकभक्त्या तु धर्मसेवात्मरूपया ॥
धर्मद्वारा तद्विशिष्टः प्रभुः प्राप्यो न संशयः ॥ २ ॥
तत्र सायुज्यसंबंधो न लोमाऽमृतसेवनम् ॥
मुखारविंदभक्तौ तु साक्षात् तत्सेवनं मतम् ॥ ३ ॥
एतादृक्फलिका भक्तिर्भवेत्केवलपुष्टितः ॥
तत्राऽपि मुखरूपाऽस्मदाचार्याऽनुग्रहात् पुनः ॥४॥
अत एतद्भक्तिमद्भिः श्रीमदाचार्यसंश्रयः ॥
प्रथमं सर्वथा कार्यस्तत एवाऽखिलं भवेत् ॥ ५ ॥
अतःपरं तु तद्भक्तेरवस्थासाधनादिकम् ॥
निरूप्यते स्वतोपाय तत्कृपातो हृदि स्थितम् ॥ ६ ॥
यथा मर्यादया भक्तौ ब्रह्मभावस्तु साधनम् ॥
तथा सर्वाऽऽत्मभावोऽत्र साधनत्वेन बुद्ध्यताम् ॥७॥
वस्तुतस्तु फलं चैव फलं स्यात्तत्प्रवेशतः ॥
तत्स्वरूपं तु सर्वेषां देहांतःकरणात्मनाम् ॥ ८ ॥
येन भावेन भगवत्यात्मभावो हि जायते ॥

यस्माद्भावात्स्वदेहादि सकलं स्यात्तदर्थकम् ॥९॥
न देहाद्यर्थसिद्ध्यर्थं भगवानप्यपेक्षते ॥
यतो देहादिरक्षाऽपि प्रभुलीलोपयोगतः ॥ १० ॥
न स्वार्थबुद्ध्या स्वार्थोऽपि भगवानेव यत्र हि ॥
येन भावेनाऽनिमित्ता प्रीतिर्भवति वै हरौ ॥ ११ ॥
न फलाकांक्षणं यत्र लौकिकानां यथा धने ॥
तदभावे यथा लोका दुःखेनाऽसूंस्त्यजंति हि ॥ १२ ॥
सर्वत्यागस्तु सहजो यत्रलौकिकवेदयोः ॥
नैरपेक्ष्यं स भावस्तु सर्वभावो निगद्यते ॥ १३ ॥
तथाऽत्र दैन्यमेवैकं मार्गे न श्रवणादिकम् ॥
दैन्येनैव च संतुष्टः प्रादुर्भूतः फलं ददौ ॥ १४ ॥
तदेवाऽत्र हि संसेव्यं येन दैन्यं प्रसिद्ध्यति ॥
यद्दैन्यनाशकं तद्धि विरोधि सकलं मतम् ॥ १५ ॥
एतन्मार्गांगीकृतो हि हरिर्दैन्यं विवर्धयेत् ॥
मदादिजनकं दुष्टं नाशयत्यपि
( नाशयित्वापि ) लौकिकम् ॥ १६ ॥
स्वांगीकृतेर्हि निर्वाहः प्रभुणैव विधीयते ॥
जीवाः स्वभावदुष्टा हि प्रचलेयुः कथं तथा ॥ १७ ॥
अतो दंडप्रदानेन पितेवाऽऽचरति प्रभुः ॥

दंडोऽप्यनुग्रहत्वेन मंतव्यस्तु तदाश्रितैः ॥ १८ ॥
दंडदानं स्वकीयेषु परकीये ह्युपेक्षणम् ॥
आर्तिरेवाऽत्र सततं भाव्या कृष्णपरोक्षतः ॥ १९ ॥
अत्र भक्तार्तिहष्टैवस्मुदितो हि हरिर्भवेत् ॥
संगो भाववतामेव भाववृद्धिर्यतो भवेत् ॥ २० ॥
व्याघ्रस्याग्रे यथा देही तथा दुःसंगतो बिभेत् ॥
दुःसंग एव भावस्य नाशकः सर्वथा मतः ॥ २१ ॥
दुःसंगतश्च्युताः सर्वे श्रुता हि भरतादयः ॥
दुःसंगाऽन्नजदोषाभ्यामभूद्भीष्मो बहिर्मुखः ॥ २२ ॥
लौकिकाऽभिनिवेशात्तु मनोनिष्कासनं सदा ॥
अलौकिकस्तु तद्भावस्तेनाऽपि च विनश्यति ॥ २३ ॥
वैराग्यपरितोषौ च हृदि भाव्यौ निरंतरम् ॥
तदभ्यासात्तु मनसः कदाचिन्निर्गतिस्ततः ॥ २४ ॥
कामाऽभावाय वैराग्यं चिंत्यं चेतसि सर्वथा ॥
परितोषस्त्वलोभाय भक्तौ तावेव बाधकौ ॥ २५ ॥
कामेनेंद्रियवैमुख्यं लोभे पाखंडसंभवः ॥
क्रोधस्तु मध्यपातित्वान्महाबाधक इष्यते ॥ २६ ॥
यतो मार्गीयसर्वस्वदैन्यभावविनाशकः ॥
दैन्यं सर्वेषु कार्येषु कृष्णसेवाकथादिषु ॥ २७ ॥

वीजं यथा मंत्रशास्त्रे तद्युक्तमखिलं भवेत् ॥
तदभावे न सेवादि सकलं पुष्टिसाधकम् ॥ २८ ॥
तस्माद्रक्षेत्प्रयत्नेन दैन्यं भक्तियुतो नरः ॥
दैन्येन गोपिकाः सिद्धाः कौंडिन्योऽपि परोक्षतः २९
फलमत्र हरेर्भावो विरहात्मा सदा मतः ॥
रसात्मकत्वात्तद्रूपे सर्वलीलासमन्वितः ॥ ३० ॥
स्वरूपे तस्य सततं साक्षात्कारो विशेषतः ॥
युगपत् सर्वलीलानामनुभूतिः प्रजायते ॥ ३१ ॥
एवं विज्ञाय मनसा पुष्टिमार्गं विभावयेत् ॥
प्राप्तिः श्रीवल्लभाचार्यचरणाब्जप्रसादतः ॥ ३२ ॥
अतः स एव सततं सर्वभावेन सर्वथा ॥
सुधीभिः कृष्णरसिकैः शरणीक्रिगतां सदा ॥ ३३ ॥
इति श्रीहरिरायजीविरचितं चतुस्त्रिंशत्तमं शिक्षापत्रं समाप्तम् ॥ ३४ ॥

## अथ पंचत्रिंशत्तमं शिक्षापत्रम् ॥ ३५ ॥

श्रीकृष्णाय नमः ।

तदीयानां महःदुःखं विजातीयेन संगमः ॥
संभाषणं सजातीयैरसंगो भाषणं च न ॥ १ ॥
तदेतदुभयं जातं ममेवाऽद्य स्वभाग्यतः ॥
दुःखांतरं तु ज्ञानेन भक्त्या वाऽपि निवर्तते ॥ २ ॥

लौकिकं विषयप्राप्त्या न हि दुःसंगजं क्वचित् ॥
दुष्टानां दुर्वचोबाणैर्भिन्नं मर्मणि मद्वपुः ॥ ३ ॥
न क्वाऽपि लभते स्वास्थ्यं समाहितमपि स्वतः ॥
इदानीं तु जनाः प्रायो दुःसंगपदवीं गताः ॥ ४ ॥
शुद्धं मनः कलुषितुं क्षणेनाऽतिविचक्षणाः ॥
गृहस्थितस्य व्यावृत्तियुतस्य न हि तादृशाम् ॥ ५ ॥
संगो वारयितुं शक्यो व्यावृत्तेर्विनिरोधतः ॥
अव्यावृत्तौ न विश्वासदार्ढ्यं येन तथा कृतिः ॥ ६ ॥
भगवद्द्वेषितां यातः स तु तक्षक एव हि ॥
यथा विप्राऽर्भकवचःप्रेरितः क्रोधमूर्छितः ॥ ७ ॥
अदशत्स समागत्य महाभक्तं परीक्षितम् ॥
तथा दुर्जनवाक्यैकप्रेरितो ह्यतितामसः ॥ ८ ॥
अवज्ञया दुर्वचनैरधिक्षेपेण मामयम् ॥
दुष्कर्मा भौतिको दुष्टः स साध्यः सत्क्रियोक्तिभिः॥९॥
आध्यात्मिको ज्ञानशून्यो ह्यन्यथा ज्ञानवानपि ॥
कष्टसाध्यः कदाचित्स सत्त्वबोधेन शुद्ध्यति ॥१०॥
प्रीतिशून्यो महादुष्टः स न साध्यः कथंचन ॥
यथा नपुंसको नैव ह्यौषधैः पुरुषो भवेत् ॥ ११ ॥
यथा त्रिदोषग्रस्तो न कथंचिदपि जीवति ॥

प्रीतिशून्यो नीरसश्च न तथा श्रवणादिभिः ॥१२॥
प्रायः स आसुरो जीवो यस्मिन्प्रीतेरसंभवः ॥
तादृशैर्नित्यसंगेन भवेदासुरभाववान् ॥ १३ ॥
दुष्कर्मा कर्मदुष्टः स्यात् ज्ञानदुष्टोऽन्यथादृशिः ॥
प्रीतिशून्यो भक्तिदुष्टस्तत्तन्मार्गगतस्त्यजेत् ॥१४॥
इति श्रीहरिरायजीविरचितं पंचत्रिंशत्तमं शिक्षापत्रं समाप्तम् ३५

## अथ षट्त्रिंशत्तमं शिक्षापत्रम् ॥३६॥

श्रीकृष्णाय नमः ।

नैव चिंता प्रकर्तव्या लौकिकी भक्तिमार्गगैः ॥
चित्ते चिंतातुरे कृष्णः कथमाविशते गुणैः ॥ १ ॥
यथा गृहे गृहपतिः शुद्धे संमार्जनादिभिः ॥
स्वस्थस्तिष्ठत्यन्यथा तु परावर्तेत सर्वथा ॥ २ ॥
उक्तं च प्रभुभिस्तस्मान्नवरत्ने कृपालुभिः ॥
अतोऽन्यविनियोगेऽपि चिंता का स्वस्य सोऽपि चेत् ३
धर्ममार्गविचारेऽपि कलौ कर्तैव लिप्यते ॥
न संसर्गकृतो दोषस्तथा कलियुगे भवेत् ॥ ४ ॥
युगांतरे तथैवाऽयं पंचमत्वेन गण्यते ॥
यद्यप्युक्तं निजाऽऽचार्यैः स्थेयं नाऽवैष्णवैः सह ॥५॥
तथाऽपि लोकसंकोचः कर्तव्यस्त्वग्रदर्शनैः ॥

मनः स्थाप्यं तन्निवृत्तौ समये तन्निवर्तनम् ॥ ६ ॥
तत्कालं तत्प्रयत्ने तु रोगस्येवोद्भवो भवेत् ॥
अतः कार्यं शनैरेव प्रतिबंधनिवर्तनम् ॥ ७ ॥
वृथा चिंता न कर्तव्या स्वमनो मोहकारणम् ॥
यथा सच्छिद्रकलशाज्जलं स्रवति सर्वशः ॥ ८ ॥
तथाऽऽयुः सततं याति ज्ञायते न गृहस्थितैः ॥
एवं हि गच्छत्यायुष्ये क्षणं नैव विलंबयेत् ॥ ९ ॥
भगवच्चरणे चेतः स्थापनेऽतिविचक्षणः ॥
शरीरं प्राकृतं तद्धि ह्यनित्यं सर्वथा मतम् ॥ १० ॥
तत्संबंधोऽप्यविद्यातस्ततोऽहंममताऽऽत्मकः ॥
संसारस्तत्कृतः सर्वसंबंधोऽपि मृषा मतः ॥ ११ ॥
तत्संबंधकृतं दुःखं न हि मंतव्यमुत्तमैः ॥
प्रतिबंधनिवृत्त्यर्थं हरिं शरणमाव्रजेत् ॥ १२ ॥
भक्तदुःखाऽसहिष्णुस्तं तदैव हि निवर्तयेत् ॥
अशक्ये हरिरेवास्तीत्येवमेव प्रभोर्वचः ॥ १३ ॥
यावच्छक्ति प्रकर्तव्यो ह्युपायस्तन्निवर्तने ॥
प्रतिकूले च तत्यागपर्यंतं विहितं पुनः ॥ १४ ॥
सर्वथा स्वस्य चाऽशक्तौ हरिरेव हि रक्षकः ॥
स्वकीयचिंतां कुरुते कर्ता स च करिष्यति ॥ १५ ॥

स्वयं किमर्थं कर्तव्या पितरीव शिरःस्थिते ॥
न त्यक्ष्यति कृपापूर्णः सेवकं सर्वदाश्रितम् ॥ १६ ॥
आचार्यशरणं तस्य चिंतालेशोऽपि नैव हि ॥
तस्माच्छ्रीवल्लभाचार्यचरणाऽञ्जद्वयाऽऽश्रितैः ।१७।
न काऽपि चिंता कर्तव्या कृष्णसेवा विना पुनः ॥
निवेदनाऽनुसंधानचिंतामात्रं विधीयताम् ॥ १८ ॥
लोके स्वास्थ्यं तथा वेद इति श्रीमत्प्रभोर्वचः ॥
स्मृत्वा शीघ्रं हृदिस्था सा निवर्त्या सेवनाऽर्थिभिः १९
इति श्रीहरिरायजीविरचितं षट्त्रिंशत्तमं शिक्षापत्रं समाप्तम्॥३६॥

# अथ सप्तत्रिंशत्तमं शिक्षापत्रम् ॥ ३७ ॥

श्रीकृष्णाय नमः ।

न शुद्धभावो नैवाऽस्ति सर्वभावो न दीनता ॥
नाऽऽज्ञापरत्वं विश्वासो न चाऽस्ति परमादरः ॥ १ ॥
न सत्संगो नैव सेवा न निवेदनसंस्मृतिः ॥
नाऽऽश्रयो न विवेको हि धैर्यं न शरणस्थितिः ॥ २ ॥
न माहात्म्यपरिस्फूर्तिः स्नेहस्तु न हि कुत्रचित् ॥
आसक्तिव्यसनादीनां कथाऽपि खलु दुर्लभा ॥ ३ ॥
भक्तिमार्गप्रवेशो न धर्ममार्गे न च स्थितिः ॥
देशादिशुद्धभावो न कालदोषात्र वैदिकम् ॥ ४ ॥

न च व्यावृत्तिराहित्यं व्यावृत्तौ न हरौ मनः ॥
न त्यागश्चापि सेवार्थं स्वतंत्रस्य तु का कथा ॥ ५ ॥
न कृष्णविरहस्फूर्तिः संयमो न च वाग्दृशोः ॥
नौदासीन्यमभक्तेषु नाऽनासक्तिर्गृहादिषु ॥ ६ ॥
नाऽहंकारादिराहित्यं न स्वधर्मपरिग्रहः ॥
नाऽन्यधर्मनिवृत्तिश्च किं करिष्यति मत्प्रभुः ॥ ७ ॥
मयि दोषनिधाने तु सर्वसद्गुणवर्जिते ॥
निःसाधनत्वमेवं हि स्वस्य नित्यं विभावयेत् ॥ ८ ॥
इति श्रीहरिरायजीविरचितं सप्तत्रिंशत्तमं शिक्षापत्रं समाप्तम् ॥ ३७ ॥

## अथाष्टत्रिंशत्तमं शिक्षापत्रम् ॥ ३८ ॥

श्रीकृष्णाय नमः ।

कृष्णे रसात्मके नित्यं गोपिकामंडले स्थिते ॥
यमुनापुलिनांतःस्थवृंदावनविराजिते ॥ १ ॥
नित्यगानरसाऽऽविष्टे विशिष्टेऽक्षरतः क्षरात् ॥
भावैकगम्ये सर्वत्र प्रसिद्धे पुरुषोत्तमे ॥ २ ॥
यस्याऽवतारः पुरुष आद्यो ब्रह्मांडविग्रहः ॥
तस्यांशा एव ये भूमौ मत्स्याद्या इति बुध्यताम् ॥ ३ ॥
अक्षरं धाम वैकुंठं व्यापि वैकुंठसंज्ञकम् ॥
ब्रह्मानंदस्तत्र लक्ष्मीः पूर्णानंदो हरिः स्वयम् ॥ ४ ॥

रमा वैकुंठवासी तु विभूतिर्यस्य वैष्णवी ॥
रमा तु पालिका तत्र शक्तिरित्यवगम्यताम् ॥ ५ ॥
मूलभूतस्याऽवतारे ( रो ) मूर्तिव्यूहोऽभिधीयते ॥
प्रद्युम्नो वासुदेवश्चाऽनिरुद्धोऽनंत एव च ॥ ६ ॥
व्यूहं विरच्य यस्तत्र स्थाप्यते प्राप्यते न सः ॥
तथैतैरावृतः कृष्णो नाऽवतारोऽवगम्यते ॥ ७ ॥
अत एव जना भ्रांताः प्राकृतं तं वदंति हि ॥
अंशकार्यं मूलरूपे कल्पयंत्यज्ञतां गताः ॥ ८ ॥
कृष्णस्तु केवलं लीलां करोति रसरूपिणीम् ॥
भूभारहरणं चक्रे कलाभ्यामेव सर्वथा ॥ ९ ॥
परमानंददानं तु स्वरूपेणेति निश्चयः ॥
व्रजस्थ एव सततं पुरस्थो वा कृपापरः ॥ १० ॥
तत्राऽपि रूपभेदेन क्रीडति स्म तथा रसः ॥
धर्मिमात्रं स्वमर्यादारहितं केवलं व्रजे ॥ ११ ॥
सर्वधर्मविशिष्टं तु समर्यादं पुरे मतम् ॥
उच्छृंखला तु या लीला केवलेन व्रजे कृता ॥ १२ ॥
परमानंदरूपा सा बाललीलादिभेदतः ॥
सर्वत्र रसलीलात्वं गूढभावेन वर्णितम् ॥ १३ ॥
कामरूपतया कृष्णे वयो न हि नियामकम् ॥

एतादृशे मूलरूपे मूललीलासमन्विते ॥ १४ ॥
चित्तं निरंतरं स्थाप्यं सैव सेवा स्वमार्गगा ॥
तत्सिद्ध्यर्थं शरीरेण वित्तेनाऽपि विधीयताम् ॥ १५ ॥
निवेदनानुसंधानं विधेयं तादृशैः सह ॥
सत्संग एव कर्तव्यो विश्वासः स्थाप्यतां दृढः ॥ १६ ॥
कृष्णः कृपापराचीनो दीनानामनुपेक्षकः ॥
स्वकीयानामन्यभावात्करिष्यत्यवनं स्वतः ॥ १७ ॥
धर्ममार्गप्रवृत्तिस्तु चित्तशुद्ध्या यथा हरौ ॥
मतिः स्यान्नैव पाखंडे तदर्थं सर्वथेष्यते ॥ १८ ॥
मार्गप्रवर्तकाचार्यचरणेषु निरंतरम् ॥
विश्वासः सुदृढः कार्यस्ततः सर्वं फलिष्यति ॥ १९ ॥
विशेषो गोवर्धनदासपत्राज्ज्ञेयः किमधिकम् ॥
इति श्रीहरिरायजीविरचितमष्टत्रिंशत्तमं शिक्षापत्रं समाप्तम् ॥३८॥

---

## अथैकोनचत्वारिंशत्तमं शिक्षापत्रम् ३९

श्रीकृष्णाय नमः ।

सत्संगेन प्रभौ चित्तं स्थापनीयं निरंतरम् ॥
पूर्वं श्रुतानामर्थानामनुसंधानमादरात् ॥ १ ॥
भगवत्सेवनं सम्यग्विधेयमिति निश्चयः ॥
वैष्णवादिसमाधानं कृष्णसेवैव सर्वथा ॥ २ ॥

यतः प्रभौ प्रपत्तिर्हि वर्धते कार्यकारणात् ॥
सेवयैव हि संतुष्टः सुखसेव्यः प्रभुर्भवेत् ॥ ३ ॥
दुराराध्यस्य सेवैव वशीकरणसाधनम् ॥
कृष्णसेवां प्रकुर्वंतो भाग्यवंतो जना मताः ॥ ४ ॥
तस्माद्दृढं मनः कृत्वा कृष्ण एव हि सेव्यताम् ॥
अत्रत्यं वृत्तमखिलं वदिष्यति विशेषतः ॥ ५ ॥
श्रीविठ्ठलप्रभोर्दासः श्यामदासःसहस्थितः ॥ ६ ॥
तत्रत्यवृत्तांतोऽखिलो विविच्य लेख्यः किमधिकम् ॥
इति श्रीहरिरायजीविरचितमेकोनचत्वारिंशत्तमं शिक्षापत्रं समाप्तम् ।

## अथ चत्वारिंशत्तमं शिक्षापत्रम् ४०

श्रीकृष्णाय नमः ।

पत्रद्वारा प्रकुर्वे स्वदुःखविनिवेदनम् ॥
महत्तराख्ये चलिते दूरगेषु भवत्सु च ॥ १ ॥
जानामि निजमार्गस्य धर्मं किंचित्कृपाबलात् ॥
तदसिद्धिजहृत्क्लेशं को मे दूरीकरिष्यति ॥ २ ॥
प्रायः पाषंडिमुख्योऽहं हरिणा हृदि चिंतितः ॥
कृपालुरप्युपेक्षां मे कुरुते दीनवत्सलः ॥ ३ ॥
उपेक्षितश्चेद्धरिणा स्वजनैरप्युपेक्ष्यते ॥
अतः कं यामि शरणं वनस्थ इव विस्मृतः ॥ ४ ॥

प्रभोरपि न वै दोषो गुणलेशोऽपि नो मयि ॥
विस्मृत्य दोषनिचयं यं गृह्णीयाद्गुणग्रहः ॥ ५ ॥
यथा निःश्वासरहितं किं करोति सुभेषजम् ॥
तथा विगतभावं मां कथासेवादिकं पुनः ॥ ६ ॥
प्रायः कथैव नैषाऽस्ति यतस्तिष्ठति नो हृदि ॥
न वाऽनुभावं कुरुते निजं त्यागाऽभिधं मयि ॥ ७ ॥
सेवा तु प्रतिबद्धा मे भोगोद्वेगाधिबाधकैः ॥
गेहवित्तादिकाऽऽसक्त्या कथं सा मानसी भवेत् ॥ ८ ॥
तातपादेषु यातेषु दुर्भगस्य परोक्षताम् ॥
सत्सु सर्वेषु यातेषु दृशोर्दूरमहं स्थितः ॥ ९ ॥
श्रीभागवतचिंता तु न विना संगतेः सताम् ॥
मनसोऽत्यंतविक्षेपान्न वा शरणभावनम् ॥ १० ॥
वार्तांतरकृतिप्रेम्णा नाऽष्टाक्षरमनोजपः ॥
महत्त्वमत्या लोकानां प्रपत्त्या दैन्यनाशनम् ॥ ११ ॥
निवेदनाऽनुसंधानं सद्भिस्त्यक्तस्य मे कथम् ॥
केवलं शरणं सर्वत्यागाऽभावाच्च दुर्लभम् ॥ १२ ॥
चांचल्याच्चेतसः कुत्र दृढः कृष्णपदाऽऽश्रयः ॥
विवेकधैर्ये तद्धेतू मूर्खाधीशस्य मे कथम् ॥ १३ ॥
भावो यदनुभावेन भवेन्निष्कासितस्ततः ॥

क ता व्रजभुवः कृष्णचरणांबुरुहांकिताः ॥ १४ ॥
क शैलः कृष्णदासार्यः (र्य्यः) पुलिंदीभावपोषकः ॥
क ते श्रीयमुनोद्देशा लीलारसवितारकाः ॥ १५ ॥
कते वेणुरवा यैर्वा समाकृष्टा व्रजस्थिताः ॥
व्रजनाथकरांभोजप्रोंछिताः क गवां गणाः ॥ १६ ॥
अनंतलीलाधारास्ते द्रुमाः क विपिनस्थिताः ॥
वेणुनादपरावृक्षभुजारूढाः क पक्षिणः ॥ १७ ॥
व्रजस्त्रीचरणांभोजरेणवः क व्रजस्थिताः ॥
दधिनिर्मंथनोन्नादाः क ते श्रवणमंगलाः ॥ १८ ॥
यमुनावालुकादेहसंबंधः क जलस्पृशिः ॥
बहिर्मुखत्वसातत्ये तदीयत्वं च ते कुतः ॥ १९ ॥
परमानंददूरस्थे चित्रं किं दुःखसंततौ ॥
पोपकाऽभवतो नैव दृढः स्वाचार्यसंश्रयः ॥ २० ॥
विपयाऽभिनिवेशेन प्रेक्षा न विशति प्रभो ॥
जातोऽस्मि सांप्रतं सर्वसाधनाऽभाववानहम् ॥२१॥
निःसाधनत्वं भावे तु विद्यमाने प्रयोजकम् ॥
तदभावे केवलं मे दोषायैव न चान्यथा ॥ २२ ॥
शरीरेणाऽप्यशक्तस्य क्रिया का वाऽत्र सेत्स्यति ॥
यथांधो बधिरो मूको विहस्तः पंगुरुन्मनाः ॥ २३ ॥

अकामः कामविक्षिप्तो हरिणोपेक्षितोऽधुना ॥
विमृशामि सदा स्वांते का गतिर्मे भविष्यति ॥ २४ ॥
विरक्तवेषिणास्माकमधिकारकृता पुनः ॥
कृतं युवतिवश्येन कार्यमेकमनीदृशम् ॥ २५ ॥
कस्याश्चित्सूरतिग्रामे विधवायाश्च संगमात् ॥
दुष्टेन स्थापितो गर्भः पातितश्च तथौषधात् ॥ २६ ॥
मरणं चोभयोर्मध्ये कस्यचित्स्यान्न संशयः ॥
यत्नेन प्रेमजिन्नाम्ना मदापत्तिर्निवारिता ॥ २७ ॥
विश्वासः कस्य कर्तव्य इति खिन्नं मनो मम ॥
गृहकार्यं न चलति मनुष्याणामभावतः ॥ २८ ॥
अतः स्निग्धोऽपि कार्ये तु मद्दोषानुस्मृतेः सदा ॥
प्रायशः प्रेमजिन्नामा वर्ततेऽसौ विरक्तवत् ॥ २९ ॥
चलितुं यतते तस्माल्लेख्या बहुसमाहितिः ॥
क्षांतोऽपराधः सर्वोऽपि मृषा क्रोधवशस्ततः ॥ ३० ॥
इदानीं तु कृपापूर्ववदस्तीति भयोज्झितैः ॥
भवद्भिः सर्वथा लेख्यं पत्रं सर्वैः पृथक् पृथक् ॥
[इदानीं तु कृना ( कृपा ) पूर्वमनोवृत्तिस्तु सर्वथा ॥
तस्माद्भयोज्झितैः सर्वैः पत्रं लेख्यं पृथक् पृथक् ]
अतिप्रशंसया चित्तं यथा तस्य स्थिरं भवेत् ॥

मुखरोऽपि समीचीनो मुख्यदोषविवर्जितः ॥३२॥
वैद्यकेन गृहेऽस्माकं विशेषपरितोषणात् ॥
भवत्संगात्कंदुकवत्पतितः पुनरुत्थितः ॥ ३३ ॥
विशेषः प्रेमजित्पत्राद्बोद्धव्यः ॥
इति श्रीहरिरायजीविरचितं चत्वारिंशत्तमं शिक्षापत्रं समाप्तम् ४०

## अथैकचत्वारिंशत्तमं शिक्षापत्रम् ।

श्रीकृष्णाय नमः ।

लौकिकं सकलं कार्यं प्रभुसेवोपयोजनात् ॥
परं सर्वत्र पूर्वं हि प्रभुश्चित्यो न लौकिकम् ॥ १ ॥
न रोचते हरेः स्वानां लौकिकाऽऽसक्तियुङ्मनः ॥
तदोपेक्षावशात्तस्य न सिद्ध्यत्यपि लौकिकम् ॥ २ ॥
शुद्धभावः प्रभौ स्थाप्यो न चातुर्यं प्रयोजकम् ॥
अंतर्यामी समस्तानां भावं जानाति मानसम् ॥ ३ ॥
शुद्धभावे तदीयं तु लौकिकं साधयेत्स्वयम् ॥
तत्साधितमविघ्नेन सर्वं सिद्ध्यति नाऽन्यथा ॥ ४ ॥
आवश्यको हि कर्तव्यस्तदीयैर्लौकिके व्ययः ॥
अनासक्तौ लौकिकं तु वर्धते न च बाधते ॥ ५ ॥
अन्यथा वृद्धमप्येतद्बाधते तदुपेक्षया ॥
कृष्णसेवैकविषये मुख्यं चेतो निधीयताम् ॥ ६ ॥

अन्यत्तदुपयोगित्वात्क्रियतां न तु मुख्यतः ॥
सेवैव साधनं सेवा फलमैहिकमत्र सा ॥ ७ ॥
सैवाऽलौकिकदेहेन संभवेत्पारलौकिकम् ॥
तदर्थमेव कर्तव्यः सत्संगो भाववर्धकः ॥ ८ ॥
अनिंधनो वह्निरिव भावः शाम्येत्तु लौकिकात् ॥
आर्तिरेव सदा स्थाप्या हरिसंदर्शनादिषु ॥ ९ ॥
स्वास्थ्यं तु लौकिके नैव ददाति करुणानिधिः ॥
तदीयानां स्वतश्चिंतां कुरुते पितृवद्धरिः ॥ १० ॥
पुनश्चिंतां प्रकुर्वाणा मूर्खा एव न संशयः ॥
तस्मादाचार्यदासैस्तु मच्छिक्षायां सदा स्थितैः ॥११॥
सेव्यः प्रभुस्ततो भद्रमखिलं भावि सर्वथा ॥ १२ ॥
इति श्रीहरिरायजीविरचितमेकचत्वारिंशत्तमं शिक्षापत्रं समाप्तम् ४१

॥ समाप्तान्येकचत्वारिंशच्छिक्षापत्राणि ॥

# अथ रसात्मकभावस्वरूपनिरूपणम् ।

श्रीकृष्णाय नमः ।

रसात्मकतया सिद्धः परमात्मा श्रुताविति ॥
संयोगविप्रयोगाभ्यां शृंगाररसरसो हरिः ॥ १ ॥
धर्मधर्मिविभेदेन तावपि द्विविधौ मतौ ॥
धर्मरूपस्तु संयोगो बहिः प्राकट्यपालितः ॥

परोक्ष आंतरो यस्तु स धर्मित्वेन संमतः ॥ २ ॥
वियोगोऽपि तथा यस्तु प्रभुप्राकट्यसाधकः ॥
स्वतंत्रफलरूपो यः स्वरूपावेऽऽशतो हरेः ॥
धर्मिरूपः स विज्ञेयो नाऽऽविर्भावप्रयोजनम् ॥३॥
वहिः संवेदनं वाऽपि तदसंवेदनं तथा ॥
तयोरवस्थाद्वितयं भावेनैव न चाऽन्यथा ॥ ४ ॥
वियोगात्मस्वरूपेण संयोगाऽभाववद् द्वयम् ॥
वहिःसंवेदनाऽभावे तत्र साक्षात्तथा क्रिया ॥ ५ ॥
तदा संवेदने विप्रयोगाऽनुभव एव हि ॥
एवं द्वावेव सततं स्वतंत्रा भक्तिरुच्यते ॥ ६ ॥
भावरूपः स्वरूपात्मा निरुद्धः पूर्ण एव सः ॥
धर्मरूपवियोगेऽपि प्रविशंति गुणा हरेः ॥ ७ ॥
धर्मिरूपे तत्र कृष्णः कोशवत्प्रविशेत्पुनः ॥
यथा ( भगवदाविष्टा मूर्तिः ) भगवदावेशो मूर्ति कोशे हरेस्तथा ॥ ८ ॥ तेषु भावद्वयं सिद्धं स्त्रीभावः सहजः पुरा ॥ आविष्टभगवद्भावः पश्चाज्जातो विशेषतः
तेषु धर्मा अपि तथा दृश्यंते द्विविधा अपि ॥
एवमेवाऽस्मदाचार्यस्वरूपमवबुद्ध्यताम् ॥ १० ॥
स्वामिनीभगवद्भावयुतं चाऽपि विलक्षणम् ॥

अत एवोभयं तत्र ग्रंथेषु [ तत्तद्ग्रंथेषु ] विनिरूप्यते॥
प्रभुभिः स्वामिनीभावभगवद्भावतत्त्वतः ॥ ११ ॥
सर्वलक्षणसंपन्न इति नाम विराजते ॥
तथा तत्रैव रासस्त्रीभावपूरितविग्रहः ॥ १२ ॥
वस्तुतः कृष्ण एवेति चोक्तं श्रीवल्लभाष्टके ॥
एवं विदित्वा तद्रूपं कर्तव्यः सर्वदाऽऽश्रयः ॥ १३ ॥
इति श्रीहरिरायजीविरचितं रसात्मकभावस्वरूपनिरूपणं समाप्तम् ।

## अथ जपसमये स्वरूपध्यानम् ॥

श्रीकृष्णाय नमः ।

भक्तिमार्गे तापयुक्तक्लेशैर्भगवदर्थकैः ॥
सर्वात्मभावसिद्ध्यर्थं जनः पंचाक्षरं जपेत् ॥ १ ॥
पंचाक्षरे तवास्मीति स वै भावः प्रकाशितः ॥
सर्वात्मभावसंसिद्धौ न तत्साधनमुच्यते ॥ २ ॥
किंतु तज्जपतो दैन्यं तदीयत्वविभावनात् ॥
तदेवाऽनुग्रहद्वारा सर्वभावप्रसाधकम् ॥ ३ ॥
अष्टाक्षरं तथा मंत्रं जप्यं शरणसिद्धये ॥
शरणस्थं यतः कृष्णः स्वतः सर्वात्मनोद्धरेत् ॥ ४ ॥
उद्धारोऽप्यत्र मंतव्यः स्वरूपावेशसाधकः ॥
फलांतरानपेक्षस्य किंदेयं प्रभुणापि हि ॥ ५ ॥

तत्रस्वस्वामिरूपस्य भावनारीतिरुच्यते ॥
यतो भावनया भावः सिद्ध्येन्नाऽन्येन केनचित् ॥६॥
सर्वलीलाफलं रासलीलामादौ विभावयेत् ॥
तस्यामेव हि लीलायां सर्वभावात्मिका यतः ॥७॥
रासलीलैकतात्पर्य इत्यतः स्वामिनाम हि ॥
फलप्रकरणत्वं च तल्लीलाविनिरूपणात् ॥ ८ ॥
तत्र स्थलं गूढतमं यमुनापुलिनात्मकम् ॥
तच्चातिदुर्गवत्सर्वागम्यं हृदि विभावयेत् ॥ ९ ॥
परितो यमुनातीरं ततो वृंदावनं तथा ॥
ततो भूमिः सापि गूढा वायुना पत्रचालनात् ॥ १० ॥
अलौकिकमनश्चंद्रप्रकाशधवलीकृता ॥
यमुनोर्मिभिरत्यंतशीतलं सरसं तथा ॥ ११ ॥
एतादृशे तु पुलिने त्रिभंगललितं हरिम् ॥
बर्हिपिच्छशिरोभूषं सरोजसदृशाननम् ॥ १२ ॥
चंचलाऽरक्तनयनमलकावृतभालकम् ॥
श्रुतियुग्मलसच्छ्रीमन्मकराकृतिकुंडलम् ॥ १३ ॥
दिव्यांगरागललितं सर्वाभरणभूषितम् ॥
पीतांबरावृतं श्रीमद्वनमालाविराजितम् ॥ १४ ॥
रसासक्तं गोपिकैकानुरक्तं गोपिकावृतम् ॥

रासमंडलमध्यस्थं गोपिका युग्ममध्यगम् ॥ १५ ॥
श्रुतिरूपाग्निपुत्रात्मरूपगोपीभुजावृतम् ॥
नृत्यंतं शास्त्ररीत्यापि रसोद्रेकेण च स्वतः ॥ १६ ॥
तृतीयपुरुषार्थीयरसक्रीडापरं क्वचित् ॥
जलक्रीडारतं क्वापि मदविह्वललोचनम् ॥ १७ ॥
गोपिकासु च संसक्तं विरक्तं सर्वकार्यतः ॥
एतादृशं प्रभुं श्रीमदाचार्यहृदयस्थितम् ॥ १८ ॥
भावात्मकेन रूपेण सामग्रीसहितं तथा ॥
रसात्मकस्याधिष्ठानं रसवद्धृदयं यतः ॥ १९ ॥
तथैव हृदयाविष्टं लीलायां प्रतिगोपिकाः ॥
हृदयादेव तत्तापवशात्तु वहिरुद्गतिः ॥ २० ॥
लोकवेदप्रसिद्धस्वमधिष्ठाय क्रिया कृतिः ॥
अवतारपरोक्षे तु मूर्तावेवेति निश्चयः ॥ २१ ॥
अनुभूतिर्भाववतां भावरूपेण सर्वथा ॥
अन्येपामन्यरूपेण ततः साधारणी मतिः ॥ २२ ॥
स्वरूपे च तथा मूर्तौ नहि भाववतां क्वचित् ॥
एवंभूतं हरिं ध्यायेदतिदीनेन चेतसा ॥ २३ ॥
ततः सेत्स्यति सर्वात्मभावो भवति न स्वतः ॥
पुष्टिमार्गे साधनं च फलं चापि मतो हि सः ॥२४॥

एतत्सर्वं निजाचार्यकरुणालंकृतात्मनाम् ॥
भवेदतस्तदीयानां विधेयः केवलाश्रयः ॥ २५ ॥
इति श्रीहरिरायजीविरचितं जपसमये स्वरूपध्यानं संपूर्णम् ।

## अथ भगवच्चरणाचिन्हवर्णनम् ।

श्रीकृष्णाय नमः ।

प्रणम्य ब्रह्मरुद्रादिवंदनीयपदांबुजम् ॥
वर्णये पदचिन्हानि सदनानि शुभाशियाम् ॥ १ ॥
यद्ध्यानाच्चेतोऽपि सद्यः षोडशकलं भवति ॥
नखचंद्रपूर्णतायै तानि च षोडशसंख्यकानि ॥ २ ॥
दक्षिणवामपदद्वयचिह्नानां चिंतनाद्भवति ॥
दाक्षिण्यं वाम्यं तत्स्वरूपसंप्राप्तये नृणाम् ॥ ३ ॥
क्रमशः साभिप्रायं प्रत्येकं तानि चिह्नानि ॥
भावुकसंतोषार्थं निरूपयिष्ये यथाबुद्धि ॥ ४ ॥
ब्रह्मादिदुर्गमे मे प्रभवति बुद्धिः कथं वक्तुम् ॥
कृपया सर्वमशक्यं साधयितुं शक्यते दासैः ॥ ५ ॥
निर्भयसततस्थितये भक्तानां ज्ञापनायापि ॥
धारयति ध्वजचिह्नं सर्वोपरि विद्यमानत्वात् ॥ ६ ॥
यत्राऽनुग्रहवान्स तत्सन्मुखमेतदायाति ॥
इति विज्ञातुं ध्वजमिह धत्ते विमुखे सदा विमुखम् ॥ ७ ॥

एतच्चिंतकचेतो मत्तगजस्यान्यथा गमनम् ॥
न भवति कदाचिदथवा तथाविधोऽस्त्यंकुशस्तत्र॥८॥
स्वयमंकुशमपि वक्रं वक्रमनोवारणे शक्तम् ॥
अत एव नैव दंडादिकमन्यस्तत्र धारयति ॥ ९ ॥
सजले चक्षुषि हृदि च स्थापयितुं योग्यमेवैतत् ॥
चरणमिति प्रत्येतुं चरणे कमलाभिधं चिह्नम् ॥ १० ॥
सुखसेव्यत्वसमाख्यासिद्ध्यै वृद्ध्यै तयासक्तेः ॥
जातेऽखिलप्रकाशे तद्वसलभ्यत्वसिद्धये जलजम् ११
जनविरचितपापानां पर्वतसदृशां निवृत्तये वज्रम् ॥
धारयति वज्रसदृशः कठिनहृदश्छेदनायापि ॥ १२ ॥
एतच्चिह्नं सततं स्थापयतश्चेतसि प्रायः ॥
देवाधिदेवता स्यात्सपदि समस्तेषु चंद्र इव ॥१३॥
चरणं शिरसि निधाय स्थितस्य नैवास्ति कुत्रापि ॥
इह परलोकेऽप्यशुभं स्वस्तिकमित्थं निवेदयच्चेति १४
दुःखाभावसुखाभिधपुरुषार्थद्वैतसंबंधः ॥
सुलभश्चरणानुसरणकर्तरीति स्वस्तिकं ब्रूते ॥ १५ ॥
अष्टविधैश्वर्याप्तौ न कापि चैवास्ति साधनापेक्षा ॥
एतच्चिंतयतस्तन्निरूपयत्यष्टकोणाख्यम् ॥ १६ ॥
अष्टविधैर्भूकोणैर्युक्तं राज्यं न दुर्लभं भवति ॥

एतद्बुद्धिविभाव्यं तदष्टकोणाख्यचिह्नतो वेद्यम् १७
अतिशयितकीर्तिमत्त्वंख्यापयतिस्वस्यधारयन्चिह्नम्॥
यवसंज्ञं विज्ञानां यवतो हि धान्यराजा सः ॥ १८ ॥
श्रौताखिलकृत्यानां साधनसंपूर्णता चरणात् ॥
स्मरणपथारूढादिति यवांकमत्रैव धारयति ॥ १९ ॥
एतच्चरणमतीनामधोगतिर्नैव कुत्रापि ॥
इति वेदयितुं चरणे बिभर्ति रेखास्तथैवोर्ध्वाः ॥ २० ॥
चरणाश्रयणविधातुर्निःश्रेण्यो मोक्षमार्गस्य ॥
इति लोके विज्ञातुं संति पदाब्जे तथाविधा रेखाः २१
सरसस्यैव स्थितिरिह न कदाचिन्नीरसस्यापि ॥
इति बोधयितुं कलशं बिभर्ति चिह्नं पदांभोजे ॥२२॥
एतद्ध्यातुरमंगलसंभावनमेव नैवात्र ॥
यत इह चरणे तिष्ठति कलशं लावण्यजलपूर्णम् २३
सुरनरमुनिगणसेवितमिति बोधयितुं स्वसेविलोकस्य
गोष्पदनामकचिन्हं वामपदाब्जे वहत्येषः ॥ २४ ॥
तीर्थैरखिलैरपि या शुद्धिः संपादनीयास्ति ॥
चरणांबुजमाश्रयतां सुलभा सा गोष्पदाब्जे या॥२५॥
लौकिकलक्ष्मीफलमपि सुलभं चरणाश्रयादेव ॥

१ औषधीनामहं यत्र इत्युक्तेः.

इति विज्ञातुं जंबुकफलमिह सौवर्णकारणं वहति॥२६॥
सर्वविलक्षणफलवच्चरणं नहि निष्फलं क्वापि ॥
इति जंबुकफलमद्भुतचिह्नं चरणे सदा वहति ॥ २७ ॥
बहुधा ध्यातं तिष्ठति चांचल्यात्संततं नैव ॥
इति मत्स्याख्यं चिह्नं वामपदाब्जे दधात्येषः ॥ २८ ॥
यद्द सदा जलवत्त्वं तिष्ठति तत्रैव सर्वदा चैतम् ॥
शुष्कत्वे गच्छति पुनरेवं मत्स्यो विबोधयति ॥ २९ ॥
स्तब्धजनस्यागम्यं नम्रस्य च सर्वथा यस्मात् ॥
अत एव चिह्नमेतद्धनुराख्यं पादपंकजे वहति ॥३०॥
कामक्रोधजविषया वारयितुं येन शक्यंते ॥
वसतिस्तस्य हि चरणे स्यादिति धनुषा विबोधयति३१
त्रिगुणस्वजनोद्धरणे शक्तत्वं स्वस्य बोधयति ॥
चिह्नं वहन्त्रिकोणं चरणांभोजे स्वभक्तेभ्यः ॥ ३२ ॥
त्रिष्वपि दृष्टेः समता देवमनुष्यासुरेष्वस्य ॥
आश्रयमात्रमपेक्ष्यं त्विति त्रिकोणं निवेदयति॥३३॥
शिवशिरसः संबंधं ख्यापयितुं स्वस्य सर्वदा चरणे ॥
चिह्नं तदर्धचंद्रं तन्मस्तकभूषणं वहति ॥ ३४ ॥
एवं निश्चलबुद्धेर्धारणतो मस्तके शिवताम् ॥
भवतीति ज्ञापयति स्वयं वहन्नर्धचंद्रांकम् ॥ ३५ ॥

सर्वाधारं सूक्ष्मं सर्वव्यापि स्वयं चैतत् ॥
विज्ञापयति वहन्निह चिह्नं व्योमाभिधं चरणे ॥ ३६ ॥
ऊर्ध्वगतीनां प्रभवति गतिराकाशे न चान्येषाम् ॥
व्योम वहन् ज्ञापयति स्वीयगतिं तादृशीमेव ॥ ३७ ॥
ये भावयंति सततं परिशीलयंति
ये वा स्मरंति बहुशोऽप्यथ कीर्तयंति ॥
चिन्हानि गोकुलपतेश्चरणस्थितानि
तेषां भवेच्चरणपंकजमात्रभक्तिः ॥ ३८ ॥
इति हरिरायनिरूपितमभवत्पूर्णं पदाब्जयोः प्रकटम् ॥
चिह्नानां वर्णनमिह तेन हरिर्मे प्रसन्नोऽस्तु ॥ ३९ ॥
इति गोस्वामीश्रीहरिरायजीनिरूपितं भगवच्चरणचिन्हवर्णनं सं० ॥

## अथ श्रीवैश्वानराष्टकम् ।

श्रीकृष्णाय नमः ।

समुद्भूतो भूमौ भगवदभिधानेन सदयः समुद्धारं कर्तुं कृपणमनुजानां कलियुगे ॥ चकार स्वं मार्गं प्रकटमतुलानंदजननं स मे मूर्धन्यास्तां हरिवदन-वैश्वानरविभुः ॥ १ ॥ निजानंदे मग्नः सततमथ लग्नश्च मनसा हरौ ममासक्तिर्जगति जगदुद्धारक-रणः ॥ कृपापारावारः परहृदयशोकापहरणः स मे मूर्ध-

न्यास्तां हरिवदनवैश्वानरविभुः ॥ २ ॥ महामाया-मोहप्रशमनमनोदोषनिचयः प्रतीतः श्रीकृष्णः प्रकटपथविद्वेषसयुजाम् ॥ सुखध्वंसं चक्रे निगमवचनैर्मायिकनृणां स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ३ ॥ प्रसिद्धैस्तैर्दोषैः सहजकलिदोषादिजनितैर्यतः स्वीयैर्धर्मैरपि च रहितः सर्वमनुजः ॥ कृता संबंधेन प्रभुचरणसेवादिसहितः स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ४ ॥ विभेदं यश्चक्रे हरिभजनपूजादिविधिषु स्वमार्गीयप्राप्यं फलमपि फलेभ्यः समधिकम् ॥ विना वैराग्यादेरपि परममोक्षैकफलदः स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ५ ॥ परिक्रांता पृथ्वी चरणकमलैस्तीर्थमहिमप्रसिद्ध्यर्थं स्वीयस्मरणसमवाप्त्यै निजनृणाम् ॥ तथा देवान् जीवान् जगति च पृथक्कर्तुमखिलान् स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ६ ॥ हरिं भावात्मानं तदखिलविहारानपि तथा समस्तां सामग्रीं मनुजपशुपक्ष्यादिसहिताम् ॥ कृपामात्रेणात्र प्रकटयति दृक्पारकरुणः स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ७ ॥ परेषामासक्तिं सुतधनशरीरा-

दिषु द्दां द्रुतं भस्मीचक्रे ब्रहलमपि तूलं ज्वल इव ॥ स्वसांनिध्यादेव व्यसनमपि कृष्णेऽपि विदधत्स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ८ ॥ इति श्रीमत्प्रोक्तं हरिचरणदासेन हरिणाष्टकं स्वाचार्याणां पठति परमप्रेमसहितः ॥ जनस्तस्य स्याद्वै हरिवदनवैश्वानरपदे परो भावस्तूर्णं सकलफलरूपस्तदधिकः ॥ ९ ॥

इति श्रीहरिरायजीविरचितं श्रीवैश्वानराष्टकस्तोत्रं समाप्तम् ।

## अथ श्रीषोडशस्तोत्रम् ।

श्रीकृष्णाय नमः ।

प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
को वा ब्रह्म महेशो वा महेंद्रो वा परोऽपि वा ॥ १ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
अहमेव कृतार्थोऽस्मि हीना ब्रह्मादयः सुराः ॥ २ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
त्रयो लोका दरिद्रास्तु अहमेव समृद्धिमान् ॥ ३ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
विश्वस्योपरि राजेऽहं किमन्यैः सुरराजिभिः ॥ ४ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥

मोक्षानंदं न याचेऽहं तुच्छमन्यत्सुखं किमु ॥ ५ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
तुष्टे रुष्टैस्तदीयस्य भगवत्किंकरैः परैः ॥ ६ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
एतावतामहानर्थे न त्रैलोक्याधिपत्यताम् ॥ ७ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
एतेनाखिलधर्मैः किं तपोदानमखादिभिः ॥ ८ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
एतेन गुणवानस्मि किं चातुर्यादिभिर्गुणैः ॥ ९ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
संसारप्रभवैर्नो किं वैराग्यज्ञानसंश्रयैः ॥ १० ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
प्रयोजनं न विधिभिर्निषेधैर्न प्रयोजनम् ॥ ११ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
अन्यालभ्यं मया लब्धं का चिंता तर्हि संप्रति ॥१२॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
वाच्यमेवं सदा ध्येयमेवं तदर्थिभिर्नरैः ॥ १३ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
भविष्यत्यस्तभूदेवं जायते स्म इतः सुखम् ॥ १४ ॥

प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहं न संशयः ॥१५॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
एवमेव सदा भूयाद्भूयादेवं न संशयः ॥ १६ ॥
प्रभुर्नंदकुमारो मे स्वामिनी वृषभानुजा ॥
पठतः षोडश श्लोकानेतान्प्रीतिपुरःसरम् ॥ १७ ॥
श्रीवल्लभतनुजन्मा द्विजरूपो विठ्ठलेश्वरः ॥
सुप्रसन्नः सदा भूयादनेन विहितेन मे ॥ १८ ॥

इति श्रीहरिदासोदितं श्रीषोडशस्तोत्रं समाप्तम् ।





श्रीमद्गोस्वामिश्रीविठ्ठलरायजीचरणाः ।

प्रादुर्भाव सं० १७४२ आश्विन शुक्ल पञ्चमी

॥ श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरे

## गोस्वामीश्रीगोकुलनाथात्मजविठ्ठलरायजीविरचितग्रंथाः ।

## तत्र जीवस्वरूपनिर्णयः ।

श्रीकृष्णाय नमः ।

श्रीकृष्णः परमानंदो रसात्मकतया मतः ॥
स एव पुच्छभागेन चाक्षरः परिकीर्तितः ॥ १ ॥
तदंता अप्यनंताः स्युस्तत्र ब्रह्मांडकोटयः ॥
तदैच्छिको हि भेदोऽयं जडजीवांतरात्मनः ॥ २ ॥
आनंदांशतिरोधानात्परिच्छिन्नत्वतः स्फुटम् ॥
व्यवहाराः प्रवर्तंते विधिपेधपुरःसराः ॥ ३ ॥
सच्चिदानंदशक्तीनां तिरोधानेन सञ्चितोः ॥
जडानीशत्वयोर्भानमैच्छिकं न तु वास्तवम् ॥ ४ ॥
वास्तवं चेदच्छेद्योयमिति गीता वदेन्नहि ॥
जडस्यापि तथात्वं हि तदाविर्भावतः स्फुटम् ॥ ५ ॥
पुरुषोत्तमांशभूतानां जडजीवांतरात्मनाम् ॥

कार्यशक्तिप्रधानत्वादनुभूतिस्त्रिधा मता ॥ ६ ॥
लोके चांगांगिनोस्त्वेवमध्यासादुपलभ्यते ॥
अंगव्ययास्त्वंगिनैव तथा न ब्रह्मणि क्वचित् ॥७॥
सर्वज्ञत्वात्ततस्तस्य सर्वरूपत्वतस्तथा ॥
स्वेच्छयोपार्जितत्वाच्च तद्व्यया नैव दृश्यते ॥ ८ ॥

इति श्रीगोस्वामीश्रीगोकुलनाथात्मजविट्ठलरायशर्म-
विरचितो जीवस्वरूपनिर्णयः समाप्तः ।

तर्के चैवोपचारं ये मन्यमाना न वैदिकाः ॥
वेदस्याक्षरमात्रस्य वाच्यतार्थविशारदाः ॥ ६ ॥
शक्यस्याभावतस्तस्य मिथ्यात्वाभिनिवेशतः ॥
लक्षणा गंधमात्रं वै न वेदे ब्रह्मणि क्वचित् ॥ ७ ॥
यः पृथिव्यां तु संतिष्ठन् यं च पृथ्वी न वेत्ति हि ॥
एवं वैशिष्ट्यभावेन द्वैतं ब्रम्हगुणात्मकम् ॥ ८ ॥
येऽंगीकुर्वंत्युपासार्थं विशिष्टाद्वैतवादिनः ॥
अद्वैतश्रुत्यनर्थज्ञा उपचारं वदंति हि ॥ ९ ॥
एकमेवाद्वितीयं तु नेह नानास्ति किंचन ॥
मृत्योः स मृत्युमाप्नोति यो वै नानेव पश्यति ॥ १० ॥
इति श्रुतिविरोधाच्च वैशिष्ट्यं केन साध्यते ॥
एवं प्रश्नं सुविस्तीर्य स्वसिद्धांतनिरूपणम् ॥ ११ ॥
य एको लीलया शक्तिमात्मभूतां समाश्रितः ॥
नानेव दृश्यते चान्यैर्ह्यभक्तैरनुपाश्रितः ॥ १२ ॥
स एव भक्तैरात्मीयैः सदा सद्भिरुपास्यते ॥
यत्र गावो भूरिशृंगा नगाश्चैव शुभावहाः ॥ १३ ॥
मुनयः सूरयो भक्ताः सदा पश्यंति तत्पदम् ॥
त्रिकालाबाधितं रूपं सर्वशक्त्युपबृंहितम् ॥ १४ ॥
सा हि स्वाभाविकी प्रोक्ता क्रिया ज्ञानबला ध्रुवा ॥

तामेव स्वयमाश्रित्य भगवान् रसविग्रहः ॥ १५ ॥
वरप्रदर्शिता रात्रीर्वीक्ष्य रंतुं मनो व्यधात् ॥ १६ ॥

इति श्रीगोकुलनाथात्मजविठ्ठलरायजीविरचितं
ब्रह्मस्वरूपनिरूपणं समाप्तम् ।

## अथ जीवब्रह्मणोरैक्यनिरूपणम् ।

श्रीकृष्णाय नमः ।

श्रीमद्वृंदावने रम्ये पुष्पिते वनितोत्सवैः ॥
वेणुं संवादयन् बालैः स्थितः कृष्णः प्रसीदतु ॥ १ ॥
बालकृष्णं भजे नित्यं गोपिकारतिसंप्रदम् ॥
नृत्यंतं गीतसंसक्तं हैयंगवसुलोभिनम् ॥ २ ॥
बालकृष्णपदांभोजं चिंतिताधिकसुप्रदम् ॥
नत्वा श्रीवल्लभाचार्यान् कुर्वेऽद्वैतनिरूपणम् ॥ ३ ॥
एकमेवाद्वितीयं यद्ब्रह्मज्योतिः सनातनम् ॥
अस्थूलं निर्गुणं शांतं व्यापकं हृदि संस्थितम् ॥ ४ ॥
तद्वै शक्तिमात्मभूतां धर्मरूपां समाश्रितम् ॥
एकोनानात्वमन्विच्छन् बहुस्यामिति तत्तथा ॥ ५ ॥
यथोर्णनाभिना तंतुस्तन्यते रमणेच्छया ॥
स्थीयते रमणं यावत् ग्रस्यते तत्तथाविधिः ॥ ६ ॥
पराभिध्यानतो नूनमानंदांशस्तिरोहितः ॥

तत एवास्य जन्मादि सच्चितोः परिदृश्यते ॥ ७ ॥
ऐन्छिकं सर्वमेवैतन्मायावादनिरासतः ॥
माया त्वात्मीयशक्तित्वे वेदेन परिकीर्तिता ॥ ८ ॥
परास्य शक्तिर्विविधा क्रियाज्ञानबला सती ॥
स्वाभाविकी यया सर्वं जगदेतच्चराचरम् ॥ ९ ॥
मोहितं मनुतेऽनर्थान् स्वीयपारक्यसंभवान् ॥
कालकर्मस्वभावस्थान् कार्यशक्तिगुणात्मकान् ॥ १० ॥
यावद्गुणेषु संसक्तस्तावत्पश्यति वै भिदाम् ॥
यद्गुणेभ्य उपरमेयदच्छातो ह्ययं पुमान् ॥ ११ ॥
सत्यं ज्ञानमनंतं यद्धृदि यो वेत्ति संस्थितम् ॥
सर्वकामान् परे व्योम्नि फलमश्नाति ब्रह्मणा ॥ १२ ॥
अक्षरं परमं वेत्ति स्वात्मत्वेन निरंतरम् ॥
ब्रह्माहमिति संपन्नः सर्वं पश्यति सर्वदा ॥ १३ ॥
जीवंस्तु विचरेत्पृथ्वीं यावद्भोगः समाप्यते ॥
प्रारब्धांते स्वयं ब्रह्म सद्यो मुक्त्यधिकार्यसौ ॥ १४ ॥
क्रममुक्त्यधिकारी तु ह्यर्चिरादिकमप्युत ॥
गत्वा तत्तद्गतान् भुक्त्वा सत्यलोकमियान्नरः ॥ १५ ॥
यावद्ब्रह्मायुषं स्थित्वा ब्रह्मणा सह युज्यते ॥
ते ब्रह्मलोक इति श्रुत्या मुच्यंते सर्व एव हि ॥ १६ ॥

इति श्रीगोकुलनाथात्मजगोस्वामिविट्ठलरायशर्मविरचितं जीवब्रह्मणोरैक्यनिरूपणं समाप्तम् ।

# अथ गोस्वामीश्रीगिरिधरजीकृतः शुद्धाऽद्वैतमार्तंडः ।

श्रीकृष्णाय नमः ।

श्रीमदाचार्यचरणौ श्रीविठ्ठलपदांबुजे ॥
श्रीमतां यदुनाथानां श्रीमद्गिरिधरः सुधीः ॥ १ ॥
चरणांबुजकिंजल्कपरागान् प्रणिपत्य तम् ॥
शुद्धाऽद्वैतविचारार्कं तनुते सुधियां मुदे ॥ २ ॥
द्विधा ज्ञानं तु यद्यस्यान्नामरूपात्मना मुहुः ॥
ईशजीवात्मना वापि कार्यकारणतोऽथवा ॥ ३ ॥
द्वीतं तदेव द्वैतं स्यादद्वैतं तु ततोऽन्यथा ॥
सर्वं खल्विदं ब्रह्म तज्जलानिति पठ्यते ॥ ४ ॥
सर्वं ब्रह्मात्मकं विश्वमिदमाबोध्यते पुरः ॥
सर्वशब्देन यावद्धि दृष्टश्रुतमथो जगत् ॥ ५ ॥
बोध्यते तेन सर्वं हि ब्रह्मरूपं सनातनम् ॥
कार्यस्य ब्रह्मरूपस्य ब्रह्मैव स्यात्तु कारणम् ॥ ६ ॥
जन्माद्यस्येत्यादिसूत्रैर्व्यासपादैर्निरूपितम् ॥
यतो वेत्यादिवाक्येषु वेदे स्पष्टं प्रतीयते ॥ ७ ॥
साकारं सर्वशक्त्येकं सर्वज्ञं सर्वकर्तृ च ॥
सच्चिदानंदरू[illegible] ब्रह्म तस्मादिदं जगत् ॥ ८ ॥



श्रीकाशीस्थश्रीमद्गोस्वामिश्रीगिरिधरजी-
महाराजचरणाः ॥

प्रादुर्भाव संवत् १८४७ मार्गशीर्ष कृष्ण तृतीयायाम्

जडजीवांतःस्थितानां यथाक्रमश उद्गमः ॥
अग्नेर्यथा विस्फुलिंगास्तथा जीवोद्गमः स्फुटः ॥ ९ ॥
विसर्पिगुणचैतन्योऽणुर्जीवोंऽशो हरेः स्मृतः ॥
जडे चिदानंदयोस्तु चित्यानंदस्य सर्वशः ॥ १० ॥
तिरोधानं हरीच्छातो निबंधादिषु वर्णितम् ॥
आविर्भावे तु सर्वं हि ब्रह्मैवेति न संशयः ॥ ११ ॥
रमणार्थमिदं सर्वं ब्रह्मैव स्वेच्छयाऽभवत् ॥
यथा सर्पः स्वेच्छया हि कुंडलाकारतां गतः ॥ १२ ॥
न विकारि तथा ब्रह्म व्यासैः सूत्रे निरूपितम् ॥
सुवर्णस्य विकारित्वं कामधेनोर्मणेरपि ॥ १३ ॥
आविर्भावतिरोभावौ पदार्थानां यतस्ततः ॥
नानित्यता तु विज्ञेया शास्त्रविद्भिर्विचक्षणैः ॥१४॥
तिरोभावे तु कार्यं हि वर्तते कारणात्मना ॥
आविर्भावे तु कार्यं हि यथा मृदि घटादयः ॥१५॥
यदानुभवयोग्यत्वं वर्तमानस्य वस्तुनः ॥
आविर्भावः स विज्ञेयस्तिरोभावस्ततोऽन्यथा ॥१६॥
प्रागभावादयो नांगीकार्या आभ्यां यतोऽखिलम् ॥
तद्विस्तरभिया नात्र लिख्यतेऽन्यत्र दृश्यताम् ॥१७॥
यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥

स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥ १८ ॥
इति भागवते पद्ये सर्वस्य ब्रह्मता स्मृता ॥
श्रुतिसूत्रैः स्मृतिगणैर्दृष्टिः स्वर्णार्थिनो यथा ॥१९॥
सुवर्णस्य च ये खंडाः कटका मुद्रिकादयः ॥
सुवर्णत्वेन गृह्णंति यथा ब्रह्मविदो मतिः ॥ २० ॥
यथा सोम्येत्यादिश्रुतौ स्पष्टमेव निरूपितम् ॥
तथा तत्त्वमसीत्यत्राऽभेदोंऽशांशिविचारतः ॥ २१ ॥
अत्रैव शांकराः प्रातर्मायिकं नश्वरं जगत् ॥
मायासंबंधतो ब्रह्म कारणं नान्यथैव हि ॥ २२ ॥
किंच जन्या त्वजन्या वा मायाऽद्ये जनको हि कः ॥
अन्याभावात्तु ब्रह्मैव सविशेषत्वमागतम् ॥ २३ ॥
द्वितीयेऽद्वैतभंगः स्यात् कादाचित्कं त्वसंगतम् ॥
आत्मैवेदमग्र आसीदित्यादिश्रुतिबाधतः ॥ २४ ॥
अनादित्वे तु सांतत्वमिति पक्षोऽप्यसंगतः ॥
अनादित्वे त्वनंतत्वं मायाया इति निश्चयात् ॥२५॥
एतन्मते सुनिष्पन्नं सांकर्यं कार्यकारणे ॥
तन्निवृत्त्यर्थमाचार्यैः पदं शुद्धं विशेषितम् ॥ २६ ॥
शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः ॥
अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः ॥ २७ ॥

मायासंबंधरहितं शुद्धमित्युच्यते बुधैः ॥
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम् ॥ २८ ॥
इति ब्रह्मविदां हार्दं शुद्धाद्वैतं श्रुतेर्मतम् ॥
तत्रोत्तमा मध्यमाश्च कनिष्ठा अधिकारिणः ॥ २९ ॥
तेषां प्रतीतिः प्रथमस्कंधे तु श्रीहुताशनैः ॥
इदं हि विश्वमित्यत्र सुबोधिन्यां निरूपितम् ॥ ३० ॥
सर्वं ब्रह्मैव तत्राद्ये द्वितीये भगवान् यथा ॥
तथा विश्वमिदं सर्वं ब्रह्मकार्यं निजेच्छया ॥ ३१ ॥
कार्यरूपेण भेदो हि न भेदः कारणात्मना ॥
भेदस्तत्र ह्यभेदोऽत्र तादात्म्यं परिकीर्तितम् ॥ ३२ ॥
तृतीये भगवान् भिन्नो जगतः कर्तृतः स्फुटम् ॥
इति द्वैतप्रतीतिस्तु श्रुतिबाधान्न गृह्यते ॥ ३३ ॥
शुद्धाद्वैतविदां या हि प्रतीतिः सोत्तमा मता ॥
भेदाभेदप्रतीतिस्तु मध्यमानां प्रकीर्तिता ॥ ३४ ॥
अतो हि मध्यमः पक्षः शुद्धाद्वैतानुरोधतः ॥
बोधाय बहुसंदर्भे गोस्वामिपुरुषोत्तमैः ॥ ३५ ॥
श्रीमदाचार्यचरणैर्यत्रक्कत्रापि दर्शितः ॥
निंबार्कभास्कराचार्यौ भेदाभेदनिरूपकौ ॥ ३६ ॥
तत्राद्यानां वास्तवः स भास्कराणामुपाधितः ॥

तत्राद्ये वास्तवो भेदो मध्वाचार्यवदेव हि ॥ ३७ ॥
विभिन्नांशाः सदा जीवा न स्वांशा इति निश्चयः॥
अभेदश्चित्त्वसाधर्म्यादेवं तेषां मतस्थितिः ॥ ३८ ॥
कनिष्ठा सा प्रतीतिस्तु नास्मन्मतमवेक्षते ॥
अभेदो वास्तवः स्वांशा जीवा इति निजे मते॥३९॥
भेदः कार्यतया जातः क्रीडार्थं तु हरीच्छया ॥
पश्चाल्लये कारणे हि स्थितिर्दृष्टा यथा मृदि ॥४०॥
पूर्वावस्था तु मृद्रूपा घटावस्था ततोऽभवत् ॥
घटोऽपि मृत्तिकारूपो लये पश्चात्तु मृत्तिका ॥४१॥
कार्यकारणयोरैक्यं स्वमते न परे मते ॥
नैवार्केनेदृशो मार्ग इति वोद्धव्यमंजसा ॥ ४२ ॥
सोपाधिको भास्करे हि स्वस्माद्भिन्नस्तु सर्वथा ॥
भेदपक्षे तु जीवानां सुखदुःखादिदानतः ॥ ४३ ॥
वैपम्यनैर्घृण्य इति दूषणे द्वे परे स्थिते ॥
अनादिकर्म चाश्रित्य समाधाने त्वनीशता॥ ४४॥
अत्रापि शांकराः शैवा माध्वा रामानुजादयः ॥
निंबार्का भास्करा भिक्षुर्येऽन्ये ते दोषसंश्रिताः॥४५॥
आत्मसृष्टेर्न वैषम्यं नैर्घृण्यं चापि विद्यते ॥
श्रीमदाचार्यचरणैर्निबंध इदमीरितम् ॥ ४६ ॥

श्रीमत्प्रभुवरैर्विद्वन्मंडनेऽपि निरूपितम् ॥
रमणार्थमिदं विश्वमुच्चनीचादिभावतः ॥ ४७ ॥
आत्मरूपं चकारातो हरिर्यस्मान्न दूषणम् ॥
शक्तिशक्तिमतोर्भेदाभेदो यः स न बाधकः ॥ ४८ ॥
तत्र भेदो न चैवास्ति शक्तेर्ब्रह्मत्वनिश्चयात् ॥
भिन्नत्वे तु जडत्वं स्याद्भेदो यो बोधनाय सः ॥४९॥
धर्मधर्मिविचारेऽपि ज्ञेयमेवं विचक्षणैः ॥
प्रकाशाश्रयदृष्टांतेऽप्यभेदो बोध्यते किल ॥ ५० ॥
अरूपवत्सूत्रवाक्ये धर्माणामपि ब्रह्मता ॥
निरूपिता प्रभुवरैः श्रीविद्वन्मंडने स्फुटम् ॥ ५१ ॥
अथ श्रीमन्निजाचार्यैर्निबंध इदमीरितम् ॥
यः सर्वत्रैव संतिष्ठन्नंतरः संस्पृशेन्न तत् ॥ ५२ ॥
शरीरं तं न वेदेत्यं योऽनुविश्य प्रकाशते ॥
इति तेन शरीरं तु हरेस्तु चिदचित्स्मृतम् ॥ ५३ ॥
जडजीवान्तःस्थितानां भेदे वस्तुनिरूपणेः ॥
तत्त्वत्रयं समायाति विशिष्टाद्वैतवादिनाम् ॥ ५४ ॥
रामानुजानामिति चेन्न दोषोऽस्मन्मते शृणु ॥
जडजीवांतरात्मान इति कार्यभिदाश्रिता ॥ ५५ ॥
बहु स्यां तु प्रजायेयेत्यादिश्रुतिषु वर्णनात् ॥

न कारणे भिदा ज्ञेया तत्रैकोऽहं निरूपणात् ॥५६॥
आत्मैवेदमग्र आसीदित्यादिषु च दर्शनात् ॥
तत्रैकाकी न रमते द्वितीयेच्छा निरूपिता ॥ ५७॥
श्रुतिविद्भिरतो ज्ञेयं ब्रह्मैकं नान्यदेव हि ॥
अन्यस्य च स्थितौ तत्र द्वितीयस्य च संभवात्॥५८॥
रमणार्थं द्वितीयेच्छा श्रुत्युक्ता भ्रमतामियात् ॥
एकोऽहमित्यपि मुधा तस्माच्छ्रुतिविरोधतः ॥ ५९ ॥
तत्त्वत्रयं कारणे हि त्याज्यमेव विचक्षणैः ॥
यत्र येनेति पद्ये तु निबंधेषु निरूपितम् ॥ ६० ॥
प्रकृतिः पुरुषश्चैव कालश्च हरिरेव हि ॥
एकमेवाद्वितीयं तु ब्रह्म सर्वत्र रूप्यते ॥ ६१ ॥
सर्वत्रैवेति पद्ये गोस्वामिश्रीपुरुषोत्तमैः ॥
सृष्टिकाले भगवतः शरीरं चिदचित्स्मृतम् ॥ ६२ ॥
अंतर्यामिण एतेन विशिष्टाद्वैतमेव यत् ॥
तदेकदेशि विज्ञेयमित्युक्तं तैर्विचक्षणैः ॥ ६३ ॥
शैवोऽप्येतेन विध्वस्तो यतस्तस्कर एव हि ॥
मायोपाधिककर्तृत्वं भैक्षवे दृश्यते तु यत् ॥ ६४ ॥
तन्मायिवादध्वस्तेन ध्वस्तप्रायं विशेषतः ॥
शाक्तानां तु मते ब्रह्म विश्वोपादानमेव हि ॥ ६५ ॥

निमित्तकारणं शक्तिर्विकारित्वभयादतः ॥
तत्रात्मनो विकारित्वं श्रुतिशास्त्रविरोधि हि ॥ ६६ ॥
प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥
सतोऽभिव्यंजकः कालो ब्रह्म तत्रितयं त्वहम् ॥६७॥
इति भागवते पद्ये उपादानत्वमीरितम् ॥
तद्विरुद्ध्येत मम तु ब्रह्मतो न पृथक् सा ॥ ६८ ॥
मरुत्त्वमिति पद्ये तु शांकराणां तु शांभवी ॥
परिणामं तु संप्राप्तेत्युक्तेर्बाधः प्रसज्यते ॥ ६९ ॥
पवनमयि पावकमयि क्षोणिमयि गगनमयि कृपीटमयि रविमयि शक्तिमयि दिङ्मयि ॥
समयमयि प्राणमयि शिवे पाहि ॥ ७० ॥
इति दुर्वाससा प्रोक्तं सर्वात्मत्वं विरुद्ध्यते ॥
सर्वोपनिषदो या हि ब्रह्मतत्त्वनिरूपिकाः ॥ ७१ ॥
नास्ति शक्तेर्वर्णनं हि कारणत्वं तु दूरतः ॥
व्यासैस्तु प्रकृतेः सर्वं कारणत्वं तिरस्कृतम् ॥ ७२ ॥
ब्रह्मणः समवायित्वनिमित्तत्वे निरूपिते ॥
ऋग्वेदे तु यतो देवीसूक्तमस्ति तु तत्र हि ॥ ७३ ॥
अहमेवं स्वयं वदामि जुष्टं देवेभिरुतमानुषेभिः ॥
यं कामये तं तमुग्रं कृणोमि ॥

तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ७४ ॥
अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वंतःसमुद्रे ॥
एवं श्रुतौ तु देव्यादौ स्वकारणतयोदितः ॥ ७५ ॥
पयोधिशायी यो विष्णुः स उक्तोऽतो न सा परा ॥
उग्रः कपर्दी श्रीकंठ इति कोशाच्छिवः स्मृतः ॥७६॥
अस्येति रुद्रो निर्दिष्टोऽहं रुद्रायेति वाक्यतः ॥
प्रक्रांतत्वात्पिता ब्रम्हा तद्योनिः शक्तिरत्र हि ॥७७॥
तस्यास्तु जनको विष्णुः सिंधुशायी निरूपितः ॥
अस्माकं व्यासचरणैर्यदुक्तं न ततोऽन्यथा ॥७८॥
अथातो ब्रह्मजिज्ञासेत्युक्त्वा तल्लक्षणेन हि ॥
जन्माद्यस्येत्यादिसूत्रैः कारणं ब्रह्म कीर्तितम् ॥७९॥
तंत्रशास्त्रेण चेद्रूपे तदवैदिकसंमतम् ॥
वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि॥८०॥
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥
एतद्विरुद्धं यत्सर्वं तन्मानं न कथंच न ॥८१॥
इति श्रीमन्निजाचार्यैरुक्तं तंत्राणि न प्रमा ॥
श्रीमदाचार्यचरणैरतएव निरूपितम् ॥ ८२ ॥
शाक्तास्तांश्चेत्ततोब्रूयुस्ते सन्मार्गाद्बहिष्कृताः ॥
इति सर्वेषु मार्गेषु दोषाः संति ततो हरिम् ॥ ८३ ॥

शुद्धाद्वैतावलंबेन भजेत सुविनिश्चितम् ॥
चेतस्तत्प्रवणं सेवा फलरूपा तु मानसी ॥ ८४ ॥
तत्सिद्ध्यर्थं देहवित्तजनिःकार्या ततो भवेत् ॥
संसारदुःखनाशो हि ब्रम्हतत्त्वावबोधनम् ॥ ८५ ॥
ब्रह्मज्ञस्य परप्राप्तिरानंदव्रततो स्फुटा ॥
मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥ ८६ ॥
इति वाक्यात्तु भक्तानामविद्याविनिवृत्तितः ॥
अलौकिकाकारसिद्ध्यै प्रवेशो हरिणोदितः ॥८७॥
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ॥
यं प्राप्य न निवर्तंते तद्धाम परमं मम ॥ ८८ ॥
इति वाक्येन भगवद्गृहं ब्रह्म प्रकीर्तितम् ॥
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥ ८९ ॥
इत्यग्रिमेण वाक्येन गेहाधीशो निरूपितः ॥
भक्त्या लाभो हि निर्दिष्टो भक्तिश्चाचार्यसंश्रयात् ९०
श्रीमदाचार्यचरणभजनादेव नान्यथा ॥
ब्रह्मभावं तु संपाद्य परमानुग्रहाद्विभुः ॥ ९१ ॥
गृहस्थितं स्वीयजीवं समुद्धरति यत्नतः ॥
उद्धृतौ परमक्लेशो विरहानलसंभवः ॥ ९२ ॥
यदा देहादिनाशाय समर्थो जायते तदा ॥

निजं श्रीमत्कृष्णचंद्रः स्वाधिकारानुसारतः ॥ ९३ ॥
परमानंदलीलां तामनुभावयति प्रभुः ॥
इति श्रीवल्लभाचार्यचरणाब्जकृपाभरात् ॥९४॥
प्राप्यते नान्यथाचैतद्ब्रह्मादीनां सुदुर्लभम् ॥
ये तु ज्ञानैकसन्निष्ठास्तेषां तु लय एव हि ॥ ९५ ॥
भक्तानामेव भवति लीलास्वादोऽतिदुर्लभः ॥
इतिश्रीश्रीमदाचार्यचरणाब्जप्रसादतः । प्रोक्तं गिरिधरेणेदं पश्यंतु हरिभावुकाः ॥ ९६ ॥ सूर्योदये शीतमपैति सर्वं मार्गावलोको जलजप्रकाशः ॥ तमोनिवृत्तिर्द्विजकर्मवृत्तिस्तथैव मार्तंडनिबंधबोधे ॥ ९७ ॥

इति श्रीमन्मुकुंदरायसहजमाधुरीपरमाऽनिर्वचनीयसरसवदनतामरससुधाहृदावगाहि श्रीमहाचार्यकृपापारसारश्रीमत्प्रभुचरणात्मकमहाराजश्रीयदुनाथकुलोद्भवगोस्वामिश्रीगोपालजनुषा श्रीगिरिधरेण विरचितः शुद्धाद्वैतमार्तंडः समाप्तः ॥

---

## अथ शुद्धाद्वैतमार्तंडग्रंथस्य परिष्कारः।

शुद्धाद्वैतविचारेण मायावादनिवर्तकान् ॥ श्रीमदाचार्यचरणान् प्रणमामि मुहुर्मुहुः ॥ १ ॥ अथ शुद्धाऽद्वैतस्य किंलक्षणमिति चेत् ॥ इतरसंबंधानवच्छिन्नकार्यकारणादिरूपद्वित्वप्रकारकज्ञानप्रतियोगिताका-

भावत्वमिति गृहाण । अत्र द्वित्वप्रकारकज्ञानप्रतियोगिताकाभाववत्त्वमित्यनेनैवेतरसंबंधानवच्छिन्नत्वप्रतीतेरनवच्छिन्नांतविशेषणस्य किं प्रयोजनमिति चेत् सत्यं कार्यकारणादिपदार्थस्य मायिकत्वाभावाय तत्तद्विशेषणम् । शंकराचार्याणां मते मायाविद्योपाध्यवच्छिन्नेश्वरजीवरूपकारणकार्ययोरशुद्धत्वात् अन्यथा तेषां मते कार्यकारणयोः शुद्धत्वे द्वैतापत्तिः । अतएव स्वरूपलक्षणे सत्यादिपदलक्ष्यमेव ब्रह्म । सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थित इत्युक्तेः । तत्रापि वदामः लक्षणायाः शक्यसंबंधरूपत्वात्तस्य च द्वित्वनिष्ठत्वाद्ब्रह्मणि सत्वेन वांताशित्वापातः । अथ संबंधस्यापि मायिकत्वमिति चेत् । लक्ष्यत्वरूपधर्मवत्त्वेन दोषस्तदवस्थः । लक्ष्यत्वमपि तथैव मायिकं चेत् ॥ भद्रं लक्षणावैयर्थ्यम् । किंच । लक्ष्यस्य तीरस्यागंगात्ववत् सत्यादिलक्ष्यस्यासत्यत्वादिपातः । उपाधिवादस्य च श्रीमदाचार्यचरणादिभिः खंडितत्वान्नेह तन्यते । अथ च संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति न्यायेन । विशेषणस्येतरभेदकत्वे मायासंबंधराहित्याभावादेव व्यावर्त्याभावादपी-

दमर्थविशेषणमिति चेत् । दत्तोत्तरत्वात् बोधाय निरूपणीयत्वेनेतरमतजन्यज्ञानस्य निरसनीयत्वात् । किंच संध्याधिकरणानुरोधेन स्वाप्निकसृष्टेर्मायिकत्वेन तद्व्यावृत्त्यर्थं वा तत् । स्वाप्नसृष्टेरवास्तवत्वेनास्याः सृष्टेश्च वास्तविकत्वेन भेदो वैधर्म्याच्च न स्वप्नादिवदिति सूत्रादिभिर्व्यासचरणैरेव प्रतिपादितः । इतरसंबंधविशेषणं तु ब्रह्मणो धर्मधर्मिभावसंबंधावच्छिन्नतया तस्यापि निरासे शंकरमतप्रवेशवारणाय ॥ तर्हि धर्मधर्मिभावसंबंधांगीकारे द्वित्वप्रतियोगिताकाभावाभावादव्याप्तिरिति चेत् । धर्मधर्मिभावस्याभिन्नत्वस्य प्रकाशाश्रयवत्त्वात्तेजस्त्वादित्यादिसूत्रे निर्णीतत्वात् ॥ परास्य शक्तिरित्यादिष्वभेदे एव षष्ठ्यंगीकाशत् । एतेन भेदाभेदवादिनौ निंबार्कभास्कराचार्यौ प्रत्युक्तौ । तत्राद्यस्य वास्तविकभेदाभेदत्वे मध्वाचार्यस्येव भेदस्य वास्तविकतया द्वित्वप्रकारकेत्यादिना निरस्तत्वात् । द्वितीयस्य त्वोपाधिकभेदाभेदे भेदस्योपाधिकत्वेनेतरसंबंधेत्यादिना व्यावर्तितत्वात् । तर्हि अवच्छिन्नांतमेव तदिति चेत् शंकरमतापत्तिः अतः कार्यादिति । तर्हि रामानुजाचा·

र्यमतेऽपि मायासंबंधाभाववत्कार्यकारणयोरद्वैततया तन्मतप्रवेश इति चेच्छृणु । तन्मते हि चिदचिद्विशिष्टस्य सूक्ष्मस्थूलस्य कारणस्य कार्यस्य च सत्वेन आत्मैवेदमग्र आसीदित्यादिश्रुत्याऽन्वितः कारणावस्थायां निषेधात् । केवलात्मनः कारणतया ततो वैलक्षण्यम् । कार्यावस्थायामपि तेषांमते परस्परभेदस्य वास्तविकत्वेन स्वमतेऽभेदस्य वास्तविकत्वेनापि वैलक्षण्यम् । नच घटपटादीनामभेदो न संभवतीति वाच्यम् । सर्वेषां ब्रह्मोपादानस्यैकत्वेन तस्यैवावस्थांतरत्वेन चाभेदात् । यथा सुप्त उत्थित उपविष्टे च पुरुषे अवस्थाभेदेऽपि पुरुषाभेदः । किंच । इतरसंबंधानवच्छिन्नत्वेनाचित्तो वास्तविकभिन्नचितश्च निरासेन तत्रातिव्याप्तिः । किंच विशिष्टाद्वैतमित्यस्य विशेषणविशिष्टत्वेन विशेषणस्य चेतरव्यावर्तकत्वेन संभवोपेक्षितोऽत्र व्यावर्त्याभावतया वैशिष्ट्यकथनं नोपपद्यत इति । एतेन शैवोऽपि दत्तोत्तरः ॥ भिक्षुस्तविभागाद्वैतवादमवलंब्योपाधिकर्तृत्वादिकमंगीचकार तदपि रससंबंधावच्छिन्नाभावत्वेन निरस्तं द्वित्वप्रकारकाद्यभावत्वात्तेन मध्वाचार्यमतस्य निरासः

लीलास्थभावस्य बाधाभावाय कार्यकारणादिरूप-मिति ज्ञानस्य विशेषणम् । द्वित्वप्रतियोगिताकाभा-वस्य मायापवादमतेऽपीष्टत्वात्तन्निवारणाय ज्ञानस्येति प्रतियोगिनि विशेषणमिति सुष्ठु । अत्र शुद्धाद्वैत-पदे कोऽसौ समास इति चेत् शुद्धं च तदद्वैतं चेति कर्मधारयः ॥ अत्रैतदसंबंधानवच्छिन्नत्वे सतीत्येवं योज्यम् ॥ उक्तलक्षणं तु शुद्धयोः कार्यकारणयोरिति षष्ठीतत्पुरुषपक्षे बोध्यम् ॥ अत्र नृसिंहतापिन्यां योनित्वं ब्रह्मणः समर्थयित्वा सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वावस्थासु तथाप्यल्पा इत्याद्युक्त्वा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरंजनो विभुरद्वयः आनंदः परः प्रत्येकरसः प्रमाणैरेतैरव-गम्यते इति वाक्यं पठितम् ॥ अग्रे च सर्वमत एव शुद्धोऽबाध्यस्वरूप आत्मेति निरूपितं शुद्धे शुद्ध-मासिक्तं तादृगेव भवति ॥ सर्वं खल्विदं ब्रह्मेत्यादिश्रु-तिषु शुद्धाद्वैतं स्पष्टमेव प्रतीयत इति बोध्यम् ॥ विस्त-रस्तु शुद्धाद्वैतमार्तंडे श्रीमदाराध्यचरणैर्निरूपितः अस्मत्कृततद्विवरणे मार्तंडप्रकाशनामकेऽपि बोध्यः॥

श्रीमद्गिरिधराधीशपादांबुजपरागहृत् ॥ व्यलिखद्रामकृष्णोऽसौ शुद्धाद्वैतपरिष्कृतिम् ॥

इति श्रीमत्प्रभुचरणात्मजाश्रयमहाराजकुलकमलविभाकरगोस्वामि श्रीगोपालात्मजनिश्रीमद्गिरिधरचरणदासानुदासपरंपराप्राप्तराज्यरामकृष्णेन गुंफितः शुद्धाद्वैतपरिष्कारः समाप्तः ।

---

श्रीवल्लभमतानुसारिणः स्फुटग्रंथाः ॥

## तत्र गोवर्धनधराष्टकस्तोत्रम् ।

श्रीकृष्णाय नमः ।

गोपनारीमुखांभोजभास्करं वेणुवाद्यकम् ॥
राधिकारसभोक्तारं गोवर्धनधरं भजे ॥ १ ॥
आभीरनागरीप्राणप्रियं सत्यपराक्रमम् ॥
स्वभृत्यभयभेत्तारं गोवर्धनधरं भजे ॥ २ ॥
व्रजस्त्रीविप्रयोगाग्निनिवारकमहर्निशम् ॥
महामरकतश्यामं गोवर्धनधरं भजे ॥ ३ ॥
नवकंजनिभाक्षं च गोपीजनमनोहरम् ॥
वनमालाधरं शश्वद्गोवर्धनधरं भजे ॥ ४ ॥
भक्तवांछाकल्पवृक्षं नवनीतपयोमुखम् ॥
यशोदामातृसानंदं गोवर्धनधरं भजे ॥ ५ ॥
अनन्यकृतहृद्भावपूरकं पीतवाससम् ॥

रासमंडलमध्यस्थं गोवर्धनधरं भजे ॥ ६ ॥
ध्वजवज्रादिसच्चिन्हराजच्चरणपंकजम् ॥
शृंगाररसमर्मज्ञं गोवर्धनधरं भजे ॥ ७ ॥
पुरुहूतमहावृष्टिनाशकं गोगणावृतम् ॥
भक्तनेत्रचकोरेंदुं गोवर्धनधरं भजे ॥ ८ ॥
गोवर्धनधराष्टकमिदं यः प्रपठेत्सुधीः ॥
सर्वदानन्यभावेन स कृष्णे रतिमाप्नुयात् ॥ ९ ॥
रचितं भक्तिलाभाय धारकानां सनातनम् ॥
मुक्तिदं सर्वजंतूनां गोवर्धनधराष्टकम् ॥ १० ॥
इति श्रीगोकुलचंद्रकृतं श्रीगोवर्धनधराष्टकस्तोत्रं समाप्तम् ।

## अथ प्रेमामृतरसायनं राधिकास्तोत्रम् ।

श्रीकृष्णाय नमः ।

राधाविहारसंतप्तो मनःसंतापशांतये ॥
तत्संगं संस्मरन् कृष्णो जल्पतीदं मुहुर्मुहुः ॥ १ ॥
राधिका राधिकाज्योत्स्नाव्रजभूमिर्व्रजोत्सवा ॥
व्रजसीमंतिनीरत्नमानंदानंददायिनी ॥ २ ॥
वृषभानुकुलोत्तंसमंजरी मानवर्धिनी ॥
अंभोजन्ममुखस्पर्शा सुवर्णसुकलेवरा ॥ ३ ॥
मेघमध्यज्वलद्विद्युच्छोभाक्रान्मूर्धभूषणा ॥

सहसिंदूरसीमंतरसनीरमहासरित् ॥ ४ ॥
भ्रमद्भ्रमरमंदारसुमनोहरकुंतला ॥
पूर्णशारदचंद्रश्रीजित्वराननीरजा ॥ ५ ॥
ललाटमध्यसिंदूरचंद्रिकोत्तमराजिता ॥
भ्रूवल्लीचलनप्रेयोमनश्चांचल्यकारिणी ॥ ६ ॥
नीलनीरजजित्कर्णालिलंबयिषुलोचना ॥
रससागरमर्यादाजनरेखांकलोचना ॥ ७ ॥
विचित्ररसवन्नेत्रप्रांतालोकनदक्षिणा ॥
तिलप्रसूनजिन्नासामुक्ता मंजुतराधरा ॥ ८ ॥
कुंडलाहस्करद्वंद्वप्रभाधिक्यास्यचंद्रमा ॥
चित्ररत्नमयोत्तंसा चित्रगंडस्थलच्छविः ॥ ९ ॥
सुनिर्मितघनीभूतशोणश्लक्ष्णसुधाधरा ॥
दशनालिमयूखश्रीदाडिमीबीजकीर्तिकृत् ॥ १० ॥
वचोवक्रिममाधुर्यहृदयाकर्षणक्षमा ॥
श्वाससौरभसंतापाहतानंगशिलीमुखा ॥ ११ ॥
सुधाब्धिमग्ननीलाश्मशैलश्रीचिबुकांकिनी ॥
स्वर्णवल्लीसमुद्भूतसरोजच्छविसन्मुखी ॥ १२ ॥
ग्रैवेयविलसद्ग्रीवाकंठश्रीपरिभाविनी ॥
लावकेतरभृत्पारावतमंजुलकूजिता ॥ १३ ॥

पीवरोन्नतरम्यांसधन्यबाहुस्थितिप्रदा ॥
चित्ररत्नांगदोद्दामबाहुवल्लीमतल्लिका ॥ १४ ॥
कंकणासितरत्नालिभृंगराजत्करांबुजा ॥
सतांबूलकरच्छायाहरिभृंगारुणाब्जजित् ॥ १५ ॥
मारभूबाणसौभाग्यनखमंडलमंडिता ॥
चित्रांगसहजच्छायाविराजत्कंचुकीपटा ॥ १६ ॥
कंचुकीबंधनिर्भेदकामवक्षोजमंडला ॥
अनुमेयोदरी नाभिकंदर्पक्रीडनह्रदा ॥ १७ ॥
पूर्णनाभिनदोद्गच्छदसरम्यसरिद्युगा ॥
सदास्यस्मरभूपालस्वर्णवेदिकटिद्वया ॥ १८ ॥
कंचुकीपटसंराजन्नितंबस्पर्शवेणिका ॥
स्वर्णरत्नकणत्कांचीराजज्जघनमंडला ॥ १९ ॥
करीश्वरकरा काचित्सुखस्पर्शघनोरुभृत् ॥
ऊरुजंघामहाशोभासीमाकंजानुशोभिना ॥ २० ॥
कदलीवनफुल्लाब्जतुल्यकांतिपदद्वया ॥
सर्वसौभाग्यरेखालीराजच्चरणपल्लवा ॥ २१ ॥
चलन्नूपुरनीरावव्यालभर्त्सितहंसिका ॥
पदाब्जनखचंद्रालीचंद्रिकाखिलतापहृत् ॥ २२ ॥
स्वराभिज्ञानमृत्कंठीतालादिवाद्यकोविदा ॥

तांडवज्ञा सदालास्यप्रवर्तनविचक्षणा ॥ २३ ॥
रासोल्लासमदोन्मत्ता निकुंजसुरतोत्सुका ॥
प्रियवृंदावनावासा नाट्यकेलीकुतूहला ॥ २४ ॥
सदामोदभरोत्सीमपरिहासतरंगिणी ॥
नानानखांकनप्रज्ञा नानाश्लेषविचक्षणा ॥ २५ ॥
नानाचुंबनविज्ञाना नानाबंधमहोत्सवा ॥
नानाकेलिक्रियाभिज्ञा सर्वदा यौवनोन्मदा ॥ २६ ॥
समग्रनायकानंददायिन्येषा सदानना ॥
मोहनोक्तिः सुमोहाक्षा सर्वांगाधीनमोहना ॥ २७ ॥
शृंगारादिरसाभिज्ञा मनोरमणदक्षिणा ॥
माधुर्यांभोधिसारंगी सर्वभाषाविभाषिणी ॥ २८ ॥
नानाभावसमुद्गारिलोकना सर्वभाववित् ॥
दूरं व्यक्तिसहातापा निकटस्थिततापहृत् ॥ २९ ॥
सर्वसौभाग्यसर्वांगीसर्वसौभाग्यदुःखहृत् ॥
सौभाग्यवस्तुसंदृश्या सर्वसौभाग्यवर्धिनी ॥ ३० ॥
प्रिया प्रियंवदा प्रेमकर्त्री शीघ्रप्रसादकृत् ॥
ब्रम्हानंदाधिकस्पर्शा ब्रम्हसृष्टिबहिर्भवा ॥ ३१ ॥
मनोऽवस्थिवभावज्ञा मनोभावानुवर्तिनी ॥
सदामनोभवव्याप्ता मनोजस्त्रीयशोहरी ॥ ३२ ॥

निगूहयागूढभावा सर्वभूषणभूषणा ॥
सुस्मया विस्मयस्थानरूपा मंजुस्थितानना ॥ ३३ ॥
सुशीलासुमनाःस्वल्पकृतिज्ञा सुसरस्वती ॥
रतिश्रांतश्रमांभोभृन्मलयानिलसेविता ॥ ३४ ॥
प्रेयस्याः प्रेयसा प्रोक्तं प्रेमामृतरसायनम् ॥
यः पठेच्छृणुयाच्चेदं राधावत्स प्रियो भवेत् ॥ ३५ ॥

इति श्रीमहादेवद्विवेदिविरचितं श्रीप्रेमामृतरसायनं नाम राधिकास्तोत्रं समाप्तम् ।

---

## अथ श्रीकृष्णस्तवराजस्तोत्रम् ।

श्रीकृष्णाय नमः ।

अनंतकंदर्पकलाविलासं किशोरचंद्रं रसिकेंद्रशेखरम् ॥ श्यामं महासुंदरतानिधानं श्रीकृष्णचंद्रं शरणं गतोऽस्मि ॥ १ ॥ अनंतविद्युद्द्युतिचारुपीतं कौशेयसंवीतनितंबबिंबम् ॥ अनंतमेघच्छविदिव्यमूर्तिं श्रीकृष्णचंद्रं शरणं गतोऽस्मि ॥ २ ॥ महेंद्रचापच्छविपिच्छचूडं कस्तूरिकाचित्रकशोभिमालम् ॥ मंदादरोद्घूर्णविशालनेत्रं श्रीकृष्णचंद्रं शरणं गतोऽस्मि ॥ ३ ॥ भ्राजिष्णुगल्लं मकरांकितेन विचित्ररत्नोज्ज्वलकुंडलेन ॥ कोटींदुलावण्यमुखारविंदं श्रीकृष्ण-

चंद्रं शरणं गतोऽस्मि ॥ ४ ॥ वृंदाटवीमंजुलकुंजवाद्यं श्रीराधया सार्धमुदारकेलिम् ॥ आनंदपुंजं ललितादिदृश्यं श्रीकृष्णचंद्रं शरणं गतोऽस्मि ॥ ५ ॥ महार्हकेयूरककंकणश्रीग्रैवेयहारावलिमुद्रिकाभिः ॥ विभूषितं किंकिणिनूपुराभ्यां श्रीकृष्णचंद्रं शरणं गतोऽस्मि ॥६॥ विचित्ररत्नोज्ज्वलदिव्यवासाप्रगीतरामागुणरूपलीलम् ॥ मुहुर्मुहुः प्रोद्दितरोमहर्षं श्रीकृष्णचंद्रं शरणं गतोऽस्मि ॥७॥ श्रीराधिकेयाधरसेवनेन माद्यंतनुच्चै रतिकेलिलोलम् ॥ स्मरोन्मदांधं रसिकेंद्रमौलिं श्रीकृष्णचंद्रं शरणं गतोऽस्मि ॥ ८ ॥ अंके निधाय प्रणयेन राधां मुहुर्मुहुश्चुंबिततन्मुखेंदुः ॥ विचित्रवेषैः कृततद्विभूषणं श्रीकृष्णचंद्रं शरणं गतोऽस्मि ॥ ९ ॥

इति श्रीकृष्णदासविरचितं श्रीकृष्णस्तवः समाप्तम् ।

---

# अथ श्रीबालकृष्णाष्टकम् ।

श्रीकृष्णाय नमः

श्रीमन्नंदयशोदाहृदयस्थितभावतत्परो भगवान् ॥
पुत्रीकृतनिजरूपः स जयति पुरतः कृपालुर्बालकृष्णः १
कथमपि रिंगणमकरोदंगणगतजानुघर्षणोद्युक्तः ॥
कटितटकिंकिणिजालस्वनशंकितमानसःसदाह्यास्ते २

विकसितपंकजनयनः प्रकटितहर्षः सदैव धूसरांगः ॥
परिगच्छति कटिभंगप्रसरीकृतपाणियुग्माभ्याम् ॥३॥
उपलक्षितदधिभांडः स्फुरितब्रह्मांडविग्रहो भुंक्ते ॥
मुष्टीकृतनवनीतः परमपुनीतो मुग्धभावात्मा ॥४॥
नम्रीकृतविधुवदनः प्रकटीकृतचौर्यगोपनप्रयासः ॥
स्वांबोत्संगविलासः क्षुधितः संप्रति दृश्यते स्तनार्थी ५
सिंहनखाकृतिभूषणभूषितहृदयः सुशोभते नित्यम् ॥
कुंडलमंडितगंडः सांजननयनो निरंजनः शेते ॥६॥
कार्यासक्तयशोदागृहकर्मवरोधकः सदास्ते ॥
तस्याः स्वांतनिविष्टप्रणयप्रभाजनो यतोऽयम् ॥७॥
इत्थं व्रजपतितरुणी नमनीयं ब्रह्मरुद्राद्यैः ॥
कमनीयं निजसूनुं लालयति स्म प्रत्यहं प्रीत्या ॥८॥
श्रीमद्वल्लभकृपया विशदीकृतमेतदष्टकं पठेद्यः ॥
तस्य दयानिधिकृष्णे भक्तिः प्रेमैकलक्षणा शीघ्रम्॥९॥

इति श्रीकृष्णदासविरचितं बालकृष्णाष्टकं समाप्तम् ।

---

## अथ वल्लभनमस्कृतिः ।

श्रीकृष्णाय नमः ।

व्रजललनाहृदि रुद्धं तासां भावः प्रकटितो भूमौ ॥
प्राप्य प्रेमाद्रिनिभप्रांते लीलाफलैः पूर्णम् ॥ १ ॥

यत्कृपया गिरिधारीरूपं स्वस्यानुभावगतम् ॥
श्रीमद्वल्लभरायं वंदे तद्दासदासोऽहम् ॥ २ ॥
अनुरागरसाक्तसुरंजितहक्प्रभुचित्रचरित्रपवित्रहृदम्
गमिता सकलं परिहृत्य सदा वदनानलदासमहंशर-
णम् ॥ ३ ॥

इति वल्लभनमस्कृतिः समाप्ता ।

---



श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरे

## मुंबइस्थ गोस्वामी श्रीजीवनजीकृतग्रंथाः ।

## तत्र श्रीबालकृष्णाष्टकम् ।

श्रीकृष्णाय नमः ।

यत्कृपादृष्टिसद्वृष्टिसिक्ता भक्ता निरंतरम् ॥
भवंति सुखिनः स्निग्धास्तं श्रीबालहरिं भजे ॥ १ ॥
प्रतिपक्षक्षयात् क्षोण्यां मंक्षु जातं महद्यशः ॥
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ २ ॥
स्वीयविश्लेषजक्लेशो नष्टः पुष्टः सुखोदधिः ॥
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ३ ॥
सुस्थिरं सुदृढं पूर्णं प्रियं प्राप्येत सत्वरम् ॥
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ४ ॥
सुसंपदा सत्कलया तद्विद्यावृद्धिगामिनी ॥
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ५ ॥
अनन्या हैतुकी पूर्णा सा भक्तिः सुदृढा भवेत् ॥
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ६ ॥
इयत्तारहितो नित्य आनंदः प्राप्यतेऽनिशम् ॥



श्रीमद्गोस्वामिश्रीजीवनेशाचार्यचरणाः ॥

प्रादुर्भाव सं० १८८४ मार्गशीर्ष शुक्ल पंचम्याम्

यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ७ ॥
श्रीवल्लभेशपादाब्जे रतिः स्याद्विमला परा ॥
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ८ ॥
अष्टकं श्रीबालहरेरिदं मंगलकृत्प्रियम् ॥
पठेद्वा शृणुयाद्भक्त्या फलं विंदेत्सर्ववांछितम् ॥ ९ ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीमद्गोकुलोत्सवात्मजश्रीजीवनजीविरचितं श्रीबालकृष्णाष्टकं संपूर्णम् ।

---

# अथ रासक्रीडावर्णनवर्णक्रमार्याः ।

श्रीकृष्णाय नमः ।

श्रीमद्बालककृष्णं वंदेऽहं नंदमंदिरेऽमंदम् ॥
क्रीडंतं च यशोदोत्संगे तल्लालितं ललितममितम् ॥
कमनीयैरथ कमलैः कलितायाः किलकलिंदजातायाः
कूले कृष्णश्चक्रे कलनिनदं कामवृद्धिकृद्दृश्याः ॥ २ ॥
खंजनगंजनसुदृशस्तं जननेत्रोत्सवं तदा द्रष्टुम् ॥
विकला आसन् सकलास्तच्छ्रुत्वा शारदं विलोक्य
विधुम् ॥ ३ ॥ गंतुं गोकुलसुखकृन्निकटं रंतुं कलिंदजाकूले ॥ निरयुः सदनं त्यक्त्वा मदनं मत्वा सहायभूतं किम् ॥ ४ ॥ घनसदृशं कांत्या तं तापनिवृत्त्या तथा रसार्द्रतया ॥ प्रापुः पायोनिधिमिव नद्यः

सद्यः समुत्सुका गोप्यः ॥ ५ ॥ ङाक्षरमिव बहीभिर्गोपीभिर्गोकुलं परित्यक्तम् ॥ गोकुलसंकुलितं किल भाषाभिः प्राकृतीभिराभिस्तत् ॥ ६ ॥ चंचच्चरणसुनूपुरसिंजितरंचितमनोभवा दृष्ट्वा ॥ जलदाभं ताः प्रेष्ठं विजहुस्तापं मनोभवेषु भवम् ॥ ७ ॥ छदचयनिबिडतमालप्रभहरिरेवं जगाद बहुमानम् ॥ कृत्वा स्मितमतिरम्यं गम्यं योगेश्वरैर्न वा योगैः ॥८॥ जलजपरागसुसौरभशीतलपवमानयुग्वनं दृष्टम् ॥ निबिडतमालरसालप्रभृतिसुशोभं शकुंतकुलनिनदम् ॥ ९ ॥ झषनिकुरंटसुघोरा रविजा रात्रिर्भयानका च वनम् ॥ तच्चरनिचयैर्भयदं तस्माद्गच्छंतु गोकुलं शीघ्रम् ॥ १० ॥ ञइव सनासास्थानः सुंदरमुक्तामणिस्त्वरुक्श्वासैः ॥ आसीत्तं परिमार्ष्टुं नेत्राब्जादश्रु वै तदा समगात् ॥११॥ टंकृतिमिव धनुषस्ता वचनसुरचनां निपीय कर्णाभ्याम् ॥ अबलाः प्रेष्ठस्य तदा तथाविधाः संबभूवुरतिभयदाम् ॥१२॥ ठं मत्वा स्वमनोपितममिता दैन्यं समाययुस्तत्रितम् ॥ तद्रमणाशानेत्राकृष्टा गेहं नवागमन् बालाः ॥१३॥ दाडिमबीजतिरस्कृतिनिपुणरदाडिमशोभित

दनाभिः ॥ चिक्रीडासां दैन्यं मत्वा स्मित्वा कृपानिधिः कृष्णः ॥१४॥ द्राकृत्यलकस्रुचलनैः शोभिपयोधरयुगोल्लसत्स्त्रीकाः ॥ ननृतुर्जगुः महद्या हसितालापेक्षणादिभिर्वामाः ॥१५॥ णइव सुवर्णानां ननु मध्यगतोऽसौ रराज निचयस्य ॥ उडुपतिरिव भकदंबैः समावृतोऽगात्क्षितिं समनुभवितुम् ॥१६॥ तरलाविरलमिलिंदाकलितं तज्झंकृतिप्रशब्दं तत्॥ चंद्रकरैः संवलितं सुमपरिमलितं वनं बभौ ललितम् ॥१७॥ थुंकिटधुमिकिटधाधाप्रभृतिमृदंगोद्भवैः प्रियैः शब्दैः॥ गीतिर्वीणा नृत्यं सर्वं समभवदतीव सुखदं तत् ॥ १८ ॥ दयितांगस्पर्शोत्थितसौख्यामृतसेचनेन तासां द्राक् ॥ हृच्छयकृपीटजन्मा शांतोऽभूदुग्रवेगवद्भुतापः ॥१९॥ धन्या वयं न चान्याः क्षितिदेशे तासु मत्तकाशिन्यः॥ यो योगैर्नहि साध्यो यदभूत्ताहक्समेनिरे गोप्यः॥२०॥ नंदात्मजोऽय मत्वागर्वाद्यारोहणं तदा तासाम् ॥ तस्मान्निवर्तयितुमिह यूथे सोंऽतर्दधे हरिस्तास्तु २१ पार्श्वगतं निजनाथं दूरस्थं तं विलोक्य विह्वलिताः ॥ सकला अपि किल विकला जाता बाला घने वने मंक्षु ॥ २२ ॥ फलसकदंबतमालान् सरलामलकौ रसा-

लमंदारौ ॥ पाटलचंपककुंदान् पृच्छंत्यस्ता विचेतुं रथ कृष्णम् ॥ २३ ॥ बत ननु वसुंधरे तव कंटकितं विग्रहं हरेर्मन्ये ॥ पादस्पर्शोत्सवतः किंवा कोलावतारपरिरंभात् ॥ २४ ॥ भूरिफलैः कुसुमैरपि पर्याप्तं तव वने विचरणं यत् ॥ विपुलेक्षणासि तरले कृष्णमृगि त्वं वदस्व कृष्णगतिम् ॥ २५ ॥ मिलिता ललितां क्रीडां कृष्णकृतां कंजलोचनाः कांताः ॥ कुर्वंत्यः किल ददृशुर्विश्लिष्टां प्रेष्ठसहचरीं दीनाम् २६ यमुनापुलिनं गहनं मत्वा तत्काननं भृशं तमसा ॥ आययुरबलाः सकलाः कृष्णदिदृक्षानुविद्धहृदया वै ॥ २७ ॥ रमणप्रिय रक्षां कुरु विरहानलतः स्मरेषुतः शीघ्रम् ॥ इति गायंत्यो रुरुदुर्व्रजवध्वस्तं दिदृक्षया रम्यम् ॥ २८ ॥ लावण्यामृतजलधिः कृष्णः प्रादुर्बभूव तद्दैन्यम् ॥ हृदि धृत्वा स्मित्वा ननु मदनमदनः स्वलंकृतस्त्वरितम् ॥ २९ ॥ विधुवदना उत्तस्थुः प्राणागमनेन पुद्गलानि यथा ॥ ईक्षणहसितालिंगनसंलापाद्यैर्जहुर्भृशं तापम् ॥ ३० ॥ शशिकरनिकरैरमलैः कलितेऽस्मिन्सूर्यजातटे मृदुले ॥ रेणुचयेऽक्रीडे द्रुमसुमनिचयैः सुगंधविच्छुरिते ॥ ३१ ॥

षट्पद इव कुसुमानां मकरंदं कानने मुदा तरलः ॥
कृष्णः सोऽनुबभूव क्रीडासौख्यं वधूटीनाम् ॥३२॥
सुंदरसरितः सलिले श्रीकृष्णः सुंदरीजनैः सार्धम् ॥
विजहार स्तंबेरम इव करिणीभिर्मदोद्धतः सौख्यात्
॥ ३३ ॥ हरिहंसासनहरहरिहिमकरमुख्या दिवौकस-
स्सर्वे ॥ मुमुहुर्विशेषतस्तां रासक्रीडां निरीक्ष्य कृष्णस्य
३४ ललितैर्वाद्यैर्गीतैः प्रवर्धितो नर्तनेऽभिलापस्तैः ॥
कृष्णः स्वांते कांताजनस्य दिविपक्कशीलवैः शरदि३५
क्षणमिव मत्वा क्षणदां बाला रासक्षणे विहृतिदक्षाः ॥
जग्मुः सदनं तदनुज्ञातः सततं तदीक्षणानंदाः॥३६॥
ज्ञानिजनैर्दुर्ज्ञेयः सततं व्रजसुंदरीजनैर्मुग्धैः ॥
प्रीतिगुणैर्बद्धो यः सोऽव्यान्नंदनंदनः सततम् ३७
श्रीवल्लभान्ववायक्षीरांभोधिप्रभूतराजोऽसौ ॥
श्रीगोवर्धनसंज्ञः सततं लोके प्रकाशते विमलः ३८
वेदेंदुनंदपृथ्वीमितवर्षे विक्रमस्य काश्यां वै ॥
मासे भाद्रपदे सितपक्षे प्रतिपद्दिने धिषणयुक्ते॥३९॥
श्रीगोकुलोत्सवात्मजजीवनजीशर्मणा प्रबंधोऽयम् ॥
वर्णक्रमानुरोधादार्यावृत्तेन संरचितः ॥ ४० ॥

इति श्रीमद्गोकुलोत्सवात्मजश्रीजीवनजीविरचिता
रासक्रीडावर्णनवर्णक्रमार्याः समाप्ताः ।

# अथ श्रीविठ्ठलस्तोत्रम् ।

श्रीविठ्ठलेशो जयति ।

श्रीविठ्ठलं नतोऽस्मि श्रीवल्लभवल्लभं सुमार्तंडम् ॥
श्रीपुंडरीकसुखदं रुक्मिण्या वल्लभं परमरुचिरम् ॥१॥
श्रीविठ्ठलेत्यभिख्यां पूर्णां युक्तां विधातुमिह निकटे॥
कृत्वेमां वैदर्भीं कमलां कमलेक्षण स्थितोऽसि विभो २
पतितानुद्धृत्य त्वं संख्याऽतीतान्विदा विहीनतरान् ॥
श्रांतो भृशं ततः किल कटिदेशे धृतकरोऽसि करुणा-
ऽघे ॥ ३ ॥ धृतमनुजाऽऽकृतिरस्म्यहमथाऽपि लोके-
ऽस्ति कोऽपि मत्सदृशः॥ इति परिचिचीषया त्वं परि-
रंभणउत्सुकोऽसि लोकानाम् ॥ ४ ॥ संसारोष्णक-
रोद्भवतापनिवृत्त्यै रसस्वरूपहरे ॥ सांद्रघनाभं धृत्वा
विग्रहमन्यादृशं स्थितोऽसि किल ॥ ५ ॥ दरवरमथ
ते करगं दृष्ट्वा संसारदरदरं दरताम् ॥ अदरांमभज-
न्नरवर शशधरकरभरमिवांधकारभरः ॥ ६ ॥ स्वीय-
जनाऽभयदाने दक्षिणहस्तोऽस्ति युक्तसंज्ञो मे ॥
इति तथ्यं सूचयितुं नालीकं संनिभर्षि तस्मिंस्त्वम्॥७॥
त्वयि पुंडरीकसुखदे गोगणसंवेष्टिते त्रयीनिलये ॥
पापांधनाशकत्वं युक्तं संज्ञासुखप्रदेऽक्षिचरे ॥ ८ ॥

दाक्षिण्यं स्वीकर्तुं देशेऽस्मिंस्त्वं स्थितोऽसि यदपि विभो ॥ वामत्वं त्वय्यासं स्वीयव्रजमात्यजत्यहो विमलम् ॥ ९ ॥ ध्यायं ध्यायं नित्यं शैलं गोवर्धनं प्रियं दासम् ॥ तद्विप्रयोगयोगात् शैलसुरूपं भजस्यथो मौनम् ॥ १० ॥ स्वर्गं वाणीं पृथ्वीं धेनुं करणानि पास्यजस्रमये ॥ तत्सूचनाय विभुरपि गोपाकृतिकः स्थितोऽसि देशेऽस्मिन् ॥ ११ ॥ सेष्टकमथ पादयुगं मम तस्मादिष्टसिद्धये भजत ॥ सौख्याऽऽस्यै सूचयितुं पादयुगे सेष्टकोऽसि तत्सुखद ॥ १२ ॥ स्वचरणनलिनोद्भूतां तटिनीमुग्रोत्तमांगसंपर्कात् ॥ दोषाऽऽकरनैकट्याद्भीमाऽभिख्यायुतामिमां मत्वा ॥ १३ ॥ युक्तार्था त्वं मा भव मद्भक्तेष्वथ भवाऽघसेनायाम् ॥ इति शिक्षयितुं नित्यं तटदेशे वासतत्परोऽस्यस्याः ॥ १४ ॥ सुद्विजगणसेव्यस्त्वं सुमनोयुक्तः सुपर्णकः फलदः ॥ समघननीलः कल्पद्रुमकल्पोऽनल्पपंचशाखोऽसि ॥ १५ ॥ सन्मानसवर्ती श्रीस्थानं त्वं सन्निलिंपगणसेव्यः ॥ हंसकरैः पूज्यः किल रक्तोऽन्तमोदः प्रसन्नश्च ॥ १६ ॥ प्रियपुंडरीकभक्ताऽऽसक्तेः प्राप्तस्तदीयसाजात्यम् ॥ किंवा त्वत्सारूप्याल्लोके ख्यातः

सपुंडरीक इति ॥१७॥ श्रितपुंडरीकतटितीरे लक्ष्या-
गतिर्हि युक्ततमा ॥ तव किल निलिंपभर्तुर्द्रुमसुम-
शोभेऽस्ति कृष्णरसिकवर ॥१८॥ सालोक्यं सामीप्यं
लोकेऽस्मिन् पापकारिणां नियतम् ॥ दुर्लभमपि दत्तं
तन्मत्सदृशायाऽथविठ्ठलोऽसि ततः ॥ १९ ॥ नखरो-
डुपैः परीतं चरणतरण्योर्युगं पुरा रचितम् ॥ यद्यपि
मम मत्वा तथाविधं निश्चितं हि मामस्मिन् ॥ २० ॥
स्मरणाऽभिधसूर्यस्तव संसाराऽब्धिं ह्यशुशुषच्छ्रेष्ठः ॥
नामामृतबहुवृष्ट्या पंकं निःशेषतामगात्पश्चात् ॥२१॥
तेन स्वच्छतरोऽहं सोत्कंठः स्वच्छवर्त्मना क्षिप्रम् ॥
उपकंठं ते भूमन् संप्राप्तः किल दयाऽमृताब्धिवर॥२२॥
पतितोद्धरणजबिरुदं लोकप्रख्यातमादितस्तस्मात् ॥
एतच्छ्रमनिरतोऽभूर्नो चेद्धेत्वंतरं नहि प्रकृते ॥ २३ ॥
श्रीवल्लभकल्पद्रुमफलरूपत्वं निजेच्छया यस्मात् ॥
स्वीकृत मिह लोके ननु लोकोद्धाराय तत्प्रियाय भृशम्
॥२४॥ षड्धर्मैर्निजरूपं पुत्रत्वे सप्तधाऽधुना कृत्वा ॥
धरणीतलं सनाथं कृतवानसि शौरिसद्मनीव मुदा
॥२५॥राजन्याऽसुरवृंदं प्राक्काले संहृतं त्वया नियतम्॥
पापंडयसुरविनाशः कृतोऽधुना विप्रविग्रहेण मुहुः

॥ २६ ॥ किंच स्वीयां भक्तिं शुद्धाऽद्वैतानुसारिणीं विपुलाम् ॥ कर्तुं वेदोद्धारं वारंवारं कृतश्रमोऽसि भृशम् ॥ २७ ॥ सांप्रतमिह याम्यायां सरणावतिपापकारिणां कृपया ॥ वससि त्वं तान्नेतुं स्वं लोकं विठ्ठल प्रभो युक्तम् ॥ २८ ॥ सामोदस्नेहाऽर्पणयोगात्स्नेहान्विताश्च सामोदाः ॥ हृदये भवंति तस्मात्तेषां तस्मिन् हि कृष्णवर्त्माऽऽस्ते ॥ २९ ॥ पंचामृतैर्मितैरपि पूजां कुर्वंति ये जनास्तेभ्यः ॥ पंचामृतमत्यंतं ददासि दास्यं दयोदधे प्रार्थ्यम् ॥ ३० ॥ पंचामृतलिप्तस्त्वं ह्यघटितघटनापटो विभास्येवम् ॥ चंद्रशतैः संवलितः सांद्रपयोदः किमागतः पृथ्व्याम् ॥ ३१ ॥ तोयदकांत नितांतं तोयाऽऽसारेण यः पुमान् भक्त्या ॥ स्नपयति शीघ्रं तस्मै ददासि तोयदसमं वपुर्नियतम् ॥ ३२ ॥ घुसृणाऽऽगुरुपंकैर्ननु कृत्वा त्वां पंकिलं प्रयत्नेन ॥ निष्पंकाः सामोदा भवंति रागाऽन्विता विनाऽऽयासम् ॥३३॥ परिमितमथ वासः किल जनाद्गृहीत्वाऽल्पकैर्गुणैरचितम् ॥ स्थूलैर्दिव्यगुणैर्युक्तवनंतवासोऽपि दीयते सततम् ॥ ३४ ॥ ये त्वां सालंकारं मणिभिः स्वर्णेन

परिमितैर्मनुजाः ॥ ननु तानलंकरोषि द्युमणिसदृक्षान् सुवर्णकान् भक्त्या ॥ ३५ ॥ कृत्वा सुमनःपूजां क्षणिका मय्याप्नुवंति तेऽजस्रम् ॥ सुमनोऽधिपमर्यास्ते सुमनस्त्वं द्विप्रकारकं चित्रम् ॥ ३६ ॥ भक्त्या तव पाददले दत्त्वा वृंदादलं विबलमनुजः ॥ दलयति दुरितदलान्यथ पद्मदलाऽऽयतविलोचनाऽयि किल ॥ ३७ ॥ कृष्णत्वान्ननु कृष्णं चूर्णं भक्त्या समर्पयंति मुहुः ॥ अत्र त्वामनुजास्ते चूर्णयितुं स्वीयकृष्णकर्माणि ॥३८॥ अमृतांऽघोऽधिप जग्ध्वा परिमितमन्नं निजं हि मर्त्य द्राक् ॥ अमृताऽब्धौ स्थापयसे चित्रं सघृणोऽसियत्नतःकिंनु ॥३९॥ नीराजनैश्चदीपैः स्वयंप्रकाशं प्रकाशयंत्येते ॥ अज्ञांस्तानपि मलिनान् स्वयंप्रकाशान् करोषि तच्चित्रम् ॥४०॥ संसृतिचित्रमयूखोत्थितधूमैर्धूमवीक्षणाच्च मनुजान् ॥ तेभ्यः स्वीकृतधूपो विमलदृशस्तान् करोषि करुणाब्धे ॥ ४१ ॥ प्राकृतभाषारचितैः स्तवैः स्तुतः स्तोतृमानुपायाऽपि ॥ अप्राकृताऽऽकृतिं त्विह दत्से क्षिप्रं क्षमं क्षमाजलधे ॥ ४२ ॥ एतावत्संप्रार्थ्य दुरितोच्चयरूपिणा मया बहुधा ॥ पतितसमुद्धृतिविरुद्धं नो विस्मार्यं क्षणांत-

रेऽप्यार्य ॥ ४३ ॥ श्रीगोकुलोत्सवात्मजजीवनजीशर्मणा मुदा स्तोत्रम् ॥ श्रीविठ्ठलस्य रचितं तुष्टस्तेनाऽस्तु स प्रभुः सततम् ॥ ४४ ॥ गोवर्धनगुरुचरणप्रसादतः प्राप्तविठ्ठलेशपुरः ॥ कृतकृत्योऽहं भूत्यो नूनं तस्यैव लोकवंद्यस्य ॥ ४५ ॥ रसशशधरनंदक्षितिमितवर्षे विक्रमस्य सितपक्षे ॥ पौषे सौम्यचतुर्थ्यां पूर्णमभूत्पुंडरीकपुर एतत् ॥ ४६ ॥

इति श्रीमद्गोस्वामिजीवनजीविरचितं विठ्ठलस्तोत्रं संपूर्णम् ।

---

# अथ श्रीबालकृष्णप्रार्थनाष्टकम् ।

श्रीकृष्णाय नमः ।

श्रीमद्यशोदांकविहारदक्षे तत्स्तन्यसक्ते निजभक्तरक्ते ॥ गोवर्धनप्रीतिकरे परेऽस्मिन् श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ १ ॥ श्रीनंदराजांगणरत्नरश्मिकिर्मीरितांगद्युतिरम्यरम्ये ॥ तत्रानिशं क्रीडनतत्परेऽस्मिन् श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ २ ॥ मुख्यामृतं प्राश्य पदामृतं किं वांछंति निश्चेतुमितीव भक्ताः ॥ आस्ये पदांगुष्ठधरे ममास्मिन् श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ३ ॥ नानामणिव्रातविभूषणानां चापल्यतो मंजुलसिंजितैस्तैः ॥ स्मितांचितास्ये कृतमु-

ग्धलास्ये श्रीबालकृष्णे रतिरस्तु नित्यम् ॥४॥ घोषेषु गोपंक्युतेषु गत्या प्रत्यंगमासिन्यविशेपहृद्ये ॥ बाल्या· त्कलालापमनोहरेस्मिन् श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ५ ॥ स्निग्धामलाकुंचितकुंतलस्पृग्वक्रेण भृंगावृतपद्मशोभाम् ॥ जहर्ति तस्मिन् मम नंदसूनौ श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ६ ॥ दंतद्वयेना· जितकुंदकोशद्वंद्वोत्थशोभे नवनीरदाभे ॥ हैयंग· वीनाकलितैकहस्ते श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ७ ॥ हस्तेन नेत्रादपसारितेन स्निग्धांजनेनाक्त· कपोलदेशे ॥ व्रजांगनास्नेहसुधासुपात्रे श्रीबाल· कृष्णे रतिरस्तु नित्यम् ॥ ८ ॥ इति श्रीबाल· कृष्णस्य वर्णनप्रार्थनाष्टकम् ॥ वर्णितं जीवनाख्येन गोकुलोत्सवसूनुना ॥ ९ ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीमद्गोकुलोत्सवतनूद्भवश्रीजीवनेशविरचितं श्रीबालकृष्णप्रार्थनाष्टकं संपूर्णम् ।

---

## अथ श्रीरणच्छोडाष्टकम् ।

श्रीकृष्णाय नमः ।

सकलाभीष्टदमनिशं भक्तेभ्यश्चिद्घनं सदानंदम् ॥ वंदे डंकपुरेशं सुखदं श्रीमद्रणच्छोडम् ॥ १ ॥

निजजनरक्षणदक्षिणदोर्दंडैर्दंडितारिसंघं त्वाम् ॥
भक्तप्रियं प्रभावप्रभाप्रपूर्णं च वंदेऽहम् ॥ २ ॥
लीलानंदनिधानं लीलानंदप्रभूतगुणम् ॥
मनसिजकोटिसुरूपं नेत्रानंदप्रदं वंदे ॥ ३ ॥
रसरूपं रसवर्णं रसदं रासे रसाकरं कांतम् ॥
लक्ष्मीलीलापांगे क्षणसुधया सिक्तमद्भुतं वंदे ॥ ४ ॥
अज्ञानांधविनष्टये तेजोरूपं सुदर्शनं धत्से ॥
कौमोदकीं च दुष्टान्नाशयितुं शिष्टतुष्टये स्वेष्टाम् ॥५॥
लोलल्लोलम्बाढ्यं लीनालोलं मरंदभरललितम् ॥
तापापहारिनलिनं करगं ते कंजलोचनास्ति सदा ६
नखविद्रुमसुषमाभृद्धस्तेन्दीवरसमाश्रितं नित्यम् ॥
श्रुतिरूपं श्रुतिसुखदं दृष्ट्वा हृष्यामि दरवरं वरद ॥७॥
त्वद्दर्शनप्रभावान्नष्टं दुःखं सुखं मया लब्धम् ॥
विपुलं स्थिरं च सततं तदस्तु संप्रार्थयेऽथ करुणाब्धे ८
इति श्रीमद्रणच्छोडरायस्तोत्रं सुखप्रदम् ॥
रचितं जीवनाख्येन पठनान्मुक्तिदं सताम् ॥ ९ ॥

इति श्रीमद्गोकुलोत्सवात्मजश्रीजीवनजीविरचितं
रणच्छोडाष्टकम् ।

# अथ गंगाद्विपदी ।

श्रीकृष्णाय नमः ।

जयजय त्वं सदानंददे जन्हुजे शशिशिखरशिरसि सितकुसुममाले ॥ भक्तजनहृदयालवालगतहरिचरणसुरतरुप्रसवभूते रसाले ॥१॥ शिखरितनयानयनरोलंबचुंबिते दूरकृतदुरितदौर्गंध्यजाले ॥ जीवनं भक्तजनजीवनं तव यतस्त्रिविधतापापहं मुक्तिशाले ॥२॥

इति श्रीगोकुलोत्सवात्मजगोस्वामिश्रीजीवनजीमहाराजकृता गंगाद्विपदी संपूर्णा ॥

---

# अथ यमुनाचतुष्पदी ।

श्रीकृष्णाय नमः ।

जयति तरणितनया सदाकृष्णहृदयंगमा सुरासुरमनुजप्रथितस्वभूमा तरललहरीलाभक्षलितकलिकलितमतिपतितततिनिरयसूद्धरणकामा ॥ १ ॥ कमलनिलयानिलयकमलनयनायनपृथुसुखदशुचिसरणिनीलधामा ॥ सुरकृपमदपत्समभुवननववर्कजमकरंदरसपायिमधुपाभिरामा ॥२॥ कृतसलिलमज्जनमज्जनमनोहत्तभ्रमनिचयभवजलावर्तदामा॥ तटनिकट

विस्फालनोच्छलितविमलजलफेनकुलसितापि द्विधा श्यामा ॥ ३ ॥ कृष्णजीवनवहा त्वमसि प्रतिदिन-मतस्त्वपावशवर्तिनी खलु सदामा ॥ मम ममेति विचिंत्य मनसि घनशर्मदा मामवतु भवभयाच्छौरि-वामा ॥ ४ ॥

इति श्रीमद्गोकुलोत्सवात्मजजीवनजीविरचिता श्रीय-मुनाचतुष्पदी समाप्ता ॥

---



॥ श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरे

मुंबईस्थगोस्वामीश्रीगोकुलाधीशजीकृतग्रंथाः ॥

---

## तत्र श्रीवल्लभस्तुतिरत्नावली ।

श्रीकृष्णाय नमः ।

इच्छामात्रेण विश्वोद्भवभृतिहृतिकृद्भक्तकामप्रपूर्त्यै तन्वन्कीर्तिं तमोघ्नीं श्रुतिमृगितपदः पूर्णकामो दयार्द्रः ॥ आविर्भूय व्रजे यो विहरति जगतीभारहारापदेशात्सर्वेशो गोपवेषः स भवतु शरणं नः सदानंदमूर्तिः ॥१॥ लताव्रातश्लिष्टभ्रमरकुलघुष्टद्रुमवरे शुभे वृंदारण्ये कलितमुरलीगीतवशगैः ॥ मुदा गोपीवृंदैर्विविधरसभावोत्पुलकितैर्वितन्वंतं नृत्यं गिरिवरभृतं नौमि ललितम् ॥ २ ॥ स्वास्यमाविष्कृतं तेन स्वीयानां कृपया भुवि ॥ दोषयोगैर्वियुक्तानां स्वसंयोगसमृद्धये ॥३॥ तस्यानुकंपैकबलोऽहमेतं तन्वे स्तवं वास्तवमल्पबुद्धिः एनोविनष्ट्यै परमस्य तुष्ट्यै वागीशिवुर्दीपमिवोष्णरश्मेः ॥ ४ ॥ श्रीवल्लभपदांभोजं सन्मानसविला-

स्थलम् ॥ हंसाल्यामोदसंदायं कलये तापनुत्तये ॥ ५ ॥ युग्मं ॥ वंदे श्रीवल्लभं देवं मंदारं दैवदेहिनाम् ॥ अज्ञानध्वांतभास्वंतं वागधीशं दयांबुधिम् ॥ ६ ॥ रसाया भूपणं हृद्यमासुराणां विदूषणम् ॥ हेतुमानंदसंपत्तेर्दोपविप्लोषपावकम् ॥ ७ ॥ श्रीमल्लक्ष्मणसिंधुतोऽजनि दिशन्नप्यात्मरूपामृतं दैवे पूर्णकलः कलंकरहितः कृष्णांतराऽपि स्मृतः ॥ यो दोपोरुतमोभिदच्युतरसांऽभोधिर्यतोऽहर्निशं भ्राजिष्णुर्भुवि वल्लभद्विजपतिस्तापत्रयात् त्रायताम् ॥ ८ ॥ यो बालो हरिविरहोत्थहृद्यतापेभूपस्त्वादिव बहिरुद्गतेऽग्निचक्रे ॥ मैक्ष्यर्चिर्निचय इवेरिते जनैर्नो दग्धुं वा भुवि स पुनातु पावकोऽस्मान् ॥ ९ ॥ क्रीडंतं कंजनेत्रं नवघनवपुषं बर्हिपश्चक्रबाले स्वं पादाब्जं धयंतं कुटिलकचलसत्स्मेरवक्त्रं विलोक्य ॥ यं मातादिव्यतूर्ये प्रणिनदति मुदं वह्निदत्तायनाके कृत्वालं भाप पत्या स्नुतकुचकलशाऽभाकृतः पातु पोतः ॥ १० ॥ युग्मं ॥ धर्मादिपुष्ट्यै कलितावतारं द्विजेंद्रवंशप्रथितावतंसम् ॥ यशोदयास्नेहभरैः श्रितं सद्व्याश्रयं दैवहितं व्रजस्थम् ॥ ११ ॥ प्रचंडमायासु-

रखंडनं सद्वृंदावनानंदकृतं कलासम् ॥ श्रीवल्लभं सत्सुमनोऽचितं च गोपीशतोल्लासभृतं नतोऽस्मि ॥ १२ ॥ गुरुनिलयनिवासं मादृशां शासनाय सकलगुरुरकार्षीत्कृष्णवत्कृत्स्नवेत्ता ॥ जलनिधिसदृशीयं द्रत्नसंख्याः स विद्याजलनिधिमितमासैर्दुस्तरा निस्ततार ॥ १३ ॥ देवोद्धृतिकृतिनं हरिरिलिमतिदं गतं श्रुतस्यातम् ॥ वाक्पतिमुत्पथकदनं श्रेयःसदनं नमामि विधुवदनम् ॥ १४ ॥ विलोक्य कलिसागरे ग्रसदधर्मनक्राऽऽकरे पतज्जननिमज्जनं करुणयावतीर्णः क्षितौ ॥ तदुत्तरणकारणं चरणभक्तिसेतुं हरेरचीक्लृपदुपास्महे तमनिशं विभुं वल्लभम् ॥ १५ ॥ यो दक्षिणाशा प्राप्तोऽपि दक्षिणाशामनाश्रितः ॥ सभाजितोऽपि सर्वत्र तच्चित्रं न सभाजितः ॥१६॥ संवृत्ते वादयुद्धे परिषदि नृपतेर्निश्चिकीर्षोर्मतानां प्रामाण्यं कृष्णवर्त्माश्रयविबुधचये दुर्मतस्थैः परास्ते ॥ प्रायोमायोपलंभैरधिजलधितटं मोहगेराशुरैस्तं त्रातुं तत्रायत प्राक् हरिरिव कृपया नः स इष्टं प्रपूर्यात् ॥ १७ ॥ दृष्ट्वा विद्या नगरपतिना पादयोर्मौलिलोलैः स्पृष्ट्वाऽऽभातैः स्फुटनखरुचाभ्युत्थिते सभ्यलोके ॥ नीत्वास्थानीं

नमति महसा धर्षिते हर्षितेन स्वावेश्युच्चैः सरुचिरगुणः संसदुत्तंस ईशः ॥ १८ ॥ आचक्रमे यश्चरणेन विष्टरं धीरो धरेशाधिगतं समुन्नतम् ॥ दुर्वादिनां वादबलं तथासमं वाचा सदाचार्यहितं नमामि तम् ॥ १९ ॥ हरिचरणसंगत्या पूतान् सतां हरितामिव स्वविशदगवीव्यूहैर्मार्गान् बुधेषु विकासयन् ॥ तम इव तिरस्कुर्वंस्तत्राऽन्यथाकृतदङ्मतं विधुरिव लसद्भेषु भेजे स विष्णुपदाश्रयः ॥ २० ॥ यद्वाक्यरश्मिनिकरे प्रसृते प्रसादं सद्वादिहृत्सरसिजानि समीयुरुच्चैः ॥ निद्रामनाप्तबुधहृत्कुमुदानि भानुं विद्राविताप्रमितसंतमसं तमीडे ॥ २१ ॥ कुमतं ततं यदुदितैर्धुतं सदागतिभिर्विभिद्य शतशोऽभ्रवृंदवत् ॥ विननाश जाड्यहरमर्कवन्मतं ददृशेऽच्युताश्रममुदाश्रये गुरुम् ॥ २२ ॥ सदाश्रितैः समिति पदे सुरोचितैरभेदतः परमजयो यथे बुधैः ॥ असत्परैरपि च परैर्यदागमाद्विभुः सदा समवतु साधुचक्रभृत् ॥ २३ ॥ वंदे विभुं यद्वचनाहते द्राग् ध्वस्ते बुधैर्मायिमते वितेने ॥ तज्जेतृकामैर्जयगीर्यथोच्चैः प्रागिंद्रवज्राहत इंद्रशत्रौ ॥ २४ ॥ दृक्पात्राभ्यामपि कलयता रूपपीयू-

पपानं तत्त्वज्ञानं परिगतवताऽतृप्यताऽऽचार्य एकः॥ राज्ञा प्राज्ञाभिमतिभरितोद्दामदुर्वादिजेता वाचां नेता भुवि विजयते क्लृप्तहेमाभिषेकः ॥ २५॥ ततो मुद्रायोद्राङ्मुनिपरिमिता मेरुशिखरप्रभादासो दैवीद्रविणनिवहादंघ्रिनिहितात् ॥ उरीकृत्योपेतं नृपमपि विधायात्मशरणं प्रभुः प्राछेत्सेष्ठं प्रदिशतु मुदं विठ्ठलपदम् ॥ २६ ॥ यात्रामिषादकृतदिग्विजयांश्च तीर्थान्यद्धापुनान्निजजनान्व्यतनोत्सनाथान् ॥ ध्यानक्लृप्तकेलिसहितं शिखरीशगूढं श्रीशं सतामिह हिताय स वल्लभोऽव्यात् ॥ २७ ॥ मायामतोन्मत्तमतंगमूर्धप्रपाटने कोऽपि हरिः पटीयान् ॥ गवादिगोप्याश्रितकृष्णसारः श्रीवल्लभाख्यः शरणं ममास्तु ॥ २८ ॥ पर्वंव्यतक्षद्य उपाधिसाधिना सद्ब्रह्मसारोद्भवतो बुधाग्रणीः ॥ गिर्युत्कटानां शतकोटितोऽवतात् सल्लोकपालो गुरुवल्लभो हरिः ॥ २९ ॥ मोहध्वांताऽऽक्रांतदृशो दर्शयितारं विश्वाऽऽकारं कर्त्रविकारंपरमस्य ॥ शुद्धाद्वैतोद्दीपमिहाद्दियुतदेतं यः श्रौतस्नेहांचितमाचार्यमुपासे ॥

श्रीशप्रसादामृतसाधनोऽव्यात्सन्नंदनो वल्लभभूसुरेंद्रः ॥ ३१ ॥ कलिकालोष्णक्रांतां सुमनःस्वामोदसंपदं दधतीम् ॥ भक्तिलतां परफलितां सदालिकलितां विभावपल्लविताम् ॥ ३२ ॥ वचनैः सदमृतघटैः रचयति परिपुष्य यः सुवर्णमयैः ॥ वित्रासीष्टनिजेष्टः सत्रासं मां भवात्स वागीशः ॥ ३३ ॥ सुमनसामघसंगजयाप्तये वितनुतेऽतनुतेजसि यः प्रभौ ॥ गुरुरलं सकलस्वनिवेदनं परमसारमसावधिरातु शम् ॥ ३४ ॥ उपदेशामृतवृष्ट्याऽकृतपुष्टयाऽऽयोज्य दैवसृष्टीर्यः ॥ घन इव हरितत्त्ववतीर्विटपितती वाक्पतिः स तुष्टः स्तात् ॥ ३५ ॥ कलिकल्मषितमनुजनुपः कृष्णरसे प्लावयन् विमलयति यः ॥ तमहं चित्रचरित्रं शरणं श्रीवल्लभं कलये ॥ ३६ ॥ द्विजराजोप्यकलंकी कविरपि कृतदैवजीवभविको यः ॥ कृष्णानुरागयपि शुचिः कृपयतु मयि वल्लभोऽद्भुतभूः ॥ ३७ ॥ द्विजद्रोऽपि जर्हर्ति जाड्यं जनानां विराजन्नजस्रं झरैर्गोसुधायाः ॥ त्रितापी प्रतापेन वैश्वानरोऽपि प्रपायादपायात्स वो वल्लभेशः ॥ ३८ ॥ वागीशितापि कविगीतगुणानुवादो यः सूक्ष्मदृक्

सरसिजायतलोचनोऽपि ॥ स्वायंत्रितोऽच्युतगुणैरपि नित्यमुक्तो वेधाद्गुणप्रभवतः प्रभुवल्लभोऽव्यात्॥३९॥ कृष्णोऽपि वास्तवतया जनशासनाय तत्सेवनादिकृतिमान् कुशलं विधित्सुः ॥ आसीन्नृविग्रह इहासुरमोहनाय श्रीवल्लभं तमुपयामि परं कृपालुम् ॥४०॥ मुररिपुमगराजमस्तके तन्मुकुटमिवोल्लसदग्र्यमंदिरं यः ॥ व्यजुषत विरचय्य यत्र नित्यं व्रततिततिः परिभाति पुष्पिताग्रा ॥ ४१ ॥ अदीदृशद्यो हरिभक्तिमार्गान् व्यचीकसद्दैवहृदब्जकोशान् ॥ यायात्तमो भूरि विदार्य गोभिः पायात्सदाचार्यविभाकरोऽस्मान् ॥ ४२ ॥ श्रीमद्भागवतार्णवं करुणया निर्मथ्य गूढं ततः प्रोद्धृत्यार्थपरामृतं पदजुषो दैवानपीप्यन्मुदा ॥ यः श्रीकौस्तुभकंबुकार्मुकमुखै रत्नैः श्रितं श्रीपतिं तद्वश्यं सकलं चकार कलये श्रीवल्लभं सर्वदा ॥४३॥ जाड्यं तमो हरति पंकततिं स्मृतोऽपि दृष्टो दृशोर्दिशति शीतलतां प्रतापी ॥ तापाद्दरं परिलुनोति परात्मसुखानां वंदे विचित्रमिह तं गुरुचित्रभानुम् ॥४४॥ श्रीगोकुलाधिपतिभावसुधाब्धिसोमो यो मर्त्यसत्तमविपत्तमसो विवस्वान्॥ वैश्वानरः कलिजकल्मषकान-

नानां तैलंगवंशतिलकोऽवतु वल्लभः स्वान् ॥४५॥
श्रीकृष्णभक्तिनलिनीचयचित्रभानुः पाखंडवाददव-
दाहमहाकृशानुः ॥ यो दैवदेहिविहगाश्रयकल्पवृक्षः
श्रीवल्लभो जयति कीर्तिवितानदक्षः ॥४६॥ भक्तालि-
चिंतानलवारिवाहं भक्तद्विषद्दैवहव्यवाहम् ॥ संस्तौ-
मि सन्मानसराजहंसं श्रीवल्लभं सूरिसभावतंसम् ।४७।
वेदागमादि विहितोत्तमधर्मसेतुर्मोहागमोद्भततमःश-
मधूमकेतुः॥यः कृष्णकेलिमहिमानुभवाप्तिहेतुस्तस्या-
स्तु दास्यमनिशं मम दैवनेतुः ॥४८॥ गोपीशपादांबु-
जनुर्मधुव्रतस्तद्वक्त्रपूर्णेंदुचकोरकश्च यः ॥ तत्प्रेमपीयू-
षधुनीघनाघनः सत्प्रीतिपात्रं तमुपैमि वल्लभम् ॥४९॥
यः स्मृत्यापि भवातपक्लमशमः सन्नन्दनोत्पादको यः
श्रीकृष्णमिहानयत्पदरजो यस्य द्विजाल्याश्रितम् ॥
अक्षय्यार्थचतुष्कदः सुमनसां चूडामणिश्चित्रभृत् सेवे
देवतरुं गुरुं भुवि चिदानंदस्वरूपं सदा ॥ ५० ॥
सत्पात्रोदितउल्लसद्गुणयुतः पूर्णोऽच्युतः स्नेहतश्चित्रः
पात्रमतापयन् विपुलयन् स्नेहं गुणं स्वच्छताम् ॥
तन्वन् विश्वतमश्चयं व्यपनयन्नक्तंदिवं दर्शयन् सर्वा-
र्थान्सचकास्त्यलं द्विजकुले श्रीवल्लभो दीपकः ॥५१॥

यस्यागंतुर्विप्रयोगप्रियस्याप्यागाद्रागाद्विप्रयोगासहिष्णोः ॥ भूयोहर्षात्संमुखं विठ्ठलेशो वंदेऽमन्दानंदमंदारमीशम्॥५२॥ पुलकितौ समालिंगितौ मिथः प्रकटिताशयौ स्नेहसंयतौ ॥ जनहितोद्यतौ संगतौ नुमः प्रमुदितौ निजाचार्यविठ्ठलौ ॥ ५३ ॥ तं नौमि यो हरिविहाररसैकपूर्णोऽप्यन्वर्थतां प्रथयितुं निजनाम्न उक्तः ॥ स्यां त्वत्सुतः कुरु तथेति ह्र विठ्ठलेन वागीश आश्रममशूशुभत द्वितीयम् ॥ ५४ ॥ कश्चित्प्रभुप्रेरितविप्रवर्यः सौन्दर्यवन्त्यां समुपेत्य कन्याम् ॥ स्वीकार्य यं स्वां कृतकार्य आसीत्सोऽयं समुद्धार्य नरोऽधिरायात् ॥ ५५ ॥ यस्यालये दैवसुखाय सद्वचाः प्रादुर्बभूवाऽसुरभित्सवै प्रभुः ॥ नंदालये कृष्ण इवोल्लसत्कलो जातोत्सवो रातु स वल्लभः शुभम् ॥ ५६ ॥ मदमभिनदुद्धतानां दुर्मतिकृतिनां निरंकुशानां यः ॥ भ्रंशयतां भुवि जनतां स विभुर्हरिभावभूषितो जयति ॥ ५७ ॥ निःसार्य सच्छास्त्रनिषंगमध्यादारोप्य युक्तेर्वचनैकचापे ॥ दुर्वादयोधान् पटुयुक्तिबाणैः प्राणीनशत्पातु स विप्रराजः ॥ ५८ ॥ उपधर्मदवानलं द्रुतं कलितीव्रानिलचक्र

नोदितम् ॥ हरिभक्तिरसैरशीशमद्रुरमानन्दघनं तमाश्रये ॥ ५९ ॥ कलिकुंडलिदष्टजनानजिजीवदलं परिपाय्य निजास्यविधोः ॥ गलितं ललिताच्युतकेलिकथामृतमस्तु कृपा मयि तस्य विधोः ॥ ६० ॥ पुष्टिं कृत्वागमानां पररसकलनैः सत्फलर्धिश्रियं गोस्तुष्टिं चानंतलीलाः कलयति विहर्ति धर्मभृत्संसृतेर्यः ॥ धुन्वंस्तापं महीभृन्मणिमहितपदः कृष्णमूर्तिः स कीर्तिं तन्वन् राधोदयाढ्यः सरसहृदवतादारिदो वल्लभाख्यः ॥ ६१ ॥ तापानपास्यद्भुविदैवसृष्टयायुक्तं हिसत्पुष्ट्यमृतोरुवृष्ट्या ॥ आचार्यआनन्दघनोऽप्युदारश्चित्रं त्वयं पंकचयं जहार ॥ ६२ ॥ स्वागताधिकरजस्कसुवर्णस्वच्छतां वितनुतेऽच्युततापम् ॥ योददत्पररसोत्तरुव्ये तं मुकुंदवदनानलमीडे ॥ ६३ ॥ नालं स्म योगादिवलैर्यमाप्तुं पूर्वे स्वसर्वस्वमुपाश्रितांस्तम् ॥ रसात्मकं प्रापि पदप्रयत्नान् श्रीवल्लभं नौमि कृपार्णवं तम् ॥ ६४ ॥ कलौ यत्संकल्पाच्युतभजननावाश्रितजनो महामायावर्तं विपुलभयकृत्कालमकरम् ॥ दुरंतं दुःसंगानिलवलचलोर्मीभिरभितो भवाब्धिं सानंदं तरति कलये वल्लभ-

गुरुम् ॥ ६५ ॥ हृत्वा श्रियं किल ककुब्वलयं गते स्वां यस्य श्रवस्यनुपथं प्रतिलब्धुकामः ॥ भ्राम्यत्ययं हिमकरः सकरप्रचारं स्फारं ददातु शमपारगुणोगुरुर्नः ॥ ६६ ॥ उपाधियोगमंतश समस्तवस्तुभासकं रसात्मसाधनेन नीरसागमौघनाशकम् ॥ निसर्गशीतलं च सर्वकालसौख्यभावकं भजेऽखिलेष्टमद्भुतं व्रजेशवक्त्रपावकम् ॥ ६७ ॥ तापत्रयापहरणं तरणं भवाब्धेश्चेतोविशुद्धिकरणं स्मरणं यदीयम्॥ गोपीशभावभरणं करुणं निजेषु स्वाचार्यवर्यचरणं शरणं प्रपद्ये ॥ ६८ ॥ इति तत्कृपयाचार्यस्तुतिरत्नावली कृता ॥ गोस्वामिगोकुलाधीशनाम्नेयं पर्यपूर्यत ॥ ६९ ॥ यन्मयाज्ञतयात्रोक्तमयुक्तमपि वत्सलाः क्षमंतां श्रीमदाचार्याः पोतेन पितरौ यथा ॥ ७० ॥ स्तोत्रस्य पाठश्रवणादितोऽस्य मर्त्यस्य पापानि पलायितानि ॥ सद्यो भवंत्येव यथा वनस्य त्रस्ता हरेर्गर्जनतो मृगाद्याः ॥ ७१ ॥ श्रद्धालवे चार्थविदे च तस्मै तुष्येत्स आस्यं पुरुषोत्तमस्य ॥ तुष्टे च तस्मिन्नहि दुर्लभः स्याल्लीलायुतः श्रीपुरुषोत्तमोऽपि ॥ ७२ ॥ यत्नमेतं कलागण्यपद्यस्तवं शोधयित्वा

कलाढ्यैर्विशुद्धैर्बुधैः ॥ गृह्यतां सारमत्रेतरन्मापृथक्कृत्य हंसैः पयस्तोयतः पीयते ॥ ७३ ॥
इति श्रीगिरिधरांगजगोकुलाधीशवि० आचार्यस्तुतिरत्नावली स० ।

# अथ नैवेद्यसमर्पणप्रार्थना ।

श्रीकृष्णाय नमः ।

यशोदायास्तन्ये तदनुनवनीते व्रजगवां विहारे दध्यन्ने व्रजयुवतिदत्ते बहुगुणे ॥ तथा मित्रात्मासे पृथुकवरमुष्टौ मुरहरे यथा प्रीतिस्तां मे प्रकटय सुनैवेद्यनिचये ॥ १ ॥ विदुरस्य गृहे प्रीत्या यथा भुक्तं व्रजेश्वर ॥ तथैव भुंक्ष्व नैवेद्यं मयि नाथ कृपां कुरु ॥ २ ॥ ब्रह्माद्यैर्यः परित उरुभी रूपवेषैः सुवेषो लक्ष्म्या सिंजद्वलयकरया सादरं वीज्यमानः ॥ नर्मक्रीडाप्रहसितमुखो भोजयन् भक्तिभुक्तान् भुंक्ते पात्रे कनकघटिते षड्रसं श्रीरमेशः ॥ ३ ॥ नायिकाष्टकयुक्तोऽत्र भोजनं कुरु माधव ॥ षड्रसामृतनैवेद्यं स्वर्णपात्रे समर्पितम् ॥४॥ यथा त्वं गोपिकादीनां निजानंदं प्रयच्छसि ॥ तथैव भुक्तान्नशिष्टं भक्तेभ्यो यच्छ पुष्कलः ॥५॥ ब्रह्माद्याः सनकाद्याश्च नारदाद्या महत्तमाः ॥ हरिभुक्तावशिष्टान्नं सर्वे गृह्णंति वैष्णवाः॥६॥
इति श्रीनैवेद्यसमर्पणप्रार्थना समाप्ता ।

॥ श्रीः ॥

# अथ बृहत्स्तोत्रसरित्सागरे

## धर्मशास्त्रादिनिर्णयग्रंथाः ।

## तत्र व्रतोत्सवपर्वादिनिर्णयः ।

तस्य चानुक्रमणिका ग्रंथोक्तैव ।

श्रीकृष्णस्य वचो वंदे दुर्बोधं विदुषामपि ॥
तद्व्याख्यातृवचो वंदे तत्सुबोधत्वसाधनम् ॥ १ ॥
व्रतानामुत्सवानां च पर्वणां चापि निर्णयः ॥
प्राचीननिर्णयान्दृष्ट्वा वक्ष्यतेऽत्र समासतः ॥ २ ॥
एकादशीव्रतं पूर्वं ततो जन्माष्टमीव्रतम् ॥
ततो राधाष्टमी प्रोक्ता दानैकादशिका ततः ॥ ३ ॥
वामनद्वादशी चैव पर्वाणि नवरात्रिके ॥
विजयादशमी ज्ञेया शारदी पूर्णिमा ततः ॥ ४ ॥
कार्तिकस्यासिते पक्षे ख्याता धनत्रयोदशी ॥
दीपोत्सवसमीपस्था ख्याता रूपचतुर्दशी ॥ ५ ॥
ततो दीपोत्सवः प्रोक्तो ह्यन्नकूटोत्सवस्ततः ॥
ततो भ्रातृद्वितीया च ततो गोपाष्टमी मता ॥ ६ ॥

प्रबोधैकादशी ख्याता तस्यां जागरणं स्मृतम् ॥
नवम्यां पौषमासस्य कृष्णपक्षे महोत्सवः ॥ ७ ॥
श्रीमद्विट्ठलेनाथानां विश्वविख्यातकर्मणाम् ॥
ततो भोगीति विख्यातं पर्व संक्रमणात्पुरा ॥ ८ ॥
लोकसिद्धमिदं ज्ञेयं ततः संक्रांतिरेव च ॥
शुक्ले माघस्य पंचम्यां वसंतपंचमी मता ॥ ९ ॥
अस्यैव पूर्णिमायां तु रोपणीपर्व कीर्तितम् ॥
देशाचारादिदं ज्ञेयं यत्र दंडावरोपणम् ॥ १० ॥
सप्तम्यां फाल्गुने कृष्णे गोवर्धनेधरोत्सवः ॥
होलिकादीपनं कार्यं त्यक्त्वा भद्रां यथोचितम्॥११॥
ततो दोलोत्सवः प्रोक्त उत्तराफल्गुनीदिने ॥
चैत्रे शुक्लप्रतिपदि वत्सरारंभ ईरितः ॥ १२ ॥
अमांते चैत्रमासेऽथ मेषसंक्रमणं रवेः ॥
चैत्रशुक्लनवम्यां श्रीरामचंद्रमहोत्सवः ॥ १३ ॥
एकादश्यां कृष्णपक्षे वैशाखे शोभने दिने ॥
श्रीमदाचार्यवर्याणामाविर्भावमहोत्सवः ॥ १४ ॥
वैशाखे शुक्लपक्षस्था तृतीया चाक्षया मता ॥
अत्रैवोक्तश्चतुर्दश्यां श्रीनृसिंहमहोत्सवः ॥ १५ ॥
दशमीज्येष्ठशुक्लस्था प्रोक्ता दशहराभिधा ॥

लोकानां पावनार्थाय यत्र गंगासमुद्भवः ॥ १६ ॥
स्नानयात्रा ततः प्रोक्ता ज्येष्ठानक्षत्रसंभवे ॥
आषाढे शुक्लपक्षस्थपुष्यऋक्षे रथोत्सवः ॥ १७ ॥
आषाढे शुक्लषष्ठ्यां तु षष्ठपर्वेति कीर्तिते ॥
आषाढे पौर्णमासी च तिथिर्धर्मप्रदायिनी ॥ १८ ॥
हिंदोलांदोलनारंभः श्रावणे कृष्णपक्षतः ॥
शुक्लपक्षे तृतीया च पंचमी नागपंचमी ॥ १९ ॥
उपवासदिने कार्यं पवित्रारोपणं हरौ ॥
अत्रैव पूर्णिमायां हि रक्षाबंधनमिष्यते ॥ २० ॥
एवमुद्देशतः प्रोक्ता उत्सवा वत्सरस्थिताः ॥
निर्णीयंते त एवात्र पुराणस्मृतिवाक्यतः ॥ २१ ॥

तत्र तावच्छ्रीभागवततत्त्वदीपनिबंध एकादश्यु-पवासादिकर्तव्यं वेधवर्जितं तथा जन्माष्टमी चापि सप्तमी वेधवर्जितेत्यत्रएकादश्यादिक्रमेण निर्णयाद-त्रापि तथाविधक्रमेणैव निर्णीयंते ॥

अथ एकादशी निर्णयः । निबंधे एकादशीव्रतं च षट्पंचाशद्घटिकारहितं कर्तव्यम्॥ पूर्वमन्यथाकरणेऽपि भगवन्मार्गप्रवेशानंतरं पंचपंचाशद्घटिका दशमीचे-त्तदेकादशी त्याज्येत्युक्तम् ॥ अत्र पूर्वं षट्पंचाश-

द्वेधरहितं कर्तव्यमित्युक्त्वा पश्चात्पंचपंचाशद्घटिके-त्युक्तं तदाशयस्तु स्फुटीकृत उत्सवप्रताने श्रीपुरुषो-त्तमैः प्रकारभेदेन ॥ तत्र पंचपंचाशद्घटिकाभिः शल्य-वेधमादायेत्येकः पक्षः॥ घटिकामात्ररात्रिशेषे वक्ष्यमा-णपारिभाषिकसूर्योदयमादाय ततः पूर्वं चतस्रो घटि-कास्त्याज्या इति द्वितीयः प्रकारः॥ किंचज्योतिःशास्त्रे गणितग्रंथेषु बहूनां पक्षाणामुक्तत्वात् ॥ विष्णुधर्मेषु सर्वेषु ग्राह्या आर्योद्भवा तिथिरिति वचनात् आर्यमता-नुसारेण दशम्या घटिकाधिक्यसंभावनया पंचपंचाश-द्घटिका इत्युक्तमिति तृतीयः प्रकारः ॥ विवादेषु च सर्वेषु द्वादश्यां समुपोषणमित्यादीनामपि संग्रहो भवि-ष्यतीति ज्ञेयमिति चतुर्थः प्रकारः ॥ अरुणोदयवेधस्तु सुप्रसिद्ध एव ॥ तथाच भविष्यपुराणे ॥ अरुणोदय-काले तु दशमी यदि दृश्यते ॥ सा विद्धैकादशी तत्र पापमूलमुपोषणमिति ॥ गारुडेऽपि ॥ दशमीशेषसंयु-क्तो यदि स्यादरुणोदयः॥ नैवोपोष्यं वैष्णवेन तद्दिनै-कादशीव्रतमिति उदयात्प्राक् चतस्रस्तु नाडिका अरुणोदय इति ॥ नाडिका षट्पंचाशत् प्रातस्त्वे-कोऽधिकोऽरुणः ॥ उषःकालोऽष्टपंचाशत् शेषः सूर्यो-

दयः स्मृतः इति ॥ अत्रोक्तः ॥ सूर्योदयस्तु पारिभाषिकः ॥ अत्र पूर्वोक्तसर्वपक्षेषु पूर्णपंचपंचाशद्घटिकादशमीवेधस्त्याज्यः ॥ तथाचोक्तं श्रीकल्याणरायैः स्वकृतैकादशीनिर्णये ॥ पंचपंचाशद्घटिकामध्ये पलमात्रन्यूनतायामप्येकादशी न त्याज्येति ॥ कदाचित्तु वेधाभावेप्येकादशी त्याज्या त्यागनिमित्तानि तु प्रोक्तानि ॥ तत्रैकादश्याधिक्ये नारदः ॥ संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी ॥ द्वादश्युल्लंघनं कार्यं त्रयोदश्यां तु पारणमिति ॥ द्वादश्या आधिक्ये तु गारुडे ॥ पूर्वाभावे यदा नंदा भद्रा चैव विवर्धते ॥ तदोपोष्या तु भद्रा स्यात्तिथिवृद्धिः प्रशस्यत इति ॥ उभयाधिक्ये तु भृगुराह ॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ॥ तत्रोपोष्या द्वितीया तु परतो द्वादशी यदीति ॥ १ ॥

अथ जन्माष्टमीनिर्णयः ॥ तत्र निबंधे ॥ जन्माष्टमी तु सूर्योदयानंतरं सप्तमी चेत्तदा त्याज्या ॥ उदयादुदयात्प्रोक्ता हरिवासरवर्जिता इति ॥ एकादशी त्वरुणोदयादित्यर्थः ॥ पद्मपुराणे ॥ कलाकाष्ठामुहूर्तापि यदा कृष्णाष्टमी तिथिः ॥ नवम्यां सैव

ग्राह्या स्यात्सप्तमीसंयुता नहि ॥ पूर्वविद्धाष्टमी या तु उदये नवमी दिने ॥ मुहूर्तमपि संयुक्ता संपूर्णा साऽष्टमी भवेदिति ॥ अथ ब्रह्मवैवर्ते ॥ वर्जनीया प्रयत्नेन सप्तमी संयुताष्टमी ॥ सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमीति ॥ अष्टमीक्षये तु शुद्धनवम्यामेवोपवासः कार्यः ॥ तथाच स्कंदपुराणे व्यासवचनम् ॥ जन्माष्टमीं पूर्वविद्धां सऋक्षां सकलामपि ॥ विहाय नवमीं शुद्धामुपोष्य व्रतमाचरेदिति ॥ एवमेव निर्णीतं श्रीमदाचार्यचरणैः सुबोधिन्यां दशमस्कंधतृतीयाध्याये ततश्च शौरिरिति श्लोकविवरणे ॥ शुद्धाष्टम्यभावे नवम्युपोष्येति ॥ अत्र जन्माष्टम्या निशीथव्याप्तिबोधकानि वचनानि तु जयंतीपरत्वेन व्यवस्थापितानि श्रीविठ्ठलनाथप्रभुभिः ॥ दिनद्वयेऽपि सूर्योदयव्यापिनी शुद्धाधिकाष्टमी तु पूर्वैव ग्राह्या ॥ त्यागहेतोर्वेधस्याभावात् बहुकालव्यापित्वाच ॥ यदिदंडात्मकायास्तु तिथेर्निष्क्रमणं परे ॥ अकर्मण्यं तिथिमलं विद्यादेकादशीं विनेति ज्योतिर्निबंधवाक्याचेति संक्षेपः ॥ २ ॥

अथभाद्रपदशुक्लाष्टम्यां श्रीस्वामिन्युत्सवः ॥ स

चोदयव्यापिन्यामेव कार्यः ॥ युगाद्यावर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ॥ रवेरुदयमीक्षंते न तत्र तिथि-युग्मतेति वाक्यात् ॥ दिनद्वये सूर्योदयव्याप्तौ तु पूर्वैव ग्राह्या ॥ अष्टमीक्षये तु विद्धायामेव ॥ गत्यं-तराभावात् ॥ जन्माष्टमीव्रते अष्टमीक्षये शुद्धनवमी विधायकवचनवत्प्रकृते तादृशवचनाभावात् ॥ एव-मेकादशी जन्माष्टमीव्यतिरिक्तेषु रामनवमीनृसिंह-जयंतीश्रीमदाचार्यप्रादुर्भावादिष्वक्षय्यतृतीयादिषु च प्रायेण निर्णयो ज्ञेयः ॥ क्वचिद्वामनजयंतीविजया-दशमीशारदपौर्णमासीदीपोत्सवभ्रातृद्वितीयादिषु प्रकारभेदोऽस्ति स च तत्तन्निर्णयप्रसंगे वक्ष्यते ॥ ४ ॥

अथ भाद्रपदशुक्लैकादश्यां दानोत्सवः ॥ स च सदाचारप्राप्तः ॥ तत्रेदानीं केचिच्छ्रीमदाचार्यो-रसववत्सूर्योदयव्यापिन्यामेकादश्यामुत्सवं कुर्वंति ॥ क्षये तु विद्धायामेव ॥ शुद्धाधिकायां तु पूर्वस्या-मेवेति केचित्तूपवासवत्तिथिं गृह्णंति तत्रैतदुत्सवस्य सदाचारमात्रसिद्धत्वेन तन्निर्णये नाग्रहः कार्यः ॥ साधूनां समयश्चापि प्रमाणं वेदवद्भवेदिति मत्स्य-पुराणवाक्यात् ॥ सदाचारस्यापि प्रामाण्यं सकल-

वादिसंमतमेव ॥ तथाप्युपवासदिन एव दानोत्सवः कार्य इति मुख्यः पक्षः ॥ तथाहि ॥ तृतीयस्कंधसुबोधिन्यामेकादशाध्याये ॥ संवत्सरः परिवत्सर इति श्लोकव्याख्याने व्रतादिस्थित्यर्थमेकादश्यादिरपि मासो वैष्णव इत्युक्तम् ॥ तथाच भाद्रपदशुक्लैकादश्यामाश्विनारंभस्तदैव शरदारंभः स च शुद्धायामेवैकादश्यां स्वीकार्यः ॥ एवं च शरदादिदधिदुग्धादिसंपत्तेः प्रसिद्धत्वात्तदैव दानोत्सवः स्वीकृतः ॥ स च यद्यपि दानलीलायामहन्यतिमनोहरे निजगृहाद्विहारे चेत्यत्र स्फुटतयोक्तस्तदर्थमपि तदारंभकालनिर्णयार्थमयं प्रकारो लिखितः ॥ ५ ॥

अथ वामनाविर्भावनिर्णयः॥ तत्रैकादश्यां विष्णुशृंखलसत्वएकादश्यामेवोत्सवः कार्यः ॥ एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत् ॥ तद्विष्णुशृंखलं नाम विष्णुसायुज्यकृद्भवेदितिविष्णुधर्मोत्तरात् ॥ द्वादशी श्रवणर्क्षं चेत् स्पृशेदेकादशीं यदि ॥ स एव वैष्णवो योगो विष्णुशृंखलसंज्ञकः ॥ तस्मिन्नुपोष्य विधिवत् नरः प्रक्षीणकिल्बिषः॥ प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभामिति मात्स्या-

च ॥ अत्र दिवोदासीये ॥ रात्रेः प्रथमपादे चेच्छ्रवणं हरिवासरे ॥ तदा पूर्वामुपवसेत्प्रातर्भाते च पारण-मित्युक्तम् ॥ क्वचित्तु ॥ तिथिनक्षत्रयोर्योगे योगश्चैव नराधिप ॥ द्विकलो यदि लभ्येत स ज्ञेयो ह्याष्टया-मिक इति वचनादहोरात्रिमध्ये कलामात्रसत्त्वेऽपि विष्णुशृंखलयोगो भवतीति निर्णीतम् ॥ अत्र मुख्य-गौणभेदेन व्यवस्था ज्ञेया ॥ प्रथमो मुख्यो द्वितीयो गौण इति ॥ सांप्रदायिकास्तु दिवैव योगं स्वीकु-र्वंति न तु रात्रौ ॥ अर्धोदयपर्वादौ रात्रियोगस्य दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचनेति वाक्येन निषेधात् ॥ अन्यत्रापि कालमाधवीयादौ ॥ यस्मि-न्नस्तमियाद्भानुस्तन्नक्षत्रमुपोषणे ॥ उदये त्रिमुहू-र्तस्थं नक्षत्रं व्रतदानयोरित्यादिना दिवायोगस्यैव ग्रहणाच्च ॥ यदा तु एकादश्यामेव श्रवणयोगो न द्वादश्यां तदाप्येकादश्यामेवोत्सवः कार्यः ॥ तदुक्तं नारदीये ॥ यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् ॥ एकादशी तदोपोष्या पापघ्नी श्रवणा-न्विता ॥ उभयोर्देवता विष्णुः पुराणपुरुषोत्तमः ॥ विभेदोऽपि न कर्तव्यो विभेदात्पतते नर इति ॥

यदा तु पूर्वेऽह्नि न विष्णुशृंखलं तदा त्वेवं निर्णयः॥ वामनावतारो हि मध्याह्ने ॥ तत्र मध्याह्नपदेन दिवसमध्यभागोऽभिजिन्मुहूर्तात्मको ज्ञेयः ॥ दिनमध्यभागे श्रवणालाभे तु पंचधा विभक्तदिवसस्य तृतीयभागात्मको मध्याह्नो ग्राह्यः ॥ तत्रैव विषयविवेकः ॥ वामनद्वादशी द्विविधा ॥ मध्याह्नेऽपि श्रवणरहिता श्रवणयुक्ता च ॥ तत्र श्रवणयोगरहिता चतुर्विधा ॥ पूर्वेद्युरेव मध्याह्नव्यापिनी परेद्युरेव मध्याह्नव्यापिनी दिनद्वयेऽपि मध्याह्नव्यापिनी दिनद्वयेऽपि मध्याह्नाव्यापिनी चेति॥तत्रैकदिनव्याप्तौ सैव ग्राह्या॥ दिनद्वयेऽपि मध्याह्नव्याप्तावव्याप्तौ चैकादश्यामुत्सवः कार्यः ॥ रुद्रेण द्वादशीयुक्तेति युग्मवाक्यात् ॥ युग्मवाक्यं तु ॥ युग्मानि युग्मभूतानां षण्मुन्योर्वसुरंध्रयोः ॥ रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥ प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् ॥ एतद्व्यस्तं महाघोरं हंति पुण्यं पुरातनम् ॥ इति कालमाधवीयादौ निगमोक्तं द्रष्टव्यम् ॥ यदा तु दिनद्वयेऽपि श्रवणयोगस्तदापि द्वादश्यां द्वितीयदिन एव मध्याह्नव्याप्तौ तस्यामेवोत्सवः कार्य इति निर्णीतमु-

त्सवप्रताने ॥ द्वितीयदिन एवेत्येवकारेण दिनद्वयेऽपि द्वादश्यां मध्याह्नव्याप्तौ युग्मवाक्यात् पूर्वैव ग्राह्येति ज्ञेयम् ॥ अत्र द्वादश्यां श्रवणयोगो मध्याह्ने मुख्यः तदसंभवे तु मध्याह्नातिरिक्तकालीनोऽपि श्रवणयोगो ग्राह्यः ॥ यच्चोक्तमुत्सवप्रताने ॥ श्रवणस्यावश्यकता प्राप्यते ॥ तिथी तु उभे अप्यविरुद्धे ॥ अत्रोभे इति पदेनैकादशीद्वादश्यौ गृह्येते नतु त्रयोदशी ॥ भविष्यपुराणे तु ॥ एतत्सर्वं समभवदेकादश्यां युधिष्ठिरेत्यादिना नारदवाक्यैर्वामनाविर्भाव एकादश्यामुक्तः ॥ यदा तु द्वितीयदिने सूर्योदयव्यापिनी स्वल्पापि द्वादशी श्रवणयुक्ता तदा उदयव्यापिनी ग्राह्या ॥ श्रवणद्वादशीव्रते इति नारदीयवाक्यात् द्वादश्यामुत्सवः कार्यः ॥ यदा तु द्वितीयदिन उदयव्यापिनी श्रवणयोगरहिता स्वल्पा द्वादशी स्यात् मध्याह्ने श्रवणयुक्ता त्रयोदशी तदा त्वेकादश्यामेवोत्सवः कार्यः ॥ उदयव्यापिनी ग्राह्या श्रवणद्वादशीव्रते इति नारदीय वाक्ये ॥ श्रवणद्वादशीपदेन श्रवणयुक्ता द्वादशी श्रवणद्वादशीति व्युत्पत्त्या त्रयोदश्या ग्रहीतुमशक्य-

त्वात् ॥ यदा तु दिनद्वयेऽपि सूर्योदयव्यापिनी शुद्धाधिका द्वादशी भवेत् श्रवणं च परेद्युरेव तदा षष्टिघटिकात्मिकामपि पूर्वां विहाय स्वल्पापि परैवोपोष्या नक्षत्रयोगस्य प्राबल्यात् तदुक्तम् ॥ तिथिनक्षत्रयोर्योगे योगश्चैव नराधिप ॥ द्विकलो यदि लभ्येत स ज्ञेयो ह्याष्टयामिक इति ॥ अत्रैवं संग्रहः ॥ यदा पूर्वदिने विष्णुशृंखलयोगस्तदा पूर्वदिनमेव ग्राह्यम् ॥ यदा वा एकादश्यामेव श्रवणयोगो न द्वादश्या तदाप्येकादश्यामेवोत्सवः कार्यः ॥ यदा तु प्रथमेऽह्नि न विष्णुशृंखलं द्वितीयदिने च न श्रवणं द्वादश्याश्च मध्याह्नव्याप्तिरुभयत्र समविषमैकदेशव्याप्तिर्वा तदा पूर्वदिनमेव ग्राह्यम् ॥ रुद्रेण द्वादशीति युग्मवाक्यात् द्वादश्यां श्रवणयोगो मध्याह्ने मुख्यः ॥ कालांतरे गौणः ॥ दिनद्वये श्रवणाभावे तु मध्याह्नव्यापिनी द्वादशी ग्राह्या॥ दिनद्वयेऽपि द्वादश्या मध्याह्नव्याप्त्यभावेऽपि पूर्वैव ग्राह्येत्यादिसर्वं पूर्वमुक्तमेवेति संक्षेपः ५

अथाश्विनशुक्लप्रतिपदमारभ्य नवरात्रारंभः ॥ स चौदयिक्यां प्रतिपदि कर्तव्यः ॥ यद्यपि नवरात्रादिकं दुर्गासंबंधित्वेन प्रसिद्धं तथापि यथा तरो-

मूलनिषेचनेनेति चतुर्थस्कंधीयवाक्याद्भक्तिमार्गेऽपि स्वीकृतम् ॥ ६ ॥

अथाश्विनशुक्लदशमी विजयादशमी ॥ तत्र भगवति नवयवदलारोपणं कार्यम् ॥ तत्र नक्षत्रोदयकालो मुख्यः ईषत्संध्यामतिक्रांतः किंचिदुद्भिन्नतारकः ॥ स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धिद इति वाक्यात् ॥ सूर्योदयादेकादशो मुहूर्तस्तु गौणकालः एकादशो मुहूर्तोऽपि विजयः परिकीर्तित इति वाक्येऽपिशब्देन गौणत्वसूचनात् ॥ तत्रैव निर्णयः दशमी हि द्विविधा ॥ श्रवणरहिता तद्युक्ता चेति ॥ तत्र श्रवणरहिता चतुर्विधा ॥ पूर्वेद्युरेव नक्षत्रोदयव्यापिनी परेद्युरेव तद्व्यापिनी ॥ दिनद्वयेऽपि तद्व्यापिनी दिनद्वयेऽपि नक्षत्रोदयव्यापिनी चेति ॥ तत्र पूर्वेद्युरेव नक्षत्रोदयव्याप्तौ पूर्वैव परेद्युरेव तद्व्याप्तौ परैव दिनद्वये तु तद्व्याप्तौ पूर्वा ग्राह्या ॥ नवम्यासहिता कार्या दशम्याश्वयुजे सिता ॥ एकादश्या युता या तु न कार्या जयकांक्षिभिरिति वाक्यात् ॥ दिनद्वयेऽपि तदव्याप्तौ परा ग्राह्या ॥ एकादशो मुहूर्तोऽपि विजयः परिकीर्तित इत्यत्रोक्तगौणविजयमुहूर्तव्यापित्वादिति

दिनद्वयेऽपि दशम्यां श्रवणयोगाभावे निर्णयः ॥ अथ श्रवणयोगे निर्णयः ॥ पूर्वेद्युरेव नक्षत्रोदये दशम्यां श्रवणयोगे पूर्वैव परेद्युरेव श्रवणयोगे परैव ॥ तत्रापि नक्षत्रोदयकाले दशमीसत्त्वे सूर्योदयमारभ्याल्पश्रवणयोगे परैव ग्राह्या ॥ आश्विने दशमी शुक्ला श्रवणेन समन्विता ॥ विजया दशमी प्रोक्ता सैव चात्यंतदुर्लभेत्यादिवाक्यैः श्रवणयोगस्य प्राबल्यात् ॥ यदा तु दिनद्वयेऽपि कर्मकाले दशम्याः श्रवणयोगस्तदा पूर्वैव ग्राह्या ॥ पूर्वविद्धायः प्राशस्त्यादिति निर्णीतमुत्सवप्रताने ॥ यदा सूर्योदयेऽल्पा दशमी भवति तारकोदयकाले च श्रवणयुक्तैकादशी तदा तत्रैवोत्सवः कार्यः ॥ उदये दशमी किंचित्संपूर्णैकादशी यदि ॥ श्रवणर्क्षं यदा काले सा तिथिर्विजया भवेदिति वाक्यात्॥ अत्र नक्षत्रप्राधान्यमंगीकृतमुत्सवप्रताने बहुविस्तरेण॥ अत्र केचित् शिष्टास्तन्निर्णयानुसारेण न व्यवहरंति किंतु उदये दशमी किंचिदितिवाक्यस्य पट्टाभिषेकपरत्वमभिप्रेत्य नवमीविद्धायामेवोत्सवं कुर्वंति ॥ इति विजयादशमी ७

अथाश्विनशुक्लपौर्णमास्यां रासोत्सवः ॥ स च

राकायामेव कार्यो नत्वनुमत्याम् ॥ राकालक्षणं त्वमरकोशटीकायां व्याख्यासुधायामुक्तं सा पौर्णमासी उदयकाले प्रतिपद्योगात् कलाहीने चंद्रे सति अनुमतिरित्युच्यते चंद्रस्य पूर्णत्वे राकेति तथा सति रासोत्सवे चंद्रोदयव्यापिनी पूर्णिमा ग्राह्या अखंडमंडलस्येंदोरुदयकाले तदेव सत्त्वात् ॥ तथा च श्रीभागवते ॥ दृष्ट्वा कुमुद्वंतमखंडमंडलमिति ॥ दिनद्वयेऽपि पौर्णमास्याश्चंद्रोदयव्याप्तौ पूर्वा ग्राह्या संपूर्णरात्रिव्यापित्वात् चतुर्दश्या तु पूर्णिमेति युग्मवाक्याच्च ॥ दिनद्वयेऽपि चंद्रोदयकालव्याप्त्यभावेऽपि पूर्वैव रात्रिव्यापित्वात् युग्मवाक्याच्च ॥ ८ ॥

अथ कार्तिककृष्णत्रयोदश्यां पर्वात्मक उत्सवः ॥ स च शिष्टाचारादुदयव्यापिन्यामेव कार्यः ॥ ९ ॥

अथ कार्तिककृष्णचतुर्दश्यां सूर्योदयव्यापिन्यामभ्यंगः कार्यः ॥ तदुक्तं भविष्योत्तरे ॥ कार्तिके कृष्णपक्षे तु चतुर्दश्यां दिनोदये ॥ अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिरिति ॥ क्वचित्तु विधूदय इत्यपि पाठः ॥ तिथिस्तु सूर्योदयव्यापिन्येव ग्राह्या पूर्वाह्णिकास्तु तिथयो दैवे कार्ये फलप्रदा इत्यादि

याज्ञवल्क्यवाक्यात् ॥ यदा तु दिनद्वयेऽपि सूर्योदयव्यापिनी चतुर्दशी तदा पूर्वा ग्राह्या ॥ बहुकालव्यापित्वात् ॥ षष्टिदंडात्मिकायास्तु तिथेर्निष्क्रमणं परे ॥ अकर्मण्यं तिथिमलं जह्यादेकादशीं विनेति वचनेन तादृशस्थले द्वितीयदिने निषेधाच्च ॥ यदा च चतुर्दशी क्षयवशान्न दिनद्वयेऽपि सूर्योदयव्याप्तिस्तदा त्रयोदश्यामभ्यंगः कार्यः ॥ तदुक्तं समयमयूखे चंद्रप्रकाशवाक्ये ॥ त्रयोदशी यदा प्रातः क्षयं याति चतुर्दशी॥ रात्रिशेषे त्वमावस्या तदाभ्यंगे त्रयोदशीति१०

अथ दीपोत्सवनिर्णयः ॥ तत्र कार्तिककृष्णामावास्या प्रदोषव्यापिनी ग्राह्या ॥ तदुक्तमादित्यपुराणादौ ॥ प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ॥ दीपवृक्षाश्च दातव्याः शक्त्या देवगृहेषु चेति ॥ एवंविधानेकवचनेषु प्रदोषस्य कर्मकालत्वोक्त्या सूर्यास्तानंतरं मुहूर्तत्रयात्मप्रदोषव्यापिनी ग्राह्या॥ दिनद्वयेऽपि प्रदोषव्याप्तौ परा ॥ प्रतिपद्यप्यमावास्येति युग्मवाक्ये परविद्धायाः प्राशस्त्यात् ॥ तदुक्तं ज्योतिर्निबंधेऽपि॥ दंडैकरजनीयोगो दर्शः स्यात्तु परेऽहनि॥ तदा विहाय पूर्वेद्युः परेद्युः सुखरात्रिकेति ॥ दिनद्-

येऽपि प्रदोषव्याप्त्यभावे तु गौणप्रदोषव्याप्तिमादाय पूर्वा ग्राह्या ॥ यत्तु त्रियामिका दर्शतिथिर्भवेच्चेत्सार्ध-त्रियामा प्रतिपद्विवृद्धौ ॥ दीपोत्सवे ते मुनिभिः प्रदिष्टे ततोऽन्यथा पूर्वयुते विधेये इति वचनं तु विष-यांतरपरत्वेन व्यवस्थापितं ग्रंथकृद्भिरिति नात्रोपयु-ज्यते ॥ तथाचायमत्र संग्रहः ॥ यदा परदिनेऽमा-वास्या सूर्यास्तं व्याप्नोति तदा परैव ग्राह्या ॥ पूर्वे-द्युरेव सूर्यास्तव्याप्तौ पूर्वेति ॥ ११ ॥

अथान्नकूटोत्सवः ॥ स च दीपोत्सवाव्यवहित-दिन एव प्रसिद्ध इति तन्निर्णयापेक्षा अत्रोत्सवप्रताने कालांतरेऽपि गोवर्धनपूजनं सांप्रदायिकानां युक्तमि-त्युक्तम् ॥ श्रीभागवतपद्मवाराहादिवह्नन्येवोदाहृता-नीति तत्र द्रष्टव्यानि ॥ १२ ॥

अथ कार्तिकशुक्लद्वितीया भ्रातृद्वितीया ॥ सा यद्याप्यपराह्णव्यापिनी बहुवादसंमिता तथाप्युत्सवप्र-तानोक्तभक्तिमार्गीयप्रकारानुसारेण निर्णीयते ॥ धर्म-शास्त्रे हि दिवसस्य द्वौ भागौ त्रयोभागाश्चत्वारः पंच पंचदश चेति पंच भेदाः ॥ तत्र भागद्वयपक्षे ॥ आवर्तनात्तु पूर्वाह्णे ह्यपराह्णस्ततः पर इतिवाक्यादि-

नाधीत्पूर्वभागः पूर्वाह्णसंज्ञकः ॥ तदपरो भागोऽपराह्णसंज्ञकः ॥ तत्र पूर्वाह्णो वै देवानां मध्याह्नो मनुष्याणामपराह्णः पितॄणामिति वाक्यात् ॥ यद्यपि यमस्य पितृत्वेन तत्पूजायामपराह्णव्याप्तिग्रहीतुमुचिता तथापि देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपतेतिवाक्यात्तत्र देवत्वस्यापि सत्त्वान्न केवलमपराह्णव्याप्तिर्ग्राह्या किंतु पूर्वाह्णापराह्णोभयव्यापिनी द्वितीया मुख्या ॥ तत्रापि सूर्योदयमारभ्य दिनार्धोत्तरकालपर्यंतं वर्तमाना द्वितीया मुख्या ॥ तदसंभवे पूर्वदिने दिनार्धात्पूर्वं वर्तमाना ग्राह्या ॥ पूर्वाह्णापराह्णोभयव्यापित्वात् ॥ पूर्वदिने दिनार्धात्पूर्वं द्वितीयाया अभावे तु द्वितीयदिने पूर्वाह्णव्यापिनी ग्राह्या यमे देवत्वस्यापि सत्त्वात् ॥ भक्तिमार्गे यमपूजाया अकरणाच्चेति निष्कर्षः ॥ यथा तरोर्मूलनिषेचनेनेति वाक्यात् भगवत्पूजायां सर्वपूजांतर्भावान्न काचिन्न्यूनतेत्यलं विस्तरेण ॥ १३ ॥

अथ कार्तिकशुक्लाष्टमी गोपाष्टमी ॥ सा सूर्योदयव्यापिनी ग्राह्या ॥ दिनद्वये तद्व्याप्तौ पूर्वैव बहुकालव्याप्तित्वात् ॥ अष्टमीक्षये तु विद्धैव ग्राह्या ॥ गत्यंतरस्याभावात् ॥ १४ ॥

अथ कार्तिकशुक्लैकादशी प्रबोधिनी।। तन्निर्णयस्तु पूर्वं ग्रथारंभ एव कृत इति नात्रोच्यते ।। अथ देवोत्थापने भद्रा त्याज्या तद्रहितकालस्यापि लाभात् ।।१५।।

अथ पौषकृष्णनवम्यां श्रीमद्विठ्ठलनाथप्रभूणामुत्सवः ।। स चोदयव्यापिन्यां कार्यः ।। दिनद्वयेऽपि तद्व्याप्तौ पूर्वा ग्राह्या नवमीक्षये तु विद्धैव एतदुपपादितं पूर्वं स्वामिन्युत्सवनिर्णये ।। १६ ।।

अथ भोगीपर्व ।। तत्संक्रमणपुण्यकालदिनात्पूर्वदिने कार्यम्।अस्य लोकसिद्धत्वान्निर्णयोनापेक्षितः१७

अथ मकरसंक्रांतिनिर्णयः ।। तत्र दिवासंक्रमणे माधवमतानुसारेण परा विंशतिर्घटिकाः पुण्यकाल इति तत्र स्नानादिकं कार्यम् ।। रात्रौ संक्रमणे तु पराश्चत्वारिंशद्घटिकाः पुण्यकाल इति हेमाद्रिमतमनुसृत्य द्वितीयदिने दानादिकं कार्यम् ।। यद्यपि रात्रौ संक्रमणे माधवमते अर्धरात्रात्पूर्वं संक्रमणे पूर्वदिने मध्याह्नोत्तरं प्रहरद्वयं पुण्यकालः ।। अर्धरात्रानंतरं संक्रमणे द्वितीयदिने मध्याह्नपर्यंतं पुण्यकालः ।। पूर्णेऽर्धरात्रे संक्रमणे तु पूर्वेऽह्नि मध्याह्नात्परं प्रहरद्वयं पुण्यकालो द्वितीयदिने च मध्याह्नात्पूर्वं

प्रहरद्वयं पुण्यकाल इत्येवं दिनद्वये पुण्यकाल इति निर्णीतं तथापि रात्रौ संक्रमणे सदाचारानुसारेण द्वितीयदिन एव पर्वात्मकोत्सवः कार्यः ॥ मेषसंक्रांतिनिर्णयस्तु चैत्रोत्सवनिर्णये वक्ष्यते ॥ १८ ॥

माघशुक्लपंचमी वसंतपंचमी ॥ तस्यामुदयव्यापिन्यामुत्सवः कार्यः ॥ देवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविरिति वृद्धयाज्ञवल्क्यवाक्यात् ॥ दिनद्वये तद्व्याप्तौ पूर्वा, पंचमीक्षये तु विद्धैव ग्राह्या ॥ १९ ॥

माघशुक्लपूर्णिमायां रोपणम् ॥ तत्र होलिकादंडारोपणं पर्वात्मक उत्सवश्च कार्यः ॥ अत्र शास्त्रीयवचनाभावेऽपि सकलदेशप्रसिद्धत्वात्पूर्वोक्तं कर्तव्यमेव अत्र भद्रां विहाय रात्रौ पौर्णमासीमध्ये दंडारोपणं कार्यं तत्र यदि रात्रिपूर्वभागे दंडारोपस्तदा भगवत्यभ्यंगादिकं पूर्वदिने कार्यम् ॥ यदा तु रात्रिपरभागे दंडारोपणं तदा परदिने अभ्यंगादिकं कार्यमिति सदाचारः ॥ यदा रात्रिपूर्वभागे चतुर्दशी द्वितीयदिने च पौर्णमासी सूर्यास्तात्प्रागेव निवर्तते यदा वा चंद्रग्रहणं तदा यो निर्णयः स होलिकानिर्णये वक्तव्यः ॥ २० ॥

अथ फाल्गुनकृष्णसप्तम्यां श्रीगोवर्धनधरागमनोत्सवः ॥ स च भक्तिमार्गीय एवेत्यौदयिक्यामेव कार्यः ॥ सप्तमीक्षये तु विद्धायामेव दिनद्वयेऽप्युदयव्याप्तौ पूर्वस्यामेव ॥ २१ ॥

अथ फाल्गुनशुक्लपौर्णमास्यां पर्वात्मको होलिकोत्सवः ॥ तत्र पौर्णमासी प्रदोषव्यापिनी ग्राह्या ॥ प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदेति नारदवाक्यात् ॥ तत्र होलिकाप्रदीपनं भद्रां विहाय रात्रौ पौर्णमासीमध्ये कर्तव्यम् ॥ तदुक्तं ज्योतिर्निबंधे ॥ प्रतिपद्भूतभद्रासु यार्चिता होलिका दिवा ॥ संवत्सरं च तद्राष्ट्रं पुरं दहति साद्भुतम् ॥ यदा तु पूर्वदिने चतुर्दशी प्रदोषव्यापिनी परदिने च पूर्णिमा क्षयवशात् सायाह्नात्प्रागेव समाप्यते तदा पूर्वदिने संपूर्णरात्रौ भद्रासत्वात् ॥ भद्रायां च होलिकानिषेधात् परेऽहनि प्रतिपद्येव कुर्यात् ॥ सार्धयामत्रयं या स्याद्द्वितीयदिवसे यदा ॥ प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृतेति भविष्यवचनादिति निर्णयामृतकारः ॥ केचित्तु ॥ प्रदोषव्यापिनी न स्याद्यदा पूर्वदिने तदा ॥ भद्रामुखं वर्जयित्वा होलि-

कायाः प्रदीपनमिति नारदवचनात् ॥ भद्रामुखं विहाय पूर्वदिन एव कार्येत्याहुः ॥ भद्रामुखं तु आद्यघटिकापंचकपरमित्युक्तं ज्योतिःशास्त्रे॥ तिथ्यर्के तु ॥ यदा पूर्वदिने रात्रौ भद्रारहितकालो न लभ्यते परदिने च पूर्णिमायाः प्रदोषव्याप्त्यभावस्तदा भद्रा-पुच्छे होला कार्येति निर्णीतम् ॥ अथ भविष्ये ॥ सार्धयामत्रयं पूर्णा द्वितीयदिवसे यदा ॥ प्रतिपद्व-र्धमाना तु तदा सा होलिका स्मृतेति ग्रस्तोदये तु स्नात्वा होला कार्या ॥ स्नात्वा कर्माणि कुर्वीत भृत-मन्नं विवर्जयेदिति वाक्यात् ॥ अथ निर्णयसिंधौ ॥ अथ परेऽह्नि ग्रस्तोदयस्तदा पूर्वदिने भद्रावर्जं रात्रि चतुर्थयामे विष्टिपुच्छे वा होला कार्येति निर्णीतम् ॥ तथापि तिथ्यर्कादिग्रंथोक्तनिर्णयानुसारेण ग्रस्तोदये मोक्षानंतरं स्नात्वा ॥ प्रतिपन्मध्ये होलिकाप्रदीपनमेव मुख्यः पक्ष इति तथैव कार्यम्॥ ग्रस्तोदयातिरिक्ते केव-लग्रहणे तु भद्रामुखातिरिक्तकाले भद्रापुच्छे वा द्विती-यदिने प्रतिपन्मध्ये वा होलिकाप्रदीपनं मतभेदेन बहुधा निर्णीतं तथापि भक्तिमार्गे यथा सेवासौकर्यं तथा कार्यम् ॥ यदा तु दोलोत्सवदिने ग्रस्तोदयस्तदा

मोक्षानंतरं होलिकाप्रदीपनं वा सेवासौकर्याय पूर्वदिने रात्रौ भद्रामुखं त्यक्त्वा भद्रापुच्छे वा होलिकाप्रदीपनं शास्त्रोक्तत्वादुचितमेवेत्याकलनीयं सुधीभिः ॥ अत्र होलिकाप्रदीपनं रात्रिपूर्वभागे परभागे वा भवतु पर्वात्मक उत्सवस्तु होलिकाप्रदीपनात्पूर्वमेव कार्यः ॥ इति सकलशिष्टाचारसंमतम् ॥ २२ ॥

अथ दोलोत्सवनिर्णयः ॥ स च फाल्गुनपौर्णमास्यां पूर्णिमासमीपवर्तिन्यामुत्तराफाल्गुन्यां वा कार्यः ॥ तदुक्तं ब्रह्मपुराणे ॥ नरो दोलायितं दृष्ट्वा गोविंदं पुरुषोत्तमम् ॥ फाल्गुन्यां प्रयतो भूत्वा गोविंदभुवनं व्रजेदिति ॥ स्कांदे पुरुषोत्तममाहात्म्ये ॥ तपस्ये मासि राकायां यदोत्तराफाल्गुनी भवेत् ॥ तदा दोलोत्सवः कार्यस्तत्र श्रीपुरुषोत्तमे ॥ फाल्गुन्यां क्रीडनं कुर्यात् दोलायां मम भूमिप ॥ दोलायां येऽपि पश्यंति दक्षिणामुखपूजितम् ॥ ब्रह्महत्यादिभिः पापैर्मुच्यंते नात्र संशय इति ॥ कालश्च यामिन्याः पश्चिमे याम इति निश्चीयत इत्युक्तमुत्सवमताने ॥ अन्यत्रापि कालमाधवीयादौ बौधायनवचनम् ॥ सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविरिति स्व-

त्पनक्षत्रसत्वे तु नक्षत्रमध्येऽधिवासनमात्रं कृत्वा नक्षत्रमतिक्रम्य प्रभोर्दोलारोहणे रथारोहणे च न दोषः ॥ दिनद्वयेऽपि नक्षत्रस्य सूर्योदयव्याप्तौ नक्षत्रक्षये वा पूर्वदिनमेव ग्राह्यम् ॥ दोलोत्सवदिने ग्रहणसत्वे तु नक्षत्ररहितायामपि केवलपौर्णमास्यामुत्सवः कार्यः ॥ पूर्वोक्तब्रह्मपुराणवचने केवलपौर्णमास्यामपि दोलोत्सवविधानात् ॥ उत्सवप्रतानेऽपि दोलोत्सवनिर्णयारंभे ॥ फाल्गुनपौर्णमास्यां पूर्णिमासमीपे उत्तराफाल्गुन्यां वा दोलोत्सवः कार्य इति ॥ इति दोलोत्सवः ॥ २३ ॥

अथ चैत्रशुक्लप्रतिपदि वत्सरादिः सा सूर्योदयव्यापिनी ग्राह्या ॥ चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ॥ शुक्लपक्षे समग्रं तु तदा सूर्योदये सतीति ब्राम्होक्तेः ॥ दिनद्वयेऽपि सूर्योदयव्याप्तावव्याप्तौ वा पूर्वैव ॥ २४ ॥

अथ मेषसंक्रांतिः ॥ तत्र दिवासंक्रमणे पूर्वाः पराश्च दश घटिकाः पुण्यकालः ॥ तदुक्तं माधवीये कालनिर्णये ॥ वर्तमाने तुलामेषे नाड्यस्तूभयतो दशेति ॥ रात्रौ संक्रमणे तु ॥ अर्धरात्रात्पूर्वं संक्र-

मणे पूर्वदिने मध्याह्नात्परतः प्रहरद्वयं पुण्यकालः ॥ निशीथमध्ये संक्रमणे तु पूर्वदिने मध्याह्नात्परतः प्रहरद्वयं परदिने च मध्याह्नात्पूर्वं प्रहरद्वयमित्येवं दिनद्वयं पुण्यकालः ॥ तदुक्तं रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः ॥ अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ॥ १ ॥ उर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥ पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ॥ प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटाविति ॥२५॥

अथ श्रीरामनवमीनिर्णयः ॥ सा चोदयव्यापिनी ग्राह्या ॥ तदुक्तमगस्त्यसंहितायाम् ॥ चैत्रशुक्ला तु नवमी पुनर्वसुयुता यदि ॥ सैव मध्याह्नयोगेन महापुण्यतमा भवेदिति ॥ अत्र सैवेति विशिष्टपरामर्शान्मध्याह्ने पुनर्वसुयोगे महापुण्यतमत्वम् ॥ मध्याह्नादन्यत्र योगे पुण्यतमत्वम् ॥ अयोगे तु पुण्यतत्वमिति व्याख्यातारः ॥ दिनद्वयेऽपि सूर्योदयव्याप्तौ बहुकालव्यापित्वात् पूर्वैव ग्राह्या नवमीक्षये तु विद्धैव ग्राह्या गत्यंतराभावात् ॥ यदा तु पारणदिने क्षयवशाद्दशमी न लभ्यते तदा विद्धायामुपोषणं कृत्वा दशम्यामेव पारणं कार्यम् ॥ तदुक्तं माधवीये ॥

नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ॥ उपोषणं नवम्यां च दशम्यामेव पारणमिति स्मार्तनिबंधकाराः वैष्णवैस्तु शुद्धां नवमीमुपोष्य विद्धैकादश्यां पारणं कार्यमिति ॥ एतच्च निर्णीतं श्रीविठ्ठलनाथप्रभुभिः स्वकृतश्रीरामनवमीनिर्णये उत्सवप्रताने च तेनायं निष्कर्ष इत्यादिना निर्णीतम् ॥ २६ ॥

अथ वैशाखकृष्णैकादश्यां श्रीमदाचार्यचरणोत्सवः ॥ स च स्वामिन्युत्सववदौदयिक्यां कार्यः ॥ युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ॥ रवेरुदयमीक्षंते न तत्र तिथियुग्मतेति वाक्यात् ॥ दिनद्वये सूर्योदयव्याप्तौ पूर्वस्यामुत्सवः कार्यः ॥ उपवासवन्निर्णयाभावात् ॥ एकादशीक्षये तु विद्धायामेवोत्सव इति संक्षेपः ॥ २७ ॥

वैशाखशुक्लतृतीयायां चंदनयात्रोत्सवः ॥ तदुक्तं स्कांदे पुरुषोत्तममाहात्म्ये ॥ वैशाखशुक्लपक्षे तु तृतीयाऽक्षयसंज्ञिता ॥ तत्र मां लेपयेद्गंधलेपनैरतिशोभनैरिति ॥ सा च सूर्योदयव्यापिनी ग्राह्या ॥ तदुक्तं स्कांदे ॥ कला काष्ठापि वा यत्र द्वितीया संप्रदृश्यते ॥ सा तृतीया न कर्तव्या कर्तव्या गणसंयु-

तेति ॥ दिनद्वये सूर्योदयव्याप्तौ पूर्वेव ॥ क्षये तु विद्धैव ग्राह्या ॥ २८ ॥

वैशाखशुक्लचतुर्दश्यां श्रीनृसिंहोत्सवः ॥ तदुक्तं नृसिंहपुराणे स्कांदे च ॥ वैशाखशुक्लपक्षे तु चतुर्दश्यां निशामुखे ॥ मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाशनम् ॥ वर्षे वर्षे तु कर्तव्यं मम संतुष्टिकारणमिति ॥ वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके ॥ अवतारो नृसिंहस्य प्रदोषसमये द्विजाः ॥ अत्र चतुर्दशी त्रयोदशीवेधरहिता ग्राह्या ॥ तदुक्तं समयमयूखे ब्रह्मपुराणे ॥ अनंगेन समायुक्ता न सोपोष्या चतुर्दशी ॥ पूर्णायुक्तां च कुर्वीत नरसिंहस्य तुष्टये ॥ यः करोति नरो मोहात्कामविद्धां चतुर्दशीम् ॥ धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेदिति दिनद्वये सूर्योदयव्याप्तौ पूर्वदिने उत्सवः ॥ क्षये तु विद्धायामेवोत्सवः कार्यो गत्यंतराभावात् ॥ २९ ॥

ज्येष्ठशुक्लदशमी दशहरा ॥ तदुक्तं ब्रह्मपुराणे ॥ ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ॥ हरते दश पापानि तस्माद्दशहरा स्मृतेति ॥ वाराहेऽपि ॥ दशमी शुक्लपक्षे तु ज्येष्ठे मासि कुजेऽहनि ॥ अव-

तीर्णा स्वतः स्वर्गाद्धस्तर्क्षे च सरिद्वरा इति ॥ स्कांदे तु दशयोगा उक्ताः ॥ यथा ॥ ज्येष्ठे मासि सिते पक्षे दशमीबुधहस्तयोः ॥ व्यतीपाते गरानंदे कन्याचंद्रे वृषे रवौ ॥ दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यत इति ॥ अत्र बुधभौमयोः कल्पभेदेन व्यवस्था ॥ अत्र निर्णयसिंधौ इयं च यत्र योगबाहुल्यं सैव ग्राह्येत्युक्तम् यद्यपि तथापि भक्तिमार्गे उदयव्यापिनी ग्राह्या ॥ तथैव सदाचारात् ॥२०॥

ज्येष्ठशुक्लपौर्णिमायां तत्समीपे वा ज्येष्ठायां ज्येष्ठाभिषेकोत्सवः ॥ तदुक्तं ब्राह्मे ज्येष्ठे मासि च संप्राप्ते नक्षत्रे चंद्रदैवते ॥ पौर्णमास्यां तदा स्नानं सर्वकालं हरेर्द्विजा इति ॥ तथा स्वर्णघर्मानुवाकेन स्नापयेत्पुरुषोत्तममिति ॥ पौर्णमास्यां सूक्तमंत्रैः स्नापयेद्विधिवद्विभुमिति च ॥ अत्र च पौर्णमास्यामिति सामीप्यसप्तमी ॥ तेन दोलोत्सववदेतद्व्यवस्था ज्ञेया ॥ तिथिनक्षत्रयोगश्चेत् प्रशस्तत्वं ज्ञेयम् ॥ ज्येष्ठ्यां ज्येष्ठर्क्षयुक्तायां यः पश्येत्पुरुषोत्तमम् ॥ कुलैकविंशमुद्धृत्य विष्णुलोकं स गच्छतीति ब्राह्मात् ॥ तिथिनक्षत्रयोगाभावे तु दोलोत्सववत् केवलनक्षत्रमेव

ग्राह्यम् ॥ अत्र चंद्रग्रहणसंभवे तु दोलोत्सववत् केवलपौर्णमास्यामुत्सवः कार्य इति निर्णयः ॥ २१ ॥

अथाषाढे रथोत्सवः ॥ तदुक्तं स्कांदे विशेषान्मोक्षदाषाढद्वितीया पुष्यसंयुता ॥ ऋक्षाभावे तिथौ कार्या सदा सा प्रीतये मम ॥ आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ॥ तस्यां रथे समारोप्य रामं मां भद्रया सह ॥ महोत्सवं प्रवर्त्याथ प्रणमेत द्विजान्बहूनिति ॥ तिथिनक्षत्रयोगाभावे केवलं नक्षत्रमेव ग्राह्यमिति निर्णीतं ज्येष्ठाभिषेकनिर्णये ॥ २२ ॥

अथाषाढशुक्लषष्ठ्यां षष्ठपंडुसंज्ञकं पर्व ॥ तच्च सदाचारसिद्धम् ॥ तत्र षष्ठी उदयव्यापिनी ग्राह्या ॥ तथैव शिष्टाचारात् ॥ २३ ॥

आषाढशुक्लपौर्णमास्यामुदयव्यापिन्यां पर्वात्मक उत्सवः ॥ देवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविरिति वृद्धयाज्ञवल्क्यवाक्यात् ॥ यद्यपि चतुर्दश्यां च पूर्णिमेति युग्मवाक्ये पूर्वविद्धा गृहीता तथापि व्यासपूजादौ परविद्धाग्रहणात् ॥ भक्तिमार्गे तथैव शिष्टाचाराच्च परविद्धैव ग्राह्या ॥ २४ ॥

अथ श्रावणे मासि यस्मिन् कस्मिंश्चिच्छुभदिने

हिंदोलांदोलनारंभः ॥ स च वसंतोत्सववत्सकलदेशाचारसिद्धः ॥ वसंतोत्सवादौ सदाचारस्य प्रामाण्यं पूर्वमीमांसाप्रथमाध्यायतृतीयपादे स्मृतिसदाचारनिर्णये विस्तरेण प्रतिपादितम् ॥ अथ श्रावणशुक्लतृतीया लोके मधुश्रवेति प्रसिद्धा तस्या यद्यपि धर्मशास्त्रे गौरिसंबंधित्वं प्रसिद्धं तथापि श्रीभागवते दशमस्कंधद्वितीयाध्याये मायांप्रति भगवद्वाक्ये दुर्गेति भद्रकालीति विजया वैष्णवीति चेत्यत्र वैष्णवी नारायणीत्यादिशब्दप्रयोगात् ॥ यथा तरोर्मूलनिषेचनेति वाक्यात् भगवत्पूजनस्य सकलतृप्तिहेतुत्वेन च तृतीयायां पर्वात्मक उत्सवो भक्तिमार्गेऽपि शिष्टाचारसिद्धः ॥ सा च तृतीया परयुता ग्राह्येत्युक्तं निर्णयसिंधौ ॥ ३५ ॥

अथ श्रावणशुक्लपंचमी नागपंचमी ॥ सा च नागपूजादौ परैवेति सामान्यनिर्णय उक्तः ॥ श्रावणे पंचमी शुक्ला संप्रोक्ता नागपंचमी ॥ तां परित्यज्य पंचम्यश्चतुर्थीसहिता हिता इत्यादिवचनानि निर्णयसिंधौ प्रसिद्धानि ॥ ३६ ॥

अथ श्रावणशुद्धैकादश्यां पवित्रारोपणोत्सवः ॥

स च विष्णुरहस्य उक्तः ॥ श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ॥ द्वादश्यां वासुदेवस्य पवित्रारोपणं स्मृतम् ॥ द्वादश्यां श्रावणे वापि पंचम्यामथवा द्विज ॥ अनुकूलेषु कर्तव्यं पंचदश्यामथापि वा ॥ मुख्यालाभे हि सर्वत्र यावन्नोत्तिष्ठते हरिरिति ॥ अत्र प्रथमो द्वादशीशब्द एकादशीपर इत्यादि निर्णीतमुत्सवप्रताने बहुविस्तरेण ॥ एतच्च भद्रां विहाय कर्तव्यं गत्यंतरसंभवात् ॥ अत्र दशमीवेधस्त्याज्यः ॥ विद्धैकादश्या आसुरीत्वश्रवणात् ॥ वेधनिर्णयश्च ग्रंथारंभे एकादशीनिर्णये कृत इति ततोऽवधेयः ॥ पवित्रारोपणं काम्यं नित्यं च ॥ तदुक्तं ब्रम्हपुराणे ॥ ब्राह्मणः क्षत्रियो वैश्यस्तथा स्त्री शूद्र एव च॥ स्वधर्मनिरताः सर्वे भक्त्या कुर्युः पवित्रकम्॥ न करोति विधानेन पवित्रारोपणं तु यः ॥ तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ॥ तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ॥ वर्षे वर्षे प्रकर्तव्यं पवित्रारोपणं हरेरिति ॥ ३७ ॥

अथ श्रावणपौर्णमास्यां रक्षणबंधनोत्सवः ॥ स च भद्रारहितायां तात्कालिकपौर्णमास्यां कार्यः ॥

भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ॥ श्रावणी नृपतिं हंति राष्ट्रं हंति च फाल्गुनीति वाक्यादिति संक्षेपः ॥ ३८ ॥

इति निर्भयरामभट्टविरचितो व्रतोत्सवपर्वादिनिर्णयसंग्रहः समाप्तः।

# दंपत्योरेकगुरुशिष्यत्वेदोषाभावविचारः

श्रीकृष्णाय नमः।

अथेदं विचार्यते मंत्रविषये दंपत्योरेकगुरोर्मंत्रग्रहणत एकशिष्यत्वे भ्रातृभगिनीत्वे सति लौकिककार्यानर्हत्वान्नैकगुरोर्मंत्रोपदेशग्रहणं युक्तमिति ॥ नचात्र प्रमाणाभावान्नायुक्तत्वमिति वाच्यम् ॥ अन्नदाता भयत्राता विद्यादातेत्यादिवचनप्रामाण्यान्नाप्रामाणिकत्वम् ॥ पंचैते पितरो नृणामित्यादिपदानां कंठरवेणैवोक्तत्वात् ॥ अत्र हि वाक्यस्य तात्पर्यार्थश्च भिन्न एवेति विचारणीयम् ॥ तथाहि पंचैते पितरो नृणां इत्यस्याज्ञादिविषयकत्वस्य संभावितत्वेन प्रसिद्धत्वात्तथैव स्वीकरणमावश्यकमिति सार्वजनीनम् ॥ अन्यथा जन्मदातरि पितृत्वं सेकादिविलक्षणं न स्यात् ॥ अन्यच्च पितृपंचके गुरुश्वशुरयोस्तन्म-

ध्यापातात्तदीयकन्यायाः पाणिग्रहणानंतरं लौकिककार्यानर्हत्वेन कार्यानुपयुक्तत्वं भगिनीत्वस्य तत्संबंधेन विद्यमानत्वात् ॥ किंच ॥ एकज्ञातिकगुरोर्मुख्यशिष्यस्य विद्याविनयादिगुणबाहुल्यदर्शनेन प्रसन्नीभूते गुरौ शिष्याय स्वकीयां कन्यां दत्तवानिति पुराणादिसिद्धप्रसिद्धेश्च विद्यमानत्वात् ॥ नैतदाशंक्यम् अन्यच्च ॥ मंत्रदातृत्वं ज्ञानदातृत्वं च नियमेन स्थितं पुत्रेण ज्ञानसहितं मंत्रदानं पितृभ्यः भर्त्रा ज्ञानसहितं मंत्रदानं भार्यायै दत्तं इत्यादि पौराणीयवाक्यसहस्रैर्गुंफितं प्रमाणसद्भावितमिति न शंकालेशो मंत्रविषये भ्रातृभगिन्यादिरूपदोषसंभावनापीति विचक्षणैर्विचारणीयम् ॥ अन्यच्च इदं मंत्रदानमेकस्मादेव गुरोर्दंपत्यादिभिर्गृहीतं महाफलदमिति वचनव्यवस्थयोत्तमत्वादवश्यमेकीभूयैव ग्रहीतव्यम् ॥ तथा च वचनं पुराणस्थम् ॥ आचारो धर्ममार्गश्च गुरुर्मंत्रश्च देवताः॥ दंपत्यापत्यभृत्याद्यैरेकीकृत्य महत्फलम् ॥१॥ आचारप्रभवो धर्म इतिवचनादाचारस्य सर्वधर्मसाधकत्वेनावश्यकत्वात् नहि सर्वेषां पृथक् पृथक् गुरूपदेशेनैकमार्गीया आचारसिद्धिः केनापि सम्यग्वक्तुं

शक्यते ॥ तत्र भक्तिज्ञानकर्ममर्यादासाधारणसंसारिणामाचारत्वस्यैकत्वेऽपि व्यक्तिवैलक्षण्यस्य सर्वानुभवैकत्वात् ॥ तदत्र निदर्शितं दंपतीभृत्याद्यैरेक एव गुरुरादरणीयः ॥ फलपूर्णापेक्षकैरिति प्राथमिककक्षायां आचारज्ञानदगुरोरेकत्वं मंत्रदानविषयेऽप्येक एव गुरुः कार्यः ॥ अन्यथा मंत्रशिक्षाद्यनेकतात्त्विकविचारविषयकवैलक्षण्यसिद्धबुद्ध्या फलवैपरीत्यापत्तिरिति सुधीभिर्विचारणीयम् ॥ तस्माद्दंपत्या सपरिकरेण गुरुश्चैक एव कर्तव्य इति मुख्यः पक्षः॥ अत्र च लौकिकालौकिकविचारबाहुल्येऽपि विस्तरभिया न तन्यते ॥ अत्र प्रमाणांतरम्॥ विष्णुतत्त्वं परिज्ञाय ह्येकं वानेकभेदवत् ॥ दीक्षयेन्मेदिनीं सर्वां किं पुनश्चोपसन्नतान् ॥१॥ ननु वाक्यांतरविरोधः पुनरपि दूरीकर्तुमुचित इति तद्वाक्यमाह ॥ अन्नदाता भयत्राता पत्नीतातस्तथैव च ॥ विद्यादाता जन्मदाता पंचैते पितरो नृणाम्॥ १ ॥ अयं दोष उपदेशविषये नास्ति ॥ यद्ययं दोषः स्यात्तदा गौतमः स्वकन्यामुत्तंकाय स्वशिष्याय कथं दद्यात् अत एकोदरस्थयोस्तत्संबंधः ॥ न च देवयान्याः

कचेनापरिग्रहादस्ति तद्दोष इति वाच्यम् ॥ तस्या भगिनीत्वं वाचनिकमंगीकृत्य निषेधात्तत्समत्वात्त-योरेकोदरस्थत्वम् ॥ किंच दीक्षयेन्मेदिनीं सर्वामिति पद्मखंडाभिप्रायान्मेदिनीमध्यस्थानां सर्वेषां परिग्रहात् सर्वेषां भक्तिमतां भक्तिमंत्रोपदेशाधिकारिणां दंभादिरहितानां योग्यत्वं किं पुनश्चोपसन्नतान् इत्यादिनोपसमीपे सम्यक् प्रणतियुक्तान् शरणागतान् दीक्षितुं योग्यान् दीक्षा दातव्येत्येतद्विषये न कोऽपि शंकालेश इति सर्वमनवद्यम् ॥

इति दंपत्योरेकगुरुशिष्यत्वे दोषाभावविचारः समाप्तः ।

## अथ तिलकनिरूपकानि पद्यानि ।

श्रीकृष्णाय नमः ।

उच्चैश्चत्वारि चक्राणि बाहुमूले तु दक्षिणे ॥
नाममुद्राद्वयं नीचैः शंखमेकं तयोरधः ॥ १ ॥
मध्ये ततः पार्श्वयोस्तु द्वे द्वे पद्मे च धारयेत् ॥
वामेऽपि चतुरः शंखान् नाममुद्रा च पूर्ववत् ॥ २ ॥
चक्रमेकं गदे द्वे द्वे पार्श्वयोरिति भेदतः ॥
त्रीणि त्रीणि च चक्राणि मध्ये शंखावुभावुभौ ॥३॥
हृत्पार्श्वयोः स्तनादूर्ध्वं गदापद्मानि पूर्ववत् (बाहुवत्)॥

ललाटे च गदामेकां नाममुद्रां तथा हृदि ॥ ४ ॥
त्रीणि त्रीणि च चक्राणि कर्णमूले तयोरधः ॥
एकमेकं तदन्येषु तिलकेषु च धारयेत् ॥ ५ ॥
संप्रदायप्रयुक्तं च मुद्रा शिष्टानुसारतः ॥
यथारुचि तथा धार्या न चात्र नियमो मतः ॥ ६ ॥
इति श्रीरघुनाथजीकृतानि तिलकनिरूपकानि पद्यानि ॥ १ ॥

## अथ तिलकधारणविधिः ।

श्रीकृष्णाय नमः ।

केशवाय नमः ललाटे ॥ नारायणाय नमः नाभौ ॥ माधवाय नमः हृदि ॥ गोविंदाय नमः कंठे ॥ विष्णवे नमः दक्षिणकुक्षौ ॥ वामनाय नमः वामकुक्षौ ॥ मधुसूदनाय नमः दक्षिणबाहौ ॥ श्रीधराय नमः वामबाहौ ॥ त्रिविक्रमाय नमः कर्ण मूले ॥ पद्मनाभाय नमः पृष्ठे ॥ दामोदराय नमः स्कंधयोः ॥ वासुदेवाय नमः मूर्धनि ॥

इति तिलकधारणविधिः समाप्तः ।

## अथ द्रव्यशुद्धिः ।

श्रीकृष्णाय नमः ।

नत्वा श्रीवल्लभाचार्यान् हरिसेवोपकारिका ॥ बाह्याभ्यंतरी द्रव्यशुद्धिरत्र विचार्यते ॥ १ ॥ निबंधेषु

विविच्योक्ताप्यधुना बुद्धिदोषतः ॥ यतो न भासते सम्यक् तत एष समुद्यमः ॥ २ ॥

अथ स्नानाचमननिमित्तविचारः ॥ तत्र तावत्प्रायश्चित्तमिताक्षरायां याज्ञवल्क्यः ॥ उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ॥ अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृदित्याह ॥ तत्र विज्ञानेश्वरः ॥ उदक्या रजस्वला ॥ अशुचयः श्वचंडालपतितसूतिकाशावाशौचिनः एतैः संस्पृष्टः स्नायात् ॥ तैः पुनरुदक्याशुचिसंस्पृष्टादिभिः संस्पृष्ट उपस्पृशेत् आचामेत् ॥ आचम्य च अब्लिङ्गान्यापोहिष्ठेत्येवमादीनि त्रीणि मंत्रवाक्यानि जपेत् ॥ त्रिष्वपि बहुवचनस्य चारितार्थ्यात् ॥ तथा गायत्रीं च मनसा सकृज्जपेत् ॥ ननूदक्यादिसंस्पृष्टः स्नायादित्येकवचननिर्दिष्टस्य कथं तैरिति बहुवचनेन परामर्शः ॥ सत्यमेवं किंत्वत्र उदक्यादिसंस्पृष्टव्यतिरिक्तस्नानार्हमात्रस्पर्शेऽप्याचमनमात्रविधानार्थं तैरिति बहुवचनमित्यविरोध इति व्याख्यातवान् ॥ तेन रजस्वलाशवशावाशौचिचांडालपतितसूतिकानां स्पर्शे सचैलं स्नानम् ॥ अपरार्के तु मनुवाक्ये ॥

दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा ॥ शवं तत्स्पृष्टिनं चैव स्पृष्टः स्नानेन शुद्ध्यतीति शवस्पृशः स्पर्शेऽपि सचैलं स्नानमुक्तम् ॥ मर्यादासिंधौ तु व्याख्यातम् ॥ दिवाकीर्तिश्चय चंडालः ॥ अत्यंताशुचिसाहचर्यात् ॥ पतितो महापातकी ॥ सूतिका प्रसवे सत्यप्राप्तशुद्धिकाला ॥ स्पष्टं स्पर्शः तस्य स्पृष्टं तत्स्पृष्टं तदस्यास्तीति तत्स्पृष्टी अत्र तत्पदेन दिवाकीर्तिप्रभृतयः पंचापि परामृश्यंते इति ॥ अपरार्केऽप्येवम् ॥ तेन पंचस्पृशामपि विस्पर्शे स्नानम् ॥ यद्यप्यत्र स्नानमात्रमुक्तं तथापि सचैलं स्नानं सर्वसंमतम् ॥ श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं सोमविक्रयिणं चितिं चितिकाष्ठं मद्यं मद्यभांडं सस्नेहं मानुषास्थि शवस्पृशं महापातकिनं शवं स्पृष्ट्वा सचैलमंभोऽवगाह्योत्तीर्याग्निमुपस्पृश्य गायत्र्यष्टशतं जपेत् ॥ घृतं प्राश्य स्नात्वा त्रिराचामेदिति च्यवनवचनात् ॥ तेन रजस्वलाशवचंडालपतितसूतिकात्स्पर्शिशावाशौचितस्पर्शिस्पर्शे सचैलं स्नानम् ॥ तद्व्यतिरिक्तस्नानार्हस्पर्शे त्वाचमनमिति सिद्ध्यति ॥ ते च स्नानार्हा विज्ञानेश्व-

रेण संगृहीता अग्रे वाच्याः ॥ सांप्रतं तु रजस्वलादिस्पर्शविषयेऽन्यो विशेष उच्यते ॥ मर्यादासिंधौ पराशरः ॥ उदक्यास्पर्शने यायादंशुकेनांगतोऽपि वा ॥ स्याच्चतसृष्वपि स्नानं तुल्याः सर्वा रजस्वला इति ॥ तुल्या इति ॥ स्पर्शदोषजनने सर्वास्तुल्या इत्यर्थः ॥ तथा वस्त्रसंस्पर्शने तस्य सचैलांगावगाहनम् ॥अंगस्पर्शनवत्तस्य वदंति द्विजसत्तमा इति च ॥ २ ॥

अथ वस्त्राद्यंतरितस्पर्शे बुद्धिपूर्वकस्पर्शे च स्नानादिविचारः ॥ पृथ्वीचंद्रोदये ॥ वस्त्राद्यंतरितस्पर्शे साक्षात्स्पर्शोऽभिधीयते ॥ साक्षात्स्पर्शे तु यत्प्रोक्तं तद्वस्त्राद्यंतरेऽपि चेति प्रचेतोवचनमप्युक्तम् ॥ पराशरवाक्ये तु ॥ स्नानं स्पृष्टेन येन स्यात्काष्ठाद्यैर्यदि तं स्पृशेत् ॥ न वारोहणवत्स्पर्शे तत्रोपस्पर्शनाच्छुचिरित्युक्तम् ॥ तेनेदं सिध्यति ॥ मनूक्तानां दिवाकीर्त्यादीनां पंचानां वस्त्राद्यंतरितस्पर्शे स्नानम्॥ शावाशौचिनां तु तत्रानुक्तत्वात्तदशुचित्वस्य प्रत्यहं क्षीयमाणत्वाच्च काष्ठादिना बुद्धिपूर्वकतत्स्पर्शेऽपि न स्नानं किंत्वाचमनादेव शुद्धिरिति ॥ एवंच

पूर्वोक्तयाज्ञवल्क्यवाक्यमपि संगतं भवतीति ॥ चेतनव्यवधानस्पर्शे तु विशेषः संवर्तेनोक्तः ॥ तत्स्पृष्टिनं स्पर्शेद्यस्तु स्नानं तस्य विधीयते ॥ उर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथेति ॥ तेनोदक्यादिस्पर्शे द्वयोः स्नानं तृतीयस्याचमनम्॥ एवं द्रव्येष्वपि तत्स्पृष्टस्पृष्टयोर्द्वयोः क्षालनं तृतीयस्य प्रोक्षणमिति सिध्यति तथेत्यतिदेशस्याचमनोत्तरमुक्तत्वेन प्रोक्षणस्य तत्समानदेशिकतया द्वयोत्तरमेव तत्र प्राप्ते ॥ इदं चाबुद्धिपूर्वकस्पर्शे द्रष्टव्यम् ॥ गौतमेन पतितचंडालोदक्याशवस्पृष्टितत्स्पृष्टस्युपस्पर्शने सचैलमुदकोपस्पर्शनाच्छुद्ध्येदित्यादिना तृतीयस्य स्नानस्योक्तत्वात् ॥ तथा उपस्पृश्याशुचि स्पृष्टं तृतीयं चापि मानवः ॥ हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यतीति मर्यादासिंधौ देवलवाक्याच्च त्रयाणां स्नानस्य चतुर्थे आचमनस्य च बुद्धिपूर्वकस्पर्शत्वेन सर्वेषु निबंधेष्वंगीकारात् ॥ तेन बुद्धिपूर्वकस्पर्शे त्रयाणां स्नानं चतुर्थस्याचमनम् ॥ यद्यप्यत्र प्रथमस्याबुद्धिपूर्वे द्वितीयादीनां तत्पूर्वे प्रथमस्य बुद्धिपूर्वे द्वितीयादीनामबुद्धिपूर्वे स्पर्शे विशेषः क्वापि

नोक्तस्तथापि बुद्धेरेव दोषप्रयोजकत्वकल्पनात्तादृशस्थले आतृतीयं स्नानमिति प्रतिभाति ॥ अयमेव न्यायो द्रव्येष्वित्यपि ॥ चतुर्थानंतरमशुद्ध्यनुवृत्त्याभावादिति ॥ इतः स्वल्पो वाचनिकस्तु द्रव्यशुद्धिप्रकारो अमेध्यादिस्पृष्टपात्रविचारे वक्ष्यते ॥ स्पर्शानंतरं स्नाने तु मर्यादासिंधौ विशेष उक्तः ॥ २ ॥

अथ शीतोष्णोदकस्नानविचारः ॥ अस्पृश्यस्पर्शनादौ स्नानं तीर्थादिषु शीतोदकेन कार्यम् ॥ अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणेति वृद्धमनुवचनात् ॥ तीर्थाभावे तु उष्णोदकेनापि कार्यम् ॥ नित्यं नैमित्तिकं काम्यं क्रियांगं मलकर्षणम् ॥ तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैरिति शंखवचनात् ॥ अत्र निमित्तानंतरं नैमित्तिकं कार्यमिति न्यायान्निश्यस्पृश्यस्पर्शे निश्येव स्नायात् ॥ ३ ॥

अथ रात्रौ स्नानविचारः ॥ तथाह यमः ॥ चंडालैः श्वपचैः स्पृष्टे निशि स्नानं विधीयते ॥ न वसेच्चेदयं रात्रौ निशि स्नानेन शुध्यति ॥ अथ तत्र वसेद्रात्रिमज्ञानादविचक्षणः ॥ तदा तस्य तु तत्पापं शतधा परिवर्तत इति ॥ अत्र चंडालादिपदं रजस्व-

लादीनामप्युपलक्षणम् ॥ अत्र विशेषमाह पराशरः ॥ अस्तंगते यदा सूर्ये चंडालं पतितं स्त्रियम् ॥ सूतिकास्पर्शतश्चैव कथं शुद्धिर्विधीयते ॥ जातवेदः सुवर्णं च सोममार्गं तथैव च ॥ ब्राम्हणानुमतेनैव स्नात्वा दृष्ट्वा च शुद्ध्यति ॥ आचांतमनुगते वा निशि स्नानं न विद्यते ॥ स्नानमाचमनं प्रोक्तं दिवोद्धृतजलेन त्विति ॥ सोममार्गमाकाशम् ॥ दृष्ट्वेत्यन्वयः ॥ अनुगते जलाशये ॥ रात्रौ जलाशये स्नानमाचमनं च नास्ति ॥ किंतु दिवोद्धृतजलेन रात्रौ स्नानमाचमनं च कार्यमित्यर्थः ॥ अन्योऽपि विशेषो देवलेनोक्तः ॥ दिवोद्धृतैर्जलैः स्नानं निशि कुर्यान्निमित्ततः ॥ प्रक्षिप्य च सुवर्णं तु सन्निधाप्य च पावकमिति ॥ एतदप्युद्धृतोदकस्नानं शवस्पृष्टव्यतिरिक्तविषयम् ॥ तथाह वृद्धशातातपः ॥ अनस्तमित आदित्ये संगृहीतं तु यज्जलम् ॥ तेन सर्वात्मनाशुद्धिः शवस्पृष्टं तु वर्जयेदिति ॥ रात्रौ शवतत्स्पृष्टयोस्पर्शे मज्जनेनैव शुद्धिः ॥ इतरास्पृश्यस्पर्शे तूद्धृतोदकस्नानेनेत्यर्थः ॥ उद्धृतजलाभावे तु मरीचिराह ॥ दिवाहृतं तु यत्तोयं गृहे यदि न विद्यते ॥ प्रज्वाल्याग्नि

ततः स्नायान्नदीपुष्करिणीषु चेति ॥ अग्न्यभावे विशेषमाहाग्निः ॥ रात्रौ स्नानं यदि भवेत्पश्यन्नग्निं समाचरेत् ॥ स्वर्णांगुलिकरो विप्रो वह्निना वा समाचरेदिति ॥ ४ ॥

अथ रात्रौ नद्यादिजले स्नानविचारः ॥ रात्रौ नद्यादिस्नानप्रकारविशेषमाह कात्यायनः ॥ न विशेद्वारि न स्नानं न रात्रौ जलमुद्धरेत् ॥ अन्यत्र धाम्न इत्येव तत्रस्थे स्नानमिष्यत इति ॥ अन्यत्रेत्यस्य पूर्वेण संबंधः ॥ धाम्न इति ॥ धाम्नो धाम्नो राजन्नितो वरुण नो मुंच ॥ यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुंचेति तैत्तिरीयशाखाद्युक्तं मंत्रं पठित्वा स्थानस्थित एव जले स्नायादित्यर्थः ॥ जलस्य रात्रावुद्धरणे तु बौधायनः ॥ अस्तमित आदित्य उदकं गृह्णीयान्न गृह्णीयादिति मीमांस्यते ॥ न गृह्णीयादित्येक आहुर्ब्रह्मवादिनो गृह्णीयादित्यपरे यावदुदकं गृह्णीयात्तावत्प्राणानायच्छेदग्निर्हवा उदकं गृह्णातीति इदं मर्यादासिंधुस्थं प्रमेयमुक्तम् ॥ तेनास्पृश्यस्पर्शे दिवा जाते दिवैव तीर्थादौ शीतांभोऽवगाहनम् ॥ तीर्थाऽभावे उष्णोद-

केन परोदकेन वा स्नानम् ॥ निशि जाते तु तीर्थे गत्वाग्निं प्रज्वाल्य धाम्न इत्यादि मंत्रं पठित्वा ततोऽवगाहनम् ॥ तदभावे दिवोद्धृतेन उष्णोदकेन परोदकेन वा तयाप्यग्निं पश्यता सुवर्णं प्रक्षिप्य स्नानं कार्यम् ॥ अग्न्यभावे सुवर्णांगुलिकरेण तदभावे तु रात्रावप्युद्धृत्य यथालाभं पूर्वोक्तप्रकारं कृत्वा स्नायात्ततः प्राणानायच्छेत् ॥ सर्वाभावे तु हरिं स्मृत्वा यथाकथंचिदपि स्नायात् ॥ नतु रात्रौ तथैव तिष्ठेदिति ॥ शवतत्स्पृष्टस्पर्शने तु मज्जनेनैव शुद्धिः ॥ अत्रापि मज्जनार्हजलाभावे हरिस्मरणपूर्वकं स्नानमिति प्रतिभाति ॥ तथैव स्थितेरनुचितत्वादिति ॥ सूर्योदयोत्तरं पुनः स्नायादिति च ॥ ५ ॥

अथ रात्रौ जन्ममृतिरजःसु कालविभागादिविचारः ॥ मिताक्षरायां कश्यपः ॥ उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ॥ जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥ अर्धरात्रावधिः कालः सूतकादौ विधीयते ॥ रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ॥ उत्तमोंऽशः प्रभातेन युज्यते मृतसूतके ॥ रात्रावेव समुत्पन्ने मृते रजसि सूतके ॥ पूर्वमेव

दिनं ग्राह्यं यावन्नाभ्युदितो रविरिति ॥ अत्राचारतो व्यवस्थेत्युक्तम् ॥ अत्र यस्येत्यनेन वारो ग्राह्यो न तिथिरिति बोध्यम् ॥ नोचेदुदित इत्यादिकथनवैयर्थ्यापत्तेः ॥ तेन म्लेच्छवद्रात्रिमारभ्य गणना वारिता ॥ शुद्धिमयूखे तु ॥ तत्रापि त्रिभागपक्षमेवाद्रियंते शिष्टा इत्येतावदधिकमुक्तम् ॥ ६ ॥

अथ चतुर्थदिनादौ रजस्वलाशुद्धिविचारः ॥ मिताक्षरायां स्मृत्यंतरे ॥ शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ॥ दैवे कर्मणि पित्र्ये च पंचमेऽहनि शुध्यतीति ॥ पंचमेऽहनीति रजोनिवृत्त्युपलक्षणम् ॥ रजस्युपरते साध्वी स्नानेन स्त्री रजस्वलेति मनुवाक्यात्साध्वीति दैवपित्र्यकर्मार्हेति व्याख्यानात् ॥ तेनानुपरतेऽपि रजसि चतुर्थेऽह्नि स्नानेन स्पर्शादिषु शुध्यति ॥ दैवपित्र्यकर्मविषये तु चतुर्थेह्नि स्नातापि रजोरहितैव योग्येत्यर्थ इत्युक्तम् ॥ इदमेव च युक्तम् ॥ चतुर्थेऽहनि संशुद्धा भवति व्यावहारिके इति तत्रैव वृद्धमनुना सर्वव्यवहारेषु शुद्धेरुक्तत्वात् परंपरितेषु देवादिकार्येष्वदोषात् ॥ तेनान्नसंस्कारहितशाकपिष्टादिस्पर्शेऽप्यदोषः साक्षात्पाकादि-

क्रियायां तु दोष इति सिध्यति ॥ एवं सति शुद्ध्युत्तरं रजोऽनुपरमे पाकाद्युपकरणसंपादनदशायां यदा परिहितवसने रजःसंसर्गो दृश्येत तदांगादि संशोध्य वस्त्रांतरं परिधाय तत्करणे दोषो न भवतीति सिध्यति ॥ ७ ॥

अथ परिमितदिनोत्तरं पुना रजोदर्शने विचारः ॥ तत्राहात्रिः॥ रजस्वला यदि स्नाता पुनरेव रजस्वला॥ अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥ एकोनविंशतेरर्वागेकाहः स्यात्ततो द्व्यहम् ॥ विंशप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेदिति ॥ अर्थस्तु ॥ रजोदर्शनमारभ्य पुनः सप्तदशदिनाभ्यंतरे रजोदर्शने अशुचित्वं नास्ति ॥ अष्टादशे त्वेकाहादूनविंशे द्व्यहाद्विंशतिप्रभृतिषु त्र्यहाच्छुद्धिरिति ॥ यत्तु चतुर्दशदिनादर्वागशुचित्वं न विद्यत इति श्रुत्यंतरं तत्र तु स्नानप्रभृतित्वमभिप्रेतमित्यविरोधः ॥ अयं चाशुचित्वप्रतिषेधो यस्या विंशतिदिनोत्तरमेव प्रायशो रजोदर्शनं तद्विषयः ॥ यस्याः पुनः प्रागेवाष्टादशदिनात्प्राचुर्येण तद्दर्शनं तस्यास्तु प्रागप्यष्टादशभ्यस्त्रिरात्रमिति विज्ञानेश्वरः ॥ एवंच यदि प्रथमदिन एव रजो यस्या

दृष्टं न द्वितीयादिषु तदाप्युक्तकश्यपवाक्ये दर्शनस्यैव निमित्तत्वेनोक्तत्वात् वसिष्ठेन च रजस्वला त्रिरात्र- मशुचिर्भवतीत्युक्त्याऽनंजनात्रिविधानकथनाच्चतुर्थे- ऽह्न्येव शुद्धिर्न तु प्रागित्यपि बोध्यम् ॥ अज्ञाते तु रजसि निर्णयसिंधौ पराशरमाधवीये प्रजापतिः ॥ अविज्ञाते मले सा तु मलवद्वसना यदि ॥ कृतं गृहेषु दुष्टं स्याच्छुद्धिस्तस्यास्त्रिरात्रत इत्युक्तवान् तेनै- तन्मते मलसत्तैवाशुचित्वापादिका ॥ कर्मतत्त्वप्रका- शिकाख्ये कृष्णभट्टीये धर्मप्रवृत्तौ च ज्ञानादशुचिरि- ष्यत इति चतुर्थपादः पठितः ॥ तथा यमोऽपि ॥ व्यसनात्कार्यकरणान्निद्राविस्मरणादपि ॥ रजःस्राव- मविज्ञाता सा शुचिः सर्वकर्मसु ॥ ज्ञानादूर्ध्वं यदि स्पृष्टा शोधयेत्कर्मसाधनम् ॥ मृण्मयानि परित्यज्य स्नेहानपि विलापयेत् ॥ तत्क्षणं दारुशृंगास्थि कांस्यं वा भस्मभिः शतैः ॥ गृहं विलेपयेन्मृद्भि- र्गोमयेन च वारिणा ॥ धान्यानां चैव सर्वेषां प्रोक्ष- णाच्छुद्धिरिष्यते ॥ ज्ञाताज्ञातेषु दोषेषु अनुक्तेष्व- शुभेषु च ॥ पुण्याहवाचनं कुर्याद्विप्राणामनुशास- नादिति॥ तथा असंदिग्धे परिज्ञाते स्वार्तवे शुद्धिका-

रणम् ॥ संदिग्धमात्रे स्नानं स्यादित्युवाच प्रजापतिरिति चोक्तम् ॥ तेनैतन्मते ज्ञानमेवाशुचित्वापादकम् ॥ स्मृत्यर्थसारे तु ॥ अज्ञाते रजःस्रावे चतुर्षु दिनेषु ज्ञाते तु रजःस्रावादिकमशुचित्वम् ॥ जननादौ तु ज्ञानादिकमशुचित्वम् ॥ सर्वथा अज्ञातं चेत् शुचित्वमेव ॥ एवं सर्वं पापनिमित्तं स्वसत्तादिपापापादकमित्युक्तम् ॥ स्वसत्तादीति स्वसत्तामारभ्य तथा चायमर्थः ॥ रजःप्रभृतीनां स्वसत्तामारभ्य पापजनकत्वात्तदारंभकालमनुमाय तदारभ्य स्पर्शदोषोऽनुसंधेयः ॥ आरंभकालानुमानाशक्तौ तु शुचित्वमेवेति ॥ अत्र यद्यपि पूर्वावधि कालसंदेहे पंचमदिवसादौ तज्ज्ञाने च निर्णयो नोक्तस्तथापि संदिग्धमात्रे स्नानं स्यादिति वाक्यात् संदिग्धया स्नातव्यम् ॥ तद्वस्त्रादीनां साक्षात्स्पृष्टानां क्षालनं गोमूत्रस्वर्णजलादिभिरपवित्रः पवित्रो वेत्यादि मंत्रपूर्वकमन्येषामभ्युक्षणं कार्यम् ॥ यत्र च बहुस्त्रीके गृहे दुष्टवस्त्रादिना मलमात्रज्ञानं न मलिनायास्तदापि दिनगणनादिभिर्या मालिन्ये संदिग्धा तया तया कार्यम् ॥ तत्रापि संदेहे तु

सर्वाभिः पुण्याहवाचनं तादृशस्थले सर्वत्र ज्ञाताज्ञातेष्विति पूर्वोक्तवाक्यात् हरिस्मरणादिपूर्वकं प्रोक्षणादिकं च सर्वत्र ॥ तदतिरेकेणान्यस्य शोधकत्मस्याभावात् ॥ संधितपर्पटयोस्तु त्याग एव ॥ उदक्यास्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेदिति याज्ञवल्क्यवाक्ये पक्वान्नत्यागकथनादेतयोश्चान्नसंज्ञासत्वादिति तु मम प्रतिभाति ॥ ८ ॥

अथ रजस्वलाया अशुच्यंतरस्पर्शे रजस्वलयोः परस्परस्पर्शे च विचारः ॥ तत्रापरार्के बहूनि वचनानि संतीति तेषामर्थ एवोच्यते ॥ उदक्यासूतिकयोः शवचंडालकर्मके स्पर्शे त्रिरात्रोपवासः ॥ चंडालश्वपचकर्तृकेऽपि तथा पंचगव्याशनं चाधिकं शातातपेनोक्तं कश्यपेन तु शुद्ध्युत्तरं तथाकरणमुक्तम् ॥ तद्वात्र्यनंतरं त्वजाघ्रातकरणमप्युक्तम् ॥ बृहस्पतिना तु पतितश्वपाककर्तृके स्पर्शे प्रथमदिने जाते त्र्यहः द्वितीये द्व्यहः तृतीय एकाहः अग्रे नक्तं कार्यं परंतु शुद्ध्यनंतरमित्युक्तम् ॥ अत्राशक्तौ वृद्धशातातपेन तदारभ्य स्नानावध्युपवासः स्नानोत्तरं तु कालेन शुद्धिरित्युक्तम् ॥ अत्राप्यशक्तौ तु पराशरेणाहोरात्रोपवासः

पंचगव्याशनं ततः शक्त्या स्वर्णदानं ब्राह्मणभोजनं चोक्तम् ॥ रजस्वलयोः परस्परस्पर्शे तु सगोत्रयोः स्नानमात्रम् ॥ असगोत्रयोरपि सवर्णयोः स्पर्शे एक रात्रमुपवासः ॥ क्षत्रियास्पर्शे ब्राह्मण्यास्त्रिरात्रम् ॥ वैश्यास्पर्शे पंचरात्रम् ॥ शूद्रास्पर्शे षड्रात्रमितिवृद्धव-सिष्ठेनोक्तम् ॥ रजस्वला चेन्मूत्राद्युत्सृजंतीं स्पृशेत्तदा उत्सृजंती अहोरात्रमुपवसेत् ॥ भुंजानां चेत्तदा भुंजाना त्रिरात्रं जलं पिबेत् ॥ रजस्वलां चेत् श्वजं-बुकखरप्रभृतयः स्पृशेयुः सा वा तान् स्पृशेत्तदा स्नात्वा सज्योतिरुपवसेत्पंचगव्यं चाश्नीयादित्यादिकं तत्र बहूक्तम् ॥ ९ ॥

अथ रजस्वलास्नानादिविचारः ॥ रजस्वलायाः स्नानदिवसे तैलादिमलिनं शिरोमलिनं वसनादिकं च यथावच्छोधनीयम् ॥ तदाह कृष्णभट्टीये परा-शरः ॥ रजस्वला त्रिरात्रांते मलं प्रक्षाल्य संगवे ॥ दंतानां धावनं कृत्वा मृत्तिकाषष्टिभिः पृथक् ॥ शौचं कृत्वा ततो देहं क्षाल्य गोमयवारिणा ॥ स्नायात्स-चैलं नाऽगारे तडागादिजलाश्रय इति ॥ अत्र मल-प्रक्षालनस्य गोमयेन स्नेहमालिन्यक्षालनस्य चोक्तया

तल्लाभः ॥ अत्रिरपि रजस्वला चतुर्थेऽह्नि मृत्तिकाप-
ष्टिभिः पृथक् ॥ शौचं कृत्वा यथान्यायं दंतानां धाव-
नं तथा ॥ कृत्वा तु संगवे तीरे सचैलं स्नानमाचरेत् ॥
भस्मगोमयमृद्भिश्च सर्वैरन्यतमेन वा ॥ स्नात्वांशुकं
परिच्छाद्य गंधपुष्पैरलंकृता ॥ आचम्य पुष्पैरा-
दित्यमर्चयित्वा यथोचितम् ॥ ऐंद्रं वरं प्रभो मह्य-
मिदानीं दातुमर्हसि ॥ इत्युक्त्वार्थेंद्रभावेन प्रार्थ-
येत्तु स्वकं पतिम् ॥ ऋतुस्नाता तु या नारी यं
स्नेहान्नरमीक्षते ॥ तादृशं जनयेत्पुत्रं पतिमेव
निरीक्षयेदिति ॥ स्मृत्यर्थसारे त्वेवं संगवे स्नानमा-
त्रमुक्तं गृहे वा तडागादौ वेति तु न विचारितम् ॥
पष्टिमृत्तिकादिभिः शौचं ब्राह्मण्याः क्षत्रादिस्त्रीणां
पादपादन्यूनमृत्तिकादिभिर्विधवाया द्विगुणाभिः
शौचमित्युक्तम् ॥ अन्येषु तु प्राचीनार्वाचीननिबं-
धेषु चतुर्थेऽह्नि स्नानमात्रं वदंति न तु तत्प्रकारं
कालं वा देशं वा ॥ शिष्टाचारस्तु सूर्योदयोत्तरं
चतुर्थेऽह्नि पूर्वोक्तप्रकारेण गृहेऽपि दृश्यते ॥ व्यास-
स्मृतौ द्वितीयाध्याये ॥ स्नायात्सा तु त्रिरात्रांते
सचैला उदिते रवौ ॥ विलोक्य भर्तृवदनं शुद्धा

भवति धर्मत इति वाक्यात् ॥ तेन स्मृत्याचाराभ्या-
मेषा देशकालव्यवस्थोचितैव ॥ तडागादीनामपि
सार्वत्रिकत्वादपि वस्तुतस्तु देशकालकथनमसहाय-
विषयम् ॥ न ह्येकाकिन्या गृहेऽतिशुद्धतया स्नातुं
शक्यते न वा दुष्टेऽस्मिन्कलौ सलज्जया तरुण्या
बहिस्तथा कर्तुं शक्यत इति ॥ एवं गृहे स्नाने
रजस्वलास्पृष्टार्द्रभूमिर्गृहं च यथावच्छोध्यमेव ॥
व्यसनात्कार्यकरणादिति पूर्वोक्तयमवाक्येषु स्नानोत्तरं
कर्मसाधनशोधनस्य गृहविलेपनस्य चोक्तत्वा-
दिति ॥ तत्स्पृष्टं जलं च त्याज्यमेव ॥ अक्षुब्धा-
नामपां नास्ति प्रसृतानां च दूषणम् ॥ स्तोकाना-
मुद्धृतानां च कल्मषैर्दूषणं भवेदिति मर्यादासिंधौ
देवलवाक्यात् ॥ किं बहुना ॥ अत्राक्षुब्धतडागादि-
नदीवाप्यः सरांसि च ॥ कश्मलाच्छुचिसंस्पर्शे
तीर्थतः परिवर्जयेदित्यमेध्ययुक्तदेशस्थानां त्यागस्य
तेनैवोक्तत्वाच्च चंडालाद्यशुचिस्पर्श इति पाठांतर-
स्योक्तत्वाच्च केसुतिकादेवोद्धृतजलत्यागप्राप्तेरिति ॥
तेन रजस्वलास्पृष्टार्द्रभूसंस्काराभावस्तत्स्पृष्टजलत्या-
गाभावश्चानाचार एव गुर्जराणाम् ॥ तथा तृतीय-

दिवसे मलापकर्षस्नानं सारस्वतद्विजक्षत्रियादि-
स्त्रीणां यो मध्यदेशे सोऽप्यनाचारएव ॥ एवं
रजस्वलावदेव शवस्पृग्भिश्च शिरोवस्त्रप्रभृति शोध्य-
मेव ॥ यद्यपि मृत्तिकासंख्या न तत्र शास्त्रोक्ता
तथापि स्मृत्यंतरे सकृन्मृत्तिकाभस्मस्नानस्योक्त्वा-
त्तथा शिष्टाचाराच्च तदप्यावश्यकम् ॥ बृहदाशौच-
त्वाच्च ॥ अतस्तत्स्पृष्टजलादिकं च त्याज्यमेव ॥
रजस्वलादीनामातुरत्वे तु यमः पराशरश्च ॥ आतुरे
स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ॥ स्पृष्ट्वा स्पृष्ट्वा
तु तं स्नायात् ततः शुध्येत्स आतुर इत्याहतुः ॥
उशना ॥ ज्वराभिभूता या नारी रजसा च परि-
प्लुता ॥ कथं तस्या भवेच्छौचं शुद्धिः स्याच्छौचक-
र्मणि ॥ चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ॥
सा सचैलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दशद्वादशकृत्वो वा आचामेच्च पुनः पुनः ॥ अंत्ये
च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ॥ दद्या-
च्छक्त्या ततो दानं पुण्याहेन विशुध्यतीति ॥ रजो-
दिवसेषु मध्ये ग्रहणापाते तु निर्णयसिंधौ स्नान-

१ द्याशौचिभिः.

मुक्तम् ॥ न सूतिकादिदोषोऽस्ति ग्रहे होमजपादिषु ॥ ग्रस्ते स्नायादुदक्यापि तीर्थादुद्धृत्य वारिणेति भार्गवार्चनदीपिकायां सूर्योदयनिबंधवचनात् ॥ स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ॥ पात्रांतरिततोयेन स्नानं कृत्वा व्रतं चरेदिति पराशरवचनाच्च ॥ त्रिदिनमध्य एव ग्रहणनिमित्तकं स्नानं कृत्वा अनंजनादिरूपं रजस्वलाव्रतं निर्वाहयेदित्यर्थः ॥ एवं ग्रहणनिमित्तके स्नाने प्राप्ते यदि चंद्रादेर्ग्रस्तस्य मुच्यमानदशायामुदयस्तदा ग्रस्यमाने भवेत्स्नानमित्युक्तस्य निमित्तस्याभावेऽपि दृष्ट्वा स्नायादिति वाक्यांतरोक्तान्निमित्तात्स्नानम् ॥ यदि च तावन्नावकाशस्तदा मुख्यस्य दानकालस्य सत्वान्मार्जनपूर्वकं दानमेव कृत्वा मुक्तिस्नानं कार्यमिति प्रतिभाति ॥ बालादीनां रजस्वलादिस्पर्शे तु शुद्धिमयूखे हरिहरभाष्ये शातातपः ॥ शिशोरभ्युक्षणं कार्यं बालस्याचमनं स्मृतम् ॥ रजस्वलादिसंस्पर्शे स्नातव्यं च कुमारकैः ॥ प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ॥ कुमारकः स विज्ञेयो यावन्मौंजीनिबंधनमिति ॥ रजस्वलादिदृष्टान्ने

तु शातातपः ॥ जीवाभिशस्तपतितैः सूतिकोदक्यना-स्तिकैः ॥ दृष्टं वा स्याद्यदन्नं तु तस्य निष्कृतिरु-च्यते ॥ अभ्युक्ष्य किंचिदुद्धृत्य तद्भुंजीताविशंकितः॥ भस्मना वापि संस्पृश्य संपृशेदुल्मुकेन वा ॥ सुवर्ण-रजताभ्यां वा भोज्यं घ्रातमजेन वेति ॥ एतेन जला-देर्नाशुद्धिरिति प्रतिभाति ॥ एवमत्यंताशुचिविषये विचारितम् ॥ १० ॥

अतः परमेतद्व्यतिरिक्तस्नानादियोग्यनिमित्तवि-चारः ॥तत्र पराशरः॥ दुःस्वप्ने मैथुने वांते विरिक्ते क्षुरकर्मणि ॥ चितिपूयस्मशानानां स्पर्शने स्नानमा-चरेदिति ॥ अत्र मैथुनिनः स्नानं ऋतुकालविषयं कालविशेषविषयं च ॥ अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवदिति बृहस्पतिवचनात् ॥ अष्टम्यां दिवा पर्वणि मैथुनम् ॥ कृत्वा सचैलं स्नात्वा तु वारुणी-भिश्च मार्जयेदिति मिताक्षरापरार्कयोः स्मृत्यंतराच्च ॥ मर्यादासिंधौ तु सद्यो भुक्तान्नवमने स्नानाभावः ॥ अश्नन् शुक्त्वार्द्रपाणिर्वा वांतो न स्नानमाचरेत् ॥ अन्यदा वमने स्नायात्तथा शोकाश्रुपातयोरित्याप-स्तंबवचनादित्युक्तम् ॥ शोकाश्रुपातयोरिति शोके

तत्कृतेऽश्रुपाते चेत्यर्थः ॥ तथा विरिक्तस्य दशकृत्वो विरेके स्नानमिति गोविंदराजः ॥ हरीतक्यादिभक्षणेन व्याधिना वा अष्टसंख्यात ऊर्ध्वं विरेके स्नानमिति मेधातिथिः ॥ मैथुने दुःस्वप्ने वमनविरेकयोरिति विष्णुवाक्यान्मिलितमेवैतन्निमित्तमित्युदीच्याइति मतत्रयमधिकमुक्तम् ॥ पूयस्पर्शे स्नानम्। तदनधिकृताकारणस्पर्शे वेदितव्यम् ॥ पूयं चाकारणादन्यः स्पृष्ट्वा स्नात्वैव शुध्यतीति लिंगपुराणादिति च विशेष उक्तः ॥ अस्थिस्पर्शे तु मनुना विशेष उक्तः ॥ नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ॥ आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य चेति ॥ सस्नेहमिति मांसमज्जादिसंदिग्धम् ॥ यत्तु ब्राह्मे॥मनुष्यास्थि तु संस्पृश्य स्निग्धं निःस्निग्धमेव वा ॥ स्नायाद्वा संस्पृशेत्सूर्यं पश्येद्विष्णुमनुस्मरेदिति निःस्निग्धस्पर्शेऽपि स्नानमुक्तम्॥ तत्कामतः स्पर्शविषयमित्यविरोधः ॥ अन्यच्च ॥ यम आह ॥ अजीर्णेऽभ्युदिते वांते तथाभ्यस्तमिते रवौ ॥ दुःस्वप्नं दुर्जनस्पर्शे स्नानमात्रं विधीयत इति ॥ अत्र अजीर्णापगमे स्नानं देवार्चादावधिकारत्वप्रतिपादनार्थ-

मिति मर्यादासिंधौ ॥ तथा सूर्योदयास्तमयव्यापिनी निद्रा अभ्युदिताभ्यस्तमितपदाभ्यामुच्यत इत्यपरार्के उक्तम् ॥ कश्यपस्तु ॥ उदयास्तमययोः स्कंदित्वा ऽक्षिस्पंदने कर्णाक्रोशने चित्यारोहणे पूयसंस्पर्शने च सचैलं स्नात्वा पुनर्मन इति जपेत् ॥ महाव्याहृतिभिः ससाज्याहुतीर्जुहुयादिति विशेषमाह स्मृत्यंतरे ॥ चितिं च चितिकाष्ठं च पूयं चंडालमेव च ॥ स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत् ॥ देवार्चनपरो यस्तु वित्तार्थी वत्सरत्रयम् ॥ स वै देवलको नाम हव्यकव्येषु गर्हितः ॥ मिताक्षरायां ब्रह्मांडपुराणे ॥ शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् ॥ विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत् ॥ अपरार्के तु बौद्धानिति पाठः ॥ तथा तत्रैव स्मृत्यंतरम् ॥ नग्नान् पाशुपतान्बौद्धान् कालान्कौलान् दिशश्चरान् ॥ एतान् दृष्ट्वा रविं पश्येत्स्पृष्ट्वा स्नानं समाचरेत्॥ मर्यादासिंधौ हारीतः ॥ बौद्धान् पाशुपतान् जैनान् लौकायतिककापिलान् ॥ विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत् ॥

---

रेत पातं कृत्वा.

कापालिकांस्तु संस्पृश्य प्राणायामोऽधिको मत इत्याह हारीतः ॥ अत्र पाशुपता वेदबाह्या विवक्षिता इति व्याख्यातम् ॥ अपरार्के तु अंगिरसा श्वपाकच्छायाधिरोहणे स्नानं घृतप्राशनं चोक्तम् ॥ अन्येऽपि बहवस्तत्रोक्ताः प्रत्यहं नित्यकर्माकर्ता पक्षानंतरं अस्पृश्यतां याति ज्ञातिबाह्यकृतश्च पुल्कसम्लेच्छभिल्लपारसीकादयः श्राविका नारी श्वपाल उन्मत्तः शूद्रोच्छिष्टं उच्छिष्टः शूद्रः श्वविड्वराहोष्ट्रखरवृकगोमायुवानरकाककुक्कुटगृध्रोलूकाः ॥ भासवायसवानरमार्जारखरोष्ट्रश्वविड्वराहाणाममेध्यत्वम् ॥ सदाचारचंद्रोदये तु मयूरो मेध्य इत्यप्युक्तम् ॥ चिताप्रदेशोद्भववृक्षः नीली नीलीविकाराः चंडालपतितच्छाया शिवनिर्माल्यं भक्षवर्ज्यं पंचनखः शवः परकीयवसाविष्ठार्तवमूत्ररेतोमज्जाशोणितानीति ॥ एतेषां स्पर्शे सचैलं स्नानं ॥ एवं चात्र निषिद्धेतरपक्षिपक्षाणामनुक्तत्वात्तेषां वायूद्धायितानां स्पर्शे न कश्चिद्दोष इति प्रतिभाति ॥ अत्र च येषां स्नानं युक्तं तेषामस्नातानां स्पर्शे तु स्पष्टुराचमनमात्रम् ॥ अथात्र विशेषो मर्यादासिंधौ ॥ तत्र शातातपः ॥ रजकश्चर्मकृच्चैव व्याध-

जालोपजीविनौ ॥ चैलनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥ मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा ॥ चक्री ध्वजी वध्यघाती ग्राम्यकुक्कुटसूकरौ एभिर्यदंगं स्पृष्टं स्यात् शिरोवर्जं द्विजातिषु ॥ तोयेन क्षालनं कृत्वा आचांतः शुचितामियात् ॥ अत्र रजको वस्त्ररंजनकर्ता ॥ शैलूषो नाटकाद्यभिनेता ॥ मुखेभगो मुखयोनिरिति ख्यातः ॥ शिरोवर्जमित्यत्र शिरःपदमूर्ध्वांगोपलक्षकमिति केचित् ॥ आपस्तम्बस्त्वेतान्प्रक्रम्य विशेषमाह ॥ एतैः स्पृष्टस्तु उच्छिष्ट एकरात्रं पयः पिबेत् ॥ एतैरुच्छिष्टैस्त्रिरात्रं घृतं प्राश्य विशुध्यतीति बृहत्पराशरः ॥ म्लेच्छाद्यनासनस्पर्शे क्षेत्रे वा यदि वा गृहे ॥ उपस्पृशन् शिरः प्रोक्ष्य संशुद्धो जायते नरः ॥ शंखः ॥ उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं वापि तथाविधम् ॥ तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुध्यति ॥ तथाविधमिति उच्छिष्टम् ॥ तथैवेति आचमनविधिना ॥ तथा यदंभः शौचनिर्मुक्तं क्षितिं प्राप्य विनश्यति ॥ प्रक्षाल्याशुचिलिप्तं च तत्स्पृष्ट्वा

१ तैलयंत्रकर्ता. २ स्त्रीघाती, राजघ्ना.

चम्य शुध्यतीति ॥ शौचजलासिक्तक्षितिमशुचि-लिप्तं च स्पृष्ट्वा प्रक्षालनादाचमनाच शुध्यतीत्यर्थः ॥ यमः ॥ सकर्दमं तु वर्षासु प्रविश्य ग्रामसंकरम् ॥ जंघानां मृत्तिकास्तिस्रः पभ्द्यां च द्विगुणाः स्मृता इति॥ ग्रामासंकरो ग्रामावकरः अन्यान्यपि निमित्तानि स्मृत्यंतरादवगंतव्यानि ॥ यथा ॥ स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ॥ आचांतः पुन-राचामेद्वस्त्रं विपरिधाय चेत्यादि ॥ कृतेष्वाचमनं कार्यं पितृकार्येषु सर्वदा ॥ अधोवायुसमुत्सर्गे आक्रंदे क्रोधने क्षुते ॥ मार्जारमूषकस्पर्शे प्रहासे ष्ठीवनेऽनृत इत्यादि च कृष्णभट्टीये ॥ ११ ॥

अथ स्पर्शे दोषाभावविचारः ॥ मर्यादासिंधौ बृहस्पतिः॥ तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ॥ नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥ आपद्यपि हि कष्टायां रुग्भये पीडने तथा ॥ मातापित्रोर्गुरो-श्चैव निदेशे वर्तनात्तथेति ॥ निदेशे आज्ञायाम् ॥ तथा च गुर्वाद्याज्ञयापि दोषाभाव इत्यर्थः ॥ शाता-तपः ॥ गोकुले कंदुशालायां तैलयंत्रेक्षुयंत्रयोः ॥ अमीमांस्यानि शौचानि स्त्रीषु राजकुलेषु चेति ॥

अत्रिस्मृतौ तु स्त्रीणां च व्याधितस्य चेति चतुर्थपादः पठितः ॥ पृथ्वीचंद्रोदये पराशरः ॥ विवाहोत्सवयज्ञेषु संग्रामे जनसंकुले ॥ पलायने वनेऽरण्ये स्पृष्टास्पृष्टिर्न दुष्यतीति ॥ षट्त्रिंशन्मतेऽपि ॥ देवयात्राविवाहेषु यज्ञेषु विततेषु च ॥ उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न दुष्यति ॥ स्मृत्यंतरे देवालयसमीपस्थान् देवयात्रा‑समागतान् ॥ चंडालपतितादींश्च स्पृष्ट्वा न स्नान‑माचरेत् ॥ अन्यथा यदि शंकेत देवताद्रोहमाचरेदि‑त्यपि तत्रैव ॥ स्पृष्टास्पृष्टिस्वरूपं च स्मृत्यर्थसार उक्तम् ॥ प्राप्य कारींद्रियं स्पृष्टमस्पृष्टमितरेंद्रियम् ॥ तयोस्तु विषयं प्राहुः स्पृष्टस्पृष्ट्यभिधानत इति ॥ अत्र च प्राप्य कारींद्रियं त्वगिंद्रियम् ॥ इतरेंद्रियं नयनादिकं तद्विषये स्पृष्टास्पृष्टिस्तत्र दोषाभाव इति केचिदिति पृथ्वीचंद्रः ॥ तथाचोक्तस्थलेषु तत्कर्मके तत्कर्तृके च स्पर्शादौ न दोष इत्यर्थः ॥ १२ ॥

अथ भगवत्सेवायां देवपित्र्यकर्मसु स्नानादिना शुद्धस्य के वा अशुचित्वहेतवः कथं च ततः शुद्धि‑रिति विर्णीयते ॥ तत्र ये पूर्वं स्नानार्हा उक्तास्त‑त्स्पर्शे तु स्नानमसंदिग्धमेव ॥ ये पुनराचमनार्हा‑

स्तेषामपि स्पर्शे स्नानमेव ॥ सदाचारचंद्रोदये ॥ श्वकाकोष्ट्रखरोलूकसूकरग्रामपक्षिणः ॥ दीपं शूर्पं तथा शय्यां पादत्राणं च मार्जनीयं ॥ स्नानांते यः स्पृशेदेतान् पुनः स्नानेन शुद्ध्यतीति ॥ बृहस्पतिनाऽन्येषां ग्रामपक्षिप्रभृतीनामाचमनप्रयोजनकस्पर्शानामपि स्पर्शे स्नानबोधनात् तत्समानकक्षाणामन्येषामपि स्पर्शे स्नानस्य सक्तुंहोमेऽञ्जलिव्याकोशत्ववदौचित्यबलादेव प्राप्तेः इदं च नाभेरूर्ध्वं स्पर्शे नाभेरूर्ध्वं करौ मुक्त्वा यदंगं स्पृशते खग ॥ तत्र स्नानं प्रकुर्वीत शेषं प्रक्षालनाच्छुचीति वाक्यादिति सदाचारचंद्रोदये ॥ मम त्वन्यदपि प्रतिभाति ॥ दीपादीनास्पृश्यत्वं लौकिकानामेव ॥ अजारजः खररजस्तथा संमार्जनीरजः ॥ दीपमंचकयोश्छाया हंति पुण्यं पुराकृतमिति स्मृत्यंतरे ॥ शूर्पवातनखाग्रांबुस्नानवस्त्रांगमार्जनः ॥ मार्जनीरेणुः केशांबु हंति पुण्यं पुराकृतमित्यत्रिस्मृतौ च तादृशामेव पुण्यहंतृत्वोक्तेः ॥ न तु वैदिकोपयुक्तानामपि स्पर्शे ॥ अत एव देयत्वेन दानार्थमुपस्थापितानामपि स्पर्शे स्नानाभावो

१ यथासक्तुहोमे अंजलिव्याकोशस्य औचित्यबलात्प्राप्तिस्तथा.

युज्यते अन्यथा तस्य दुष्टत्वापत्तेः श्राद्धादौ दीपदानस्य कार्तिकादिषु भगवद्दीपप्रबोधनस्य शूर्पार्पितसौभाग्यद्रव्यस्पर्शस्य शय्यायां विष्णुमूर्तिस्थापनस्य गुरुपादुकादिस्पर्शस्य भगवन्मंदिरमार्जनादेश्च स्नानोत्तरमकर्तव्यत्वापत्तेश्च तेषां पुण्यजनकत्वापत्तेश्च ॥ अत्र वचनानि दानखंडे सदाचारचंद्रोदयविष्णुभक्तिचंद्रोदयहरिवल्लभसुधोदयप्रभृतिषु च द्रष्टव्यानि ॥ गुरुपादुकादीनां पूज्यत्वं च त्वत्पादुके ह्यविरतं परि ये चरंतीति श्रीभागवते भगवत्पादुकापरिचरणानुवादात् ॥ भगवता कृष्णावतार उद्धवाय रामावतारे भरताय च स्वपादुकादानाच्च सिद्धे तत्परिचरणे ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मन इति श्वेताश्वतरश्रुत्या देववद्गुरुभक्तेरपि कर्तव्यत्वासिद्धम् ॥ अतस्तदुपानह ऊर्ध्वांगस्पर्शेऽप्यदोषः ॥ तथा नृसिंहपुराणे दूतान् प्रति यमवाक्ये ॥ संमार्जनं च यो दूता गोमयेनोपलेपनम् ॥ करोति भवने विष्णोस्तस्य त्याज्यं कुलत्रयमिति संमार्जनफलकथ-

१ स्नानांगीकारे दानार्थमुपस्थापितस्य.

नाद्भगवन्मंदिरसंमार्जनरजसोऽपि पुण्यत्वे कुतस्तत्संमार्जनीस्पर्शे दोषः ॥ न चोपलेपनमेव संमार्जनमिति शंक्यम् ॥ श्रीभागवते संमार्जनोपलेपाभ्यामिति भगवद्वाक्यस्य द्विवचनविरोधापत्तेः ॥ अतो लौकिकानामेव तेषां स्पर्शे स्नानं न तु शास्त्रीयाणामिति निश्चयः ॥ किंच ॥ स्नानोत्तरं नाभेरध उपानत्स्पर्शे यत्र दोषाभावस्तत्र तीर्थादौ स्नात्वा उपानत्परिधानेन गृहागमने पादमात्रस्पर्शे दोषाभावोऽर्थादेव सिद्धः ॥ दूरादागमने मध्येमार्गममेध्योच्छिष्टादीनां पतितानां संसर्गस्याशक्यपरिहारत्वेनांततो गत्वा पादौ शुची ब्राह्मणस्यैति वाक्यं शरणीकरणीयम् ॥ गृह आगत्य पादशौचं च कार्यमेव ॥ तथासत्यध्वगतानेकदुःस्पर्शापेक्षया एकस्योपानत्स्पर्शस्याल्पत्वादपि तथा ॥ केचित्तु ॥ पादुके ब्रजतो मेध्ये उत्तमांगे ह्युपानहाविति वचनमप्याहुः॥ तद्यदि समूलं तदा उत्तमांगपदस्योपानदुपरिभागबोधकत्वं ज्ञेयम् ॥ स्नानोत्तरं गृहाद्यागमन उपानहावपि मूत्राद्युत्सर्गे अपरिहिते एवं सांप्रदायिकशिष्टाचाराद्धार्ये ॥ मूत्रं पुरीषं नो कुर्यात्सोपानत्कः कदा-

चनेति सदाचारचंद्रोदये स्मृत्यंतरे निषेधादिदानीं च सर्वदेशेषु तदानीं तत्परिधानदर्शनेन तदशुचित्वस्य स्फुटत्वादिति ॥ शिष्टास्तूपानत्स्पर्शमपि गुल्फादध एवादुष्टमंगीकुर्वंति ॥ कलौ शिष्टाचारस्य स्मृत्यपेक्षयाप्यधिकत्वात्तथैवोचितं न तु तदुपर्यपीति ॥ अन्यच्च मर्यादासिंधौ देवलः ॥ ततः शरीरस्रोतोभ्यो मलनिःस्पंदनिःस्रवात् ॥ अन्नादीनां प्रवेशाच्च स्यादशुद्धिर्विशेषतः ॥ पतिताशुच्यमेध्यानां स्पर्शनाच्चाशुचिर्भवेत् ॥ सुप्ताद्वस्त्रविपर्यासात्क्रुतादध्वपरिश्रमात् उक्त्वा च वचनं सूक्तमनृतं क्रूरमेव च ॥ द्रप्साविद्धां तनुं लक्ष्य दृष्ट्वाचम्य शुचिर्भवेत् ॥ प्रलेपस्नेहगंधानामशुद्धौ व्यपकर्षणात् ॥ शौचलक्षणमित्याहुर्मृदपोगोमयादिभिः ॥ लेपे स्नेहे च गंधे च व्यपकृष्टे सुदूरतः ॥ पश्चादाचमनं चापि शौचार्थं वक्ष्यते विधिरिति ॥ अत्र विवक्षितं शरीरच्छिद्रनिर्गतं मलं द्वादशधा मनुविष्णुभ्यामुक्तम् ॥ वसा शुक्रमसृङ्मज्जा मूत्रं विट् कर्णविण्नखाः ॥ श्लेष्माश्रुदूषिकास्वेदा द्वादशैते नृणां मला इति ॥ वसा हृन्मेदः ॥ शुक्रपदं रजसोऽप्युपलक्षकम् ॥ असृक्पदं पूयस्ला-

शुमांसादेः ॥ कर्णविट् कर्णमलम् ॥ तदास्यमलस्य ष्ठीवनादेरप्युपलक्षणम् ॥ नखपदं केशलोमादेः ॥ स्वेदपदं गात्रमलानाम् ॥ एतेषां निष्पंदं ईषन्निःसरणम् ॥ निःस्रवो भूयो निःसरणम् ॥ अन्नादीनामित्यादिपदं जलदुग्धौषधादीनामपि संग्राहकम् ॥ तथा चैतेभ्योऽशुचिर्भवतीति कर्मकाले विशेषतो भवतीत्यर्थः ॥ अत्र निःस्पंदस्यैवाऽशुध्यापादकत्वे निःस्रवस्यार्थादेवाशुद्धिहेतुत्वप्राप्तेस्तदुक्तिवैयर्थ्यापत्तिः स्यादिति तद्वारणाय पूर्वोक्तमलेषु पूर्वषट्कस्य निष्पंदेऽपि विशेषतोऽशुद्धिरुत्तरषट्कस्य तु निःस्रव एव विशेषतोऽशुद्धिरिति व्याख्येयम् ॥ एवं च यद्बौधायनेन पूर्ववन्मलानभिधायोक्तम् ॥ आददीत मृदो यश्च षट्सु पूर्वेषु शुद्धये ॥ उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुध्यतीति ॥ तदपि संगतं भवतीति ॥ इयं च शुद्धिस्तदंगस्य ॥ सापि स्वकीयमलस्पर्शे ॥ परकीयतत्स्पर्शे स्नानस्य पूर्वमुक्तत्वादिति ॥ तेन कर्मकाले पूर्वषट्कनिष्पंदेऽपि स्नानम् ॥ उत्तरषट्कस्य तु निःस्रव इति सिध्यति ॥

---

१ निःस्रवोक्तिवैयर्थ्यापत्तिः. २ वैयर्थ्यापत्तिवारणाय.

मनुना तु द्वादशानामपि निर्गमे मृद्वार्युपादानमुक्तम् ॥ तद्देवपित्र्यकर्मकाले तद्योग्यत्वार्थमिति गोविंदराज इति कुल्लूकभट्टीये ॥ मर्यादासिंधौ तु उत्तरषट्कस्य जलमात्रेण गंधलेपक्षयाभाव इत्युक्तम् ॥ उभयमपि कालभेदेन युक्तमेव ॥ पतिताशुच्यमेध्यानामित्यत्र पतितानि यान्यशुच्यमेध्यानीत्यर्थः ॥ अत्राशुचिपदेनौपाधिकाशौचद्रव्यमुच्छिष्टादिकम् ॥ अमेध्यं च स्वभावादशुचीति भेदो बोध्यः ॥ तत्रामेध्यं तु देवलेन गणितम् मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवे वसा ॥ मेदोऽसृक् दूषिका श्लेष्मा मज्जा चामेध्यमुच्यत इति ॥ एतेषां स्पर्शे अशुद्धिः स्फुटैव ॥ अत्रान्यत्र च मलेषु स्तन्यस्यागणनात्तस्य निःस्पंदादिना नाशुद्धिः ॥ न च स्त्रियः क्षीरं द्विजः पीत्वेति स्मृत्यंतरे पुनः संस्कारादिस्मरणात्सर्वदा अशुचित्वं शंक्यम् ॥ तस्य पान एव तथात्वात् ॥ अन्यथा ॥ हस्ते दत्तानि चान्नानि प्रत्यक्षं लवणं तथा ॥ मृत्तिकाभक्षणं चैव गोमांसाशनवत्स्मृतमिति वाक्योक्तानामपि स्पर्शे तथात्वापत्तेरिति

१ तद्वदशुचित्वापत्तेः.

सुप्ते स्वशुद्धिर्दक्षेणोक्ता ॥ अत्यंतमलिनः कायो नवच्छिद्रसमन्वितः ॥ स्रवत्येव दिवारात्रौ प्रातः स्नानं विशोधनम् ॥ क्लिद्यंति हि प्रसुप्तस्य इंद्रियाणि क्षरंति च ॥ अंगानि समतां गच्छंत्युत्तमान्यधमैः सहेति ॥ अत्र प्रसुप्तस्येति कथनादासीनप्रचलायिते ॥ लालास्वेदाद्यभावेन तथा न दोष इत्याचमनमात्रम् ॥ लालादिस्रावे त्वासीनप्रचलायितेऽपि स्नानमेव ॥ यद्यपि दक्षेण प्रातःस्नानं प्रक्रम्य सुप्तदोष उक्तस्तथापि दूषकताबीजस्य स्वापांतरेऽपि तुल्यत्वात्प्रस्वापमात्रे ज्ञेयः[1]॥ वस्त्रविपर्यासे कृतादौ वाचमनमात्रं अल्पदोषत्वात्॥ अतएव सदाचारचंद्रोदये पराशरः॥ क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने ॥ कर्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेदित्याहुः ॥ सुप्त इति ॥ आसीनप्रचलायिते बोध्यम् ॥ युक्तेरुक्तत्वात् ॥ इदं च श्रोत्राचमनमशक्तौ बोध्यम् ॥ सदाचारचंद्रोदये ॥ कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ॥ कुर्वीतालंभनं वापि दक्षिणश्रवणस्य च ॥ अविद्यमाने पूर्वस्मिन्नुत्तरप्राप्तिरिष्यत इति मार्कंडेयपुराणात् ॥ श्रोत्रा-

[1] सुप्तदोषः.

चमनप्राशस्त्यं याज्ञवल्क्य आह ॥ गंगा च दक्षिणे कर्णे नासिकायां हुताशनः ॥ उभयोः स्पर्शने चैव तत्क्षणादेव शुध्यतीति ॥ मुखजाः स्वल्पतमा विंदवस्तु वस्त्रादौ पतिताः शुद्धा एव न तु देहे ॥ तदाह गौतमः ॥ न मुख्या विप्रुष उच्छिष्टं कुर्वंति न चेदंगे निपतंतीति ॥ उक्ता च वचनं शुक्तमित्यत्र शुक्तपदेन परुषमश्लीलं चोच्यते ॥ शुक्ताम्ले परुषेऽपूत इति विश्वकोशात् ॥ द्रप्साविद्धामिति ॥ घनीभूतश्लेष्मादिलिप्तां शौचार्थं वक्ष्यते विधिरिति ॥ सर्वशरीरशुध्यर्थं आचमनस्य प्रकारो वक्ष्यत इत्यर्थः तथा ॥ स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ॥ आचांतः पुनराचामेद्वस्त्रं विपरिधाय चेत्यादि शेषं स्फुटम् ॥ अन्यच्च छंदोगपरिशिष्टे ॥ पित्र्यमंत्रानुद्रवणे आत्मालंभे अवेक्षणे ॥ अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे ॥ निमित्तेषु च सर्वेषु कर्मकुर्वन्नपः स्पृशेदिति ॥ अनुद्रवणमुच्चारणम् ॥ आत्मालंभो हृदयस्पर्शः ॥ तस्यैवावेक्षणं च शेषं स्फुटम् ॥ भगवत्सेवायां त्वधोवायुसमुत्सर्गे स्नानमेव ॥ आगमे

च अश्लीलभाषणं चैव अधोवायुविमोक्षणमिति ॥ वाराहपुराणे च ॥ स्पृशन्मार्गगतो पूतिवातकं च प्रमुंचति ॥ वायुं पुरीषसंयुक्तं स पिबेत्तु न संशयः ॥ मक्षिका पंच वर्षाणि सप्त वर्षाणि मूषकः ॥ श्वा चैव त्रीणि वर्षाणि नव वर्षाणि कच्छप इत्यपराधेषु गणनात्तत्फलस्य कथनात् अजीर्णे स्नानस्योक्तत्वेनाऽधोवायुसमुत्सर्गस्य चाजीर्णत एव प्रायो भवनाच्च स्नानस्यैव भगवत्सेवायामौचित्यादिति ॥ मार्जारस्पर्शे तु यत् स्नानं तन्मार्जारकर्मकस्पर्शविषयम् ॥ भासवायसमार्जारखरोष्ट्रांश्च श्वसूकरान् ॥ अमेध्यानि च संस्पृश्य सवासा जलमाविशेदित्यंगिरसो वाक्ये संस्पर्शकर्मताया एवोक्तत्वात् ॥ अन्यथा मार्जारकर्तृकस्पर्शस्यापि दूषकत्वांगीकारे मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिरिति वाक्यविरोधापत्तेः ॥ यद्वा ॥ भांडादिस्पर्शे शुद्धिः ॥ शरीरस्पर्शे स्नानमिति ॥ दाक्षिणात्यनिबंधेषु तु भोजने पूजादिकर्मणि ॥ पुच्छे विडालस्पर्शे स्नानम् ॥ अन्यदा तु शुचित्वम् ॥ पुच्छे विडालकं स्पृष्ट्वा स्नात्वा विप्रो विशुध्यति ॥ भोजने

कर्मकाले च विधिरेप सनातन इति ॥ रत्नावलीनि-बंधोदाहृतस्मृतिवचनादित्युक्तम् ॥ एवं चास्नाता-दीनां वस्त्राद्यंतरितस्पर्शेऽपि वस्त्राद्यंतरितस्पर्शे इति पूर्वोक्तप्रचेतोवाक्यात् स्नानमेव ॥ काष्ठाद्यंतरित-स्पर्शे त्वाचमनं समाचारात् ॥ तथैवाविकपट्टदुकू-लाद्यंतरितस्पर्शेऽपि ॥ १३ ॥

अथ वस्त्रादिविषये शुद्धिविचारः ॥ तत्राऽहतस्य वस्त्रस्य प्रोक्षणाच्छुद्धिः ॥ अहतानां प्रोक्षणमित्येके अहतं यंत्रनिर्मुक्तमित्यपरार्के वायुपुराणात् ॥ इदं च मंगल एव शस्तमिति पृथ्वीचंद्रोदये ॥ अहतं यंत्रनि-र्मुक्तं वासः प्रोक्तं स्वयंभुवा ॥ शस्तं तन्मांगलिक्येषु तावत्कालं न सर्वदेति भृगुसत्यतपसोर्वाक्यादुक्तम् ॥ अतो यदहतं वासः तत्सर्वकर्मसु शुद्धं ॥ तल्लक्षणं तु पृथ्वीचंद्रोदये पुलस्त्यशातातपौ सदाचारचंद्रोदये कात्यायनश्चाह ॥ ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ॥ अहतं तद्विजानीयात्पावनं सर्वकर्म-स्विति ईषद्धौतमिति वौरकं रजकेन निर्णिक्तं ईष-द्धौतं केवलजलमात्रप्रक्षालितमिति पृथ्वीचंद्रः ॥ तथा सदाचारचंद्रोदये ॥ अष्टहस्तं नवं श्वेतं सदशं

यन्न धारितम् ॥ अहतं तद्विजानीयात्सर्वकर्मसु पावनमिति च ॥ अत्रैवं मम प्रतिभाति ॥ आचारतिलके शुक्रशोणितसंछर्दिश्लेष्ममूत्रपुरीषकम् ॥ स्निग्धदुर्गंधिजीर्णानि नव दोषाश्च वाससीति कथनादेतद्दोषराहित्यमेव नवत्वम् ॥ अन्यथा यन्न धारितमित्यस्य वैयर्थ्यापत्तेः ॥ श्वेतमित्यनिषिद्धवर्णांतरस्याप्युपलक्षकम् ॥ सवस्त्रोपस्करैर्युक्ता शय्या रक्तांशुकानि च ॥ पुष्पाणि चैव शुध्यन्ति प्रोक्षितानि न संशय इति मर्यादासिंधौ बृहत्पराशरवाक्यात् ॥ द्वितीयवाक्ये अष्टहस्तमित्यहतं वासः परिधत्त इति श्रुत्यादिष्वहतस्य परिधानत्वबोधनात्तदर्हत्वबोधकं न तु लक्षणस्यापि घटकम् ॥ तथासत्यधारितमीषद्धौतं अधारितं नवं अधारितं श्वेतमधारितं सदशमिति चतुर्विधमहतं भवति ॥ ततश्च तत्तत्कर्मणि तस्य तस्य पवित्रत्वं सुखेनैव संभवति ॥ यथा ईषद्धौतस्य तस्य यज्ञादिकर्मणि नवस्य प्रावरणादौ उज्ज्वलस्य चित्रकौसुंभादेः सुवासिनीराधादामोदरार्थकदानादिषु सदशस्य गुर्जराणां परिणयकाले कन्यापरिधा-

१ तदर्हत्वबोधकं योग्यत्वबोधकम्.

नादिषु ॥ नवमप्यक्षालितं तु न भगवदुपयोगि ॥ वाराहपुराणे ॥ नीलीरंजितवस्त्रं यो मर्त्यो मह्यं निवेदयेत् ॥ नवमक्षालितं चैव रौरवे नरके वसेदिति निंदनात् ॥ ततश्च नीलीरंजिताक्षालितव्यतिरिक्तानां सर्ववर्णानां नवीनानां वस्त्राणां तथा मनुष्यानुपभुक्तानां धौतानां चित्राणां रक्तानां च निर्मलानां वस्त्राणां प्रोक्षणादेव शुध्द्या भगवत्कर्मणि तेषां स्पर्शो न दोषावहः ॥ किंच मर्यादासिंधौ मेध्यस्य चातुर्विध्यं देवलेनोक्तं व्याख्यातं च ॥ शुचि पूतं स्वयं शुद्धं पवित्रं चेति केवलम् ॥ मेध्यं चतुर्विधं लोके प्रजानां मनुरब्रवीत् ॥ नवं वा निर्मलं वापि शुचीति द्रव्यमुच्यते ॥ शुद्धं पवित्रं पूतं च शुद्धमित्यभिधीयते ॥ स्वयमेव हि यद्द्रव्यं केवलं मेध्यतां गतम् ॥ स्थावरं जंगमं वापि स्वयं शुद्धमिति स्मृतम् ॥ अन्यद्द्रव्यैरदूष्यं यत्स्वयमन्यांश्च शोधयेत् ॥ हव्यकव्येषु यत्पूज्यं तत्पवित्रमिति स्मृतमिति ॥ अत्र प्रथमश्लोके केवलमित्यस्य अमेध्यलेपहीनमित्यर्थः ॥ द्वितीयश्लोके शुचिसंज्ञं लक्षयति ॥ नवमित्यादि ॥ तत्र नवमित्यचिरजातम् ॥ तदप्युपभोगात्प्रागेव

वर्जितमिति वक्ष्यमाणत्वात् ॥ निर्मलमित्यनवमपि यन्मलशून्यम् ॥ अग्रिमार्धे तस्यैव संज्ञांतरमाह ॥ तत्राद्यः शुद्धशब्दः स्वयं शुद्धपरः द्वितीयस्तु शुचिपर्यायः एवं च शुचि द्रव्यमेवपुनः पूतादिसंज्ञायोगि॥ नवत्वनिर्मलत्वसद्भावात् ॥ संज्ञाभेदस्तु वक्ष्यमाणतत्तदुपाधियोगार्थम् ॥ शुचीन्युदाहरति अथ सर्वाणि धान्यानि द्रव्याण्याभरणानि च ॥ अवर्ज्यावर्ज्यज्ञातानि शुचीन्येतानि केवलमिति ॥ अत्रात्यंतमवर्ज्यं अवर्ज्यावर्ज्यं तद्यथा स्यात्तथा ज्ञातानि अवर्ज्यावर्ज्यज्ञानकेवलमित्यमेधलेपवर्ज्यं पूतसंज्ञं लक्षयति वर्जिते निर्मले द्रव्ये शुचिसंज्ञा प्रवर्तते ॥ तस्मिन्नेव हि कर्मण्ये पूतसंज्ञा पुनर्भवेदिति ॥ वर्जिते उपभोगशून्ये नवे निर्मले वा द्रव्ये कर्मार्थे कृतप्रोक्षणादिसंस्कारे भवतीत्यर्थः ॥ पूतसंज्ञोपाधिं दर्शयति ॥ तद्यच्छुद्धं न कर्मण्यं शुचीत्याहुर्द्विजातयः ॥ निर्मलं संस्कृतं द्रव्यं क्रियार्थं पूतमुच्यत इति ॥ एतेन शुचेरेव द्रव्यस्य क्रत्वर्थसंस्कारयोगः ॥ पूतसंज्ञोपाधिरित्यर्थः॥ स्वयं शुद्धं लक्षयति ॥ स्वयमेव हीत्यादि ॥ यद्रव्यं

१ शुचेः. २ वस्त्रादीनि.

गृहादिकममेध्यलेपहीनं अशुचिस्पर्शमात्रदूषितं सत् स्वयमेव पुरुषव्यापारं विनैव वायुरश्मिमात्रेणैव शुद्धतां याति तत्स्वयं शुद्धमित्युच्यत इत्यर्थः ॥ तदेवोदाहरति ॥ वसतिश्चमसो यानं वाहनं साधनानि च ॥ क्षुरो नौरासनं चेति स्वयं शुद्धमिति स्मृतमिति ॥ वसतिर्गृहम् ॥ चमसो होतृचमसादिः ॥ यानं रथादिः ॥ वाहनं हयादिः ॥ साधनं खड्गादिः ॥ शेषं स्फुटम् ॥ तथा ॥ पशवश्च स्वयं शुद्धा योषितश्चानृतौ तथा ॥ ब्रह्महत्यादि नारीणां ऋतुकाले हि संस्पृशेत् ॥ आकराश्च स्वयं शुद्धा द्रव्याणामिति निश्चयः ॥ क्रीतं च व्यवहारिभ्यां पण्यं शुद्धमिति स्मृतम् ॥ अदृष्टं वाक्प्रशस्तं च स्वयं शुद्धं च केवलम् ॥ त्रीण्येतानि विशुद्धानि भगवान् मनुरब्रवीदिति ॥ एतानीत्यदृष्टादीनि ॥ विशुद्धानीति शुध्यंतरानपेक्षाणि ॥ पवित्रं लक्षयति ॥ अन्यद्रव्यैरित्यादि ॥ अनेन शुचिन एवान्याद्रूष्यत्वमन्यशोधकत्वं वा पवित्रसंज्ञोपाधिरित्युक्तम् ॥ तदेवोदाहरति ॥ अजाश्वं मुखतो मेध्यं गावो मेध्यास्तु पृष्ठतः ॥ पुष्पितास्तरवो मेध्या ब्राह्मणाश्चैव सर्वदा ॥

भस्म क्षौद्रं सुवर्णं च सदर्भाः कुतपास्तिलाः ॥ अपामार्गशिरीपार्काः पद्ममामलका मणिः ॥ माल्यानि सर्षपा दूर्वाः सदा भद्राः प्रियंगवः ॥ अक्षताः सिकतालोहा हरिद्रा चंदनं यवाः ॥ पलाशखदिराश्वत्थतुलसीधातकीवटाः ॥ एतान्याहुः पवित्राणि ब्रह्मज्ञा हव्यकव्ययोः ॥ पौष्टिकानि मलघ्नानि शोधनानि च देहिनाम् ॥ तेष्वापो गोशकृन्मृच्च पवित्राणि विशेपतः ॥ सर्वाशुचिविशुद्ध्यर्थं सर्वेपां सर्वतः सदेति ॥ अतो नवत्वनिर्मलत्वाभ्यां शुचेर्वस्त्रादिपदार्थस्य शंखोदकप्रोक्षणादिना संस्कारेण पूतत्वादपि तथेति[1] न तत्र स्पर्शदोपः ॥ यत्तु कर्मठा ऊपादिना चैलनिर्णेजकधौतानां पुनः प्रक्षालनेऽपि शोधकद्रव्यदोपादुष्टत्वं मन्यंते ॥ तत्तु तैत्तिरीयश्रुतौ सहग्यावत्कामनया विहितस्य दाक्षायणयज्ञस्य कर्तारं प्रत्येव नत्वन्यान् प्रति ॥ श्रुतौ ॥ तस्यैतद्व्रतं नानृतं वदेन्नमांसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवाः सर्वं न कुर्वंतीति तं प्रत्येव विधानात् ॥ अतस्तत्सहपठिते व्रतांतरसाहित्य एव

१ भगवत्कर्माहत्वे.

युक्तमिति ॥ किंच ॥ एकादशस्कंधे ॥ द्रव्यस्य शुद्ध्य‍शुद्धी च द्रव्येण वचनेन च ॥ संस्कारेणाथ कालेन महत्त्वाल्पतयाथ वा ॥ शक्त्याशक्त्याथवा बुध्या समृध्या च यदात्मने ॥ अघं कुर्वंति हि यथा देशावस्थानुसारत इति भगवद्वाक्यात् ॥ श्रीधरीये च ॥ देशकालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ॥ उपपत्तिमवस्थां च ज्ञात्वा शुद्धिं प्रकल्पयेदिति बौधायनीयवाक्याच्च ॥ स्वशक्तिसमृध्यादिकं द्रव्यस्वरूपं द्रव्यप्रयोजनादिकं चालोच्य द्रव्याशौचस्य कल्पनीयत्वादनुशासनादपि तदालोच्य तादृशस्पर्शे दोषाभावः ॥ तेन वितानप्रतिसीरादिना नवीनकरणाशक्त्यापि तथेति बोध्यम् ॥ भगवद्वाक्यार्थस्तु ॥ द्रव्यस्य पात्रवस्त्रादेः शुद्ध्यशुद्धी ॥ द्रव्येण तोयादिना शुद्धिः ॥ मूत्रादिना त्वशुद्धिः ॥ वचनेन शुद्धमशुद्धं वेति संदेहे इदं शुद्धमस्तीत्यादिरूपेण ब्राह्मणवचनेन शुद्धिः ॥ नेत्यादिरूपेणाशुद्धिः संस्कारेण प्रोक्षणादिना पुष्पादिशुद्धिः ॥ अवघ्राणादिना त्वशुद्धिः ॥ अथ कालेन ॥ दशाहादिना

१ दोषाभावः.

नवोदकादेः शुद्धिः ॥ विपरीतेनाशुद्धिः ॥ तदुक्तम् ॥ काले मेघोदकं ग्राह्यं वर्ज्यं तु त्र्यहमेव हि ॥ अकाले दशरात्रं स्यात्ततः शुद्धिर्विधीयत इति ॥ तथा ॥ अन्नादेरपर्युषितस्य शुद्धिर्विपरीतस्याशुद्धिः॥ महत्त्वाल्पतया तथा ॥ अंत्यजाद्युपहतानां तडागाद्युदकानां महत्त्वाल्पत्वाभ्यां शुध्द्यशुद्धी ॥ शक्त्याऽशक्त्या सूर्योपरागादौ सूतकादौ चान्नादेः शक्तान् प्रत्यशुद्धिरशक्तान्प्रति तु शुद्धिः ॥ बुध्द्या पुत्रजन्मादेर्दशाहाद्बहिर्ज्ञानेन शुद्धिः ॥ समृध्द्या जीर्णमलवद्वस्त्रादेः समृद्धान्प्रत्यशुद्धिः ॥ दरिद्रं प्रति शुद्धिः ॥ तत्रापि विशेषमाह ॥ यदात्मन इत्यादि ॥ एते द्रव्यवचनादयो द्रव्याशुद्धिद्वारा आत्मने यदघं कुर्वंति ॥ तद्देशावस्थानुसारत एव यथावत्कुर्वंति ॥ नतु सर्वतः ॥ तथाहि ॥ निर्भयदेश एव स्नानादिना शुद्धिं कुर्वंति ॥ नतु चोराद्याकुले ॥ तथा ॥ रोगादिरहितयुवाद्यवस्थायामेवायं कुर्वंति ॥ नतु बाल्यादिषु रोगाद्यवस्थायां चेति ॥ बौधायनवाक्यं स्फुटार्थम् ॥ तथा सति यत्राप्यह्न्युक्तम् ॥ प्रत्यहं क्षालयेद्वस्त्रं देवे पित्र्ये

च कर्मणीति ॥ यच्च लैंगे ॥ देवकार्योपयोग्यानां प्रत्यहं शौचमिष्यत इति ॥ तदपि वर्षादिव्यतिरिक्तकाल एवेति बोध्यम् ॥ वर्षादौ तु दिनांतरे क्षालितानां कर्मार्हत्वाय प्रोक्षणमेव शुद्ध्युपायः ॥ स एव च भगवते महाराजोपचारेण पूजाकरणेऽपि बोध्यः ॥ कालकृतदोषस्य तेनापि परिहारादिति ॥ तथा ॥ अस्नातेन काष्ठादिभिर्धौतवस्त्रस्यानयनेऽपि न दोषः ॥ उपाकर्तव्यपशोः स्पर्शस्थले तदन्वारंभणे यजमानमृत्युरनन्वारंभणे स्वर्गलोकाद्धानिरिति दोषौ प्रदर्श्य 'वपाश्रपणीभ्यामन्वारभते तन्नैवान्वारब्धं नैवानन्वारब्ध'मित्युभयदोषोपशमार्थं आविततस्य स्पर्शन्यायस्यात्रापि स्पर्शदोषाभावायांगीकारे बाधकाभावात् केचित्तु ॥ आविकं पट्टकूलं च कृष्णाजिनमथापि वा ॥ एभिः प्रवेष्टितं वस्त्रं प्रोक्षणादेव शुध्यतीति वचनमपि पठंति ॥ न च वस्त्रांतरितस्पर्श इति प्रचेतोवचनविरोधः ॥ तस्यास्पृश्यस्पर्शविषयत्वेन विषयभेदात् ॥ किंचापरार्के स्मृत्यंतरेण मर्यादासिंधौ देवलेनामेध्यस्य चातुर्विध्यमु-

१ प्रोक्षणादिना. २ यजनस्य.

क्तम् ॥ दूषितं वर्जितं दुष्टं कश्मलं चैव लिंगिनाम् ॥ चतुर्विधममेध्यं च सर्वं व्याख्यास्यते पुनः ॥ शुच्यप्यशुचि संस्पृष्टं द्रव्यं दूषितमुच्यते ॥ अभक्ष्यभोज्यं पेयानि वर्जितानि प्रचक्षते ॥ व्यंगः पतितचांडालौ ग्राम्यकुक्कुटसूकरौ ॥ श्वा च नित्यं विवर्ज्याः स्युः षडेते कर्मतः समाः ॥ सव्रणः सूतकी मृती मत्तोन्मत्तरजस्वलाः ॥ मृतबंधुरशुद्धश्च वर्ज्या एते स्वकालतः ॥ स्वेदाश्रुबिंदवः फेनो निरस्तं नखलोम च ॥ आर्द्रं चर्मासृगित्येतद्दुष्टमाहुर्मनीषिणः ॥ मानुषास्थि वसा विष्ठा रेतोमूत्रार्तवानि च ॥ कुणपं पूयमित्येतत्कश्मलं समुदाहृतमिति ॥ दूषितैः प्रोक्षणेनापि शुद्धिरुक्ता विधानतः ॥ दुष्टैर्मार्जनसंस्कारैः कश्मलैः सर्वथा त्यजेदिति च ॥ अत्र लिंगिनामिति दंडादिलिंगधारिणाम् ॥ अभक्ष्येत्यत्र नञ्त्रिष्वपि संबंधः ॥ व्यंगो जन्मत एवांगहीनः ॥ त्यक्त इति पाठे ज्ञातिबाह्यः ॥ नित्यं विवर्ज्या इति ॥ सर्वदैवास्पृश्याः ॥ उन्मत्त इति चित्तविक्षेपवान् ॥ दूषितैर्दुष्टैरित्यत्र दूषितस्येति शेषः ॥ कश्मलैरित्यत्र

१ त्यक्त इति पाठांतरमपरार्के.

दूषितमिति शेषः ॥ स्फुटमन्यत् ॥ एवं सत्यंऽस्वा- तस्य एतेष्वनंतर्भावादप्यदोषः किंच ॥ आश्वलायनस्मृतौ परिधाने सितं शस्तं वासः प्रावरणे तथा॥ पट्टकूलं यथालाभं ब्राह्मणस्य विधीयते ॥ आविकं त्रसरं चैव परिधाने परित्यजेत् ॥ शस्तं प्रावरणे प्रोक्तं स्पर्शदोषो नहि द्वयोः ॥ भोजनं च मलोत्सर्गं कुरुते त्रसरावृतः ॥ प्रक्षाल्य त्रसरं शुद्धं दुकूलं सर्वदा शुचीति कथनात् ॥ रेतःस्पृष्टं शवस्पृष्टं स्पृष्टं मूत्रपुरीषयोः ॥ रजस्वलाभिः संस्पृष्टमाविकं तु सदा शुचीत्याविकस्यांगिरसा कश्मलस्पर्शेऽप्यदुष्टत्वकथनाच्च तद्वेष्टितस्य कुतो दोषसंसर्गः ॥ तस्मान्नायमाचारो दुष्ट इति निश्चयः ॥ मूत्राद्युपघाते तु वस्त्रं दुष्यत्येव ॥ तदाहापरार्के यमः ॥ यदि मूत्रपुरीषाभ्यां रेतसा रुधिरेण वा ॥ चैलं समुपहन्येत अद्भिः प्रक्षालयेच्च तत् ॥ यद्यंभसा न शुद्ध्येत्तु वस्त्रं चोपहतं दृढम् ॥ छेदनं तस्य दाहो वा यन्मा-

१ इति हेतोः अस्नातेन काष्ठादिभिर्वौनात्रम्यापनयनेऽदोष इति मतंच २ पर्यंकनिर्मोपम् । क्षौमं दुकूलं स्यादे तु निर्वातं प्रावृत मित्यमरः ।

त्रमुपहन्यते इति ॥ मद्याद्युपघातेऽप्येवम् ॥ उच्छि-ष्टोपघाते तु क्षालनमर्थादेव सिद्धम् ॥ यानि तु ॥ सोपैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् ॥ सश्री-फलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥ सगौरसर्षपैः क्षौ-ममित्यादीनि यानि याज्ञवल्क्यवाक्यानि तानि त्वधुना नाद्रियंते ॥ किंत्वाविकादीनि वस्त्राणि तत्त-न्निर्णजकैरेव शोध्यंते ॥ तदपि युक्तम् ॥ एकादश-स्कंधे ॥ अमेध्यलिप्तं यद्येन गंधलेपं व्यपोहति ॥ भजते प्रकृतिं तस्य तच्छौचं तावदिष्यत इति भग-वता फलतौल्यस्यैवादरणात् ॥ अतस्तद्धावनोत्तरं प्रोक्षणादिकरणं सम्यगेवेति ॥ किंचांगिराः ॥ शौचं महार्घरोमाणां वाय्वग्न्यर्केंदुरश्मिभिरित्यप्युक्तम् ॥ एवमेव रज्ज्वादीनां वस्त्रवच्छुद्धिः ॥ तथाह व्यासः ॥ वस्त्रं मृदंभसा शुध्येद्रज्जुवैदलमेव च ॥ रज्ज्वादिकं चातिदुष्टं त्याज्यं तन्मात्रमेव चेति ॥ या लोके निवार इत्युच्यते सापि रज्जुभेद एव ॥ तत्का-र्यकरणादिति ज्ञेयम् ॥ १४ ॥

अथ पात्रादिशुद्धिविचारः ॥ तत्र याज्ञवल्क्यः ॥ सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ॥ शाकं

रज्जुमूलफलं वासो विदलचर्मणाम् ॥ पात्राणां चमसानां च वारिणा शुद्धिरिष्यत इति ॥ सौवर्णं सुवर्णस्य विकारः ॥ राजतं रजतस्य ॥ अब्जं मुक्ताशंखशुक्त्यादि ॥ ऊर्ध्वपात्रं महावीरादि ॥ ग्रहादिसाहचर्यात् ॥ ग्रहाः षोडशिप्रभृतयः ॥ अश्म दृषदादिः ॥ शाकं वास्तुकादि ॥ रज्जुर्बल्वजादिनिर्मिता बंधनोद्धरणादिसाधनभूता ॥ मूलमार्द्रकादि ॥ फलमाम्रादि ॥ वासो वस्त्रम् ॥ विदलं वेण्वादि ॥ चर्म अजादीनां विदलचर्मणोर्ग्रहणं तद्विकाराणां छत्रवरत्रादीनामुपलक्षणार्थमिति विज्ञानेश्वरः ॥ पात्राण्यन्यानि लौकिकान्यपि ॥ चमसा होतृचमसादयः एतेषां सौवर्णादीनां लेपरहितानामुच्छिष्टस्पर्शमात्रे वारिणा प्रक्षालनेन शुद्धिरिति विज्ञानेश्वरः ॥ तेनोच्छिष्टस्पर्शाभावे प्रक्षालनाभाव इति तदाशयः ॥ इत्थं शुद्धिर्लौकिकवैदिकसाधारणी ॥ मध्ये शाकादिनिवेशात् ॥ तेन पाकाद्यर्थान्नादिसंभाराऽऽमृतानां पात्राणां शाकादीनां च पर्युषितत्वनिवृत्त्यर्थमपीदं क्षालनविधानं कैमुतिकादप्यायातीति तत्तु मम प्रति-

१ यद्वियोल्वजादि.

भाति ॥ संभारभूतानां तु प्रोक्षणादेव शुद्धिः ॥ धान्यादीनां प्रोक्षणस्य वक्ष्यमाणत्वादिति ॥ सलेपानां शुध्यंतरमाह ॥ चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणेति ॥ ॥ एतानि लेपसहितानि उष्णेन वारिणा शुध्यंतीति विज्ञानेश्वरः ॥ अनुच्छिष्टत्वेऽपीषल्लेपवतामेषां शुद्धिः ॥ प्रथमत एव चर्वादिलेपबोधनाय चरुपदोपादानाल्लेपराहित्ये औष्णस्याप्रयोजनकत्वापत्तेश्च निर्लेपं कांचनं भांडमद्भिरेव विशुध्यति ॥ अब्जमश्ममयं चैव राजतं चानुपस्कृतमिति मनुवाक्ये केवलानामेवोक्तत्वादिति तु मम प्रतिभाति ॥ अपरार्केऽप्येवम् ॥ उक्ते मनुवाक्ये अनुपस्कृतमित्यस्याखातपूरितमित्यर्थं विज्ञानेश्वर आह ॥ मेधातिथिस्तु अत्यंतानुपहतमित्यर्थमाह ॥ अपरार्कस्तु ताम्रादिना यन्न संसृष्टमित्याह ॥ मर्यादासिंधौ तु उपात्प्रतियत्नवैकृतवाक्याध्याहारेष्विति पाणिनिना वैकृते सुटोऽनुशासनाच्चित्ररेखादिरूपविकाररहितमित्यर्थ उक्तः ॥ इदमेव युक्तं रेखादिगर्तेषु लेपस्य केवलवारिणाऽनपनयादिति ॥ निर्णयामृतेऽप्येवमुक्तम् ॥ बहुलिप्तानां तु मनुराह ॥

तैजसानां मणीनां तु सर्वस्याश्ममयस्य च ॥ भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिरिति ॥ तैजसानामिति धातुमात्रजन्यानाम् ॥ हेम ताम्रं च रजतं कांस्यायस्त्रपुसीसकाः ॥ एते च तैजसाः प्रोक्ता धातवस्तैजसोद्भवा इति वाक्यात्तानि बोध्यानि ॥ अत्र कांस्यपदं पित्तलस्याप्युपलक्षकम् ॥ ब्रम्हांडे कांस्यायस्ताम्ररीत्यानीति रैत्यानां धातुपात्रेपूल्लेखात् त्रपु तु वंगम् ॥ जसतं तु तस्यैव भेदः सीसस्य वेति बोध्यम् ॥ मृद्भस्मनो रेककार्यत्वाद्विकल्पः ॥ आपस्तु समुच्चीयंते इति विज्ञानेश्वरो मर्यादासिंधुश्च ॥ ममत्वन्यत्प्रतिभाति ॥ ब्रह्मवैवर्ते नित्यं नूतनभांडेन कर्तव्यः पाक एव च ॥ अथ वा पक्षपर्यंतं ततस्त्याज्यं मनीषिभिः ॥ स्थानं तु संस्कृतं कृत्वा पाकं निर्वर्त्य पूजकः॥ इति भगवता श्रीनंदं प्रति वैष्णवब्राह्मणधर्मेषु प्रत्यहं पाकभांडत्यागकथनात् ॥ मृण्मयव्यतिरिक्तानां भांडानां च प्रत्यहं हातुमशक्यत्वात्तेषां भांडानां वह्निज्वालोत्थमषीनिवारणमेव नूतनीकरणं पक्षांतरस्योक्तत्वाचेति तादृशशिष्टाचारादवगम्यते ॥ तन्मषीनिवृत्तिश्च भस्मना भवति मृदा च भवतीति तत्र

मृद्ग्रहणम् ॥ कांस्यपात्रलेपस्तु भस्मना निवर्तेत इति तत्र भस्मग्रहणमित्येवं विभाग इति ॥ इयं च निर्लेपश्लिष्टातिलिप्तानां शुद्धिरुच्छिष्टस्पर्शेऽपि तुल्येवेति सर्वेषां संमतम् ॥ तत्रोर्ध्वाधोभेदेनोच्छिष्टद्वैविध्यादूर्ध्वोच्छिष्टपुरुषस्पर्शे यथोक्ता शुद्धिर्यदंगमुच्छिष्टं तेन स्पर्शे मृदादिकमादेयम्॥ तथैवाधोच्छिष्टपुरुषहस्ते स्पर्शेऽपि तदंगस्पर्शे त्वमेध्यलिप्तस्य या शुद्धिः सा कार्येति मम भाति ॥ चार्मेषु विशेषो याज्ञिकदेवकृते स्मृतिसारे उक्तः ॥ गोमूत्रवारिणा शूर्पं धूपेन स्नेहकूपिकाः ॥ चर्मणा सद्यः शुद्धिः स्याद्गोमूत्रैर्गौरसर्षपैरिति ॥ यत्तु पुनरन्यदुक्तम् ॥ त्र्यहं भस्म च मृद्वारि त्रिफला च दिनत्रयम् ॥ कषायाः सप्तरात्रं स्यादेतच्चर्मविशोधनम् ॥ भस्मनः पलमेकं तु द्विगुणं मृद एव च ॥ कषायास्त्रिगुणाः प्रोक्तास्त्रिगुणा त्रिफला भवेत् ॥ आम्रो जंबूस्तथा धात्री प्लक्षश्चैव चतुर्थकः ॥ अश्वत्थोदुंबरवटाः कषायाः सप्त कीर्तिताः ॥ एतदल्पोपघातविषयम् ॥ १५ ॥

अथोच्छिष्टस्पृष्टपात्रशुद्धिविचारः ॥ तत्र शंख आह ॥ ब्रह्मक्षत्रविशां चैव सकृत्संमार्जनाच्छुचिः ॥

चतुर्थेन तु यद्युक्तं चतुर्भिस्तत्र मार्जनम् ॥ अग्नौ प्रक्षिप्य गृह्णीयाद्धस्तौ प्रक्षाल्य यत्नतः ॥ गोशृंगेण तु संस्पृष्टं तत्पात्रं शुचितामियादिति इदं च कांस्यव्यतिरिक्ततैजसविषयम् ॥ कांस्यस्याधिकशुद्धेरग्रे वक्ष्यमाणत्वात् ॥ मर्यादासिंधौ तु पात्रांतरे शंखेन विशेष उक्तः ॥ सिद्धार्थकानां कल्केन दंतशृंगमयस्य च ॥ गोवालैः फलपात्राणामस्थ्नां स्याच्छृंगवत्तथेति इदं चाल्पोपघाते ॥ अधिकोपघाते तु शृंगाणां वायुपुराणेऽवलेखनविधानादित्युक्तम् ॥ किंच मनुस्तु ॥ अमेश्चापां च संयोगाद्धेमरूप्यं च निर्बभौ ॥ तस्मात्तयोश्च संयोगान्निर्णेको गुणवत्तर इत्याह ॥ अर्थस्तु अग्निर्वै वरुणानीरकामयतेत्यर्थवादे हेमरूप्ययोर्जलाग्निसंयोगजन्यत्वोक्तेस्तयोः स्वकारणेन शोधनमत्युत्तममिति ॥ किंच ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च ॥ शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः ॥ हारीतस्तु अद्भिः कांचनशंखशुक्तीनां तद्गुणवर्जनं स्नेहवैवर्ण्योपहतानां यवगोधूमकलायमाषमसूरमुद्गगोमयचूर्णैर्धावनम् ॥ अम्ललवणाभ्यां ताम्राणाम् ॥ भस्मना कांस्यानाम् ॥ शाणतैलघ-

र्पणैः कार्ष्णायसानाम् ॥ सिकतावघर्पणैः शैलानाम् ॥ शिलावघर्पणमार्जनैर्मणिमयानां निर्लेखनैर्दारुमयानां पुनः पाकेन मार्तिकानां गोमूत्रगोमयबिल्वैर्वैदलानां गोवालरज्ज्वा सोदकया फलपात्राणां कमंडलूनां यतिपात्राणां चेति विबभाजे ॥ अत्र तद्गुणवर्जनमिति तद्गंधाद्यपकर्पणम् ॥ स्नेहवैवर्ण्योपहतानामिति उच्छिष्टादिस्नेहेन विवर्णं यथा भवति तथोपहतानाम् ॥ यवादिचूर्णानि तु तुल्यार्थत्वाद्विकल्प्यंते ॥ उदकं तु सर्वैः शोधनद्रव्यैः समुच्चीयते ॥ शाणं लोहतैक्ष्ण्यसाधनम् ॥ तच्च क्षुरछुरिकाद्यायुधशोधनाय नतु कटाहादिशोधनायेति तदर्थं सिकताघर्पणं बोध्यम् ॥ शिलावघर्पणमार्जनं स्वर्णकारादिभिः पाषाणविशेषे घर्पणेनोज्ज्वलीकरणम् ॥ कांस्ये इतोऽपि विशेषमाहुः पराशरशातातपापस्तंबाः ॥ गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च ॥ शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि चेति ॥ दशकृत्वो मार्जनात् शुध्यंतीति निर्णयामृतापरार्कौ ॥ शंखस्त्वितोऽपि विशेषमाह ॥ सूतिकोच्छिष्टभांडस्य

१ हारीतः.

सुराद्युपहतस्य च ॥ त्रिःसप्तमार्जनाच्छुद्धिर्न तु कांस्यस्य तापनमिति ॥ कांस्यभिन्नानां तैजसानां सूतिकोच्छिष्टादिके स्वल्पोपघाते यवचूर्णादिभिरेकविंशतिवारं मार्जनादेव शुद्धिः ॥ न तु कांस्यस्य तापनमित्यनेनार्थात्कांस्यव्यतिरिक्तानां तापनं कार्यमिति गम्यत इत्यपरार्कः ॥ निर्णयामृते तु यवादीनां शोधकानां सप्तसंख्याकत्वादेकैकेन त्रिवारं शोधनात्तैजसांतरस्य शुद्धिर्न तु कांस्यस्य तस्य तु मार्जनतापनाभ्यामित्युक्तम् ॥ तत्रापरार्कोक्तमेव युक्तम् ॥ स्मृत्यंतरे सुरादिलेपे तापस्योक्तत्वात् ॥ तदपेक्षयोच्छिष्टस्याल्पत्वादिति अपरार्कनिर्णयामृतयोरादित्यपुराणे ॥ सुवर्णरूप्यशंखाश्मशुक्तिरत्नमयानि च ॥ कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च ॥ निर्लेपानि विशुध्यंति केवलेन जलेन तु ॥ शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिरिति ॥ अत्र क्षारादि द्रव्यत्रित्वात्त्रिधात्वम् ॥ मार्जनं यथार्हं चतुष्कृत्वो दशकृत्वश्च वचनांतरवशादित्युक्तम् ॥ मर्यादासिंधौ तु ब्रह्मपुराण इत्युक्त्वा क्षाराम्लवारिभिरित्यंतमभिधाय मृतिका-

शवविण्मूत्ररजस्वलाहतानि च ॥प्रक्षेसव्यानि तान्यग्नौ यच्च यावत्सहेदग्नीत्यधिकमुक्तम् ॥ यच्च यावदिति प्रागुक्तक्षालनोत्तरं यत्पात्रं यावत्कालमग्निसंयोगं सहते यावताग्निप्रक्षेपेण न नश्यति तावत्कुर्यादिति सर्वैरेव व्याख्यातं च ॥ तेनायं निष्कर्षः ॥ त्रैवर्णिकोच्छिष्टं निर्लेपं भांडं मार्तिकमुच्छिष्टपुरुषस्पृष्टं प्रोक्षणेन शुध्यति ॥ सलेपं त्ववचूडनात् ॥ अवचूडनं नामाग्निसंयोगः ॥ अलेपमृन्मयं भांडं भांडसंचयमेव च ॥ प्रोक्षणादेव शुध्येत्तु सलेपं ह्यग्निचूडनादिति बृहत्पराशरवाक्यात् ॥ उच्छिष्टकरादिस्पर्शे तु तस्यावचूडनं दाहस्य यथायथं मृण्मयानां पात्राणामुच्छिष्टसमारब्धानामवचूडनमुच्छिष्टसलेपोपहतानां पुनर्दहनमिति बौधायनवचनात् ॥ पुनर्दहनं नाम पुनः पाकः । स च रूपरसगंधस्पर्शपरावृत्तिफलकोऽग्निसंयोगः ॥ दार्वादीनां तूच्छिष्टपुरुषस्पर्शे दोषाभावः प्रोक्षणं वा ॥ सलेपानां तु तक्षणं उच्छिष्टसलेपपाण्यादिस्पृष्टानां च तक्षणं दारुशृंगाणामिति याज्ञवल्क्यवाक्यात् ॥ तथैव वैदलानां व्यजनादीनां प्रक्षालनात् ॥ गोमूत्र-

गोमयबिल्वैर्घर्षणपूर्वकं जलप्रक्षालनाच्च । एवमेव चर्मणां चैलवद्वक्ष्यमाणरीत्या च पूर्वोक्तयाज्ञवल्क्यहारीतयोर्वाक्यात् ॥ अत्र यद्यपि काचपात्राणां कागदपात्राणां च शुद्धिः कुत्रापि न विचारिता तथापि विष्णुधर्मोत्तरे द्वितीयकांडीयद्रव्यशुद्ध्यध्याये काचभांडशुद्धिरुक्ता ॥ शुद्धिश्च काचभांडानां केवलेन तदांभसेति ॥ कागदीयस्य तु तत्रापि नोक्ता ॥ तत्र चीनीयानां केचन काचविशेषत्वं केचन मार्तिकत्वं केचन कपर्दजन्यत्वं लोका वदंति ॥ तत्र कापर्दकत्वे अब्जत्वम् ॥ तथासति वारिणा शुद्धिरल्पोपघाते ॥ मध्यमात्यंतोपघातयोस्तु त्याग एव ॥ अस्थिजन्यत्वेन तक्षणशोध्यत्वात्तक्षणस्य च तत्राशक्यत्वादिति ॥ मार्तिकत्वे काचत्वे च वारिणाऽत्यद्भनेन सहनार्हदाहेन चेति परंतु चीनीयानि पात्राणि शिष्टा न गृह्णंते ॥ तदुत्पत्तिप्रकारस्य कदर्यत्वादिति ॥ तदुत्पत्तिप्रकारस्तु वैद्यग्रंथे अर्कप्रकाशाख्ये रावणेनोक्तः ॥ अथ वक्ष्ये तु जीर्णास्थिमृत्तिकाकरणं प्रिये ॥ शिलाजतुस्थले कुर्याद्दीर्घं गर्तं मनोहरम् ॥ निक्षिपेत्तत्र तानस्थिसंचयान् द्विच-

तुष्पदाम् ॥ सर्जिक्षारं महाक्षारं मृत्क्षारं लवणानि च ॥ गंधकोष्णजलं क्षेप्यं नानामूत्राणि तत्र च ॥ एवं कृत्वा मासषट्कं दद्यात्पाषाणमृत्तिकाम् ॥ कंकास्यूर्ध्वं तदूर्ध्वं तु कुर्याद्वह्निष्टिकां शुभाम् ॥ त्रिवर्षाज्जायते सर्वमेकीभूतं दृषत्समम् ॥ ततो निष्कास्य तच्चूर्णं कृत्वा पात्राणि निर्मयेदिति ॥ कागदीयानां तु यथायोग्यं प्रोक्षणक्षालनशोषणैः ॥ शाणत्वात् ॥ मिताक्षरायां क्षौमवच्छाणशुद्धेरुक्तत्वादिति तु मम प्रतिभाति ॥ अन्येषामतैजसानामपि पूर्वोक्तयाज्ञवल्क्यहारीतादिवाक्येभ्यो ज्ञेया ॥ निर्लेपं कांस्यभिन्नं तैजसं तु त्रैवर्णिकैरुच्छिष्टैरनुच्छिष्टांगेन स्पृष्टं न दुष्यति ॥ उच्छिष्टहस्तादिस्पृष्टं तु सकृत्संमार्जनात् ॥ त्रैवर्णिकसूतिकारजस्वलाभ्यां स्पर्शेनोपहतं त्वेकविंशतिकृत्वः संमार्जनात् ॥ तदुच्छिष्टोपघाते तु सह्यामितापोत्तरं पूर्वोक्तरीत्या संमार्जनात् । एवमेव रजस्वलोपघातेऽपि ॥ उच्छिष्टशूद्रस्पर्शे तु क्षालनात् ॥ तदुच्छिष्टं तु चतुर्भिश्चतुकृत्वः संमार्जनसाह्यदाहादुत्तरं गोशृंगस्पर्शाच्च ॥ गवाघ्रातेऽप्येवम् ॥ कांस्यं तु त्रैवर्णिकस्पृष्टं क्षालनात् ॥ उच्छिष्टांग-

स्पृष्टं तु सकृत्संमार्जनात् ॥ शूद्रोच्छिष्टं क्षारैर्दशकृत्वो मार्जनादवचूडनाच ॥ यावत्सहेदिति वाक्यात् ॥ गवाघ्रातेऽप्येवम् ॥ शूद्रीसूतिकयोस्तूच्छिष्टं कांस्यं त्याज्यं तथा अंगिरास्तु ॥ गंडूषं पादशौचं च यः कुर्यात्कांस्यभाजने ॥ षण्मासं भुवि निःक्षिप्य पुनराकारमादिशेदित्याह ॥ अत्र कांस्यपदं पित्तलस्याप्युपलक्षकमिति भाति ॥ १६ ॥

अथामेध्यस्पृष्टशुद्धिविचारः ॥ तत्रामेध्यं देवलेनोक्तम् ॥ मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवं वसा ॥ मेदोऽश्रु श्लेष्मा मद्यं चामेध्यमुच्यत इति ॥ अत्र शवादिकं पश्वादीनां मूषकपल्लीपर्यंतानां बोध्यम् ॥ ततः स्वल्पानां कीटेषु पातात् ॥ विष्ठामूत्रे मार्जारपर्यंतानां बोध्ये ॥ आखुपुरीषस्यान्ने पतितस्य दर्शने तावद्ग्रासमात्रोद्धरणकथनेनातिदूषकत्वाभावादिति ॥ मद्यं तु द्वादशविधमपि ॥ तत्र पुलस्त्येनोक्तम् ॥ पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् ॥ मधूत्थं सैरमारिष्टं मैरेयं नारिकेरजम् ॥ समानानि विजानीयान्मद्यान्येकादशैव तु ॥ द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतमिति ॥ तत्र तैजसानां

मूत्राद्युपघाते शुद्धिरपरार्कनिर्णयामृते च बौधायनेनोक्ता ॥ तैजसानां मूत्रपुरीषशुक्रासृक्कुणपमेध्यैरत्यंतवासितानमावर्तनम् ॥ अल्पसंसर्गे तु परिलेखनम् ॥ स्पर्शमात्रोपघाते तु त्रिःसप्तकृत्वो भस्मना परिमार्जनम् ॥ अतैजसानामेवंभूतानामुत्सर्ग इति ॥ आवर्तनमग्निसंयोगेन द्रवीकरणम् ॥ परिलेखनं शस्त्रेणाभितोऽवयवनिस्तक्षणम् ॥ परिमार्जने तु हारीतोक्तो विशेषोऽपि द्रष्टव्यः ॥ शातातपस्तु सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं तथा ॥ रीतिकांसीसलोहानि शुध्यंत्यश्मप्रघर्षणादित्याह ॥ तथा स्मृत्यंतरे भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ॥ सुरामूत्रपुरीषैस्तु शुध्यते तापलेखनैः ॥ ताम्रमम्लेन शुध्येत्तु न चेदामिषलेपितम् ॥ आमिषेण तु यल्लिप्तं पुनर्दाहेन शुध्यति ॥ एवं बौधायनवद्विष्णुरप्याह ॥ विण्मूत्ररेतःशवरक्तलिप्तमावर्तनोल्लेखनतापनैर्वा ॥ त्रिःसप्तकृत्वः परिमार्जनाद्वा भस्मादिना शुध्यति तैजसं हीति ॥ तैजसानां रेतोविण्मूत्रासृक्कुणपादिभिश्चंडालसूतिकोदक्यापतितादिभिश्चिरमुपहतानामावर्तनम् ॥ तदल्पकालोपहतानां परिलेखनम् ॥ ततो-

ऽप्यल्पकालोपहतानां प्रतापनम् ॥ स्पर्शमात्रोपह-
तानामेकविंशतिकृत्वो भस्मादिभिर्मार्जनम् ॥ प्रति-
मार्जनक्षालनमित्यपरार्के व्याख्यातम् ॥ निर्णया-
मृते तु तैजसानां मूत्राद्युपघाते पुनः करणम् ॥
गोमूत्रे वा सप्तरात्रं परिवासनमिति बौधायनवचन-
मुपन्यस्य लेपनिर्हरणाशक्तौ पुनः करणम् ॥ अन्यथा
गोमूत्रवास इति व्यवस्थापितम् ॥ तदपि युक्तम् ॥
एवंच बिडालपल्लीप्रभृतिमूत्रादिस्पर्शेऽत्यंतोपघा-
तादौ चानयैव दिशोह्याव्य शुद्धिर्बोध्या ॥ तथा
झिल्लीप्रभृतिक्षुद्रजीवस्य शाकादौ पतितस्य रंधनोत्तरं
ज्ञाने पाचनस्थाल्यां तदवयवानां भूयो लेपात्तापनं
पल्लीमूषकादेरेवंभाव उल्लेखनम् ॥ एवमेव शफरीज-
लौकःप्रभृतिकुणपसंसर्गेऽप्युन्नेयम् ॥ तथैव च स्पृष्ट-
पात्रस्यापि भोजनपात्रे तस्याल्पस्पर्शाद्भस्मादिना
मार्जनं साक्षात्स्पर्शे चाधिकमार्जनमित्युन्नेयम् ॥
किंच ॥ ताम्रपात्रे तु यद्द्रव्यं कांस्यपात्रे च यन्मधु ॥
आर्द्रकं गुडसंयुक्तं सद्यो मद्यं घृतं विनेत्यादिस्मृ-
त्यंतरवाक्योक्तानामल्पाशुचीनां स्पर्शेऽपि मार्जना-
देव शुद्धिर्न त्वन्या ॥ अत एव सदाचारचंद्रोदये

पट्त्रिंशन्मते ॥ होमकार्ये तथा दोहे पाके च परिवेषणे ॥ स्नानतर्पणदानेषु ताम्रे गव्यं न दुष्यतीत्युक्तम् ॥ तथैव दीपस्पृष्टमात्रेऽपि ज्ञेयम् ॥ किंच गवाघ्रातादीनां दशभिर्मार्जनैः पराशरादिवाक्ये शुद्धिरुक्ता ॥ शंखेन तु कृष्णशकुनिमुखावसृष्टं निर्लिखेत् ॥ श्वापदमुखावसृष्टं पात्रं न प्रयुंजीतेत्युक्तम् ॥ तत्रापि शंखवाक्ये मुखपदादेषा शुद्धिः अंगांतरस्पर्शे पूर्ववाक्योक्तेति बोध्यम् ॥ श्वापदश्च मार्जारभिन्नो बोध्यः ॥ मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिरिति वाक्यादिति विज्ञानेश्वरः ॥ [1]एतदेव युक्तम् ॥ पात्रसंघादौ तु स्पृष्टस्यैवाशुचित्वं नेतरस्य ॥ तदुक्तमपरार्के हारीतेन ॥ संहतानां तु पात्राणां यद्येकमुपहन्यते ॥ तस्यैव शोधनं कार्यं न तु तत्स्पृष्टिनामपीति ॥ शंखोऽपि ॥ मलं संयोगजं स्वं वा यस्य येनोपहन्यते ॥ तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृदिति ॥ अयं शोधनप्रकारः पूर्वोपन्यस्तहारीतोक्तविभागानुसारेण ज्ञेयः ॥ येषां वाचनिकी शुद्धिर्न दृश्यते तादृशां तु शुद्धि

१ पात्रस्य साधनेन गच्छति.

मर्यादासिंधौ शातातप आह ॥ अशुचिं संस्पृशे-
द्यस्तु एक एव स दुष्यति ॥ तं स्पृष्ट्वान्यो न दुष्येत्तु
सर्वद्रव्येष्वयं विधिरिति तेनेंधनादौ चीवरादिसंसर्गे
तत्संबंधिस्वरूपं विचार्याऽशुद्धिः कल्पनीया ॥ विडा-
लपुरीषादिसंसर्गे तु तस्यामेध्यत्वात्तत्स्पृष्टस्पर्शिना-
मप्यशुचित्वम् तथा आचारादिति बोध्यम् ॥ बौधा-
यनस्तु ॥ दारुमयानां पात्राणामुच्छिष्टसमारब्धा-
नामवलेखनम् ॥ उच्छिष्टलेपोपहतानामेव तक्षणं
मूत्रपुरीषरेतःप्रभृतिभिरुत्सर्ग इत्याह ॥ अत्रावले-
खनं वेंत्र्यादिना घर्षणम् ॥ तक्षणस्य पृथगुक्तत्वा-
दिति ॥ मर्यादासिंधौ तु ॥ शवचंडालपुरीषैरप्य-
ल्पोपघातेऽपि घर्षणमित्युक्तम् ॥ केचित्तु पुरीषसं-
सर्गे गंधलेपापनयनक्षमतक्षणम् ॥ शवादिस्पर्शे
मृद्वारिभ्यां क्षालनं श्वादिस्पर्शे वृषीपीठादीनां क्षाल-
नमेवेत्याहुः ॥ तदापि पाकोपयोगिनां तु त्याग
एवेति प्रतिभाति ॥ शृंगदंतास्थिमयानामप्येवम् ॥
मणिमयादीनां मूत्राद्युपघाते विष्णुराह ॥ मणि-
मयमश्ममयमब्जं सप्तरात्रं महीनिखननेनेति ॥उच्छि-

१ शास्त्रादिनेति पाठः.

शाद्युपघाते तु कश्यपः ॥ सिकताभिर्दंतमृंगशंखशुक्तिमणीनामित्याहापरार्के ॥ वैदलानां वेणुवेत्रनडनिचुलादिमयानामपि दारववदेव शुद्धिः ॥ तत्रापि वेणुवेत्रादेर्वस्त्राधानी चेत्तदा प्रयोजनविचारेण गंधलेपक्षयाधायकक्षालनादिनैव शुद्धिः ॥ पक्वान्नादिस्थापनपात्रं चेत्तदा त्याग एवेत्याद्यूह्यम् ॥ मृण्मयानां तु पुनः पाकेन शुद्धिरुक्ता ॥ सा च श्वादिस्पर्शदोष एव न तु दोषांतरे ॥ तदुक्तं मनुना ॥ मद्यैर्मूत्रपुरीषैर्वा श्लेष्मापूयाश्रुशोणितैः ॥ संसृष्टं नैव शुध्येत्तु पुनः पाकान्महीमयमिति ॥ मर्यादासिंधौ तु ष्ठीवनैः पूयशोणितैरिति पाठमुभयथापि मलांतरोपलक्षकत्वं निर्वाह्यं चंडालादिस्पर्शे तु त्यागः ॥ चंडालैरुपसंस्पृष्टं धान्यं वस्त्रमथापि वा ॥ प्रक्षालनेन शुध्येत्तु परित्यागे महीमयमित्यपरार्के स्मृत्यंतरात् ॥ फलपात्राणां शुद्धिस्तूक्तैव कश्मलसंसर्गे तु त्याग एव ॥ किंचापरार्के ब्राह्मे ॥ मृदंबुभिरिति प्रकृत्य रज्जुवल्कलपात्राणां चमसालाबुचर्मणाम् ॥ कृत्वा शौचं ततः शुद्धिर्गोवालैर्घर्षणं पुनरिति चर्मणां तु सामान्यतः

१ पनस इति भाषायाम्.

कश्यप आह ॥ तृणकाष्ठरज्जुभूर्जशणक्षौमजतुचर्मवेणुविदलफलपत्रवल्कलादीनां चैलवच्छौचम् ॥ मृद्दारुचर्मणामत्यंतोपहतानां त्यागः ॥ असंस्कृतायां भूमौ न्यस्तानां प्रक्षालनम् ॥ परोक्षहृतानामभ्युक्षणम् ॥ एवं क्षुद्रसमिधामसंस्कृतामेध्याद्युपहतानामेकपुरुषोद्धार्याणामिति ॥ कान्छपवलयानां शुद्धिश्चर्मशुद्धचैव व्याख्याता ज्ञेया ॥ एवमन्येषामपि ॥१७॥

अथ शय्यादिशुद्धिविचारः ॥ तत्र बौधायनः ॥ आसनं शयनं यानं नावः पंथास्तृणानि च ॥मारुतार्केण शुद्धयंति पक्वेष्टकचितानि च ॥ आत्मशय्यासनं यानं जायापत्यं कमंडलुः ॥ शुचीन्यात्मन एतानि परेषामशुचीनि तु ॥ हारीतः ॥ यानशयनान्यपरिहार्याण्येके मन्यंते ॥ तत्र ॥ वर्णविशेषाच्छुचिमलिनसंसर्गदर्शनात्पापसंसर्गयोगश्च ॥ तस्मात्पृथक्शौचाः श्रेयांस इति ॥ अत्र मन्यंत इत्यंतं पूर्वपक्षमुक्त्वा तत्रेत्यादिना सिद्धांतितम् ॥ अर्थस्तु ॥ धर्मशास्त्रे वर्णानामुत्तराधरभावेन विशेषदर्शनात् ॥ किंच ॥ पातकोपपातकवद्भिर्मलिनैस्तद्रहितानां ॥ शुक्लानां तुल्यशय्यादियोगेन ॥ संसर्गस्य प्रायश्चित्त-

निमित्ततयाभिधानात् ॥ अकृतैनसोऽपि मलिनसंसर्गे व्याधितसंसर्गे नीरोगस्येव पापोत्पत्तिदर्शनाच्च पृथक्शुध्यादिवशेन पृथक्शौचत्वमेव श्रेय इति ॥ तर्हि स्वीयालाभे किं कार्यमित्याकांक्षायां पुनर्हारीतः ॥ स्वानुपपत्तौ शुच्यंतर्धाय समामनंति संस्पर्शे सचैलं स्नानमेवं ह्याहेति ॥ अर्थस्तु स्वकीयशय्याद्यलाभे कंबलादिना शुद्धेन तदंतर्धायोपयोक्तव्यम् ॥ यतः पतितादेः शय्यादिसंस्पर्शे सचैलस्नानमिति चैलाधिकार इत्यपरार्के व्याख्यातम् ॥ एतेनैवासनतूलिकादिकमपि व्याख्यातं ज्ञेयम् ॥ किंच ॥ शयनासनयानानि द्रव्यं च बहुसंहतम् ॥ चंडालादिभिरप्येतत्स्पृष्टं संप्रोक्षणाच्छुचीति तत्रैव स्मृत्यंतरवाक्यम् ॥ किंच ॥ तूलिकादीनामुच्छिष्टादिस्पर्शे तु सर्वनिबंधेषु देवलः ॥ तूलिकामुपधानं च पुष्परक्तांबरं तथा ॥ संशोष्यानातपे किंचित्करैः संमार्जयेत्पुनः ॥ पश्चाच्च वारिणाभ्युक्ष्य विनियुंजीत कर्मणि ॥ तान्यप्यतिमलिष्टानि यथावत्परिशोधयेदिति ॥ वृहत्पराशरस्तु सवस्त्रोपस्करैर्युक्ता शय्या रक्तांशुकानि च ॥ पुष्पाणि चैव शुध्यंति प्रोक्षितानि न संशय इत्याह ॥ १८ ॥

अथ धान्यादिशुद्धिविचारः ॥ तत्र मनुः ॥ अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ॥ प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥ याज्ञवल्क्योऽपि ॥ प्रोक्षणं संहतानां च बहूनां धान्यवाससामिति ॥ अत्र बहुत्वं धान्यानां न स्वरूपकृतम् ॥ किंतु ॥ बहुत्वेनानेकपुरुषोद्धार्यत्वं लक्ष्यत इत्यपरार्कः ॥ युक्तं चैतत् ॥ अन्यथा कणत्रयेण मुष्टिमात्रेण वा बहुत्वापत्तेर्विशेषणवैयर्थ्यं स्यादिति स एव संमतिमप्याह बौधायनस्य ॥ संहतानां काष्ठादीनां प्रक्षाल्यावशोषणं चंडालादिस्पर्शे पुरुषवाह्यादर्वाक् ॥ ऊर्ध्वं त्वनेकपुरुषोद्धार्ये दारुशिले भूमिसमे इति लौगाक्षिश्च ॥ चंडालादिपरामृष्टं प्रोक्षणाद्बहु शुद्ध्यति ॥ अल्पं प्रक्षालयेद्धान्यं तंडुलं तु परित्यजेदिति ॥ तंदुलमिति वितुषं धान्यमात्रम् ॥ त्यागस्त्वल्पविषयः ॥ शुध्यंतरस्य वक्ष्यमाणत्वात् ॥ तदाह बौधायनः ॥ व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ॥ तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वेति ॥ चंडालादिस्पर्शेऽनेकपुरुषोद्धार्याणां व्रीहीणां प्रोक्षणं मूत्रादिसंसर्गे तन्मात्रमपहारः ॥

अशुचिपांस्वादिद्रव्यसंयोगे निस्तुषीकरणमित्यर्थः ॥ कश्यपस्तु प्रोक्षणपर्यग्निकरणावगाहनैर्व्रीहियवगोधूमानां विमर्शनप्रोक्षणैः फलीकृतानां निघर्षणदलनप्रोक्षणैः शमीधान्यानामित्याह ॥ अर्थस्तु अनेकपुरुषोद्धार्याणां व्रीह्यादीनां त्रयाणां यथाक्रमं प्रोक्षणादिभिः शुद्धिः पर्यग्निकरणं तूल्मुकस्य सर्वतो भ्रामणम् ॥ अवगाहनं क्षालनम् ॥ फलीकृतानां व्रीह्यादितंडुलानामल्पत्वे विमर्शनेन शुद्धिरनेकपुरुषोद्धार्यत्वे प्रोक्षणेन ॥ खंडनेनोज्ज्वलीकरणम् ॥ कराभ्यां घर्षणं विमर्शनम् ॥ शमीधान्यानां कोशीधान्यानां मुद्गादीनां एकपुरुषोद्धार्याणां निघर्षणेन ततोऽल्पानां दलनेन अनेकपुरुषोद्धार्याणां तु प्रोक्षणेनेति ॥ अत्र निघर्षणपदेन पूर्वोक्तं विमर्शनमेवोच्यते ॥ अल्पत्वे तु त्याग इत्युक्तम् ॥ आदित्यपुराणे तु ॥ गृहदाहे समुत्पन्ने विपन्ने पशुमानुषे ॥ अभोज्यस्तद्गतो व्रीहिर्धातुद्रव्यस्य संग्रहः ॥ मृण्मयेनावरुद्धानामधोभुवि च तिष्ठताम् ॥ यवमाषतिलादीनामदोषं मनुरब्रवीत् ॥ ततः संक्रममाणेऽग्नौ स्थाने स्थाने च दह्यते ॥ न च प्राणिवधो यत्र केवलं

गृहदीपनम् ॥ तत्र द्रव्याणि सर्वाणि गृह्णीयादविचारयन्नित्युक्तम् ॥ एतदपरार्कस्थं प्रमेयम् ॥ मिताक्षरायां तु विज्ञानेश्वरः ॥ बहुत्वं स्पृष्टापेक्षया यदा धान्यानि वस्त्रादीनि वा राशीकृतानि तत्र चांडालादिस्पृष्टान्यल्पानि बहून्यस्पृष्टानि ॥ तत्र स्पृष्टानां वाससां क्षालनात् ॥ अस्पृष्टानां प्रोक्षणात् धान्यानां तावन्मात्रोद्धरणोत्तरं प्रोक्षणात् स्पृष्टानां बहुत्वे तु धान्यवाससां क्षालनादेव ॥ समत्वे तु प्रोक्षणादेव ॥ इयत्स्पृष्टमियदस्पृष्टमित्यविवेके तु क्षालनादेव ॥ अनेकपुरुषोद्धार्यत्वे स्पृष्टानामपि प्रोक्षणादेवेत्याह एतेनैव परंपरास्पर्शोऽपि व्याख्यातप्राय एव ॥ मर्यादासिंधौ तु द्रोणाधिकानां बहुत्वमुक्त्वा देशं कालमिति बौधायनवाक्यात् ॥ देशकालाद्यपेक्षया बहुत्वं केचिदाहुः ॥ यथा दुर्गतस्य दुर्भिक्षे कुडवपरिमितमपीत्युक्तम् ॥ इदमेव च युक्तम् ॥ पूर्वोक्तैकादशस्थभगवद्वाक्यात् ॥ एवं वाससामपि बहुत्वमनेकपुरुषोद्धार्यत्वेन त्रिभ्योऽधिकत्वेन च पूर्वोक्तरीत्योन्नेयम् ॥ नागदेवीये तु संग्रहकारः ॥ शुभ्रेतान्यथ चित्राणि कौसुंमानि यथाक्रमम् ॥ त्रिंशत्येका-

दश त्रीणि बहुनीति स्मृतान्यथेत्याह ॥ संहतत्वं तु उक्तशुद्धिद्रव्यारब्धावयवित्वमिति विज्ञानेश्वरः ॥ मर्यादासिंधौ तु संहतत्वं नाम अनेकेषां शय्यादीनां स्यूतत्वं ॥ यद्वा संहतत्वं कठिनत्वम् ॥ तेन शीतघृतगुडामिक्षादिकं संहतम् ॥ यद्वा ॥ शयनासनयानानि रोमबद्धानि यानि तु ॥ वस्त्राण्येतानि सर्वाणि संहतानि प्रचक्षत इत्यंगिरोभिहितानि संहतानीत्युक्तम् ॥ रोमबद्धानि कंबलादीनीति च तत्रोक्तम् ॥ पूर्वोक्तभगवद्वाक्योक्तरीत्या तस्य तस्य तथायुक्तत्वात्सर्वमेतदुपपन्नम् ॥ जलव्यतिरिक्तानां द्रवाणां तु प्लावनाच्छुद्धिः ॥ प्लावो द्रव्यस्य त्विति याज्ञवल्क्यवाक्यात ॥ तत्र प्लावो नाम समानजातीयेन द्रव्येण भांडस्यापूरणं यावता निःसरतीति विज्ञानेश्वरः ॥ पात्रस्थे घृतादौ तावत्समानजातीयमन्यदासिच्यते यावत्पूर्णे पात्रे किंचिन्मात्रं बहिर्निःसरतीत्यर्थः ॥ अमेध्यसंस्पृष्टद्रव्यस्पृष्टस्याप्येषैव शुद्धिरित्यपि स एवाह ॥ एतदेव उत्पवनमित्याहुः ॥ द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतमिति मनुवाक्यात् ॥ उत्पवनं चात्र वस्त्रांतरिते पात्रे प्रक्षेपः ॥ अन्यथा

कीटाद्यपनयनस्यासंभवादिति विज्ञानेश्वरः ॥ इदं च केशकीटमक्षिकान्वित इति बोद्धव्यम् ॥ कुल्लूकभट्टीये तु प्रादेशपरिमाणकुशपत्रद्वयाग्राभ्यां पवमानः सुवर्जन इत्याद्यनुवाकेनोत्पवनं स्पृष्टस्यांशस्यापनयनं वा उत्पवनमित्युक्तम् ॥ एतच्च प्रस्थपरिमाणे ॥ अल्पस्य तु त्याग एव ॥ एतच्च श्वकाकाद्युपघाते ॥ वर्णापसदभांडस्पर्शे तु भांडांतरे तदासिच्य यावता तद्बहिर्निःसरति तादृशप्लावं विधाय शेषमुत्सृजंति शिष्टाः ॥ मधूदके पयस्तद्विकाराश्च पात्रात्पात्रांतरनयने शुद्धा इति बौधायनस्मरणात् ॥ शूद्रभांडस्थितानामप्येवमेव शुद्धिः ॥ वर्णापसदहस्तात्प्राप्तानां तु पात्रात्पात्रांतरनयनं पुनः पवनं च कार्यम् ॥ अभ्यवहार्याणां घृतेनाभिघारितानां पुनः पवनमेवं स्नेहानां स्नेहवद्रसानामिति शंखस्मरणात् ॥ शाकादीनां तु दूषितत्यागे शेषस्याप्लावनाच्छुद्धिः ॥ तदुक्तं मर्यादासिंधौ ब्राह्मे ॥ सस्यानि व्रीहयश्चैव शाकमूलफलानि च ॥ त्यक्त्वाथ दूषितं भागं प्लाव्यान्यन्यजलेन चेति म्लेच्छादि भांडस्थितौ तु वृहत्पराशरः॥ आममांसं घृतं क्षौद्रं स्नेहश्च फलसंभवाः ॥ म्लेच्छभाण्डस्थिता ह्येते

निष्क्रांताः शुचयः स्मृता इति ॥ तथा ॥ आभीरभांडसंस्थानि पयोदधिघृतानि च ॥ तावत्पूतं हि तद्भांडं यावत्तत्र नितिष्ठति ॥ पूतानि सर्वपण्यानि कारुहस्तस्थितानि चेति ॥ अत्र म्लेच्छभांडस्थितानां चतुर्णां शुद्धिमुक्त्वाग्रिमवाक्ये पयोदध्नोराभीरभांडस्थयोरेव शुद्धिकथनान्म्लेच्छजातीयाभीरभांडस्थयोः पयोदध्नोरग्राह्यत्वं बोधितम् ॥ उचितं चैतत् ॥ न नीचो यवनात्पर इति वाक्यात् ॥ सर्वपण्यानां पूतत्वकथनेन पाकफलादीनां ततोऽपि ग्राह्यत्वं च बोध्यते ॥ आम्रादिफलानां बहुदिनैर्भोगाय ततो गृहीत्वा संचोष्यमाणानामपि प्रोक्षणमात्रेण शुद्धिः ॥ क्षालयित्वा स्थापने पूतीभावात् ॥ इदं च शुद्धिकल्पनमुपपत्तिप्रयोजनयोर्बलाज्ज्ञातव्यम् ॥ कारुहस्तस्थितानीत्यनेन ॥ रजकतंतुवायादिसंसर्गकृताया अशुद्धेरपवादः ॥ तेनावरजातीयानामपि कारूणां शिल्पक्रियया द्रव्यमुत्पादयतां संस्कुर्वतां वा प्रसक्तं प्रत्यवायहेतुत्वं निवार्यते॥ तथा सति रजकसेवकादिभिः संस्कृतानां वस्त्रादीनां

कुविंदशूर्पकारादिभिश्चोत्पाद्यमानानां द्रव्याणां शुचित्वमेवेति वाक्यतात्पर्यम् ॥ ततश्च येनान्नादिद्रव्येण शिल्पिस्पृष्टेन विना द्रव्योत्पत्तिसंस्कारौ न भवतस्तदपि शुध्यत्येव ॥ यथा वस्त्रोत्पत्तौ खलिः ॥ अत एव शंखः ॥ कारुहस्तः शुचिस्तथा करात्तु द्रव्याणि प्रोक्षितानीति ॥ आकरो द्रव्योत्पत्तिस्थानं तद्द्रव्याणि चाकरद्रव्याणि ॥ पैठीनसिर्विशेषमाह ॥ आकराः शुचयः सर्वे वर्जयित्वा सुराकरमित्येतदपरार्कमतम् ॥ विज्ञानेश्वरस्तु ॥ कारूणां सूतकादिसंभवेऽपि तत्साध्ये कर्मणि तद्धस्तस्य शुचित्वम् ॥ तथा च स्मृत्यंतरम् कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ॥ राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्तिता इत्याह ॥ उभयमपीदं युक्तम् ॥ १९ ॥

अथ सिद्धान्नशुद्धिविचारः ॥ तत्रापरार्के सदाचारचंद्रोदये च यमः ॥ मक्षिकाकीटमन्ने तु पतितं यदि दृश्यते ॥ मूषकस्य पुरीषं वा क्षुतं यच्चावधूनितम् ॥ भस्मना स्पृष्टमश्नीयादभ्युक्ष्य सलिलेन वा ॥ तथा अवक्षुतं केशपतंगकीटैरुदक्यया वा

१ तंतुवाय. कुविंदः स्यात् इत्यमरः.

पतितैश्च दृष्टम् ॥ अलातभस्मांबुहिरण्यतोयैः संस्पृष्टमन्नं मनुराह भोज्यमिति ॥ अत्र अवधूनितं नाम यदुपरि वस्त्रावधूननं कृतम् ॥ अवक्षुतं नाम यदुपरि क्षवथुः कृतः ॥ अत्र मक्षिकापदेन नीलमक्षिकोच्यते ॥ बौधायनेन हविर्दोषेषु नीलमक्षिकाशातिकामत्कुणाश्चेलशिरसोर्यूतिकेत्यभिधानादित्यपरार्कः ॥ अतएव सदाचारचंद्रोदये वाक्यांतरे मक्षिकादीनामदुष्टत्वमुक्तम् ॥ मक्षिकादंशमशका घुणाः सूक्ष्माः पिपीलिकाः ॥ आमिषामेध्यसौरी च नैते कीटा विपत्तय इत्युक्तम् ॥ आमिषामेध्यसौरि शटितमांसोद्भवः कीटः ॥ विपत्तय इति दोषाय न भवेयुरिति व्याख्यातं च पूर्वस्मिन्वाक्ये कीटोऽमेध्यसर्पीत्यपरार्कः ॥ बौधायनश्च ॥ केशकीटनखरोमाखुपुरीषाण्यन्ने दृष्ट्वा तन्मात्रमन्नं परित्यज्याद्भिः संप्रोक्ष्य भस्मना संस्पृश्य प्रशस्तवचसा तु गृह्णीयात् ॥ भूर्भुवः सुवरित्युपरिष्टात् ध्यात्वा पुनरेव भुंजीतेत्याह ॥ सदाचारचंद्रोदये तु त्वकेशेतिपाठयुक्तमीदृगेव यात्रवल्क्यवाक्यम् ॥ यत्तु गौतमः ॥ नित्यमभोज्यं केशकीटावसन्नमित्याह ॥ तत्केशादियुक्तपाकविषयमिति

निर्णयामृते ॥ मिताक्षरायां च ॥ इदमेव शुक्तम् ॥ अन्यथा वाक्यांतरविरोधापत्तेरिति ॥ गोघ्रातेऽप्यन्ने पूर्वोक्तैव व्यवस्था ॥ गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ॥ सलिलं भस्म मृद्धापि प्रक्षेप्तव्यं विशुद्धय इतिमार्कंडेयपुराणात् ॥ याज्ञवल्क्योक्तेश्च ॥ श्वकाकाद्युपघाते तु पराशरः॥ शृतं द्रोणाधिकं चान्नं श्वकाकैरुपघातितम् ॥ अत्याज्यं तस्य शुद्ध्यर्थं ब्राह्मणेभ्यो निवेदयेत् ॥ कर्तव्यं वचनं तेपामन्नसंस्कारकर्मणि ॥ श्वकाकाद्यवलीढं तु त्यक्त्वा लालासमन्वितम् ॥ गायत्र्याष्टसहस्रेण मंत्रपूतेन वारिणा ॥ भोज्यं तत्प्रोक्षितं विप्रैः पर्यग्निकृतमेव चेति ॥ जमदग्निश्च ॥ शृतान्नं द्रोणमात्रं स्यात् श्वकाकाद्युपघातितम् ॥केशकीटावसन्नं च तदप्येवं विशुद्ध्यति ॥ क्रीतस्यापि विनिर्दिष्टमेवमेव मनीपिभिः ॥ न द्विःपक्वं पर्युषितं शुक्ताद्येवं कदाचनेति ॥ द्रोणः पट्पंचाशदधिकं पलशतद्वयम् ॥ अष्टसहस्रेणेत्यष्टाधिकसहस्रेण ॥ केशकीटावसन्नं तु केशकीटकसहपक्वं वोध्यम् ॥ तेन सहपाके गौतमोक्ताऽभोज्यता निवार्यते ॥ अपरार्कमर्यादासिंधुहेमाद्रिषु यममनू ॥ देवद्रोण्यां विवाहेषु

यज्ञेषु प्रकृतेषु च ॥ काकैः श्वभिश्च यत् स्पृष्टं तदन्नं न विवर्जयेत् ॥ तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति ॥ घनानां प्रोक्षणाच्छुद्धिर्द्रवाणामपि तापनात् ॥ संस्पर्शनाद्भवेच्छुद्धिरपामग्र्यघृतस्य च ॥ छागेन मुखसंस्पृष्टं शुचि त्वेवं विनिर्दिशेदिति ॥ देवद्रोणी देवयात्रेत्यपरार्कः ॥ देवतानैवेद्यार्थं यत्र बह्वन्नं पच्यते सा देवद्रोणीति मर्यादासिंधुः[1]॥ एतच्च बह्वन्नप्रदर्शनार्थम् ॥ प्रकृतेष्वित्युत्सवेष्वित्यपि स एवं व्याचख्यौ ॥ २० ॥

अथ घृतपायसादीनां शुद्धिविचारः ॥ घृतं च पायसं क्षीरं तथैवेक्षुरसो गुडः ॥ शूद्रभांडस्थितं तक्रं तथा मधु न दुष्यतीति ॥ पायसं पयोविकारो ननु पयसि सिद्ध ओदनः ॥ विकारार्थे च तद्धित इति कल्पतरुरत्नाकरपारिजातशुद्धिप्रदीपाः ॥ एतदप्याधारदोषाभावे तद्दोषे तु पात्रांतरनयनम् ॥ आधारदोषे तु नयेत्पात्रांतरं द्रवम् ॥ घृतं च पायसं क्षीरं तथैवेक्षुरसो गुड इति शंखवाक्यात् ॥ तथा भक्ष्याभक्ष्यप्रकरणे ॥ संधिन्यनिर्दशाऽवत्सागोपयः परिवर्जयेत् ॥ औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकमिति

१ मर्यादासिंधुः.

याज्ञवल्क्येन सामान्यत एतद्दुग्धं निषिद्धं तथापि हारीतेन संधिनी वृषस्यंती तस्याः पयो न पिबेत् ॥ ऋतुमद्भावात् न हतवत्सायाः शोकाभिभूतत्वात् ॥ न दुग्धाया विनावत्सात् ॥ यथाश्नतोऽन्नमाच्छिद्यात्मनाश्नीयादेवं तत् ॥ न नवसूतायाः सरजस्त्वात् ॥ सप्तरात्रादित्येके दशरात्रादित्यपरे ॥ मासेनाथ पीयूषं भवतीति धर्मविद इति हेतुपूर्वकमुक्तं ॥ तच्च श्राद्धहेमाद्रावेव व्याख्यातम् ॥ वृषस्यंतीपदात् निवृत्तमैथुनेच्छायाः पयो न निषिद्धमिति गम्यते ॥ हतवत्सा मृतवत्सा ॥ तत्र शोकाभिभूतत्वादिति हेतुः तेन विस्मृतवत्सशोकायाः पयसि न निषेधः ॥ वत्सादिविनेति जीवंतमेव वत्समन्यतो निधाय क्षीरलोभेन दुग्धायाः पयो न पिबेत् ॥ तत्र दृष्टांतः ॥ यथाश्नतो भुंजानादन्नं हठाद् गृहीत्वा स्वयमश्नीयादेवं तदिति ॥ न नवप्रसूतायास्तत्र हेतुः सरजस्त्वादिति तत्र सप्तरात्रादयस्त्रयः पक्षाः ॥ एतेषु पक्षेषु यथा रजोनिवृत्तेर्व्यवस्था द्रष्टव्येति ॥ तेन यदा सप्तरात्रादावपि रजोनिवृत्तिनिश्चयस्तदा पयःपाने

१ हारीतेन. २ हारीतोक्तम्.

न धर्महानिरिति तेन संधिन्याः पयो द्वितीयदिवसे शुद्धं मृतवत्सायास्तु पिण्याकभक्षणादिना विस्मृतवत्सशोकतया तन्मृतकानाघ्राणे शुद्धम् ॥ नवसूतायास्तु निर्दशत्वे प्राय इदानीं शुद्धिमंगीकुर्वंति नतु सप्तरात्रोत्तरम् ॥ तदुक्तं रजःसंसर्गपर्यंतमशुद्धं नतु मासपूर्तिपर्यंतम् ॥ विनावत्ससंदोहस्तु यावद्रसस्तदाकांक्षते अन्यत्तृणादिकं चरित्वा न तृप्यति ॥ तदुक्तं वत्साय स्थापनेन तत्स्वत्वं निवार्य दोग्धव्यं तत्पयः शुद्धमिति सिद्ध्यति ॥ तथा स्यंदिनी यमसूसंधिनीमिति गौतमस्मरणात् तत्पयोऽप्यशुद्धम् ॥ तत्र हेतुं तु न केऽपि लिखंति ॥ तथा स्यंदिनीदुग्धस्य ग्रहणे दुग्धस्रवणेन स्तनानां रिक्ततया तत्पीडाप्रसंगः ॥ यमसुवश्च ग्रहणे वत्सयोर्बुभुक्षायाः अपूर्त्या तद्दुग्धस्य परस्वत्वं दोप इति मम प्रतिभाति ॥ दुग्धनिषेधे तद्विकाराणामप्यशुद्धत्वमिति मिताक्षरायाम् ॥ गोमूत्रगोमययोरनिषेध इति ॥ यद्यपि तत्रोक्तं तथापि यत्र रजस्त्वं संभाव्यते तत्र तु निषेध इति मम प्रतिभाति ॥ ब्रह्मपुराणे ॥ द्राक्षेक्षूणां रसः शुद्धः सद्यस्तु प्रथमेऽहनीति ॥ तथा ॥

यतौ च ब्रह्मचारिणि गतं भैक्षमपि तेषां शुचि ॥ तदाहापरार्के मनुः ॥ ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः ॥ ब्रह्मचारीति विहितभिक्षोपलक्षकम् ॥ भैक्षं भिक्षासमूहः ॥ विहितभिक्षाधिकारिणोऽपि मनुनैवोक्ताः ॥ सांतानिकं यक्ष्यमाणमध्वगं सर्ववेदसम् ॥ गुर्वर्थमातृपित्रर्थस्वाध्यायार्थोपतापिनः ॥ नवैतान्स्नातकान्विद्याद्ब्राह्मणान् धर्मभैक्षकानिति ॥ सांतानिकः संतानप्रयोजनः ॥ सर्ववेदसो दत्तसर्वस्वः ॥ उपतापी रोगी ॥ अन्ये प्रसिद्धाः ॥ तथाच तेषां भैक्षं न दुष्यतीत्यर्थः ॥ यावतोपघातेन रथ्योपसर्पणादिना भैक्षं न सिद्ध्यति तन्मात्रस्यापवादोऽयम् ॥ अत एव तदतिरिक्तोपघाते शुद्धिमाह वसिष्ठः ॥ प्रचरन्नभ्यवहार्येषु उच्छिष्टं यदि संस्पृशेत ॥ भूमौ निधाय तद्द्रव्यमाचांतः प्रचरेत्पुनरिति ॥ यस्योपघातस्याऽचमनाच्छुद्धिस्तदिहोच्छिष्टशब्देनोच्यते ॥ अभ्यवहार्यशब्दाच्च न भैक्षपात्रविषयमेतत् ॥ किंतु परिवेषणादिविषयमपि॥ यत्तु मनुनोक्तम् ॥ उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन ॥ अनिधायैव तद्द्र-

१ तावद्रथ्योपसर्पणादिदोषस्य.

ध्यमाचांतः शुचितामियादिति ॥ तदस्वाद्यपरविषयम् ॥ किंच ब्राह्मे ॥ उच्छिष्टेन तु शूद्रेण संस्पृष्टः परिवेषकः ॥ द्रव्यहस्तश्च यत्किंचिद्दद्यात्तत्तु न भक्षयेत् ॥ तेनोच्छिष्टशूद्रातिरिक्तस्पर्शे दोषो नास्तीति तदाशयः ॥ इत्यपरार्कस्थं प्रमेयमुक्तम् ॥ सदाचारचंद्रोदये तु वासिष्ठं मानवं च वाक्यमुपन्यस्योक्तम् ॥ यदि द्रव्यमंगधारणयोग्यं तदांगे निधायाचामेत् ॥ यदि तदयोग्यं तदा तत्स्पृष्ट्वा आचामेत् ॥ यद्वा ॥ आचमनार्होच्छिष्टस्पृष्टः अभ्यवहार्येतरद्रव्यं भूमावनिधायाचम्य शुचिर्भवति ॥ अभ्यवहार्यद्रव्यं तु भूमौ निधायाचम्याभ्युक्ष्य गृह्णीयादिति ॥ एवं चात्र पूर्वोक्तवचनद्वयेऽप्युच्छिष्टकर्मकोच्छिष्टकर्तृकस्पर्शदोषः पुरुषस्यैव ॥ तस्यैव शुद्धिविधानात् ॥ ननु तत्संबंधेन द्रव्यस्यापि दुष्टत्वम् ॥ पुनः प्रचारस्याभिधानस्य चोक्तत्वात् द्रव्यत्यागस्यानुक्तत्वाच्चेति मंथद्वयस्यापि तात्पर्यम् ॥ तेनाभ्यवहार्यस्य गृहांतरदेशांतरप्रेषणेऽपि साक्षात्स्पर्शो न भवेच्चेददोष एव अमेध्याशुचिप्रभृतिस्पर्शे तु त्याग एवेति शिष्टाचारतःप्रतिभाति ॥

१ ग्रन्थद्वयस्याशयः. २ द्रव्यधारकपुरुषसंबंधेन.

विष्णुपुराणे ॥ संप्रोक्ष्य विद्वान् गृह्णीयाच्छूद्रान्नं गृहमागतमिति गृहागमनलिंगाच्च ॥ तेनामेध्याशुचिस्पर्श एव त्यागो नत्वन्यथेति निश्चयः ॥ अन्यत्र सदाचारचंद्रोदये ॥ तत्रांगिराः ॥ अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ॥ कृत्वा मूत्रपुरीषं च द्रव्यहस्तो न दुष्यति ॥ अत्र द्रव्यपदमन्नस्यापि संग्राहकम् ॥ शौचं तु कुर्यात्प्रथमं पादौ प्रक्षालयेत्ततः ॥ उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियादिति स्मृतेः ॥ हलायुधे हारीतः ॥ कृत्वा मूत्रपुरीषं च द्रव्यहस्तः कथंचन ॥ भूमावन्नं प्रतिष्ठाप्य कृत्वा शौचं यथाविधि ॥ तत्संयोगात्तु पक्वान्नमुपस्पृश्य ततः शुचीति ॥ पक्वान्नं घृतपक्वं पुरुषसंयोगाद्यथा तदशुचिभूतं तथा तत्संयोगाच्छुच्यपीत्यर्थः ॥ प्रक्षाल्य पादौ निक्षिप्य आचम्याभ्युक्षणं पुनः ॥ पुष्पादीनां तृणादीनां प्रोक्षणं हविषा तथेति निक्षिप्येति द्रव्यं भूमौ निधाय ॥ मार्कंडेयस्तु शौचमप्यनिधायैव कार्यमित्याह ॥ पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति यः ॥ अनिधायैव तद्द्रव्यमंगे कृत्वा समाश्रितम् ॥

१ पक्वान्नकृतोपस्पर्शनकृत्यसंयोगात्.

शौचं कृत्वा यथान्यायमुपस्पृश्य यथाविधि ॥ अन्नमभ्युक्षयेच्चैव उद्धृत्यार्कस्य दर्शयेत् ॥ त्यक्त्वा ग्रासमथैतस्माच्छेपं शुद्धिमवाप्नुयात् ॥ इति च तत्रोपन्यस्तम् ॥ एवंच मूत्रोच्चारादावपि यत्र दोषाभावस्तत्र कुतस्तरामुच्छिष्टस्पर्शे ॥ किंच पक्कान्नं घृतपक्कमिति यद्व्याख्यातं तदपि युक्तमेव · राहुदर्शनभूतमन्नं च वर्जयेदिति ॥ निषेधसत्वेऽप्यारनालं पयस्तक्रं दधि स्नेहाज्यपाचितम् ॥ मणिकस्थोदकं चैव न दुष्येद्राहुसूतक इति घृतपक्कस्यैवादुष्टत्वकथनेनान्यत्रापि तस्यैवादुष्टताया युक्तत्वादिति ॥ वायुपुराणे चातुर्मास्यमाहात्म्ये ॥ किंचापरार्के आपस्तंबः ॥ अप्रयतोपहतमन्नमप्रयतं नत्वभोज्यमप्रयतेन न तु शूद्रेणोपहतमभोज्यं यस्मिंश्चान्ने केशः स्यादन्यद्वाऽमेध्यैरवमृष्टं कीटो वामेध्यसेवी मूषकलेंगपदोपहतं सिचा वा शुना वाऽपात्रेण वा दृष्टम् ॥ सिचावोपहतं दास्या वा नक्तमाहृतम् ॥ भुंजानं वा यत्र शूद्र उपस्पृशेदनर्हद्भिर्वा समानपंक्तौ भुंजानेषु वा यत्रानुत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा ॥ कुत्सयित्वा यत्रान्नं दद्युर्मनुष्यैरवघ्रातमन्यैर्वाऽमेध्ये·

रिति ॥ अप्रयतं नत्वभोज्यमिति ॥ तथाचाग्न्यधिश्रयणप्रोक्षणहिरण्यस्पर्शच्छागमुखस्पर्शान्यतमेन प्रयतं कृत्वा भोज्यम् ॥ अशुचिना शूद्रेण स्पृष्टं त्वभोज्यम् ॥ मूषकलंगमिति तत्पुरीषं पुच्छादिकं वा सिचेति वस्त्रेण उपहतं दृष्टमित्यन्वयः ॥ अनर्हैर्द्विवेति ॥ उपस्पृष्टमित्यध्याहारः ॥ स्फुटमन्यत् ॥ अत्राप्रयतशूद्रास्पर्शे अभोज्यत्वस्योक्तत्वात् प्रयतशूद्रस्पृष्टपकान्नस्य भोज्यत्वानुज्ञा यद्यपि लभ्यते तथापि शिष्टा भगवत्प्रसादस्यैव तादृशस्य भोज्यत्वमाद्रियंते नेतरस्येति प्रसादव्यतिरिक्तं न भोज्यं कलौ शिष्टाचारस्य स्मृत्यपेक्षया प्राबल्यादिति॥२१॥

अथ घृतपाचितादीनां भक्ष्याभक्ष्यविचारः ॥ घृतपकं तैलपकं मिष्टान्नं शूद्रसंस्कृतम् ॥ अभक्ष्यं ब्राह्मणानां च शूद्रभ्रष्टं त्रिपीटकमिति ब्रह्मवैवर्ते श्रीकृष्णजन्मखंडे उक्तम् ॥ यत्तु सुमंत्वंगिरसौ ॥ गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च ॥ अपूपान्भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतमिति ॥ पिण्याकं तिलकुट इति प्रसिद्धम् ॥ पयसेति दुग्धेन ॥ हारीतः॥ कंदुपकं स्नेहपकं पायसं दधिसक्तवः ॥ एतान्य-

शूद्रान्नभुजो भोज्यानि मनुरब्रवीदिति ॥ शंखः ॥ अपूपाः सक्तवो धानास्तक्रं दधि घृतं मधु ॥ एतत्पण्येन भोक्तव्यं भांडलेपो न चेद्भवेदिति ॥ तदापद्विषयम् ॥ अन्यथा शूद्रान्नभोजननिषेधकवाक्ये विरोधात् नापणीयमन्नमश्नीयादिति शंखलिखितवाक्यविरोधाच्चेत्यपरार्कः ॥ सदाचारचंद्रोदयस्तु ॥ एतानि वचांसि लिखित्वा ॥ शूद्रगोरसाद्यपि तद्गेहादन्यत्र नीत्वा भोक्तव्यम् ॥ घृतं तैलं तथा क्षीरं गुडं तैलेन पाचितम् ॥ नीत्वा नदीतटे विप्रो भुंजीयाच्छूद्रभोजनमिति पराशरोक्तेरित्याह ॥ कश्चित्तु अलवणं स्नेहपक्वं सच्छूद्रभोज्यं तेन वचसामविरोध इत्याह ॥ निर्णयामृतस्तु ॥ उक्तशंखवचनात्पक्वान्नानामभक्ष्यत्वमित्याह ॥ दिनकरोद्योते तु ॥ शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ॥ भोज्यान्नता गृहस्थस्य तीर्थयात्रातिदूरत इति कलिवर्ज्येषु गणनात् ॥ कलावेव निषेधः सोऽपि गृहस्थस्यैव न यतिब्रह्मचारिणोः ॥ अयं च पाकस्यैव निषेधः ॥ ब्राह्मणादिषु शूद्रस्य पचनादिक्रिया तथेति कलिवर्ज्येषु

१ अपूपाः दृष्यान्नेटिनाः. २ निषिद्धा.

पाकस्य च गणनादित्युक्तम् तेनैतन्मते कलौ शूद्रेण पाचितमन्नं गृहस्थेन ब्राह्मणादिना न भोक्तव्यम् ॥ ब्राह्मणादिद्वारा पाचितं तु भोक्तव्यम् ॥ ब्रह्मचर्यादिभिस्तु तेन पाचितमपि भोज्यमित्यायाति ॥ मम त्वन्यत्प्रतिभाति ॥ देवलेन स्वदासो नापितो गोपः कुंभकारः कृषीवलः ॥ ब्राह्मणैरपि भोज्यान्नाः पंचैते शूद्रयोनय इति ॥ याज्ञवल्क्येन च शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ॥ भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेदिति ॥ हारीतेन च कुलं मित्रं कुलपुत्रो भैक्षदः शिष्यकः सुहृत् ॥ भवेद्यस्य सुखं लाभे भयत्राता च यो भवेत् ॥ एते शूद्रेषु भोज्यान्ना मनो यत्र विभाव्यत इत्यपरार्के अनेकेषां भोज्यान्नताकथनात् ॥ कलिवर्ज्येषु तु दासादीनां चतुर्णामेव गणितत्वात्तदितरेषां मुक्तानां शूद्राणां भोज्यान्नता यद्यपि प्राप्यते तथापि अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नत्विति निषेधांतरात्तत्पक्वान्नभोजनं कार्यम् ॥ किंचैतेषु वाक्येष्वन्नपदात्पक्वमन्नमेव न भोज्यम् ॥ पयोविकार ऐक्षवं फलादिकं तु भोज्यमिति ॥ अतएव मनुरपि नाद्याच्छूद्रस्य

पक्वान्नं विद्वानश्नाद्धि नो द्विजः ॥ आददीतान्नमेवास्मादवृत्तावेकरात्रिकमित्येवाह ॥ किंच यथा जलं निर्गमनेष्वपेयं नदीगतं तत्पुनरेव पेयम् ॥ तथान्नपानं विधिपूर्वमागतं द्विजादिपात्रांतरितं न दुष्यतीत्यपरार्के स्मृत्यंतरम् ॥ सदाचारचंद्रोदये च ॥ यथा यतस्ततोप्यापः शुद्धिं यांति नदीगताः ॥ शूद्राद्विप्रगृहेष्वन्नं प्रविष्टं तु तथा शुचीति ॥ स्मृत्यंतरं तथा तत्रैव ॥ तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ॥ द्विजाग्र्यकरसंस्पृष्टं सर्वं तद्धविरुच्यत इति पराशरवाक्यं च ॥ तेन सच्छूद्रस्यान्नं तद्गृहे ब्राह्मणे न पाचितं ब्राह्मणेन शुचिप्रकारेणानीय द्विजपात्रे स्थापितं चेत्तदा न दुष्यति ॥ तथा सक्तवो धानाश्च शूद्रपका अपि लोकविद्विष्टत्वाभावान्न दुष्यंति ॥ तथा अभोज्यान्नानां गृहेऽपि तत आमं गृहीत्वा ब्राह्मणः स्वीयपात्रेण पक्त्वा भुंक्ते चेत्तदापि न दोषः ॥ सच्छूद्रलक्षणं तु सदाचारचंद्रोदये बृहत्पराशरेणोक्तम्॥ विशुद्धान्वयसंजातो निवृत्तो मद्यमांसयोः ॥ द्विजभक्तिर्वणिग्वृत्तिः सच्छूद्रः परिकीर्तित इति ॥ आत्मनिवेदिते गेहे स्वयंपक्वे तु सुतरां न दोषः ॥

निवेदनोत्तरं तत्र तावन्मात्रे स्वत्वोत्पत्तेरिति ॥ २२॥

अथोदकशुद्धिविचारः ॥ तत्र मनुः ॥ आपः शुद्धा भूमिगता वैतृष्ण्यं यत्र गोर्भवेत् ॥ अव्याप्ता श्चेदमेध्येन गंधवर्णसमन्विता इति ॥ एवं शिलागतमपि ॥ भूमिष्ठमुदकं शुद्धं वैतृष्ण्यं यत्र गोर्भवेत् ॥ अव्याप्तं चेदमेध्येन तद्वदेव शिलागतमिति विष्णुवाक्यात् ॥ तथा नद्यादिभ्यः शुद्धपात्रोद्धृता अपि ॥ उद्धृता वा प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि ॥ एकरात्रोपितास्तु त्यजेदापः समुद्धृता इति पूर्वोक्तधर्मानुवृत्तौ देवलवाक्यात् ॥ अप इति विभक्तिव्यत्ययश्छांदसः ॥ अत्र ता इति सर्वनाम्ना गोतृप्तिमात्रपर्याप्ता अल्पा एव परामृश्यंते ॥ अतो बहूदकात्तडागादेरुद्धृतानां रात्र्युषितानां न दोष इति पारिजातः ॥ एतदप्यनुषितोदकासंभवे ॥ अत्र पर्युषितजलवर्जनं तीर्थोदकव्यतिरिक्तविषयम् ॥ तीर्थतोयं न दुष्येत करकादिस्थितं सदेति मर्यादासिंधौ वचनात् ॥ एवं चरणामृतेऽपि तीर्थत्वाद्बोध्यम् ॥ तथापरार्के देवलः ॥ अक्षोभ्यानामपां

१ द्वितीयार्थे प्रथमा.

नास्ति प्रसृतानां च दूषणम् ॥ स्तोकानामुद्धृतानां च कश्मलैर्दूषणं भवेत् ॥ अक्षोभ्यानि तडागानि नदी वाप्यः सरांसि च ॥ कश्मलाशुचिसंस्पर्शे तीर्थतः परिवर्जयेदिति ॥ अत्रामेध्ययुक्तः प्रदेशस्तीर्थम् ॥ क्वचित्तु चांडालाद्यशुचिस्पृष्ट इति पाठः ॥ तदा तीर्थमवतरणमार्गः ॥ गंधाद्ययुक्ताः शुद्धा इत्यनुवृत्तौ पैठीनसिःविपर्यस्तं महोदकमपि वर्ज्यमित्याह॥ उद्धृतेषु तु विशेषं यम आह ॥ प्रपा अरण्ये घटगं च कूपे द्रोण्यां जलं कोशगतास्तथापः ॥ ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतो भूमिगताः पिबेत्त्विति ॥ प्रपा जलसत्रशाला ॥ घटगं घटस्थं ॥ घटकमिति जलोद्धरणार्थं स्थापितम् ॥ सर्वसाधारणो घटः ॥ द्रोणी अश्मादिमयी सर्वार्था जलपात्री ॥ काष्ठांबुवाहिनी वा ॥ कोशो दृतिः ॥ द्विजातिपतितमप्यरण्यगतमपि प्रपादिगतं जलं शूद्रव्यतिरिक्तैरपेयम् ॥ आपदि तु शुद्धभूमौ क्षिप्तं पेयमिति वाक्यार्थः ॥ तादृशस्य भूगतस्यापि क्वचिदपवादमाह मर्यादासिंधौ हारीतः ॥ भूगाः पुण्या अपो अशुभागमनवर्ज्यं यदि तदरण्ये गतं प्रपादि स्यादिति अरण्यप्र-

पादिजलं शुद्धभूगतमप्यशुभागमने सति वर्ज्य-मित्यर्थः ॥ २३ ॥

अथ जलाशयशुद्धिविचारः ॥ देवलः ॥ श्वसृ-गालखरोष्ट्रैश्च क्रव्याद्भिश्च जुगुप्सितम् ॥ उद्धरेदुदकं सर्वं पंच पिंडान् मृदस्तथेति ॥ ब्राह्मे च ॥ येषा-मभक्ष्यं मांसं च तच्छरीरैर्युतं च यत् ॥ वापीकूप-तडागेषु जलं सर्वं हि दुष्यति ॥ शरीरैर्मृतशरीरैः सकर्दमं सकुणपं तेभ्यस्तोयमपास्य तत् ॥ प्रक्षिपे-त्पंचगव्यं च समंत्रं सर्वशुद्धिकृत् ॥ अपास्य कुणपं तेभ्यो बहुतोयेभ्य एव च ॥ शतं षष्ट्यथवा त्रिंश-त्तोयकुंभान्समुद्धरेत् ॥ पंचगव्यं ततस्तेषु प्रक्षिपेन्मं-त्रसंयुतमिति वापीसोपानयुक्तो जलाशयविशेषः ॥ जमदग्निः ॥ वापीकूपतडागेषु स्वल्पेषु स्थावरेषु च ॥ स्थूलसूक्ष्मप्राणिशवे क्लिन्ने जीर्णे च तज्जलम् ॥ सर्व-मुद्धृत्य सुखातं पंचगव्यं ततः क्षिपेत् ॥ पाषाणैरि-ष्टकाभिर्वा दहेत्तत्स्थानमेव तु ॥ सरश्छे तु संप्रोक्ष्य विप्राशीर्वचनं तथा ॥ बहूदके तु दुष्टेऽस्मात्कलशान् षष्टिमुद्धरेत् ॥ सूक्ष्मास्थिप्राणिभिर्दुष्टे त्रिंशत् कुंभां-स्तथोद्धरत् ॥ कूपविषये विष्णुः ॥ मृतपंचनखा-

त्कृपादत्यंतोपहतास्तथा ॥ अपः समुद्धरेत्सर्वाः शेषं शस्त्रेण शोधयेत् ॥ शस्त्रेण कुद्दालादिना ॥ वह्निप्रज्वालनं कृत्वा कूपे पकेष्टकाचिते ॥ पंचगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे ॥ जलाशये तथाल्पेषु स्थावरेषु वसुंधरे ॥ कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥ स्थावरेषु प्रवाहहीनेषु ॥ वसुंधरे वसुंधरायामित्यर्थः ॥ क्वचित्तु महीतल इति पाठः ॥ आपस्तंबः ॥ उपानच्छ्लेष्मविण्मूत्रस्त्रीरजोऽमेध्यमेव च ॥ एभिश्च दूषिते कूपे कुंभानां परिमुद्धरेत् ॥ बृहस्पतिः ॥ अस्थिचर्मविनिर्मुक्तैर्दूषितैः श्वखरादिभिः ॥ उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम् ॥ वापीकूपतडागेषु दूषितेषु विशोधनम् ॥ घटानां शतमुद्धृत्य पंचगव्यं ततः क्षिपेत् ॥ परिमार्जनं अपद्रव्यनिरसनं अस्थिचर्मविनिर्मुक्तैः चिरवासेन विशीर्णैरित्यर्थः ॥ अत्रेयं व्यवस्था ॥ सर्वजलोद्धरणं तु स्वल्पतोये ॥ एकस्मिन्नेवोपघाते यल्लघु गुरु शोधनं तद्भूयोऽनल्पतात्वल्पत्वापेक्षया दूषकलघुत्वगुरुत्वापेक्षया च ॥ अत्यंतमहत्सु चोपघाते तदुपघातकयुक्तदेशातिरिक्तदेशे

१ द्रव्यान्तरेति पाठः

दोषाभाव एव ॥ कुंभानां तु स्वल्पमध्याधिकोद्धरणं तदपि तोयतारतम्यापेक्षयेति ॥ तेन बहुजले कूपे यदि मूषकादिसूक्ष्मप्राणिशवस्य जलदौर्गंध्यादिना संदेहस्तदोक्तजमदग्निवाक्यात्रिंशदादिकुंभजलोद्धरणात्पूर्वं तेन जलेन स्नानसंध्यादिकरणेऽपि निश्चयात्मकज्ञानाभावान्न पापापत्तिः ॥ ज्ञानोत्तरं तु उद्धरणकुंभस्य मार्तिकत्वे त्यागो धातवीयत्वेऽग्निज्वालासंस्पर्शोऽम्लादिभिर्मार्जनं चेति मे भाति ॥ अथ बृहस्पतिः ॥ उच्छिष्टं मलिनं क्लिन्नं यच्च विष्ठानुलेपितम् ॥ अद्भिः शुध्यति तत्सर्वमपां शुद्धिः कथं भवेत् ॥ सूर्येंदुरश्मिपातेन मारुतस्पर्शनेन च ॥ गवां मूत्रपुरीषेण शुध्यंत्याप इति स्थितिः ॥ यमः ॥ अजा गावो महिष्यश्च ब्राह्मण्याश्च प्रसूतिकाः ॥ दशरात्रेण शुध्यंति भूमिष्ठं च नवोदकम् ॥ अत्र भूमिष्ठपदमंतरिक्षजलव्यावृत्त्यर्थम् ॥ बृहत्पाराशरः ॥ वदंत्यपां पवित्रत्वं दिवार्करश्मिवायुभिः ॥ मुनयो धर्मवेत्तारो रात्रौ चंद्रांशुमारुतैरिति ॥ म्लेच्छादिखातविषये ॥ आपस्तंबः ॥ म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा ॥ जानुदघ्नं शुचि ज्ञेयमधस्ता-

दशुचि स्मृतम् ॥ तत्तोयं यः पिबेद्विप्रः कामतोऽका-
मतोऽपि वा ॥ अकामान्नक्तभोजी स्यादहोरात्रं तु
कामत इति मर्यादासिंधूक्ता उदकशुद्धिः ॥ २४ ॥

अथ भूशुद्धिविचारः ॥ तत्र मर्यादासिंधावप-
रार्के च देवलः ॥ पंचधा वा चतुर्धा वा भूरमेध्या
विशुद्ध्यति ॥ दुष्टा द्विधा त्रिधा वापि शुध्यते
मलिनैकधा ॥ अशुद्धा भूमिरमेध्यदुष्टमलिनभेदेन
त्रिधा ॥ तत्रामेध्यां तच्छुद्धिं चाह स एव ॥ प्रसूते
गर्भिणी यत्र म्रियते यत्र मानुषः ॥ चंडालैरुषितं
यत्र यत्र विन्यस्यते शवः ॥ विण्मूत्रोपहतं यत्र
कुणपो यत्र दृश्यते ॥ एवं कश्मलभूयिष्ठा भूरमेध्येति
लक्ष्यते ॥ दहनं खननं भूमेरुपलेपनवापने ॥ पर्ज-
न्यवर्षणं चेति शौचं पंचविधं स्मृतमिति ॥ अप-
रार्के तु वापनस्थाने धावनं पठितम् ॥ दहनं तृण-
काष्ठादिप्रक्षेपेण ज्वालनम् ॥ खननं तत्क्षणं शस्त्रा-
दिनोल्लेखनं वा उपलेपनं गोमूत्रभस्मगोमयादिना॥
वापनं मृदंतरेण पूरणम् ॥ एतन्मध्ये पंचभिश्चतु-
र्भिर्वा अमेध्या भूः शुद्धा भवति ॥ दुष्टां मलिनां
च स एवाह ॥ कृमिकीटपदक्षेपैर्दूषिता यत्र

मेदिनी ॥ द्रप्सापकर्षणोच्छिष्टैर्घातैर्वा दुष्टतां व्रजेत्॥ नखदंततनूजत्वक्तुषपांसुरजोमलैः ॥ भस्मपंकतृणे-र्वापि संपन्ना मलिना भवेदिति ॥ अपरार्के मिताक्षरायां च ॥ श्वसूकरखरोष्ट्राद्यैः संस्पृष्टा दुष्टतां व्रजेत ॥ अंगा-रतुषकेशास्थिभस्माद्यैर्मलिना भवेदिति पाठः ॥ पूर्व-पाठे द्राप्सपदेन घनीभूतः श्लेष्मोच्यते तत्र दुष्टाया दहनादित्रयेण द्वयेन वा शुद्धिः॥अत्रापरार्के विकल्पो व्यवस्थापितः ॥ तत्र श्मशानभुवः पंचभिः शुद्धिः ॥ तदन्यस्या अमेध्याया वर्षणवर्जितैश्चतुर्भिः ॥ चिर-कालं दुष्टाया दहनखननोपलेपनैस्त्रिभि अचिरकालं दुष्टाया उल्लेखनदाहाभ्याम् ॥ चिरं मलिनाया उल्ले-खनेनैवेति ॥ विज्ञानेश्वरस्तु ॥ मार्जनानुलेपनयोः सर्वत्र समुच्चयमाह ॥ एवं अचिरं मलिनाया उप-लेपनेन धावनेन वर्षणेन वेति बोध्यम् ॥ यमस्तु ॥ खननात्पूरणाद्दाहादभिवर्षणलेपनात् ॥ गोभिराक्र-मणात्कालाद्भूमिः शुध्यति सप्तधेत्याह ॥ याज्ञव-ल्क्योऽपि ॥ भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणा-त्तथा ॥ सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनादिति ॥ मनुस्तु ॥ संमार्जनेनांजनेन सेकेनोल्लेखनेन च ॥

गवां च परिवासेन भूमिः शुध्यति पंचभिः ॥ संमार्जनं अवकारापनयनम् ॥ अंजनं गोमयोपलेपनम् ॥ सेको जलेन प्रक्षालनं वर्षणं वा ॥ उल्लेखनं कश्मलापनयनहेतुस्तक्षणम् ॥ गवां परिवास एकाहमात्रं गोष्ठीकरणम् ॥ अत्र सेकगोवासयोर्निर्लेपविषयत्वमन्येषाममेध्यलिप्तविषयत्वमिति मर्यादासिंधुः ॥ मेधातिथिस्तु ॥ मूत्रपुरीषादिलेपे उल्लेखनमार्जने ॥ सेको नदीपुलिनवनादिषु आवपनं त्वस्थ्यायाद्युद्धृत्य मृदंतरप्रक्षेपः ॥ श्मशानादिभुवस्तु सर्वं कर्तव्यमित्याह ॥ बौधायनस्त्वत्र विशेषमाह ॥ घनाया भूमेरुपघाते उपलेपनम् ॥ सुषिरायाः कर्षणम् ॥ क्लिन्नाया अमेध्यमाहृत्य प्रच्छादनम् ॥ ऊर्ध्वं शवोपघाते भित्तितक्षणम् ॥ सूर्यरश्मिप्रवेशोऽग्निज्वालाभिस्पर्शनम् ॥ चतुर्भिः शोध्यते भूमिर्गोभिराक्रमणात्खननाद्दहनादभिवर्षणात्पंचमाच्चोपलेपनात् पष्ठात्कालादिति ॥ घना निबिडावयवा ॥ सुषिरा सच्छिद्रा क्लिन्ना अमेध्यार्द्रा ॥ अत्र घनाया इत्यादौ सर्वत्रोपघात इत्यस्य संबंधः ॥ अमेध्यमाहृत्येति ॥ अमेध्यमुद्धृत्य शुद्धमृदादिना प्रदेशपूरणम् ॥ कालोऽत्र लेपादिक्षयहेतुस्त-

स्मात्तु ॥ यमः ॥ अरण्या वसुधा मेध्या ग्राममध्ये क्वचित्क्वचित् ॥ सर्वत्र वसुधा मेध्या यत्र लेपो न दृश्यत इति ॥ ब्राह्मे तु ॥ ग्रामाद्दंडशतं त्यक्त्वा नगराच्च चतुर्गुणम् ॥ भूमिः सर्वत्र शुद्धा स्याद्यत्र लेपो न दृश्यत इति विशेष उक्तः ॥ भविष्यपुराणे ॥ वापयेद्यत्र नीली तु तावती त्वशुचिर्मही ॥ प्रमाणं द्वादशाब्दानि तत ऊर्ध्वं शुचिर्भवेदिति ॥ यमः ॥ ब्राह्मणावसथे भूमिर्देवागारे तथैव च ॥ मेध्या चैव सदा मन्ये गवां गोष्ठे तथैव चेति ॥ सदेति गोमयाद्युपलेपाभावेऽपीत्यर्थः ॥ एतच्चानुपहतभूमिविषयम् ॥ बौधायनः ॥ अनेकपुरुषोद्धार्ये दारुशिले भूमिसमे इष्टकाश्च संकीर्णीभूता इति ॥ भूमिसमे इति ॥ भूशुद्धिसमानशुद्धिः ॥ संकीर्णभूता इति सुधादिना मिथः संबद्धाः ॥ प्रतिलोमजनबद्धा अपि नाशुद्धा इति ॥ मर्यादासिंधुः ॥ एतेषां चंडालादिस्पर्शे भूशुद्धिवदेव शुद्धिः कार्येत्यपरार्कः ॥ २५ ॥

अथ गृहशुद्धिविचारः ॥ तत्र मर्यादासिंधौ मनुः ॥ मार्जनोपांजनैर्वेश्मेति अत्र शुध्यतीत्यनुषंगः ॥ मार्जनं मार्जन्या मृत्तृणकाष्ठाद्यपनयनम् ॥ गृहस्य

धूमांधकाराद्यपनयनं च ॥ उपांजनं सुधागोमयादिभिर्भूमिभित्तिविलेपनम् ॥ एतच्च शवचांडालादिभिर्भित्तिस्पर्शे व्यापिनि द्रष्टव्यम् ॥ अव्याप्तौ तु तावन्मात्रमपि ॥ याज्ञवल्क्येन तु भूशुद्धिमुपक्रम्य तत्रैव तस्मिन्नेव श्लोके गृहं मार्जनलेपनादिति पुनर्मार्जनं लेपनं चोक्तं तद्गृहस्य प्रत्यहं मार्जनलेपनप्राप्त्यर्थं वेदितव्यम् ॥ शवदूषिते तु संवर्तः ॥ गृहशुद्धिं प्रवक्ष्यामि अंतःस्थशवदूषिते ॥ प्रोत्सृज्य मृण्मयं भांडं सिद्धमन्नं तथैव च ॥ गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत् ॥ गोमयेनोपलिप्याथ छागेनाक्रामयेद्बुधः ब्राह्मणैर्मंत्रपूतैश्च हिरण्यकुशवारिणा ॥ सर्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयमिति ॥ अंत्यादीनां गृहमरणे बृहद्यमः ॥ श्वशूद्रपतितैरंत्ये च मृते मासचतुष्टयम् ॥ अत्यंते वर्जयेद्गेहमित्येवं मनुरब्रवीदिति ॥ अंत्यो म्लेच्छः ॥ अत्यंतश्चंडाल इति मर्यादासिंधुः ॥ स एव ॥ द्विजस्य मरणे वेश्म संशुध्येत्तु दिनत्रयात् ॥ दिनैकेन बहिर्भूमिरग्निप्रोक्षणलेपनैरिति ॥ अत्र यथोक्तशोधनानंतरमपि मंत्रप्रोक्षणं कार्यम् ॥ प्रागुक्तसंवर्तोक्तेः ॥ चंडालादेर्गृहे वासे

लघुपाराशरः ॥ अविज्ञातस्तु चंडालो निवसेद्यस्य वेश्मनि ॥ विज्ञाते चोपसन्यस्य द्विजाः कुर्युरनुग्रहमित्यपक्रम्य ॥ आकारे तु भवेच्छुद्धिरारकूटे सकांस्यके॥ जलशौचं तु वस्त्राणां परित्यागस्तु मृण्मये ॥ कुसुंभगुडकार्पासलवणं दधिसर्पिषी ॥ द्वारि कृत्वा तु धान्यानि गृहे दद्याद्धुताशनम् ॥ ज्वालास्पृष्टं तु तत्सर्वं शुचि तन्मनुरब्रवीत् ॥ रजकी चर्मकारी च लुब्धकी वेणुपुष्कसी ॥ चातुर्वर्ण्यगृहेष्वेवमज्ञाता यदि तिष्ठति ॥ ज्ञात्वा तु निष्कृतिं कुर्यात्पूर्वोक्तस्यार्धमेव च ॥ गृहदाहं न कुर्वीत शेषं सर्वं तु कारयेत् ॥ गृहस्याभ्यंतरं गच्छेच्चंडालो यस्य कस्यचित् ॥ तस्माद्गेहाद्विनिःसृत्य भांडान्यपि च वर्जयेत् ॥ रसपूर्णं तु यद्भांडं न त्यजेत्तु कदाचन ॥ गोमयोदकलेपेन प्रोक्षयेत्तद्गृहं तथेति ॥ उपसन्नस्येति ॥ प्रायश्चितार्थं कृतपर्षदुपस्थानस्य आकार इति ॥ द्रवीकृत्य पुनराकारकारणे ॥ आरकूट इति ॥ पित्तले हुताशनदानस्यैव व्याख्यानं ज्वालास्पृष्टं कृत्वेति ॥ इयं शुद्धिश्चातुर्वर्ण्यस्य तुल्या ॥ अग्रिमश्लोके तथा वक्ष्यमाणत्वात् ॥ निष्कृतिस्तु प्रायश्चित्तप्रकरणाभावादिह न

लिख्यते स्मृतिं दृष्ट्वा ज्ञेया ॥ रसाश्च गुडलवणादयो न तु दधिपयस्तक्रादयः ॥ तेषां त्याज्यत्वात् ॥ तदाह च्यवनः ॥ चंडालसंकरे स्वभवनदहनं पावनम् ॥ सर्वमृद्भांडभेदनं दारवाणां तु तक्षणं शंखशुक्तिरजतचैलानामद्भिः प्रक्षालनं कांस्यताम्राणामाकारे शुद्धिः ॥ सौवीरपयोदधितक्राणां परित्यागः ॥ शेषरसद्रव्यरक्षणमिति ॥ मरीचिरपि॥ गृहेष्वजातिसंवेशे शुद्धिः स्यादुपलेपनाय ॥ संवासो यदि जायेत दाहतापौ विनिर्दिशेदिति ॥ धान्यानि सर्वबीजानि गुडादिरस एव च ॥ कुसुंभकार्पासमथो शुद्धयेद्वार्यग्निशोधनादिति ॥ अजातिश्चंडालादिः ॥ संवेशः प्रवेशः ॥ शयनमिति केचित् ॥ संवासश्चिरकालावस्थानम् ॥ वार्यग्निशोधनम् ॥ वारिणाभ्युक्षणमग्निना पर्यग्निकरणमित्यपरार्कः ॥ एवं च गृहे देवालयादौ वा यदि दुष्टैः पश्वादिर्मार्यते उष्यते वा तदा कश्मलभूशुद्धिं पंचविधां चतुर्विधां वा विधाय पावमानीप्रभृतिभिर्हिरण्यकुशवारिणा गोमूत्रादिभिश्च प्रोक्ष्य यथाशक्ति ब्राह्मणभोजनं चांडालसंवासे पराशरोक्तं त्रिंशद्गावो वृषं चैकं तेभ्यो दत्वा पुनर्वासं देवायतनं च कुर्यादिति प्रतिभाति ॥

अथ रथ्यादिशुद्धिविचारः ॥ पराशरः ॥ रथ्याकर्दमतोयानि नवपंथास्तृणानि च ॥ मारुतार्केण शुध्यंति निशि चंद्रर्क्षमारुतैरिति ॥ याज्ञवल्क्यः ॥ रथ्याकर्दमतोयानि स्पृष्टान्यंत्यश्ववायसैः ॥ मारुतेनैव शुध्यंति पक्वेष्टकचितानि चेति ॥ अत्र बहुवचनं तद्गतगोमयशर्करादिप्राप्त्यर्थम् ॥ पक्वेष्टकचितानि धवलगृहादीनि चंडालादिस्पृष्टानि मारुतेनैव शुध्यंतीति कथनं पूर्वविहितस्य संहतप्रोक्षणस्य निवृत्त्यर्थम् ॥ तृणकाष्ठपर्णमयानां तु प्रोक्षणमेवेति विज्ञानेश्वरः ॥ एवं चारथ्या वसुधा मेध्येति पूर्वोक्तयमवाक्यस्य भोजनादौ रथ्याया अमेध्यताबोधकत्वान्न विरोधः ॥ २७ ॥

अथ प्रकीर्णशुद्धिविचारः ॥ तत्र मर्यादासिंधौ शंखः ॥ नारीणां चैव वत्सानां शकुनीनां शुनां मुखम् ॥ रतौ प्रस्रवणे वृक्षे मृगयायां सदा शुचीति अत्र सर्वत्र लालासंसर्गकृतदोषापवादस्तत्रापि वत्सस्थले गावो मेध्या मुखाद्दत इत्यस्याप्यपवादः ॥ वत्सपदं बालस्योपलक्षणार्थम् ॥ बालैरनुपरिक्रांतं नित्यं मेध्यमिति स्थितिरिति वचनादिति विज्ञानेश्वरः ॥ शकुनिः

काकादिविड्भुगतिरिक्त इति मेधातिथिः ॥ मनुविष्णू ॥ नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ॥ ब्रह्मचारिगतं भैक्षमाकरः सर्व एवहीति ॥ अत्र हस्तो अमेध्यानुपहतो ज्ञेयः प्रसारितमिति ॥ नानाकेतृसंस्पर्शोपघातदोषनिरासार्थम् ॥ एतेन गृहस्य व्यावृत्तिः ॥ शेषं प्रागेव व्याख्यातम् ॥ बौधायनः ॥ अदुष्टा संततं धारा वातोद्धूताश्च रेणव इति ॥ यमः ॥ गौरश्वो विप्रुषश्छाया मक्षिकाः शलभाः शुकाः ॥ अजो हस्ती रणे छत्रं रश्मयश्चंद्रसूर्ययोः ॥ भूमिरग्नी रजो वायुरापो दधि घृतं पयः ॥ सर्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि सर्वश इति ॥ यत एतानि सर्वदा शुद्धानि ततोऽशुचिस्पर्शेऽपि मेध्यानीत्यर्थः॥ अत्र गोप्रभृतीनां स्पर्शे शुचित्वेऽपि ॥ याज्ञवल्क्येन ॥ अजाश्वं मुखतो मेध्यं न गौर्न नरजा मला इति विशेषकथनात्तयोर्मुखं विशेषेण शुद्धमिति पात्रादीनां तत्स्पर्शेन शुद्धावुपयुज्यते ॥ विप्रुषां शुचित्वं नखाग्रादिच्युतव्यतिरिक्तविषयम् ॥ लिंगपुराणे ॥ नखाग्रकेशनिर्धूतस्नानवस्त्रदशोदकम् ॥ अश्रीकरमपुण्यं च अशुद्धं संस्पृशेद्यदि ॥ इति तत्स्पर्शे

दोषकथनादिति मर्यादासिंधुः ॥ विप्रुषः सूक्ष्मा जलकणास्तासां शुचिजलप्रभवानामपि चंडालाद्यंगसंगिना वायुना नीयमानानामशुचित्वशंकायां शुचित्वे विधिरयमित्यपरार्कः ॥ यत्तु याज्ञवल्क्यः ॥ मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिंदव इति प्राह तत्र विशेषः ॥ न मुख्या विप्रुष उच्छिष्टं कुर्वंति न चेदंगे निपतंतीति वसिष्ठवाक्यात् ॥ स्पृशंति बिंदवः पादौ य आचामयतः परान् ॥ भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेदिति मनुवाक्याच्च बोध्यः ॥ एवं चांगवद्गवद्योगसामर्थ्यादौ तत्तत्पातेऽप्यशुचित्वं बोध्यम् ॥ सर्वत्र जगन्नाथादिमहास्थलेषु पाकादिसेवाकर्तॄणां मुखप्रावरणबंधनशिष्टाचारादिति ॥ छायायाः शुचित्वं चांडालादिच्छायाव्यतिरिक्तविषयम् ॥ चांडालपतितच्छायां स्पृष्ट्वा स्नानं समाचरेदिति स्मृत्यंतरे ॥ यदि छायां श्वपाकस्य ब्राह्मणो ह्यधिरोहति ॥ तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यतीत्यंगिरोवाक्ये ॥ दीपमंचकयोश्छाया बोधिच्छाया तथा निशि ॥ तथा नीचजनच्छाया हंति पुण्यं पुराकृतमिति स्मृत्यंतरे च तासां दुष्टत्वकथ-

नात् ॥ एवंच वितानशिबिरादिच्छायासु दोषाभावात्तत्र भोजनादिकरणे दोषाभावः ॥ यत्तु ॥ चंडालपतितच्छाया स्पर्शे दुष्टा तु नो भवेदिति ब्राह्मम् ॥ तत्त्वकामतः स्पर्शविषयं चतुर्युगादि परिमाणाधिकच्छायाविषयं चेन्न विरोधः ॥ अग्निश्चंडालशवाद्यादिव्यतिरिक्तः ॥ एवं भूमिरापो दध्यादि च ॥ रजोप्यजादिव्यतिरिक्तम् ॥ तदाह शातातपः ॥ रेणवः शुचयः सर्वे वायुना समुदीरिताः ॥ अन्यत्र रासभाजाविश्वसमूहनिवाससामिति ॥ समूहनी संमार्जनी ॥ एतच्च रेण्वंतरस्याप्युपलक्षणम् ॥ श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम् ॥ अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयत इति मिताक्षरायां स्मृत्यंतरात् ॥ तत्स्पर्शे संमार्जनं कार्यमिति विज्ञानेश्वरः ॥ पवित्रास्तु रेणवो मर्यादासिंधौ गारुडे उक्ताः॥ गजाश्वरथधान्यानां गवां चैव रजः शुभम् ॥ तथा गवां रजो धान्यरजः पुत्रस्यांगभवं रजः ॥ एतद्रजो महाशस्तं महापातकनाशनमिति ॥ धूमोऽपि शुद्धः ॥ धूमाग्निरजांसि वाय्वीरितानि शुद्धानीत्यपरार्के शंखवाक्यात् ॥ मक्षिकाग्रहणमवर्जनीयस्पर्शानां दंशम-

लोपाख्यानोपन्यासेन तत्र च शैवस्यागस्त्यस्य संमितप्रदर्शनेन ज्ञानापेक्षयापि भक्तेरेवाधिक्यस्य भगवद्भक्तान्प्रति साधितत्वाच्च ॥ किंच ॥ लिंगशरीरस्यापि शुद्धिराहारशुध्या तच्छुद्धिश्च ज्ञानोपयोगिनी ॥ आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिरिति छांदोग्यश्रुतेः सत्वं चांतःकरणम् ॥ तथा ॥ अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागित्यपि छांदोग्ये मनःप्राणवाचामाहारपरिणामत्वं तत्त्वेऽपि तत्त्वं वाभिप्रेतम् ॥ आहारशुद्धिश्च ॥ स्ववर्णाश्रमवृत्त्या संपादितान्नेन तस्य च सिद्धस्य भगवत्समर्पणानंतरं प्रसादतया तद्भोजनेन ॥ तदुक्तं हरिवल्लभसुधोदयनिबंधे ब्रह्मांडे ॥ पादोदकं पिबेन्नित्यं तन्निवेदितमन्नमश्नीयात् ... अद्यादात्मविशुध्यर्थं सर्वकामाप्तये तथेति ॥ पाद्मेऽपि ॥ मुकुंदाशनशेषं तु यो हि भुंक्ते दिनेदिने ॥ सिक्थे सिक्थे भवेत्पुण्यं चांद्रायणशताधिकम् ॥ भुक्त्वान्यदेवनैवेद्यं द्विजश्चांद्रायणं चरेत् ॥ भुक्त्वा केशवनैवेद्यं सर्वपापैः प्रमुच्यत इति ॥ अतो ज्ञानदक्षेऽपि तस्य स्वरूपोपकाराय स्मरणादिरूपा भक्तिरवश्यमपेक्षितेति सुकरेति च सैवात्मशो[illegible]र्थं संतो

योगाय च कर्तव्येति दिक् ॥ इति श्रीवल्लभाचार्यचरणाब्जप्रसादतः ॥ नानानिबंधानालोक्य द्वेधा शुद्धिः स्फुटीकृता ॥ १ ॥ इति श्रीमद्वल्लभाचार्यचरणांबुजदासदासेन पीतांबरात्मजेन पुरुषोत्तमेन स्फुटीकृता द्रव्यशुद्धिः संपूर्णा ॥ श्रीकृष्णार्पणमस्तु ॥

समाप्तोऽयं बृहत्स्तोत्रसरित्सागरस्य द्वितीयो भागः ॥

## श्रीहरिरायजीकृताष्टपद्यः।

श्रीगोपीजनवल्लभाय नमः ।

रामकरीरागेण गीयते ॥ वर्णये वल्लभाधीशचरणं ॥ सकलसाधनविमुखमुख्यफलफलनं संसारसरिदीशगोचरणकरणं॥ ध्रु० ॥ नीलमणिमंजुमंजीरमंजुलरणितभणितनिजभक्तजनजनितभावं ॥ राजते रुचिरकलहंसयुगलं किमुत मानिजनचित्तहरमधुररावं ॥ २ ॥ कोटिकंदर्पसुषमासीमनिजरूपशमितविरहानलज्वलितभक्तं। किमुत पदपद्मलसदंगुलीमधुपकुलमरुणमकरंदयुतरेणुरक्तं ॥ ३ ॥ अतिरुचिररम्यपदपद्मपल्लवतुल्यविलसदंगुलीवृंदसुषमामालं ॥ किमुत शृंगाररसविटपिपरभागयुतभूमिगतसरसतममूलजालं ॥ ४ ॥ प्रथितनिजभावदूरीकृताखिलनीजदोषमोषसाधनित-

कलिराजकालं ॥ अंगुलीवीथिविद्योतनारुणतरं किमुतपल्लवशोभितवरसालं ॥ ५ ॥ स्फुरदघोरक्तिमोपरितनश्यामिकावेदितद्युनिशिगतसुखवितानं ॥ दशसंख्यनखसुधाधिपतिसततस्थानजातविज्ञानगगनोपमानं ॥ ६ ॥ उपरिगतनखचंद्रवृंदयोगामंदजातशोभामृदंगुलीजटालं ॥ किमुत पदकमलयुगसरसपल्लववृंदविलसदारक्तचक्रवालं ॥ ७ ॥ विगतसाधनमथोऽकृतसमाराधनं जीवमतिबाधनं पाहि नित्यं ॥ दीनमिह जलवियुतमीनमिव मादृशं मतिरहितमंग तव भृत्यभृत्यं ॥ ८ ॥ सहजकस्तूरिकातिलकशोभितभालविट्ठलाधीशपदतलनिवासं॥देहि निजरूपदर्शनजनिततापमिह सकलसिद्ध्यर्थहरिदासदासं ॥ ९ ॥ १ ॥

विभासरागेण गीयते ॥ शृणु वचनमीदृशं गोकुलाधीश मम विरहिजनजीवनं नाथगुणगानं ॥ त्वमिव सुखयति सखे दुःखशरभरितहृदि सपदि दूरीकृताखिलदोषमानं ॥ १ ॥ मरणविनिवारकं तापपरिहारकं स[illegible]ारकं विहितरसदानं ॥ अखिल

विस्मारकं भवजलधितारकं रूपपरिचारकं मानसालानं ॥ २ ॥ विरलरसदायकं दर्शनसहायकं गीतबहुनायकं विरहरसरानं ॥ रमणपरिचायकं प्रेमफलदायकं पूतनिजगायकं जातनिधिभानं ॥ ३ ॥ हरिमिलनकारणं धीरतावारणं कृतहृदयदारणं रहितसंख्यानं ॥ श्रवणयुगपारणं दुःखविस्मारणं दीनजनधारणं जातहृद्धयानं ॥ ४ ॥ अखिललीलापरं निजपरमरुचिकरं शोकसंततिहरं चरितविज्ञानं ॥ वश्यगिरिवरधरं विहितमिलनादरं झटितिरंजितनरं प्रियनिरुपमानं ॥५॥ रचितपरिपालनं विरहकृतलालनं कालबलकालनं विषयसुखहानं । चित्तसंचालनं रूपविनिभालनं द्रुतहृदयदालनं सुहितवनयानं ॥ ६ ॥ हृदयहारं क्षीरनीरनिधिवदपारमलसपरमोदारमतुलरसपरं ॥ भुवनसारंभरितविरहभरभारमिह विजितमारविपरिवर्तितजानम् ॥ ७ ॥ विहितमृदुहासमुत्फुल्लसुंदरनासमद्भुतावासमतिसुखनिधानं । स्मरतु मम मानसं विषयगतनाशमपिगोकुलाधीशमतदेकतानम् ॥ ८ ॥२॥

कल्याणरागेण गीयते ॥ चल सखि मा कुरु सुभगे मानं । कारय नन्दसूनुसन्मानं । मिलनीरदसुंदरवरव-

पुषं मधुराधरमुरलीकृतगानं ॥ १ ॥ ध्रु० ॥ किमिति वृथैव सहसि बहु विरहं नो जाने कारणमणिदानं । कुंजभवनमायाहि मया सह कुरु सहचरिमधुराधरपानं ॥२॥ पश्य दशामयि रुचिदृशा विरचय सुमतेरवधानं॥ हरये विरहतापहृदयायपर्दापय रसदानं ॥३॥ स्मरसि किमिति पुनरपि कथितानि हि संपादय गुणगणहृद्धयानं ॥ आरोपयसि दोषरहिते दोषं परिहर सखि निजमज्ञानं ॥ ४ ॥ यद्यपि भाति तथापि विभावय शुक्तिरजतमिव ते मानं ॥ कुरु गोकुलकरिणो हरिणोपमनयने निजमिलनालानं ॥५॥ श्रुतमेतावदये यद्दैव मयोदितमधुना कुरु पानं ॥ इति हरिदासमनसि निवसतु वचनं लघुविहितविरहहानं ॥६॥ श्रीवल्लभपदसरसिजसेवनमेव वितर सुवितानं ॥ क इह करोति सकलगुणसुंदरसौभगनिधिगुणगणसंख्यानं ॥ ७ ॥ श्रीगोपीजनचरणरेणुसंगतिविहितमस्थानं ॥ चेतो वितरविश्वहितविठ्ठलपतिपदसंततसेवनदानं ॥८॥२॥

गोडीरागेण गीयते ॥ रासरसिकवरमिलनं मानय । मदुदितवचनरचनमाकर्णय करुणारसमयि मनसि समानय ॥ ध्रु० ॥ चंचललोचननिर्जितमीनं ।

निर्भरभावविवेकविहीनं ॥ अनुसर तव मिलने बहु· दीनं गोपराजतनयं त्वयि लीनं ॥ १ ॥ विलपति जपति वदति तव नाम । त्यजति कुसुमशयनं निज· धाम ॥ रचयति रुचिरतरं सुमदाम तेन समं संपादय साम ॥ २ ॥ शिशिरय वचनैरधिगततापं । दूरीकुरुतद्गतमभिशापं ॥ जहि जहि मारमभितो धृत· चापं अमितमधरमधु देहि दुरापयम् ॥३॥ तव विपि· नागमनं पश्यंतं । आगतेति निजहृदि हृष्यन्तम् ॥ सपदि वशीकुरु निजवश्यं तं संजीवय मदनं नश्यंतं ॥ ४ ॥ अवलोकय सुंदरतासारं मा कुरु मानिनि मानमपारं । कंठे कुरु मुक्ताफलहारं ॥ सुखय सुमुखि सखि नंदकुमारं ॥ ५ ॥ प्रकटीकुरु मानसगतभावं । तेन समं सेवय सखि दावं ॥ शृणु कोकिलगणमधुरारावं । निर्जय रुचिरदृशा मृग· शावं ॥ ६ ॥ दासीकुरु राधे हरिरायं निःसाधन· मपि विगतसहायं । अपि कथयामि वचो गतमायं शोषय मानसनिहितकषायं ॥ ७ ॥ वंदे हरिवल्लभ· वरचरणं मम तु तदेव सदैव हि शरणं ॥ साधनरहित· जीवकृतवरणं जयति सदा भवसागरतरणं ॥ ८ ॥ ४ ॥

श्रीरागेण गीयते ॥ एहि मम गोकुलाधीश सदनं । समयविरहानलं वपुरलंकुरु सखे रहसि दर्शय रसिकसरसवदनं ॥ १ ॥ अन्यगेहेषु वद किमिति गच्छसि सहसि किमिति तदुपालंभभूरिवचनं ॥ नैव कथयिष्यामि मातृपदसन्निधौ रुचिरतरबाललीलाविरचनं ॥२॥ मृदुलपर्यंकमथवा नाथदासिकाहृदयमभितिष्ठ चिरकालशयनं ॥ कोटिकंदर्पलावण्यरूपामृतैरहह शिशिरयमामकीननयनं ॥ ३ ॥ एवमेवैवचिंतयामीश चिरकालमहमातुरा विपिनगमनं । नित्यमागच्छ संकोचमपि मैव कुरु चरणपतितावहुकरोमि नमनं ॥ ४ ॥ नैव विदितं भवेदेतदागमनमिह नाथ कस्यापि कृतवरससंगं । मोहकं रूपमपि मुग्धभावामृतैरतिमृदुलतमरुचिरविलसदंगं ॥ ५ ॥ मुखकमलदर्शनाभावसंजातपरितापमरचिरविहितदेहदहनं ॥ शमय पूरय सदा मम मनोरथमहो विविधगतिचित्तगतभावगहनं ॥ ६ ॥ नाथ तेगृहमहं दासिका तावकी कुलमखिलमेव तव चरणशरणं ।

कस्यैतदेवेह निजनाथमिलनं ॥ वल्लभाधीशचरणाश्रयणमात्रमपि कुरु चित्तनित्यमानंदगिलनं ॥ ८ ॥ ५ ॥

कर्णाटरागेण गीयते ॥ ॥ मिलमाधव मयि वेणुधरं सुंदररूपविमोहितयुवतिवृंदरसिकवरं ॥ ध्रु० ॥ रजनीपतिमपि दिनपतिमिव कलयति ते चिरविरहे ॥ चंदनमपि सखि भस्मसमानं व्याकुलता निवहेन ॥ १ ॥ बहुदीनं कथयती तव संगमसंजननाय सुखेन ॥ गुंजद्भ्रमरघने विपिने पवने न दुनोति सुखेन ॥२॥ तव पदवीमभिपश्यति भामिनि सचकितनयनयुगेन । गोपीपरिवृढमपि वशगं कुरु मनसा नमदनुगेन ॥ ३ ॥ तपति जलजशयनेपि परं संजातसुखस्मरणेन ॥ बहु तपते संतापभरं सखिमारशराहरणेन ॥ ४ ॥ पुनरुत्थाय मृदुलपल्लवशयनं विदधाति करेण । किं कथयामि परं बहुवारं नाम जपति सुचिरेण ॥ ५ ॥ द्रुतमभिसारसमयशृंगारमकारि तया रभसेन ॥ मिलितानंदकिशोरचतुरचूडामणिना सरसेन ॥ ६ ॥ नोवचनीयमियं सुखजातमवापकिशोरवरेण । श्रीमन्नंदकुमाररुचिरगोवर्द्धनशैलधरेण ॥ ७ ॥ श्रीविठ्ठलचरणानुसारिणाच-

रितं तदनुचरेण । श्रीवल्लभकृपया रचितं हरिरायव; राकतरेण ॥ ८ ॥ ६ ॥

गुर्जरीरागेण गीयते ॥ गोचारणकरणाय विपिनमिह गतवति नंदकुमारे । मम मनसा संगे गतमधुना सखि सुंदरतासारे ॥ १ ॥ बर्हशिरोभूषणकृतरूपणवसितयोपिदाधारे ॥ विविधकुसुममृदुपल्लवमिलदलिकुलविलसितकचभारे ॥ २ ॥ नयनमीनयुगयुतनिजनुतलावण्यसुधासारे ॥ कर्णकुसुमकुलकंबुसमाकुलगल्लपुलिनपरिवारे ॥ ३ ॥ विकसितनासाशुक्तियुक्तमुक्ताफलरुचिराकारे ॥ चुंबनमथनविनिःसृतबिंबाधरमधुलोभितनारे ॥ ४ ॥ कंबुकंठविलुठितमुक्ताफलविरचितसुरुचिरहारे ॥ मृदुकमनीयकलेवरसुषमाविगतमानजितमारे ॥ ५ ॥ वरदाभयलक्षणयुगशोभितकरयुगपरमोदारे ॥ तनुतरकटिविलसितविज्ञापितयुवजनकठिनविहारे ॥ ६ ॥ उरूयुगलरंभापटपल्लवचरणकुसुमसुकुमारे ॥ अंघ्रियुगं मम शिरसि सदा कुरु बहु विलपामि मुरारे ॥७॥ श्रीवल्लभपदसरसिजसेवनमेव सदा सविकारे ॥ विज्ञापनमियदेव करोमि हरे कृपयाशु सदारे ॥ ८ ॥ ७ ॥

वसंतरागेण गीयते ॥ अवलोकय सखि मंजुलकुंजे । रमयति श्रीगोकुलरमणीरिह गोकुलपतिरलिकोकिलपुंजे ॥१॥ ध्रु० ॥ माधविकालतिकारतिकारिणि रागिणि रुचिरवसंते ॥ त्रिविधपवनकृतविरहवधूजनमदननृपतिसामंते ॥ २ ॥ किंशुककुसुमसमीकृतदयिताधररसपानविनोदे ॥ मधुपसमाहृतवकुलमुकुलमधुविकसितसरसामोदे ॥ ३ ॥ नवनवमंजुरसालमंजरीबोधितयुवजनमदने ॥ दयितारदनसमद्युतिमुकुलितकुंदचिरस्मृतवदने ॥ ४ ॥ युवतिजनमानसगतमानमहागजमदमृगराजे ॥ कोकिलकुलकूजितविरहानलतापितपथिकसमाजे ॥ ५ ॥ विततपरागकुसुमसंबंधिसदागतिवासितगहने ॥ कुसुमितकिंशुककैतवविस्तृतविरहगहनवनदहने ॥ ६ ॥ पल्लवकुसुमसमेतविपिनविस्मारितयुवजनगेहे॥मदनदहनदीपनविद्रावितविरहिदीनजनदेहे ॥७॥ जगति समानशीततदितरविरचितरुचिराकारे । वनिताजनसंयोगसेविजनजनितानन्दसुभारे ॥ ८॥ इति हितकारिवचनमतिमानिनि मानय गोकुलवासे ॥ कुरु रतिमतिशयकरुणारसवति वितर मतिं हरिदासे ॥९॥ ८॥

गंधाररागेण गीयते ॥ दर्शय मामतिदीनं सुंदर- गोकुलनृपनिजवदनम् ॥ रहसि मया मिल माधव सततं दयित विभूषय सदनम् ॥ १ ॥ सपदि निवर्तय निजकोमलवपुषा मम रतिपतिकृतकदनम् ॥ शृणु करुणालय दीनतमं खलु दुःखितताबकनदनम् ॥२॥ यदपि मया कथितं दोषेण कृपापरनिष्ठुरवचनम् ॥ स्थापय मां निजचेतसि मानद विरहविविधरचनम् ॥ ॥ ३ ॥ भवति न नाथ वियोगभरेण दृगंबुधिजल- संततितरणम् ॥ तपति हृदयमधुनाहितनाशन सुहृ- रनुचितकरणम् ॥ ४ ॥ किमिदमशक्यं नायक येन कृतं गोवर्धनधरणम् ॥ स्वजनविहितशतदोषनिवा- रकमादृशदुर्मतिहरणम् ॥ ५ ॥ त्यजसि हरे किमु दीनतमं मामधुनाऽविहिताचरणम् ॥ वितरति फलम- भिलषितमनुत्तमपदकमलादरणम् ॥ ६ ॥ सततमहं विश्वसिमि फलिष्यति विरचितमद्वरणम् ॥ वद वद- नामृतकिरणशिशिरतररूपक इह मम शरणं ॥ ७ ॥ विज्ञापनमिदमेव हरे वारय विरहानलमरणम् ॥ भवतु सदावल्लभवरचरणं मम शरणं कृतभरणं ॥ ८ ॥९॥

बिलावलरागेण गीयते ॥ श्रयतु हरिं मम मानस-

मधुना परिपूरयतु चरणमधुना ॥ ध्रु० ॥ नंदगृहे सततं निवसंतं दर्पणदर्शनतो विहसंतम् ॥ कमलसदृशमुखरसिकरसालं सृतमकरंदकपटकृतलालम् ॥ १ ॥ ग्रथितालकमुक्ताफलभूषं पीतपयोविरचितगंडूषम् ॥ जननीकृतगोरोचनतिलकं श्यामलमध्यविंदुलसदलिकम् ॥ २ ॥ गोपीजनमुखचंद्रचकोरं चकितविलोकितमानसचोरम् ॥ मुखरितनूपुरगतिविलसंतं अंगुलियुगरवतो विकसंतम् ॥ ३ ॥ हरिनखभूषणभूषितहृदयं निजजनतापहरणकृतिसदयम् । हृदयविराजितमणिगणहारं नवनीतादपि सखि सुकुमारम् ॥ ४ ॥ निजदेहद्युतिनिर्जितमारं वक्रविलोकनमोहितानारम् । भक्षितगोपीगृहनवनीतं स्तोभकवचनविहितसंगीतम् ॥ ५ ॥ लड्डुकदानजातबहुहर्षं बहुविधनृत्यरचितसुखवर्षम् ॥ संगीकृतबालकृतलीलं तदुपालंभसमयभयशीलम् ॥ ६ ॥ प्रहसितमातृचरणमुखदृश्यं तस्करासमयेन स्पृश्यं ॥ लज्जाभरनामितनिजवदनं ॥ ज्ञापितभक्तिरहितजनसदनं ॥ ७ ॥ मुग्धाननदर्शितनिजरूपं वदनविविक्तभूमिजलभूपं ॥ श्रीवल्लभपदसरसिजवासं पश्य कदापि दृशा हरिदासम् ॥८॥१०॥

विभासरागेण गीयते ॥ विजितमदननृपसुभटरणे ॥ मम रतिरस्तु सुकृतवरणे ॥ ध्रु० ॥ उषित मुषितसकलाभरणे शिथिलकलेवरगिरिवरधरणे ॥१॥ अंजनचिह्नविराजितवदने निजशुशमाजितकमलासदने ॥२॥ कुंदसमद्युतिराजितरदने मेघगिराकृतसालसनदने ॥३॥ अनुनयकरणनायिकानम्रे ॥ राधाधरमधुलेहनकम्रे ॥ ४ ॥ जागरजनितारुणगुणनयने । निद्रालसभूयः स्मृतशयने ॥ ५ ॥ दर्पणदर्शितरचितविहसने ॥ रहसि विपरिवर्तितनिजवसने ॥ ६ ॥ दयितापदनतिकुंकुमभाले ॥ अनुकृतदीनकरसमुदयकाले ॥ ७ ॥ श्रीवल्लभपदनीरजवित्ते ॥ हरिदासे वस तद्गतचित्ते ॥ ८ ॥ ११ ॥

कर्णाटरागेण गीयते ॥ मानय मदुदितवचनं राधे ॥ कुरु करुणामयि गोकुलरमणीमिलनविकसदपराधे ॥ १ ॥ कुवलयदलनीले लीने तव रूपसुधाकूपारे ॥ सुंदरवदनविधुस्मरणाहितबहुतरमनसिजभारे ॥ २ ॥ बर्हपिच्छपिच्छलकचभारविराजितमालतिमाले ॥ तिलकगंधफलमिलितमधुपकुलकुंतलविलसितभाले ॥ ३ ॥ भ्रूयुगचापतमालपत्रविशि-

खाहतयुवतिवृंदे ॥ मानसमृगवधवधकमानपंचाननभयमतिमतिमंदे ॥ ४ ॥ वादितवेणुफुल्लतरनासातरलितसचकितनयने ॥ प्रतिविटपं प्रतिपत्रं सुंदरी मनसाविहितमृगनयने ॥ ५ ॥ स्फुटनिर्गतनिःश्वासमधीरे विहितविविधगुणगाने ॥ विरहदहनकृतदेहविधूननपरिगततापविधाने ॥ ६ ॥ भूमिलुंठननिर्विघ्नसिद्धिसंपादितरसनिधिरूपे ॥ मदनदेवपूजाकृतिविरचिततापपवनबहुधूपे ॥ ७ ॥ श्रीवल्लभवरचरणकमलपरिचरणनिकटकृतवासे ॥ कृपय परं दीनेकृपापर निजदासे हरिदासे ॥ ८ ॥ १२ ॥

नटरागेण गीयते ॥ हिंदोले हरिरिह सखि विलसति । राधिकया सकलाधिकया सह विविधविकृतिसहितो बहु विहसति ॥ ॥ १ ॥ नवजलदे चपलासहिते मुहुरतिधीरं खलु गर्जति ॥ मृदुकुसुमोपमबिंदुगणानभितोऽभितोपरि वर्षति ॥२॥ विविधवर्णवसनाभूषितयुवतिनिकरे मृदु गायति ॥ मुहुरनुपदमथमुद्रितनयनं निजपतिरूपं ध्यायति ॥३॥ विविधकुसुममकरंदगंधमोहितमधुपे सखि विचरति ॥ यमुनोपवनसततसेवनपवने सुरजो ननु विकिरति ॥ ४ ॥

विभासरागेण गीयते ॥ विजितमदननृपसुभट- रणे ॥ मम रतिरस्तु सुकृतवरणे ॥ ध्रु० ॥ उषित सुपितसकलाभरणे शिथिलकलेवरगिरिवरधरणे ॥१॥ अंजनचिह्नविराजितवदने निजशुशमाजितकमला- सदने ॥२॥ कुंदसमद्युतिराजितरदने मेघगिराकृतसा- लसनदने ॥३॥ अनुनयकरणनायिकानम्रे ॥ राधाध- रमधुलेहनकम्रे ॥ ४ ॥ जागरजनितारुणगुणनयने । निद्रालसभूयः स्मृतशयने ॥ ५ ॥ दर्पणदर्शितरचि- तविहसने ॥ रहसि विपरिवर्तितनिजवसने ॥ ६ ॥ दयितापदनतिकुंकुमभाले ॥ अनुकृतदीनकरसमुदय- काले ॥ ७ ॥ श्रीवल्लभपदनीरजचित्ते ॥ हरिदासे वस तद्गतचित्ते ॥ ८ ॥ ११ ॥

निःश्वासैरिह तनुषे धूपं पूजय बहु भोजय रसरूपम् ॥ ४ ॥ विविधलतापल्लवशतवलितं कुसुमितविटपिविविधफलफलितम् ॥ व्रजनाथेन दृशा परिकलितं वृंदावनमवलोकय ललितं ॥ ५ ॥ सेवय पल्लवविरचितशयनं सफलय सुंदरि मामकनयनं ॥ किमिति तनोपि वृथैव निलयनम् । निजहृदि कुरु पुरुरससंचयनम् ॥ ६ ॥ तडिदिव जीमूते यदि सततं ॥ राजसि सुखमनुभवसि सुविततम् ॥ अनुमतमस्माकं नहि विहितं विजनमपि कुर्मो यदि सुरतम् ॥ ७ ॥ कथितमिदं सुखयतु हरिदासं श्रीवल्लभपदयुगविश्वासम् ॥ श्रीभागवतविचारविलासं कृपय कृपापर दर्शय रासम् ॥ ८ ॥ १४ ॥

भैरवरागेण गीयते ॥ वंदे शरणागताभयदम् ॥ निजविरहाकुलमानसजनजीवनपरितोषनिजाशयदम् ॥ १ ॥ निरुपधिकरुणारसपरिपोषिततोषितभक्तजननयनम् ॥ निजनामस्मरणातुरनिजजनविरचितविविधपापलयदम् ॥ २ ॥ व्रजयुवतिजनजीवनमूलं परिहितकर्बुरपीतदुकूलम् ॥ निजविद्वेषिजनप्रतिकूलं दूरीकृतजनमानसशूलम् ॥ ३ ॥ वारितविरहमनोग-

रमणीवदन विधूदयमोहितनयनकुमुदयुगले विकचीयति ॥ सुंदरतासरसीरसमज्जनसजलतरे मुहुरुदयति ॥ ५ ॥ विरचितसुकृते गोपीनिकरेनुपमसुखं सखि विंदति ॥ निजनाथे करुणैकदृशा मुहुरुचिततरं प्रतिविंदति ॥ ६ ॥ एतादृशमत्प्रभुलीलामथ चित्तमिदं विविचीपति ॥ विषयदोषमतियोषविहितक्रमति क्षणतो विजिगीषति ॥ ७ ॥ श्रीवल्लभपदकमलयुगलपतिते दीनेव स कल्पति ॥ हरिदासेऽखिलविरचितहासे विरहवशेन च जल्पति ॥ ८ ॥ १२ ॥

श्रीरागेण गीयते ॥ चल सखि खिन्नं सुखय निकुंजे । गुंजति सरसमधुपकुलपुंजे ॥ मानय वचनं परिहर मानं । किं कुरुषे भज विरहितमानं ॥ उचितमये निजपतिसन्मानं सुखमनुभव पीयूषसमानं ॥१॥ विविधवर्णवसनं परिधेहि, भूषणमपि नासादिषु देहि॥ निशि विजने सति शरभ समेहि, जीवनफलमिदमेवमवेहि ॥ २ ॥ अवलोकय सखि सकलक्लेशं निजकरधवलितकाननदेशं ॥ लीलासमकालिकचिचेशं सुमुदितफलनिश्चयसंदेशम् ॥ ३ ॥ भावय भामिनि भावितरूपं गोगोकुलसाधारणभूपम् ॥

निःश्वासैरिह तनुपे धूपं पूजय बहु भोजय रसरूपम् ॥ ४ ॥ विविधलतापल्लवशतवलितं कुसुमितविटपिविविधफलफलितम् ॥ व्रजनाथेन दृशा परिकलितं वृंदावनमवलोकय ललितं ॥ ५ ॥ सेवय पल्लवविरचितशयनं सफलय सुंदरि मामकनयनं ॥ किमिति तनोषि वृथैव निलयनम् । निजहृदि कुरु पुरुरससंचयनम् ॥ ६ ॥ तडिदिव जीमूते यदि सततं ॥ राजसि सुखमनुभवसि सुविततम् ॥ अनुमतमस्माकं नहि विहितं विजनमपि कुर्मो यदि सुरतम् ॥ ७ ॥ कथितमिदं सुखयतु हरिदासं श्रीवल्लभपदयुगविश्वासम् ॥ श्रीभागवतविचारविलासं कृपय कृपापर दर्शय रासम् ॥ ८ ॥ १४ ॥

भैरवरागेण गीयते ॥ वंदे शरणागताभयदम् ॥ निजविरहाकुलमानसजनजीवनपरितोषनिजाशयदम् ॥ १ ॥ निरुपधिकरुणारसपरिपोषिततोषितभक्तजननयनम् ॥ निजनामस्मरणातुरनिजजनविरचितविविधपापलयदम् ॥ २ ॥ व्रजयुवतिजनजीवनमूलं परिहितकर्बुरपीतदुकूलम् ॥ निजविद्वेषिजनप्रतिकूलं दूरीकृतजनमानसशूलम् ॥ ३ ॥ वारितविरहमनोग-

तमानं शोषितविषयमहाविषपानम् ॥ विदलितविविधविकसदज्ञानं संपादितसाधनगुणगानम् ॥४॥ कोटिमदनदेहद्युतिललितं रासादिकलीलाशतवलितम् ॥ समुदितसर्वभावजनकलितं कलमुरलीमधुराधरचलितम् ॥ ५ ॥ संगीकृतगोकुलकुलबालं गोचारणगतिरतिगोपालम् ॥ आगतसुरविद्वेषिकरालं परिपालितलीलाबहुतालम् ॥६॥ संध्यागतसंतोषितभक्तं व्रजयुवतीजनलीलासक्तम् ॥ समुदितमदननयनमदरक्तं सफलितविविधरमणनिजभक्तम् ॥७॥ श्रीवल्लभवरचरणाधारं सततस्मृतसेवितसंसारम् ॥ कृपय सदा हरिदासमसारं तारय परिगतजलधिमपारम् ॥ ८ ॥ १५ ॥

रामकरीरागेण गीयते ॥ पालकय नंदालवतवास अनुकंपासंपादितदास । शयनारुणनिजनयनविकास । सालसतासंचितपरिहास ॥१॥ विषमचलनविषमाहतमान नयनयुगलसूचितरतिदान रससंबंधविलसदज्ञान । अतिशयशिथिलपीतपरिधान॥२॥ नखरलिखितमृदुशकलशरीर । वपुषा सेवितशिशिरसमीर । मायिकवचनरचनबहुधीर व्रजयुवतीजनशिक्षाकीर ॥ ३ ॥ नंदनंदनमदनाधिकसुंदर ।

प्रकटितवृंदाविपिनपुरंदर, सेवितगोवर्धनगिरिकंदर । अमृतमथनसमये धृतमंदर ॥ ४ ॥ ग्रथितमुक्टमेचककचभार । कुंदकुसुमविरचितशृंगार । सोभाजितनीरजविधुमार । लीलाविहितविघ्नपरिहार ॥ ५ ॥ चरणपतनकुंकुमयुतभाल। अतिरतिविगलितनववनमाल परिवर्तितकरसरसिजनाल गोपिवकृतलीलागोपाल॥ ६ ॥ भावितभाववतीजनभाव, एकतानमानसहितदाव, श्रुतकोकिलकुलमधुराराव । एकदृष्टिदर्शितमृगशाव ॥७॥ सततस्मृतफललीलारासे ॥ कृपयतु गोपीपतिविश्वासे ॥ हरिरिह वल्लभवरपदवासे । गीतागणितगुणे हरिदासे ॥ ८॥ १६ ॥

श्रीरागेण गीयते ॥ सुतवदनं भावयति यशोदा ॥ खेलनजनितमनसि मोदा । रुचिरालकततिसंवृतिरुचिरं । संततचिंतितबालविनोदा ॥ १ ॥ ध्रु० ॥ मीनसमानचपलनिजनयनं । केवलभावविभावनदीना । वत्सलताकृतबाहुलता परिरंभणसमयविवेकविहीना ॥ २ ॥ उभयरेखमतिमंजुलतिलकं । निहिततदंतरपरिगतचित्ता। लसदलिकाहितकज्जलबिंदुम्, धनमिव संगतविरहितचित्ता ॥ ३ ॥ मृदुलकपोल-

लोलकुंडलयुगमतिशयभावनभावविभागा ॥ गगनराजदरुणांशुसमानं प्रकटितहृदयविलसदनुरागा ॥ ॥४॥ वेणुवादविधिफुल्लनासिकं सुंदरतालोकनमोहा । नासाभूषणमुक्ताचलनं चिरलब्धानंदथुसंदोहा ॥५॥ अरुणाधरफलनिर्जितबिंबं निजकरकृतनवनीतसुभक्षा । सुंदरतापातितजनदृष्टिं गोरजसाबहुतरकृतरक्षा ॥६॥ सहजनीलतमचिबुकमुरुचिरं चिरसंचितचेतसिभावा ॥ आविर्भावितबालकलीलं विरचितताततेतिविरावा ॥ ७ ॥ श्रीवल्लभवरचरणावासे हरिदासेपि करोति सदा, करुणामिति जानातु मदीयोयमिति हरे परवश्यहृदा ॥ ८ ॥ १७ ॥

अडानरागेण गीयते ॥ ॥ प्रियसुत मुग्धविनोद वद विपने किंकिं विहितं । पल्लवचयमतिवल्लभमधुना कुत्र शिरसि निहितं ॥ १ ॥ गैरिकचित्रविचित्रितवदनं कुत्र कृतं ललितं । कचचयमतिशयमेचकरूपं बर्हिपिच्छकलितं ॥२॥ पायितमतिशीतलनीरं गोधनमिह यमुनातीरे । कुत्र धौतमतिघर्मनिवारणकृतये निर्मलनीरे ॥ ३ ॥ उपविष्टं विटपिच्छाये सुत कुत्र गोपसहितेन । प्रेषितमितो मया वद भुक्तं

भवता वनेषु हितेन ॥ ४ ॥ चारितमतिकोमलतृण-
वति देशे गोकुलमथ कुत्र । कंटकनिचय मिथो खलु
लग्नं चरणं दर्शय पुत्र ॥ ५ ॥ विलसितमिति वद
कया लीलया भवता बालकुले । ब्रूहि कुत्र मिलितै-
रथ धावितमिति विपिने विपुले ॥ ६ ॥ स्थेयमतो
बलभद्रयुतेन सदा भवतातिभयेन । इतिविज्ञापितम-
हह मदीयं मानय बहुविनयेन ॥ ७ ॥ कृपय सदा
सुहृदां वरसूनो गृहदासे हरिदासे ॥ श्रीवल्लभवरच-
रणकमलसेवनविरचितपदवासे ॥ ८ ॥ १८ ॥

रागटोडी ॥ कुत्र गतं निशि गोकुलनायक
अन्यहृदयहितपंचसायक ॥ नैवंकरणमहोसूमुचित-
मिह व्रजयुवतिजनबहुसुखदायक ॥ १ ॥ वदसि विन-
यवचनानि न तानि विशंति हृदयं मतिमानं, चित्त-
मितरयुवतिसु लग्नमिति नैवमानये तव सन्मानं ॥२॥
प्रकटमखिलमंगेषु दृश्यते संप्रति चिह्नचयं । कृत-
विरहितमितिकथं मानये नाथवचनविनयं ॥ ३ ॥
दर्शयसीहशिथिलमुष्णीषं रूपमथो विकलं, रचित-
मिदं निजदुःखकृते भवतासुंदरसकलं ॥ ४ ॥ कुंकुम-
मृगमदगंधरेणुयुतवनमालाहृदये ॥ कथमेवंकरणे

घटते शृणु मदभिमुखं सदये ॥ ५ ॥ नक्षत्राणि मया गणितानि निखिलनिशि रहसि निकुंजे ॥ अहमपि सखीयुताहताशामुवं सतिमिरपुंजे ॥ ६ ॥ जागरणारुणनयनयुगं कुरु निर्मलमिह नीरेण ॥ विहितं कथमुनीयुद्धं भवता वद युवतीवीरेण ॥ ७ ॥ श्रीवल्लभपदरेणुवल्लभश्रीहरिदासवराके ॥ कुरु करुणामनुरागशिशिरतरविरचितदोषविपाके ॥८॥१९॥

नटरागे ॥ सायमिह भोजयति बालकं माता ॥ अतिमुग्धमृदुलदुग्धौदनं निजमुखे सपदि विदधातु मम सकलसुखदाता ॥ १ ॥ ध्रु० ॥ प्रतिकवलमेतदपि वचनमपि याचते दत्तचित्तेन खलु भोजनीयं पुरा ॥ खेलनीयं ततो बालकैरखिलगोकुलजनैरिति वदति डिंभि किमिति त्वरा ॥२॥ विपिनचरितं त्वया किमिति वद मत्पुरः पृच्छति प्रायशो गोपकुलपालकं॥ विजयति दक्षिणकरेण कमलालयं मार्जयति वामतो वदनमपि सालकं ॥ ३ ॥ मुखविगलितं पयोबिंदुचयमद्भुतं प्रोंछति प्रवणतरदत्तदृष्ट्या । भवति सुखिता परं निजसूनुदर्शने वदनलावण्यपीयूषवृष्ट्या ॥ ४ ॥ लोकसिद्धामथो कथयति प्रियकथामतिहसितमुग्ध-

सुखदत्तनयना ॥ नैव सहिते परं भोजनविलंबनं भावितस्वच्छपर्यंकशयना ॥५॥ बालचरितानि ललितानि खलु गायति प्राणसदनानि रदनानि दृष्ट्वा ॥ सीत्करोति ह रोमांचति प्रतिपदं हसति रोदिति परं मनसि हृष्ट्वा ॥६॥ अंकमुपवेश्य करयुगलमनुधावयति सुखगतं तांबूलमथ सुखे दत्त्वा ॥ उत्संगमारोप्य मृदुलशयने मुदा शाययति वनखिन्नमत्र मत्वा ॥ ७ ॥ निजवदनचर्चितं पीयूषगर्भितं भुक्तशेषितमथो यच्छ हरिदासके ॥ वल्लभाधीशपदकमलसेवनविहितभावभरसंजातभक्तिसुखयाचके ॥ ८ ॥ २० ॥

भैरवरागेण गीयते ॥ उषसि वद गोकुलाधीश कुत आगतं ॥ इतरयुवतीजनितचिह्नशतवलितवरमृदुलदेहक्षणे सपदि मनसागतं ॥ १ ॥ किमु गृह विस्मृतं नाथ मनसि स्थितं मद्गृहं दुःखजननस्मरणमागतं । याहि निजभवनमतिभाषणं त्यज मया शृणु दयारहित मम नैव सुरुषागतं ॥ २ ॥ मानमुन्मूलयितुमुद्यतो भवसि वद कथमुन्निःसारयसि विरहपरिखागतं ॥ अधिकमधिकं सपदि समुदयति मानसे दोषगणनं निखिलनाथ्यपथागतं ॥ ३ ॥ यत्र तव

मानसं विषयकृतलालसं । गच्छ तत्रैव बद्ध यच्छ सुखमागतं ॥ तन्मनोरथमखिलमाशु पूरय हरे विरहदुःखभरमहह विरहागतं ॥ ४ ॥ परमहं वेद्मि ननु विस्मरामीश नहि विस्मरत्यहह गोकुलनृपहृदि गतं ॥ त्वमपि हि स्मारयितुमागतो गोकुलाधीश कथं किमुत कल्पसमुपागतं ॥५॥ एतदेवास्ति विज्ञापनं नाथ मम तिष्ठ हृदये सततमद्य तु यथागतं ॥ याहि कुरु शयनमतिजागरारुणतरे लोचने शमय परितापमलसागतं ॥ ६ ॥ इतिवचनजातमतिमानिनीवदनसंजातमाकर्ण्य ननु हृदयकमलागतं ॥ पूरयतु गोपिकाजनमनोरथमखिलमद्भुताकारमतिशयितशुभगागतं ॥७॥ देहि वल्लभचरणराजीवरेणुमपि विषयिजनसंगदुर्मतिविरोधागतं ॥ धर्मरहितं सहितमतिदोपकारकैरहह हरिदासमथ चरणशरणागतं॥८॥२१॥

रामश्रीरागेण गीयते ॥ वंदे वल्लभवरतनुजं भक्तिसरणिशरणिकृतसाधनरहितसकलमनुजं ॥ १ ॥ सुंदररूपविमोधितभाववशीकृतगोकुलनाथं । निरुपमभावविभावनचतुरतमं मम विठ्ठलनाथं ॥ २ ॥ हरिसंबंधवतीसमुदायत्रिविधसंबंधसहायं ॥ अतुल-

वचनतोपितरुणीजनजीवनगतिमतिमार्यं ॥ ३ ॥ मनोवचोगोचरकृतिविज्ञापितनिजगतमहिमानं ॥ निजसेवकसेवितपदकमलयुगानतहृदयालानं ॥ ४ ॥ प्रकटीकृतवृतजीवसुखालयरसमयमंजुलरूपं ॥ श्रीभागवततत्वविवृतिबोधननिजजनमतिशोधनभूपं ॥ ५ ॥ निजपीयूषविजितविधुमंडलमंजुलवदनसरोजं ॥ अखिलमनोमोहननिजसुषमाविरहितमानमनोजं ॥ ६ ॥ मृगमदसंभवसहजतिलकशोभितसौभगनिधिभालं ॥ कुंचितचिकुरसामावृत्तिवदनविनिर्जितमधुकरमालं ॥ ७ ॥ कृपयति स मयि कदापि हृदा किं करहरिदासे ॥ भवतु परं गोपीपतिचरणकमलभावं पदवासे ॥ ८ ॥ २२ ॥

धन्याश्रीरागेण गीयते ॥ भजे सखि गोकुलेशं नंदभवनभूषणं नखभूषितहृदयदेशं ॥ ध्रु० ॥ मंदहासफुल्लनासरुचिरमुखसरोजं । वदनचंद्रकिरणकांतिरहितमानमनोजं ॥ १ ॥ वदनकमलमधुपवदति राजदलकपुंजं ॥ बर्हमुकुटतटविलासिबहुविचित्रगुंजं ॥ २ ॥ युवतीमुखकमलमधुपचंचलतरनयनं ॥ अनुपमनिजनिहितभावसततकृतमृगयनं ॥ ३ ॥

भ्रूनटधृनमातृविहितवर्तुलमपिबिंदुं । मुखजितपीयूषभरितचिह्नविलसदिंदुं ॥ ४ ॥ मृदुकपोललोलयुगलकुंडलकृतशोभं ॥ हीरककृतचिबुकभूषणविरचितविक्षोभं ॥५॥ कंठशोभिमुक्तामणिभूषणोदितग्रीवं ॥ भावभगतया वशीकृतयुवतीजनजीवं ॥ ६ ॥ कटितटगतपीतवसनशोभितनिजरूपं ॥ पदनखद्युपुमाविमानमृगनरमुनिभूपं ॥ ७ ॥ विज्ञापनमेतदेव मानय मम वचनं ॥ श्रीवल्लभचरणकमलकृपया कृतरचनं ॥ ८ ॥ २३ ॥

मलाररागेण गीयते ॥ प्रियसखि विरहे विपिनविचरणं ॥ विरहितमनुजशरणं । गोकुलपतिपदभाववतामतिशयितशोकतरणं ॥ १ ॥ ध्रु० ॥ विविधविटपियुतलतावृंदसंदर्शनजनितानंदं ॥ शिशिरितनिखिलशरीरपवनविचलितनवकुसुमरंदं ॥ २ ॥ मुदिरमुदितमानसघननादविलासरवश्रवणं । अद्भुतपक्षतियुगदर्शनकृतहृदयदुखविद्रवणं ॥ ३ ॥ फलितरसालशालशाखागतपिककूजितकसुखं ॥ स्थलकमलाहितशोभोपमितयुवतिजनसरसमुखं ॥ ४ ॥ हरितरसालोकनचिंतितहरिरूपनामयुगलं ॥ संवर्द्धितहृदया-

हितरागगानकृतिरणितगलं ॥ ५ ॥ गगनविलसद्‌तिघनघनवृंदविलोकनकृतसुखदानं ॥ कंपितशाखागतमृदुपल्लवचलनविहितमन्मानं ॥६॥ विविधस्थलविरचितलीलाविज्ञापनबहुतरनिपुणं ॥ प्रियसंनिधिसुखनिचयविचारणपरमानसकृपणं ॥ ७ ॥ ईदृशादशायुतं हरिदासं दर्शय गहनविहारं ॥ हृदयनिहितहरिवल्लभवरपदनखविद्युतिमणिहारं ॥ ८ ॥ २४ ॥

केदारागेण गीयते ॥ मानिनि सहसे किमति वियोगं ॥ कुरु हरिणा संभोगं ॥ वारय तदधरपीयूषेण विषमचेतोभवरोगं ॥ १ ॥ ध्रु० ॥ निजहस्तावचितातिमृदुलतरकुसुमरचितशयनेन ॥ प्रतिपदमवलोकितपदवीकृतचपलचकितनयनेन ॥ २ ॥ भावितशयनशयितभवनीतीसंदर्शनजनितसुखेन ॥ कृपयिष्यति दयितेतितोषभरसंनतिहसितमुखेन ॥३॥ पुनरपि तालवृंतपवनविशेषवशितहृदयेन ॥ श्रमबिंदूनि कलयतावदनकमलपनसासदयेन ॥ ४ ॥ हृल्लिालकतति नयनसमागतिरतिजागरभीतेन ॥ मारशरैरतिपरवशैरिह विरहदशा नातेन ॥ ५ ॥ मुखकमलाहितगंधलोभगुणभरगणितश्वासेन ॥ स्तन-

लुलितहारशोभाभरसततस्मृतरासेन ॥ ६ ॥ संवाहि- तसरसिजसुंदरभावितपदकमलयुगेन ॥ सकरुणहृद- यकमलसंपादितभाववदेकसुगेन ॥ ७ ॥ श्रीवल्लभ- पदकमलविमलमतिहरिदासे सदयेन ॥ मनसा सखि भावय निजभावं भाववतो विनयेन ॥ ८ ॥ २५ ॥

केदाररागेण गीयते॥ हरिमनुसर सरसिजनयने॥ कुरु शयनं हरिणा सह सुंदरि रचितकुसुमशयने ॥१॥ विरहभावसमुदितहृदि तापनिवारणगीतगुणं । प्रत्यवयवगतनिरुपमसुषमापरिभावननिपुणं ॥ २ ॥ चिरमवलोकितपदकमलाकृतितरुपल्लवनिचयं ॥ चिंतितचरणचमत्कृतिचित्रितदृष्टिरचितविलयं ॥ ३ ॥ भाववशाशयविहितविनोदविशेषविधानविचारं ॥ भावितरुचिरावयवविलोकनविहितनयनसंचारं ॥ ४ ॥ भावितभवतीपरिरंभणकृतसंभ्रमजनितसुखं ॥ मधु- राधरपीयूषपानसंपुटितसलोलमुखं ॥ ५ ॥ भावित- मानापयनकरयुगधृतपदकमलवरं ॥ नखविधुकिरण- कौमुदीमोदविनोदविशेषपरं ॥ ६ ॥ अनुसंहतिनिज- विरहदशासमुदितमानससंतापं ॥ अन्वेषिततनुदाह- विनाशकसीतलकमलकलापं ॥ ७ ॥ शिशिरोपायवि-

धानविहितनिजजन्मसफलविश्वासं ॥ श्रीवल्लभवर-
चरणकमलपरिमललोभितहरिदासं ॥ ८ ॥ २६ ॥

कल्याणरागेण गीयते ॥ मानिनि तव पदपति-
ताहं । अंगीकुरु गोकुलपतिसंगं येन सपदि भविता
हरिताहं ॥ १ ॥ ध्रु० ॥ मानय विनयवचनमतिदीनं
तव मेलनकरणे सूहिताहं ॥ नैवमुचितमतिरोषवती
भवती कृपया दासी विहिताहं॥२॥ अवलोकयति पथं
तव सुंदरि मानवारणे सखि निहिताहं ॥ इति जानीहि
चरणपरिचरणनिरंतरकरणदोषरहिताहं ॥ ३ ॥ भव-
तीरतिसंपादनकृतये निरुपधिगोकुलपतिरचिताहं ॥
यदि नायासि वृथैव भवामि तदा निपुणैकमध्यलि-
खिताहं ॥ ४ ॥ त्यजसि न मानमहो कथमपि तदि-
तरयुवतिभिरतिव जिताहं ॥ यदि न भवति मम विहि-
तमिदं सखि किमु कथयामि मध्यवनिताहं ॥ ५ ॥
वदनामृतकरकिरणचकोरं दर्शय सुखितं मूलुठि-
ताहं ॥ इतरसखिजनसाहंकृतिवहुवचनरचनशोचन-
मृदिताहं ॥ ६ ॥ जीवनमपि मम दुर्लभमधुना यदि-
निजसंगपंगमिताहं ॥ कथमु दर्शयिष्यामि मुखं पुन-
रपि हरिणा वहुधा लपिताहं ॥ ७ ॥ इति सहचरिव-

नानि हृदाकर्णयति वदिति सखि चलिताहं ॥ श्रीवल्ल॰ भवरचरणरेणुहरिदासमदीयकृपावलिनाहं ॥८॥२७॥

मलाररागेण गीयते ॥ विरहे सुंदरवर्षासमये । वद जीवामि कथं मम दोषैरतिशयितैरिह सखि विपरीते सदये॥१॥वर्षति जलदे विरहानलदे गोवर्द्धनशिखरे॥ परपुष्टे शतघुष्टं कूजति वदति केकिमुखरे ॥ २ ॥ लसति भूमिरतिहरितापवनविचलिते तृणनिचये । इंद्रगोपकैतवजमूलविलसदनुरागसमये ॥३॥ विविध॰ शिलासुशुद्धनिजरूपयुतासु विराजति नाथे ॥ निज॰ सुखदर्शजनितानंदविलासगीतगुणगाथे ॥ ४ ॥ नव॰ घनमध्यशोभिनीसुमुखी दृश्यते सितबकमाला॥ मेघ॰ नादमनुगर्जति मुरली क्षरति रसं सुरसाला ॥५॥ उद॰ यति विद्युदतिव चंचला चालयतीह जनं ॥ असितमे॰ घगणविरचिततमसा बहु भीपयति वनं ॥ ६ ॥ रंजि॰ तरुचिरकुसुंभवसनपरिधानविराजितरूपे ॥ गायति मेघसमागमरागे निरुपधिगोकुलभूपे ॥ ७ ॥ इति विज्ञापितमतिशयकरुणे विरहितहरिदासेन ॥ श्रीव॰ ल्लभपदकमलपरागधारणविरचितवासेन ॥८॥२८॥

आशावरीरागेण गीयते ॥ सततं विचरति

वृंदाविपिने । गोकुलपतिरपि गोपबालकैरारूढेपि दिने ॥ १ ॥ निजवदनेन वदति नामानि गवामतिरतिवचनेन ॥ मनसि मोदते विपुलरसागतसरसकुंजरचनेन ॥ २ ॥ निर्मलनीरधौतशिखरोपरिरुचिरशिलामुपविश्य ॥ भुङ्क्ते भवनसमागतमन्नं निजगोपेषु निविश्य ॥ ३ ॥ प्रत्यंगुलिबहुविविधफलानि दधाति रुचिरहस्ते ॥ मध्यमोदनं तनुते दृष्टिं जननीकृतिशस्ते ॥ ४ ॥ पिबति विमलपानीययमुनायामंजलिबंधेन प्रतिबिम्बं पश्यति सुचिरं निजलोचनसंबन्धेन ॥ ५ ॥ मृदु वादयति वेणुमतिमधुरं चलति धेनुसंगे॥हरितापमथ काननदेशेरविरचिततृणभंगे ॥६॥ कनकचषकगतफेनसमूहं पिबति गोपमथितं । शिशिरयतीह बालकुलहृदयं बहुविरहव्यथितं ॥ ७ ॥ श्रीवल्लभपदकमलपरागरागरंजितहृदयं ॥ हरिदासं सुखितं भावैरपि कुरु दुर्जनविलयं ॥८॥२९॥

आशावरीरागेण गीयते ॥ चरणं धेहि सरसहृदये । व्यथते शिलातृणमूलैरतिपदमितिचिंतैकमये ॥ १ ॥ नहि समुचितमिह धरणीविचरणं सुंदरसति कमले ॥ उद्भटभावनिरंतरनिर्गतनयननी-

रविमले ॥ २ ॥ श्रीरपि कुरुते सपदि सहायं यद्यपि वनचलने ॥ तदपि बाधते मामकहृदयं चरणचिह्न-कलने ॥ ३ ॥ यद्यपि भूमिरथोरससहिता त्यजति तथापि हरे ॥ इह यदि गंतुं क्षणमुत्सहसे करवै सपदि करे॥ व्रजसंबंधिगवमनुगं किमु गोपीजनवृंदे॥ दोषमथो चेतसि चिंतयसे लौकिकमतिमंदे ॥ ५ ॥ किमिति बिभेषि तापसं सृष्टे धारयितुं चरणं ॥ फणि-फणधृतपदपद्मकिमद्भुतमेवं तव करणं ॥ ६ ॥ मर्दनजनिता दुःखमर्दयसि पदजनितानंदेन ॥ भूमेरेहह वियोगे विहितं किमु मयि गोविंदेन ॥७॥ श्रीवल्लभपदकमलसदागतिसंगतगंधयुतेन ॥ योजय निजरणकरुणामयदाससरसहृदयेन ॥ १० ॥

आशावरीरागेण गीयते ॥ मित्र मायाहि करवै पयोमथनं फेनमिह भोजनीयं त्वया ॥ पत्रविरचि-तरुचिरपात्रनिहतं हरे ननु विधेया ममोपरि दया॥१॥ शीतलं भवती ननु भावसुंदरहरे शृणु वने यत-विहितं मया ॥ किमिति हि विलंबसे तिष्ठ मम सन्निधौ गोपसुतमंडलीविहितविनया ॥ २ ॥ दर्श-नानंदगोविंदसंप्रति यथा भवति दुःखालिरथ रचित-

विलया ॥ दृष्टतरनीलमणिमंजुलमुखलग्नमधुदुग्धकरणपरमशोभैकनिचया ॥३॥ तिष्ठ कथयामि परमद्भुतामथ कथामयि किमपि मधुवचनमुदितमथ चैकया ॥ मा मम ह कानने करुणया योजय प्रणतपदिगोकुलाधीशपदसेवया ॥४॥ आयाहि किमपि कथयामि तव कर्णयोरतिशयितगुप्तमथ लोकविरचितभया। मंजुकुंजे रचय संकेतमद्भुतं शीघ्रमहमायामि चरणगतिकृतरया ॥ ५ ॥ वीजयिष्यामि परमतिरमणसंभ्रमे दर्शनीयो हरे भक्तकृपया ॥ योजनीयोस्मि ननु सपदि भवता कदा कार्यकरणे रसिकजननाथसहितया ॥ ६ ॥ दर्शयिष्यति कदा मत्प्रभुः स्वामिनीसहसवदनविहितविपरीतमिच्छया ॥ मदभिनंदनमथो दत्तमनसा कदाकर्णयिष्यति सुरतसंग्रामकृतजया ॥ ७ ॥ देहि निजदास्यमिह वल्लभाधीशपदकमलसेवनविहितभक्तिजफलाशया ॥ सततसहितेपि हरिदासके करुणतम विलस विपिने सरसनिरतिराधया ॥ ८ ॥ २१ ॥

मारुरागेण गीयते ॥ हाहा शृणु मायाहि वनं किमुचितमिति गमनं ॥ चारणायमिह गोपैरभितो व्रजनृपधेनुधनं ॥ १ ॥ करवै विविधवसनभूषाभि-

रलंकरणं तव देहे ॥ रहसि विराजितविपुलविताने वस मामकगेहे ॥ २ ॥ अतिसुगंधमुद्वर्तनमतिशयशुद्धगंधतैलं ॥ स्नानमथो कुरु नीरैरुष्णैरुरीकुरु चैलं ॥ ३ ॥ कछपटं परिधेहि तिलकमपि वितनु विपुलभाले ॥ तनुमुष्णीशं शिरसि विधेयं ग्रथितालकमाले ॥ ४ ॥ नूपुरयुगमनिचपलं पदयोरुरु भुजयोरपिधेयं ॥ कंकणचयमथ मध्यमंगदगुच्छसहितमपि देयं ॥ ५ ॥ हृदयमध्यमणिमुक्ताजटितं पदकं नाथ विधेयं ॥ मुक्ताकनकमालिकायुगलं जय जगदखिलमजेयं ॥ ६ ॥ उपविश पर्यंके मृदुरम्ये कुरु सुंदरशयनं ॥ तनवै करकृतमंगमर्दनं शिशिरीकुरु नयनं ॥७॥ इति सरसं वचनं राधया रतिरसभावयुतं ॥ शृणु वल्लभवरचरणकमलतलगतहरिदासनुतं ॥ ८ ॥ ३२ ॥

सारंगरागेण गीयते ॥ हरिरिह दिवसे वसति वने ॥ गोचारणमपि कुरुते गोपैरभितो विटपिघने ॥ १ ॥ ध्रु० ॥ नैव रोचते किमपि सुमुखि मम हरिविरहितसदने ॥ विरहवह्निरपि तनुते दाहं हृदये नृपमदने ॥ द्रष्टुमहो कामयते नयनं गोपतनयवदनं ॥ अलिकुलसदृशालकततिसहितं मुग्धं दुग्ध-

रदनं ॥ ३ ॥ नासा सततं विहितदुरशादेहकमल-गंधं ॥ आदातुं तस्या ननु तनुते सैव हृदयबंधं ॥४॥ रसना कुरुते सततमनोरथमधररसं पातुं ॥ वागपि परमनुरागवती विदधातु मनो गातुं ॥ ५ ॥ संवाहयितुमतीव कोमलं पदकमलं हस्तौ ॥ कुरुते मनसि मनोरथमतुलं हरिसेवाशस्तौ ॥ ६ ॥ स्फुरति सदा संमुखमतिचपलं चरणयुगं गंतुं ॥ चेतश्चिरमभिलषति कृपापरं नित्यमथो रंतुं ॥ इति मामकसर्वस्ववचनजातं निवसतु हृदये ॥ श्रीवल्लभवरचरणविचिंतनविघ्नविलये ॥ ७ ॥ २३ ॥

सारंग ॥ राधिका जयति वृषभानुभवने ॥ विविधमंगलघोषनृत्यगीतादियुतसूतमागदवंदिविप्रगायजने ॥ १ ॥ विविधगृहगोपिकाजनसमानीतदधिकुंकुमाक्षतरचितभिन्नहस्ते ॥ रेणुदूरीकरणगंधजलसेकक्रततोरणध्वजपताकादिशस्ते ॥ २ ॥ निकटसंबंधिनिजनंदनपरिचितसकलगोकुलागतमनुजविहितमाने ॥ पुत्रिकाजननसंतोषजनिनिजजनकविहितभूषणरत्नवस्त्रदाने ॥ ३ ॥ रतिपयप्रकटनोभयसंभवजनितहर्षयुतदासिकाफलितभाले ॥ निजनायली-

लयालीनसकलेंद्रियप्रियगीतिगोपिकादत्तताले ॥४॥ उद्घटितवदनजलजातसंजातपरमानंददृष्टराधेकवदने ॥ गोकुलाधीशजननोत्सवप्रतिपदस्मरणचिंतितरुचिरनंदसदने ॥ ५ ॥ सततमिह विलसतु प्राणपतिनेतिचिरमाशिषामधिकतममधुवचनभाषिते ॥ हृदयपदकमले वसतु भावपरिपोषितस्वामिनीसंगनिर्धारणविकाशिते ॥६॥ अस्मदभिमतमखिलमत्र खलु सिद्धमिति तोषभरभरितनिजदासचित्ते ॥ अतिशयितदुर्लभाभरभूषितलब्धजन्मसमयोत्सवचिंप्रेष्ठवित्ते ॥ ७ ॥ भवतु वल्लभविभोरतिशयितकरुणया सपदि वासोपि तव चरणरेणौ ॥ दासदासस्य हरिदासकस्याधुना देहि भावं मिवतिविधृतवेणौ ॥ ८ ॥ ३४ ॥

आशावरी ॥ पृथुके पश्यति मातृमुखं ॥ जन्मसफलमिह मनुते जननी लभते विविधसुखं ॥ १ ॥ उन्नतनयनमर्धमुत्थितवतिसचकितनयनयुगं ॥ स्रवदधरामृतवदनकलेशेफुल्लकमलसुभगं ॥२॥ कुटिलालकसंकुलमुखकमले हृदयभावविमलं ॥ नखरसमीकृतकुंचितचिकुरे नयननीरसजलं ॥ ३ ॥ आदर्शोदितबालकरूपे द्वयदर्शनचपलं ॥ प्रतिबिंबाकारणकृ

तलीले नर्त्तितकंबुगलं ॥ ४ ॥ अवलंबितमुक्ताफल-भाले स्पष्टरुचिरभालं ॥ नृत्यति नवनीताय चंचले चपलालकमालं ॥ ५ ॥ करधृतमातृनासिकाभूषे मोदरोमहर्षं ॥ वदनोपरि परिवर्त्तितवदने रचितनीरवर्षं ॥ ६ ॥ दशनद्वयदर्शितरसभावे भावनकृतिसरसं ॥ अवलोकितगोपीजनवृंदे तद्दर्शनसहर्षं ॥७॥ श्रीवल्लभकृपया मयि कुपयतु वल्लभकुलरत्नं ॥ भवतु मानसं सपदि निरुद्धं विविधविषययत्नं ॥८॥२५॥

रामकरीरागे ॥ निजतनुजं जागरयति माता ॥ प्रियसुत जागृहि रजनी याता ॥ सुभृतपयोनवनीतवद्दधिमोदकादिशीतलता जाता ॥ १ ॥ मधुरं रौति पक्षिगणमथविकचयति कमलकुलं ॥ दधि मथंति गोपिकाभुजकंकणविध्वनिविपुलं ॥ २ ॥ वायुरसावातिसमीविदधातुमलकनिचयं ॥ उन्निद्रय निजनयनयुगं कुरु रजनिदुरितविलयं ॥ ३ ॥ उदयति भानुरसौ परिहसति विकचकमलव्याजेन ॥ किमिदमुरीकृतमधुना शयनं नंदभवनराजेन ॥ ४ ॥ गायति गोपमंडली संप्रति बालयशो विमलं ॥ दर्शय वदनविफुल्लसरोजं रचय जन्मसफलं ॥ ५ ॥ कमल-

विनिर्गतमधुपकुलानि मधुरतरगलरणितानि ॥ हरिरु-
त्थित इति जगति वदंति वहूनि मया गणितानि ॥६॥
पूरय निखिलमनोरथमिति निजजननी मधुवचनं ॥
सुहृदाकर्ण्य तथैव कृतं हरिणापि यथारचनं ॥ ७ ॥
श्रीवल्लभपदकमलमधुपमानसवति सुनहरिदासे ॥
कृपय सदैव मदीयवचनतो वर्णितासुगुणसमासे ८।२६

रागअडानो ॥ ॥ नृत्यति गोकुलपतिरद्भुत-
गतिधेनुवृंदसंगे । अवलोकय वेणुवादविरचितगति-
भंगे ॥ १ ॥ अभिनयसंदर्शनायतदर्शितभुजमूलं ॥
तनुते ननु सहचरिवगहस्तकमनुकूलं ॥ २ ॥ नयन-
भेदवेदनाय मुग्धस्मितवदनं ॥ बहुविलासहासकर-
णदर्शितसितरदनं ॥ ३ ॥ संपुटीकृतरदनच्छदसूचित-
रसपानं ॥ वेणुनादकथितनामनिश्चितफलदानं ॥४॥
चारीकरणाहितपदधरणितापहरणं ॥ प्रकटितरसगो-
पनाय पीतवसनावरणं ॥ ५ ॥ कोटिमदनमोहनाय
चलितकटिविलसितं ॥ क्षुद्रघंटिकामनोहरनादमधुर-
रसितं ॥ ६ ॥ मंदमंदमंजुलगतिवारणवरचलनं ॥
श्रीवाक्टीचरणकमलवनमालाललनं ॥ ७ ॥ संध्या-

समयागतिरिह सुखयतु हरिदासं ॥ श्रीवल्लभचरण-कमलभावमतिविलासं ॥ ८ ॥ ३७ ॥

सारंगरागेण गीयते ॥ बालमालापयति मुग्धललितं ॥ तात मातेतिवदविस्खलितरसनया सुखय मम हृदयमतिभाववलितं ॥ १ ॥ अंगुलीं मम गृहाणोत्तिष्ठ सादरं दर्शय प्रायशो विविधचलितं॥मधुरमधुरं सपदि वेणुमपि वादय प्रतिपदं मधुरकरकमलकलितं ॥ २ ॥ पश्य दर्पणगतं निजरूपमद्भुतं तदनुकरणं वितनुपरमम स्खलितं ॥ अतिभारपीठकोलूखलसमर्पणे भुजयुगलमपि कुरु विशेषवलितं ॥ ३ ॥ कमलदललोचनं दुःखचयमोचनं मदभिमुखमातनु सदा विरलितं ॥ बालभावेन गानेन सुस्वरतया व्रजभुवि विधेहि ननु नृत्यछलितं ॥४॥ अंजनं नयनयोरतिशयितशोभनं तव ददामीह करयुगलदलितं ॥ सजलचैलेन संप्रोछ्य तैलेन सह मुखविधुं सपदि करवै विमलितं ॥ ५ ॥ पिब पयो ननु वयो वर्द्धते येन तव मस्तकं भवति मम कदापि पलितं॥ दृष्टिविषयो भवति मम कदा जलद इव दुग्धकणनिचयमथमुखविगलतं। ॥ ६ ॥ नयनयुगलं कदा दधिदुग्धयाचने बालली-

लानुकृतिसजलितं । दर्शयिष्यसि सकलगोकुलविमोहनं भागधेयं भवति मम च फलितं ॥ ७ ॥ विषयविवशाशयं विस्मृताधीशमपि भक्तिपथभावभावनमनलितं । देहि हरिदासमिह निजचरणवासमपि वल्लभाधीशपदकमलनलितं ॥ ८ ॥ ३८ ॥

रागविलावले ॥ व्रजयुवति देहि मम लगतिदानं ॥ चित्रितं दधिकलं समाधाय मस्तके चलसि विपिने हरसि मत्तगजमानं ॥ १ ॥ ध्रु० ॥ श्रुतिपथं नहि गतं कुत्र तव दानमिति हि मृषा वदसि विनयहातं ॥ अधर एवेति सविकारमभाषिते गोपिकाधीश इह वचनजातं॥२॥ कथमु गृह्णासि मम बाहुमाहूत इव कुलयुवतिधर्षणं किमितिहह तनुषे ॥३॥ सहचरिवृंदमपि पश्य निरपत्रपसजहठंविहितमपि सिरसि भारं ॥ चल रहसि मस्तकेनैव किमु वहसि सखी भारमुत्तरये तव वृथा पारं ॥ ४ ॥ पातयति कुटिललकुटेन शिरसिस्थितं दधिकलशमतिरभसभावधेरे ॥ निजपतौ विपिनरतिपरमतौ संमुखं वदति नहि समुचितं विजितमारे ॥ ५ ॥ चरणयुगमतिमृदुलमहह ललिताकृति प्रिय वहिष्यामि शिरसैव सततं ॥

बालभावं जहि सरसमनसा परं तव जगति भवति न यशोति विततं ॥ ६ ॥ इतिनिजप्रयतमावचनमथ शृण्वतो गोकुलेशस्य मुखकमलशोभा ॥ दर्शनेनैव कुरुते सखि मानसं भावनतरंगितं जनितलोभा ॥ ७ ॥ मनसि रसिके वसतु वागविषयं हरे गोपरमणीजने दानचरितं ॥ वल्लभाधीशपदकमलयुगकरुणया मम मनो विदधातु भावभरितं ॥ ८ ॥ ३९ ॥

रागललित ॥ जहिहि भामिनि मदुपरि कोपं ॥ अहमिह सपदि पतामि पादयोरुपरि किमिति कुरुपे रतिलोपं ॥ १ ॥ मुखकमलं मम विरचय संमुखमपि शिशिरीकुरु नयनं ॥ न मया सशपथमभिमतया कृतमन्यगृहे शयनं ॥ २ ॥ फुल्लनयनयुगलेन विधेहि कोपवति करुणालोकं ॥ त्वदवमानवितानजनितमपहर मम मानसशोकं ॥ ३ ॥ करयुगलं मम शिरसि निधेहि देहि संततमभयं । हैयंगवसुकुमारतरं सखि कुरु मानससदयं ॥ ४ ॥ गोपनितंबिनि किं बलमीदृशमतिर्दाने तनुषे ॥ त्वमदशरणं न वरिष्यति कापि युवतिरिति चेतसि किमिति न मनुषे ॥ ५ ॥

निजपतिनातिविशदमतिना विनयेन सखि मानं ॥
हृतमखिलं हृदयं च कृतं करुणायुनरतिरसभानं॥८।४०

रागे गौडी ॥ मधुरिपुमिलने किमिति विलंबं ॥ कुरुषे मानिनि मनसि विचारय त्रिजगति किमु तदितरदवलंबं ॥ १ ॥ शिशिरं शिशिरकरादपि मृदुलं नवनीतादपि हरिवदनं ॥ अवलोकय शोपय निजशोकं कुसुमाजितकमलासदनं ॥ २ ॥ परिरंभणमनुभव सुखदं कुरु पीयूषाधिकरसपानं ॥ स्थापय बाहुयुगं लसदंसे देहि नखक्षतदानं ॥३॥ हरिणा सह शयनं पर्यंके कुरु हृदयोदितभावं ॥ स्फुरदुच्छ्वासमथोष्ठमुद्रणमाभापय मधुरारावं ॥ ४ ॥ विविधहसनमथ रसनारसनं विरचय सखि सुरते ॥ सपदि वशीकुरु करुणाजलधिं प्रियतमचरणरते ॥ ५ ॥ अंसबाहुधरणं गजचलनं वितनु विशेषवने ॥ अवचिनु कुसुमचयं हरिणा सह बहुविधे विटपिघने ॥ ६ ॥ उन्मदमधुपकुलाकुलकमलालययुतयमुनानीरे ॥ विलसविलासकलाकुशलेन नमिततरुराजिततीरे ॥ ७ ॥ श्रीवल्लभचरणैकशरणहरिदासकथितेन ॥ द्रुतमभिसर सरसाशयसविधे किमिह मनोमथितेन ॥८॥४१॥

श्रीरागेण गीयते ॥ भावये मनसि हरिरम्य-वदनं ॥ गोपसीमंतिनीमंडलीमनमध्यमंशोभिहृद्यैकसुखममूहमदनं ॥ १ ॥ ध्रु० ॥ विजितविधुमंडलं व्रजजनाखंडलं सकलजनमंगलं सुघरदनं ॥ अलककुलमंडितं चित्तहृतिपंडितं द्विजपतिमखंडितं विजितमदनं ॥ २ ॥ सुभगनासमन्दहासरदनछदहासत्रासमतिशयितनिजदुःखकदनं ॥ चिबुकवरशोभनं जनमनोलोभनं मनसिजक्षोभणं मेघनदनं ॥ ३ ॥ विलसदधरामृतं नयनभृंगादृतं कुंडलयुगावृतं वेणुसहितं ॥ गंडयुगचंचलं सचकितदृगंचलं विहितमानसचलं जगदभिहितं ॥ ४ ॥ कृतदृगाकारणं तापविनिवारणं बहुविरहदारणं भावपूरं ॥ अमितकरुणाकरं कामनीमतिहरं रमणकृतितत्परं दुरितदूरं ॥ ५ ॥ अखिलगोकुलपतिप्रकटितमहारीतिभावयुतजनगतिं वह्निरूपं ॥ सेविजनपालकं सुररिपुकालकं श्रीनंदबालकं भक्तभूपं ॥ ६ ॥ सुरुचिरदृगाराममानंदधामनिर्जितनिखिलवामकुलमतुलशीलं । कंदर्पसुंदरं गोकुलपुरंदरं चातुरीमंदीरं रतिसलीलं ॥ ७ ॥ प्रकटमिह भूतले रहितसाधनबले भावदानाय निज-

वस्तुशक्त्या ॥ वल्लभाभिधमहोहरिदासमपि हरिदास-पदगतं विदधातु पदविरक्त्या ॥ ८ ॥ ४२ ॥

रागसारंग ॥ राजते हरिरसौ कुसुमवने॥ गोपिका-करयुगलचातुरीमीक्षमाणो मनसि मोदते वहति पवने ॥ १ ॥ प्रेष्ठया सह गतो विहरति विशेषतो हृदि च परिधापयति कुसुमहारं ॥ स्पृशति हृदयं मिषेणैव कौतुकपरः परमरमणीयमतिगंधभारं ॥२॥ विरचयति भूषणानीह कुसुमैरथो राधिकापरिधापनेतियत्नं ॥ अतिसूक्ष्मसितवसनपरिधानफलितनिजदेहसुषमा-दमितमारगर्वं ॥ प्रेयसी हसतीव सलक्षणं चद्रमिव हृदयहाराय हासद्युतिसुदृष्टिखर्वं ॥ ४ ॥ करयुगं बध्नाति कुसुमहारेण च कदाचिदपि वदति मानकथ-विलासं ॥ नेतिनेतीमतिमधुवचनमाकर्णयति वद-नकमलं सपदि चुंबति सहासं ॥ ५ ॥ हरिगले परिहितं हारमाकर्णयति बाधयति नायकं युवती-वश्यं ॥ अधरमधुपानकृतिलोभलोलुपमुखं गोपि-कावदनकमलैकपश्यं ॥ ६ ॥ हारमिव लाययति हृदयदेशे हरिप्रेयसीमपि चलितधृतिसुखामोदं ॥ गाढमालिंगति तदिंगीतमावेदयति हर्षेण सहितोपि

तनुते विनोदं ॥ ७ ॥ पूरयतु सकलमपि मम मनोरथमहो दर्शयतु कुसुमगृहयुगलवासं ॥ वल्लभाधीशपदसरसिजे सर्वदा देहि गोपिपते सुदृढविश्वासं ॥ ८ ॥ ४३ ॥

रागसारंग ॥ गोपकुलतिलक इह गोकुलेशोऽभवन्निजजनानंददानाय दयया ॥ सकललोचनयुगलगोचरो रमणकृतिचरितया वसुदेवनीतया मायया ॥ १ ॥ जातकर्माचरणवेदवाधितकरणतिलाद्रिगिरिविहितविप्रसन्माने ॥ पुत्रजननानंदनंदहृदयानंदसंदोहविहितबहुधेनुदाने ॥ २ ॥ उज्वलीकृतगृहं बद्धबहुतोरणे तैलयुतरजनिकृतधेनुशृंगारे ॥ विविधवसनाभरणगोपपुपमानीतदधिदुग्धवरवसनविसलसदुपहारे ॥३॥ कृष्णजननश्रवणविरचितस्वकल्पकरविधृतबलिगोपिकासमाजे ॥ नंदभवनागमनजानसंतोपभरविरचिताशीगसिगोपराजे ॥ ४ ॥चित्रविधवादित्रघोषसंगीतयुतनृत्यचारणवंदिगुणविकासे ॥ विप्रगायक संबंधिजनतोपनंदवितरितवमनरत्नमाले ॥ सूनुमभ्युदयकृते विष्णुमंतोपयानंदपरिपूजितग्रहदेववजाले ॥ ६ ॥ रोहीणी नंदगोपीभिर्नितनिर्भया व्य-

चरदाभूषणा गेहकृत्ये ॥ गोकुलेशागमनसततकलावासपरमसंपत्तियुतभृत्यभृत्ये ॥ ७ ॥ वल्लभाधीशकेवलसमाश्रयमात्रदासहरिदासजनशुद्धहृदये ॥ प्रकटइह भवतु भवभावभंजनपरो निरुपधिकृपाकरो दोपनिचये ॥ ८ ॥ ४४ ॥

इति श्रीहरिदासोदिता अष्टपद्यः संपूर्णाः ॥
शके १७९४ अंगिरानामसंवत्सरे ॥

अयं बृहत्स्तोत्रसरित्सागरोऽस्माभिर्यथामति संशोधितः आदर्शपुस्तकाभावात् ।



धनाश्रीरागेण गीयते ॥ मयि दीने तु दया करणीया । चरणनित्यता हृदि धरणीया ॥ निजपदकमलयुगकृतशरणे । संततविहिताविहितविचरणे ॥ १ ॥ साधनमतिकृतनिजपथहाने । फलसंबंधिविरोधसमाने ॥ २ ॥ विफलमृषामदद्‌त्तमानसे । विह्वलविभुसेवैकलालसे ॥ ३ ॥ इन्द्रियविषयचिन्तनाविमुखे । मूढतया पालितविषयसुखे ॥४॥ कामसमूहविभावनदक्षे । विषयसुमुखकालादिकभक्षे ॥५॥ दुर्जनसंगकरणमतिदुष्टे । बहुविधदोषपोषपरिपुष्टे ॥ ६ ॥ असमर्पितभक्षणगतशुद्धौ ॥ पररामासंगमहतबुद्धौ ॥ ७ ॥ परिजनजनितहासगतनासे । श्रीवल्लभपदसरसिजदासे ॥ ८ ॥

गौडीरागेण गीयते ॥ सखि विपिनादधुनैवायाति । श्रूयत एव मुरलिकानादो वादनामोदवायुर्वाति ॥१॥ ध्रु ॥ झंकृतिरपि वनमालामधुपकृता कुरुते हृदि मोदं । गोहुंकृतिरतिशयमधुरा विदधाति विशेषविनोदं ॥ २ ॥ गावो गोपा बलभद्रोपि समायाता निजगेहं । एकलमेव मिलिष्यामो मधुराकृतिकोमलदेहं ॥ २ ॥ चलनीयं मिलनीयं हरिणा रमणी-

याकृतिना सुचिरं। श्रवणीयं वचनामृतनिचयं करणीयं हृदयं शिशिरं॥ ४॥ सामग्रीमथ निजसंगे विविधामपि नयत नवीनां। कुरुत मनोरथचयमपि सफलं द्रुतमभिसर सखीनां॥ ५॥ विरहदहनजनितं परितापं शमयत मृदुलकरेण। परिरंभणमपि तनुत चिरं सुखमनुभवतातिभरेण॥ ६॥ वसतु सदा हृदयेशवियुतयुवतिवचनं। भावभरं गोवर्द्धनधरणे वितरतु कृतरचनं॥ ७॥ हरिदासेन सदा हरिवल्लभचरणरेणुवित्तेन। जल्पितमिदं न्यधीयत हृदये विरहविकलचित्तेन॥ ८॥ ४६॥

श्रीरागेण गीयते॥ सखि गावो गोकुलमायाता हरिरुपयाति वने। नृत्यति गायति वेणुं रणयति जनयति सुखमनुकूलजने॥ १॥ वनमाला मधुपैरपि झंकृतमतिसादरमाकर्ण्य भृशं। उद्गायति बोधयति निजागतिमपि निजदिवसवियोगकृशं॥ २॥ चंचलनयनयुगं चालयति विशेषरसाभिनयेन। जनयति परमसुखं कटितटगतभावरसातिशयेन॥३॥ विविधविलासगतिं तनुते कमलं भ्रामयति करेण। मुहुरनुपश्यति वनमालामपि हृष्यति भावभरेण॥४॥

चलति कदाचिदमंदमंदगतिवारण इव धरणीदेशे । स्वयमपि विस्मयरसमनुभवति विचित्रितनिजवेशे ॥ ५ ॥ सखि सूचयति सरागदृशा रजनीरमणीकरणीयं । चपलदृशं न शरैरपि विध्यति युवतिमनोहरणीयं॥६॥कुटिलालककुलसंकुललपनं पश्यत विपिनायातं । चलत चतुरहृदया हरिसंमुखमपि हृदये भातं ॥ ७ ॥ श्रीवल्लभपदकमलरेणुसेवनमानसगतिना । हरिदासेन निरूपितमखिलं जयति सरसमतिना॥८॥ इति श्रीहरिशयाणामष्टपद्यः संपूर्णाः ।

अथ पदानि लिख्यन्ते । विभासरागे पदं । मृदुलकपोलतले तव चिन्हं किमिदं वद मदनाधिकसुंदर । प्रकटमंजनं नयने भाले कुंकुममपि गोगोपपुंदर ॥ १ ॥ वसनं शिथिलमथो शिथिलागतिरतिजृंभानयनं सजलं । सक्षतमधरं सनखं हृदयं स्खलितं वचनं रतिविकलं ॥ २ ॥ सहसं वदनं प्रकटितरदनं मधुराधररसनिःश्वसनं । व्यथयति मामखिलं तव रूपं याहि विधेहि तवैव विलसनं ॥३॥

विभासे पदं । वद सखि सिध्यति किं माने । प्रतिबंधं कुरुषे निजरमणे । स्वयमपि वससि शोकसं-

१ युगे इति पाठः ।

ताने ॥ १ ॥ मैवं कुरु मयि पदपतिते निजमनसि विचारय रूपनिधाने। समये किमिति करोषि विलंबं दयिते रतिरसदाने ॥ २ ॥ महती मम सखि भवति पिपासा मधुराधरनिरुपमरसपाने। राधे नाधेया मयि दोषा दोषसमूहनिरासनिदाने ॥ ३ ॥ २ ॥

त्रिभासे पदं। अलसवलितं रजनिजागरारुणतरं कमलललितं जयति नाथ नयनं। अर्द्धमु-मीलितं प्रेयसीकीलितं सूचयति भामिनीभावचयनं ॥ १ ॥ जितमीनखंजनं लसदलितांजनं निजहृदयरंजनं विहितदयनं। युवतिजनरुचिकरं चित्तहृतितत्परं प्रकटरेखं विरहभरविलयनं ॥ २ ॥ सहजचपलं परमलावण्यसहजलं भोगिनीभाग्यफलमधरशयनं। दशदिक्षु संगतं रसिकजनसंमतं संततं सखि विहितरतिमृगयनं ॥ ३ ॥ ३ ॥'

विभासे पदं। जागृहि जागृहि सुंदरबाल। सुशृतपयो पिब दधिनवनीतं कुरु वदने निजगोकुलपाल ॥ १ ॥ विरचय रुचिरगोपशृंगारं मृगमदतिलकसुशोभितभाल। वादय सुत निजमधुरमुरलिकामानंदद परिहितवनमाल ॥ २ ॥ विपिने याहि

गोपसहितो गोकुलमपि चारय चरणरसाल । अथवा विलस तात भवने जयजय कंसादिमहासुरकाल ।३।

विभासे पदं । लालयति दोलिकामंचशयनं। तिलकगोरोचनं भालमुक्ताफलं कुटिलकुंतलमुखं चकितनयनं ॥ १ ॥ चरणसंचालनं मोदभरगायनं प्रतिबिंबदर्शने मृदुलहासं । बाललीलापरं पदसुमकरधरं भाषणे फुल्लनासाविकासं ॥ २ ॥ अंगुष्ठचोषकं गूढरसपोषकं स्वल्पसंतोषकं कृष्णचन्द्रं । गोपिकाजनमनोमोदसंपादनं तदभिलषिताकृतौ विगततन्द्रं ॥३॥

विभासे पदं । बालक बालक बालक कथय मधुवचनं । श्रुतियुगलं परितपति कृपाकर श्रावय कृतरचनं ॥ १ ॥ स्खलितपदं प्रकटीकृतसुरदं रदनच्छदविरचितताल ॥ २ ॥ फुल्लनासिकं हासविकासं संकरयुगतलवितरिततालं । चरितचरणकमलं मतिविमलं सुखयतु मम हृदयं सुरसालं ॥ ३ ॥ ६ ॥

विभासे पदं चोताल । मदुदितमिदमानयसि मनसि नहि मानिनि सहसि वृथा परितापं। त्यजसि किमिति समुपागतमधुना मधुराधरमिंदिरादुरापं ॥ १ ॥ अनुनयमपि बहुयुवतीनायक इह किं कुरुषे

विविधालापं । रसिकशिरोमणिसहचरि निगदितमिति दूरीकुरु त्वदभिशापं ॥ २ ॥ ॥ ७ ॥

भैरवरागे पदं । किं कुरुषे मयि मानं भामिनि । सकृदपराधे राधे नैवंकृतिरुचिता मदयुतगजगामिनि ॥ २ ॥ सपदि विहाय हृदयहितगर्वं कुर्वे चरणकमलनमनं । कुरु वश्यं निजरसदानेन निवारय परमंदिरगमनं ॥ २ ॥ शिरसि निधेहि करं करुणे कुरु मामतिशयरसभावं । विरहवह्निविज्वलितं मानिनि निर्वापय च हृदयदावं ॥ ३ ॥ १ ॥

भैरवे पदं । करणीयं न दोषगणनं वृंदाविपिनकदंबतले चिंतय सखि विहितवेणुरणनं ॥ १ ॥ मामामुच्चाटय निजरमणं यद्यपि विहितबहुलदोषं । सहजकृपालो पालय पतितं पदयो रहितविरहपोषं ॥ २ ॥ किं कर्तुं कामवशे सुंदरि शक्तोऽहं न विरहसहने । विचरिष्यामि विकारभरेण विसंगितया विपिने गहने ॥ ३ ॥ २ ॥

भैरवे पदं । जीवय जीवय विरहिजनं । अतिपरितापविशेषविकलता संततसेवितविजनवनं॥ १ ॥ पल्लवतल्पगतेपि कदाचिदहह सखि भवति भूमिपतनं । रक्षति लक्षणसहिते रहसि तवैव नामजपनं

॥ २ ॥ क्वचिदपि भवति वियोगभरेण सखीषु वृथा लपनं । तिष्ठति मौनमुद्रया मीलितनयनयुगलनमनं ॥३॥ सहजदयावति भवती दयया भवति तापशमनं । राधे नैव दोषगणनं कुरु झटिति वितनुचलनं॥४॥३॥

भैरवे पदं । हरिरिह विलसितयमुनाकूले । रणयति मुरलीमधरसंगतामतिशयशोभनियमूले ॥ १ ॥ आकारयति धेनुसमुदायं गतवंतं बहुदूरे ॥ क्रिडति गोपतनयसहितोसिततरयमुनाजलपूरे ॥२॥ कामपि रमयति निभृतनिकुंजे पल्लवकुसुमसमूहे । अतिनिबिडे रविदर्शनरहिते परजनगमनदुरूहे ।३।४।

रामकरीरागे पदं । जयसि नंदभवनानंदबाललीलामंदरचितचंचलतनो कथय ललितं । मम मनो बहुविनोदाशया खिन्नमपि सपदि शिशिरय विरहवह्निकलितं ॥ १ ॥ वचनरचनारचितपीयूषकर्पणैरहह वारय हरे मदनदलितं । वल्लभाधीशपदकमलयुगपतितमिह निजबलेनैव कुरु भजनफलितं ॥२॥१॥

रामकरीरागे पदं । गोकुलेशास्यवर देहि दास्यं । मम विविधविकलतामवलोक्य लौकिके नाथ कुरुपे कुपुरुषेऽतिहास्यं । न भवति भयं यथा कुरु तथा

मस्तके निजचरणकरकमलयुगललास्यं ॥१॥ वदति हरिदास इति वदनदहनपदमंतरा जगति किमितरदुपास्यं ॥ २ ॥ १ ॥

रामकरीरागे पदं। जयति भट्टलक्ष्मणतनुजकृष्णवदनानल श्रीमदिल्लमगारुगर्भरत्ने । दैववृतजनसमुद्धृतिकरणकृतनिजाविर्भावनविहितबहुविविधयत्ने ॥ १ ॥ महालक्ष्मीपतौ गोपीनाथश्रीविठ्ठलाभिधसुभगतनुजजाते॥ प्रथितमायावादवतिवदनध्वंसविहितनिजदासजनपक्षपाते ॥ २ ॥ पुष्टिपथकथनरचितानेकसुग्रंथमथितभागवतपीयूषसारे । रासयुवतिभावसततभावितहृदयसदयमानसजनितमोदभारे ॥ ३ ॥ निजचरणकमलधरणीपरिक्रमणकृतिमातृपावितविततर्तीर्थजाले । कृष्णसेवनविहितशरणगतशिक्षणक्षपितसंदेहदासैकपाले ॥४॥ निजवचनपीयूषवर्षपोषितसततसाहित्यपुरुषजनभृत्ययुक्ते । विविधवाचोयुक्तनिगमवचनोदितैरपि च दुरितदुष्टजनदुरुक्ते ॥ ५ ॥ ईदृशे सति शिरसि सर्वदा वल्लभे सकलकर्त्तरि च भर्त्तरि दयालौ । कैव परिदेवना भवति हरिदासके सकलसाधनरहितजनकृपालौ ॥६॥

श्रीकृष्णाय नमः

# अथ श्रीमदाचार्यचरणानां सकलावतारसाम्यरूपं निरूप्यते ।

( श्रीहरिरायचरणाः )

यथा श्रीमद्वराहेण दंष्ट्रया चोद्धृता मही ।
हिरण्याक्षश्च निहतो गोद्विजामरदुःखदः ॥ १ ॥
तथा श्रीवागधीशेन नष्टा भक्तिः समुद्धृता ।
निहत्य भक्तद्वेष्टारं दुष्टसंघं भयप्रदम् ॥ २ ॥
यतोऽयं वल्लभाधीशो विख्यातः पृथिवीतले ।
'रोषदृक्पातसंप्लुष्टभक्तद्विड्'इति नामतः ॥ ३ ॥

इतिवराहसाम्यम् ॥ १ ॥

सनन्दनादयो देवा ब्रह्मचर्यप्रकाशकाः ।
बभूवुर्ब्रह्मणः पुत्राः शुद्धमार्गप्रवर्त्तकाः ॥ ४ ॥
तथायमपि वागीशो ह्यन्यस्त्रीसंगमत्यजत् ।
अत एवास्य नामास्ति "सुप्रतिः" "रहःप्रियः" ॥५॥
पतिव्रतापतिश्चेति तेन तद्वद्बभूव सः ।
ब्रह्मचर्यत्वसंसिद्धिस्तेन जाता महाप्रभोः ॥ ६ ॥

इति सनकादिसाम्यम् ॥ २ ॥

यथा श्रीनारदः पंचरात्रं व्यरचयत्प्रभुः ।
यस्मिन्सेवाप्रकारश्च स्फुटं श्रीमानकल्पयत् ॥ ७ ॥
भक्त्याचारोपदेष्टाभूत्कर्ममार्गप्रवर्त्तकः ॥ ८ ॥
येनाचारश्च यज्ञश्च पुष्टिमार्गः प्रवर्त्तितः ।
ततोयं यज्ञकर्त्ता च यज्ञभोक्तेति विश्रुतः ॥ ९ ॥
इति नारदसाम्यम् ॥ ३ ॥
यथा नारायणो देवो गन्धमादनवासभाक् ।
कामसेनां विजित्याशु तिष्ठत्येकान्त ईश्वरः ॥ १० ॥
तथायमपि दुष्टौघं विजित्य करुणानिधिः ।
कृष्णप्रिये व्रजेवासीद्यतोऽयं श्रीव्रजप्रियः ॥ ११ ॥
इति नारायणसाम्यम् ॥ ४ ॥
यथा श्रीकपिलः सांख्यमुक्त्वा ज्ञानमुपाहरत् ।
जीवानां दुष्टमनसां देवहूतीप्रियावहः ॥ १२ ॥
तथाणुभाष्यव्याख्यानादयमप्यखिलेश्वरः ।
विनाश्याज्ञानपटलं चरतां निजवर्त्मनि ॥ १३ ॥
बभौ सर्वत्र विजयी श्रीइलम्माप्रियावहः ।
अत एवास्य नामोक्तं 'सूत्रभाष्यप्रवर्त्तकः' ॥ १४ ॥
इति कपिलसाम्यम् ॥ ५ ॥
आन्वीक्षिकीं यथा दत्तः प्रह्लादादिभ्य उक्तवान् ।
नानावाक्यप्रचारेण दृढीकृत्य सतां मतम् ॥ १५ ॥

तथायमपि वागीशः समाश्रित्य सतां मतम् ।
भक्त्याचारोपदेशार्थं नानावाक्यनिरूपकः ॥ १६ ॥
तदर्थमेव भगवान् कथयामास वै बहून् ।
स्तवान् कृष्णाश्रयाद्यांश्च प्रभुः श्रीकृष्णहार्दवित् ।१७।

इति दत्तसाम्यम् ॥ ६ ॥

यथा यज्ञावतारश्च यामादिद्वादशात्मजैः ।
सार्द्धं गुणगणाब्धिश्चारक्षत्स्वायंभुवान्तरम् ॥ १८ ॥
तथा श्रीवल्लभाधीशः कुमाराभ्यां च नप्तृभिः ।
दूरीकृत्यासुरान् सर्वानपात्सारस्वतान्तरम् ॥ १९ ॥

इति यज्ञावतारसाम्यम् ॥ ७ ॥

यथा श्रीऋषभो देवः पुत्राणां ज्ञानदोऽभवत् ।
अज्ञातान्तर्द्धिरमलः पुंसां मोहाब्धिमज्जताम् ॥२०॥
तथायं चाज्ञातलीलो नाम्ना ख्यातश्च भूतले ।
स्ववंशे स्थापिताशेषस्वमाहात्म्यश्च सोऽभवत् ॥२१॥

इति ऋषभदेवसाम्यम् ॥ ८ ॥

यथा श्रीपृथुराजा च गोरूपोर्वीं दुदोह वै ।
सर्वजीवार्थमनघो महाराजोपसेवितः ॥ २२ ॥
तथा महेन्दिरास्वामी सामवेदसमुद्भवाः ।
ऋग्धेनूः संदुदोहायं 'भक्तेच्छापूरका'ह्वयः ॥२३॥

पुष्टिमार्गप्रचारार्थं शुद्धाद्वैतमताश्रये ।
लीलामृतरसौघार्द्रीकृताखिलशरीरभृत् ॥ २४ ॥

इति पृथुसाम्यम् ॥ ९ ॥

भक्तं यथैकं मत्स्यस्तु सत्यवन्तमपात्प्रभुः ।
जलात्प्रलयकालीनात् मात्स्यं संश्रावयज्जनान्॥२५॥
तथा श्रीवल्लभेशस्तु संसारभयवारिधेः ।
भक्तानपात् बहून् श्रीशः श्रावयित्वा सुबोधिनीम्॥
सुरासुराणामुदधिं मथ्नताममृतं यदा ।

इति मत्स्यसाम्यम् ॥ १० ॥

भूतोऽप्राप्तामृतानां च क्लिश्यतां तेन कर्मणा ॥२७॥
तदा श्रीकमठः साक्षाद्दध्रे मंदरपर्वतम् ।
पृष्ठे च हाटकमयं लक्षयोजनविस्तृते ॥ २८ ॥
तथैव दैवजीवानामासुराणां च वाक्पतिः ।
क्लिश्यतां भवसिन्धौ च मोक्षपीयूषहेतवे ॥ २९ ॥
गृहीत्वा ज्ञानसर्पस्य मुखपुच्छौ महाप्रभुः ।
तदा प्रष्ठसं निगमपर्वतं चोद्दधार ह ॥ ३० ॥
दुष्टैरयापितपाखण्डविषं भूरि पराक्रमम् ।
पत्रावलंबनशिवरूपेणाथ पपौ मुदा ॥ ३१ ॥

इतिकमठसाम्यम् ॥ ११ ॥

यथा धन्वंतरिः पुंसां स्मृतिमात्रार्त्तिनाशनः ।
तथा सतामयमपि 'स्मृतिमात्रार्त्तिनाशकः' ॥२२॥
इति धन्वन्तरिसाम्यम् ॥ १२ ॥

यथा श्रीमोहिनी दैत्यान् मोहयित्वाथ चाक्षुषैः ।
दैत्योत्संगगतं पात्रं सुधायाः प्राप्य निर्मलम् ॥२३॥
सुरेभ्यश्चामृतं भूयो ददौ दैत्येभ्य एव न ।
पुरुषोपि महाविष्णुर्धृत्वा स्त्रीरूपमद्भुतम् ॥ २४ ॥
एवं श्रीवल्लभाधीशो नष्टं वेदमनुत्तमम् ।
उद्धृत्य जगतां नाथो निजभक्तार्थमादरात् ॥२५॥
विरुद्धाश्रयतो दुष्टान्मोहयित्वा महाप्रभुः ।
तेन संमथ्य निगमगिरिणास्मिन्भवे शुभम् ॥२६॥
पुष्टिरूपामृतमयं निष्कास्य गुणवारिधिः ।
देवेभ्योऽदादासुरेभ्यो न ददौ भक्तवत्सलः ॥२७॥
पूर्वमासीत्स्वयमपि वल्लभोथ द्वितीयके ।
अवतारे संबभूव वाक्पतिः पुरुषाकृतिः ॥ २८ ॥

अथ सकलजगदार्त्तितटिनीपतिनिवारको भगवान्नरसिंहो यथा स्तंभादाविर्भूय हिरण्यकशिपुं कराग्रेण विदार्य निजभक्तं प्रह्लादं ररक्षैवं भगवान् श्रीवल्लभाधीशोपि चंपकारण्ये वीतिहोत्रात्मकरीभूयाखिलदुःखदातारं जीवाज्ञानरूपमहादैत्यं सदा-

क्यप्रचारनखैर्भित्वा प्रह्लादरूपवैष्णववृन्दमरक्षदित्यत एव उग्रप्रताप इति नामनिर्देश इति ॥ ३९ ॥

इति नृसिंहसाम्यम् ॥ १४ ॥

अथ च यथाखिलगीर्वाणकदम्बसमीडितगरिष्ठगुणगणपटलो भगवान् वामनः कश्यपसुत आदौ भिक्षुरूपं गृहीत्वा बलेः सर्वस्वमाच्छिद्य ववृधे पुनश्च तेन संपूजितस्तमनुगृह्यान्तर्दधे, तथैव भगवान् इलापतिः श्रीलक्ष्मणराजकुमारः शुद्धं भिक्षुकवद्रूपं समाश्रित्य तत्र च महदभिमानिनं पण्डितसमूहं विजित्याचार्यपदवीं च प्राप्य विद्यानगराधीश्वरमनुगृह्य तेषां निरुत्तराणां जयेन पुष्टिमार्गमार्तण्डोदयं कृत्वा मातुलाभिमानं चाहृत्य कनकाभिषेकाप्तयशःप्रसारेण वृद्धिं प्राप्य पृथिवीं पर्यक्रामदिति ४०

इति वामनसाम्यम् ॥ १५ ॥

यथा द्विजद्रोहकरान् जघान क्षत्रियान्बहून् ।
परश्वधेन तीक्ष्णेन रेणुकानन्दवर्धनः ॥ ४१ ॥
तथा श्रौतद्रोहकरान् यः स्मार्तान्नासुरान् प्रभुः ।
पत्रावलंबनखण्डेन जित्वा चक्रे निरुत्तरान् ॥४२॥

इति परशुरामसाम्यम् ॥ १६ ॥

कलिकालमलग्रस्तान् जीवानालोक्य दुर्मतीन् ।

मन्दभाग्यान् तथा दुष्टान् श्रीमान् सत्यवतीसुतः ४३।
श्रीमद्भगवतालापात् उद्दधार दयापरः ।
पाखण्डतिमिराक्रान्तजीवजालदिवाकरात् ॥ ४४ ॥
तथा महाप्रभुरपि दुष्टाध्वार्णवमज्जितान् ।
जीवानालोक्य भगवान्पुष्टिमार्गोपदेशतः ॥ ४५ ॥
अङ्गीकृत्य मंत्रादानात् चक्रे भयविवर्जितान् ।
पुत्रपौत्रप्रपौत्राद्यैः करोति च करिष्यति ॥ ४६ ॥

इति वेदव्याससाम्यम् ॥ १७ ॥

अयोध्याधिपती रामः सेतुं कृत्वा यथार्णवे ।
स्वसेनां स्थापयामास जिग्ये सुरचमूर्द्दतम् ॥ ४७ ॥
तथैलम्माकुमारोपि श्रीमद्भागवतार्णवे ।
सेतुं सुबोधिनीरूपं विधायातारयज्जनान् ॥ ४८ ॥
जिगायासुरवर्गं च वैष्णवद्वेषकारकम् ।
'श्रीभागवतपीयूषसमुद्रमथनक्षमः' ॥ ४९ ॥

इति दाशरथिरामसाम्यम् ॥ १८ ॥

अथ यथा सकलजगदभीष्टसंपादकः श्रीभगवान् श्रीनन्दराजकुमारो निजसहोदरेण श्रीरेवतीरमणेन पूर्णरेवतीरमणसदृशेन सारस्वतकल्पेऽवतीर्य दुष्टकदम्बरूपं भूभारमुज्जहार, स्वहस्तमारणेन च तन्मोक्षं चकारैवमसावपि भगवान् पुरुषोत्तमो नारायणादि-

दीक्षितानां सोमयागफलस्वरूपः श्रीलक्ष्मणांगजः कलाववतीर्य पुत्राभ्यां श्रीगोपीनाथविट्ठलाभ्यां सहाष्टाक्षरदानेन निगददानेन च केनचिदपराध-विशेषेण विनष्टमतीन् अत एव गोलोकच्युतान् जीवानुद्धधारेति ॥ ५० ॥

इति श्रीकृष्णसाम्यम् ॥ १९ ॥

यथा हलधरः श्रीमान् निजानन्दाब्धिमज्जितः ।
कृष्णसौख्यप्रयत्नात्मा रोहिण्यानंदवर्धनः ॥ ५१ ॥

किञ्च—

निजभाण्डकारकाणामभीष्टदाताथ रेवतीश्रेष्ठः ।
श्रीपुष्टिमार्गसंस्थैः सद्भिः सेव्यो व्रजेशवन्नित्यम् ५२
तथायमपि वागीशो नामभिस्तत्सदृक्षकैः ।
विख्यातस्त्रिषु लोकेषु कृष्णानुग्रहभाजनः ॥ ५३ ॥
आनंदः परमानंदः पूर्णानन्दो जगद्गुरुः ।
स्वानन्दतुन्दिलश्चेति इल्लम्मानंदवर्धनः ॥ ५४ ॥
अदेयदानदक्षश्च श्रीअक्काप्राणवल्लभः ।
भक्तेच्छापूरकः कृष्णभक्तिकृन्निखिलेष्टदः ॥ ५५ ॥

इति हलधरसाम्यम् ॥ २० ॥

अथ च यथा भगवान् बुद्धो देवकार्यार्थं सर्वान्विनिन्द्य विश्वविपरीत्यं कर्माचरन् सर्वान् दैत्यान्

मोहयामास, तथायमपि भगवान् श्रीकृष्णास्यः प्राकृतानुकृतिव्याजमोहितासुरमानुषः, इति नामानुकरणसम्पन्नो वैष्णवानां वैपरीत्यं कर्म प्रकाशयन् निगूढहृदयत्वं च दर्शयन् संन्यासधारणमंगीकृत्याऽसुरमोहलीलामाचचारेति ॥ ५६ ॥

इति बुद्धसाम्यम् ॥ २१ ॥

हयग्रीवो यथा नष्टवेदाविर्भावकारकः ।
तथायमपि वेदोक्तं नष्टमार्गमदर्शयत् ॥ ५७ ॥

इति हयग्रीवसाम्यम् ॥ २२ ॥

हंसो यथा च महतां पुत्राणां ब्रह्मणः पुरा ।
ज्ञानदः संबभूवेह ब्रह्मानुग्रहकारकः ॥ ५८ ॥
तथा महाप्रभुरपि महतां ज्ञानदोऽभवत् ।
हनुमत्सदृशानां च रामसंतोषकारकः ॥ ५९ ॥

इति हंससाम्यम् ॥ २३ ॥

कल्किर्यथा कलेरंते जीवाज्ञानं विनाशयन् ।
भद्रप्रदश्च जीवानां संभविष्यति सर्वतः ॥ ६० ॥
एवं वैश्वानरोपीशः कलिनष्टं च दुर्लभम् ।
पुष्टिमार्गं पुनः श्रीमान् द्योतयिष्यति निर्मलम् ॥६१॥
पुष्टिमार्गं तु भगवान् सर्वकाले तु रक्षति ।

पुत्रपौत्रादिरूपैश्च दुर्लभाङ्घ्रिसरोरुहः ॥ ६२ ॥
भूतेषु च भविष्येषु वर्त्तमानेष्वपीश्वरः ।
चतुर्युगेषु कृतभुक् मार्गं रक्षति रक्षति ॥ ६३ ॥

इति कल्किसाम्यम् ॥ २४ ॥

एवं सर्वावताराणां गुणकर्मपराक्रमान् ।
दधाति नितरां संतः श्रीमान् लक्ष्मणनन्दनः ॥६४॥
तस्मात्सर्वैर्वैष्णवैश्च त्रैलोक्ये विबुधेश्वरः ।
प्रकीर्तितः कृष्णरूपः श्रीपूर्णपुरुषोत्तमः ॥ ६५ ॥
अतः स एव संसेव्यो वैष्णवैः पापभीरुभिः ।
ध्यातव्यः स्मरणीयश्च तैलंगतिलकः प्रभुः ॥ ६६ ॥

आर्या—

अस्य श्रवणात्पाठात्प्रभवेत्पुंसामभेदत्वम् ।
श्रीमन्नन्दकुमारवाक्पत्योश्चापि नूनमूर्व्यां वै ॥ ६७ ॥
एतन्मदुदितं बालस्वभावात्केशवत्सलः ।
श्रीवल्लभाचार्यनामा प्रभुः क्षाम्यतु सर्वथा ॥ ६८ ॥
स्वकीयं श्रीवल्लभीयं मामानन्दनिधिर्हरिः ।
निःसाधनं च वृणुते स कृष्णः शरणं मम ॥ ६९ ॥

इति श्रीहरिदासविरचितं श्रीमहाप्रभुसर्वाव-
तारसाम्यनिरूपणं सम्पूर्णम् ॥

॥ श्रीकृष्णाय नमः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# अथ साधिकरणः प्रकाशानुसारी

# ॥ मतान्तरपाठसमेतो ब्रह्मसूत्रपाठः ॥

## ॥ प्रथमोऽध्यायः ॥

### ॥ प्रथमश्चरणः ॥

॥ प्रथममेकसूत्रञ्जिज्ञासाधिकरणम् ॥ १ ॥

१ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

॥ द्वितीयमेकसूत्रञ्जन्माद्यधिकरणम् ॥ २ ॥

२ जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ १ ॥

॥ तृतीयमेकसूत्रं समन्वयाधिकरणम् ॥ ३ ॥

३ तत्तु समन्वयात् ॥ १ ॥

॥ चतुर्थं सप्तसूत्रमीक्षत्यधिकरणम् ॥ ४ ॥

४ ईक्षतेर्नाशब्दम् ॥ १ ॥

५ गौणश्चेन्नात्मशब्दात् ॥ २ ॥

६ तन्निष्ठस्य मोक्षोपदेशात् ॥ ३ ॥

---

२. सर्वेष्वेकदेशिन इह योगविभागमङ्गीकृत्य 'शास्त्रयोनित्वात्' इति सूत्रभाग पृथक्सूत्रत्वेन पठन्ति ।

७ हेयत्वावचनाच्च ॥ ४ ॥

८ स्वाप्ययात् ॥ ५ ॥

९ गतिसामान्यात् ॥ ६ ॥

१० श्रुतत्वाच्च ॥ ७ ॥

॥ पञ्चममष्टसूत्रमानन्दमयाधिकरणम् ॥ ५ ॥

११ आनन्दमयोऽभ्यासात् ॥ १ ॥

१२ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ २ ॥

१३ तद्धेतुव्यपदेशाच्च ॥ ३ ॥

१४ मान्त्रवर्णिकमेव च गम्यते ॥ ४ ॥

१५ नेतरोऽनुपपत्तेः ॥ ५ ॥

१६ भेदव्यपदेशाच्च ॥ ६ ॥

१७ कामाच्च नानुमानापेक्षा ॥ ७ ॥

१८ अस्मिन्नस्य च तद्योगं शास्ति ॥ ८ ॥

॥ षष्ठं द्विसूत्रमन्तस्तद्धर्माधिकरणम् ॥ ६ ॥

१९ अन्तस्तद्धर्मोपदेशात् ॥ १ ॥

२० भेदव्यपदेशाच्चान्यः ॥ २ ॥

---

७. हेयत्वावचनाच्चेतिसूत्रस्याग्रे 'प्रतिज्ञाविरोधात्' इति पृथक् सूत्रं निम्बार्करामानुजशैवाः पठन्ति ।

१४. श्रीमद्गोस्वामिगोकुलनाथात्मजश्रीमथुरानाथाः सर्वेऽप्येकदेशिनश्च 'गीयते' इतीह पठन्ति ।

॥ सप्तममेकसूत्रं तल्लिङ्गाधिकरणम् ॥ ७ ॥

२१ आकाशस्तल्लिङ्गात् ॥ १ ॥

॥ अष्टममेकसूत्रमतिदेशाधिकरणम् ॥ ८ ॥

२२ अत एव प्राणः ॥ १ ॥

॥ नवमं चतुस्सूत्रं ज्योतिश्चरणाधिकरणम् ॥ ९ ॥

२३ ज्योतिश्चरणाभिधानात् ॥ १ ॥

२४ छन्दोभिधानान्नेति चेन्न तथाचेतोर्पणनिगदात्तथा हि दर्शनात् ॥ २ ॥

२५ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ ३ ॥

२६ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ ४ ॥

॥ दशमं चतुस्सूत्रमनुगमाधिकरणम् ॥ १० ॥

२७ प्राणस्तथानुगमात् ॥ १ ॥

२८ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २ ॥

२९ शास्त्रदृष्ट्यातूपदेशो वामदेववत् ॥ ३ ॥

३० जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ४ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु समन्वयाख्ये प्रथमाध्याये विचारशास्त्रसमर्थनपूर्वकशाब्दसन्देहनिवारकः प्रथमश्चरणः ॥ १ ॥

---

२४. 'चेतोर्पणनिगमात्' इति निम्बार्करामानुजपाठः ।

३०. अत्र भास्करपाठोऽस्पष्टः ।

## ॥ द्वितीयश्चरणः ॥

प्रथमं चतुःसूत्रं सर्वत्र प्रसिद्धोपदेशाधिकरणम् ॥ १ ॥

१ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

२ विवक्षितगुणोपपत्तेश्च ॥ २ ॥

३ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

४ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

द्वितीयं चतुःसूत्रं शब्दविशेषाधिकरणम् ॥ २ ॥

५ शब्दविशेषात् ॥ १ ॥

६ स्मृतेश्च ॥ २ ॥

७ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ३ ॥

८ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ४ ॥

तृतीयं द्विसूत्रमत्ताचराचरेत्यधिकरणम् ॥ ३ ॥

९ अत्ता चराचरग्रहणात् ॥ १ ॥

१० प्रकरणाच्च ॥ २ ॥

चतुर्थं द्विसूत्रं गुहाम्प्रविष्टावित्यधिकरणम् ॥ ४ ॥

११ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १ ॥

१२ विशेषणाच्च ॥ २ ॥

---

४. चकाररहितः शैवः पाठः ।

७. 'व्यपदेशान्नेति' इति भास्करपाठः ।

पञ्चमं पञ्चसूत्रमन्तर उपपत्तेरित्यधिकरणम् ॥ ५ ॥

१३ अन्तर उपपत्तेः ॥ १ ॥

१४ स्थानादिव्यपदेशाच्च ॥ २ ॥

१५ सुखविशिष्टाभिधानादेव च ॥ ३ ॥

१६ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ ४ ॥

१७ अनवस्थितेरसम्भवाच्च नेतरः ॥ ५ ॥

षष्ठं त्रिसूत्रमन्तर्याम्यधिकरणम् ॥ ६ ॥

१८ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १ ॥

१९ न च स्मार्तमतद्धर्माभिलापात् ॥ २ ॥

२० शारीरश्चोभयेपि हि भेदेनैनमधीयते ॥ ३ ॥

सप्तमं त्रिसूत्रमदृश्यत्वाधिकरणम् ॥ ७ ॥

२१ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १ ॥

२२ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २ ॥

२३ रूपोपन्यासाच्च ॥ ३ ॥

---

१५. एतस्य सूत्रस्याग्रे 'अत एव च तद्ब्रह्म' 'अत एव च स ब्रह्म' 'अत एव स ब्रह्म' इति यथाक्रमं निम्बार्करामानुजशैवानां पाठः ।

१६. चकाररहित इह भास्करपाठः ।

१८. 'अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्' इति भास्कर-निम्बार्करामानुजशैवानां पाठः ।

१९. रामानुजशैवौ 'शारीरश्च' इतीह पठित्वाग्रिमे सूत्रे 'उभयेपि' इत्यादि पठतः ।

२२. चकाररहितः पाठः शङ्करनिम्बार्कयोः ।

चतुर्थमेकसूत्रमीक्षतिकर्माधिकरणम् ॥ ४ ॥

१३ ईक्षतिकर्मव्यपदेशात् सः ॥ १ ॥

पञ्चमपष्टसूत्रं दहराधिकरणम् ॥ ५ ॥

१४ दहर उत्तरेभ्यः ॥ १ ॥

१५ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ २ ॥

१६ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ ३ ॥

१७ प्रसिद्धेश्च ॥ ४ ॥

१८ इतरपरामर्शात् स इति चेन्न सम्भवात् ॥ ५ ॥

१९ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ ६ ॥

२० अन्यार्थश्च परामर्शः ॥ ७ ॥

२१ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ ८ ॥

षष्ठं द्विसूत्रमनुकृत्यधिकरणम् ॥ ६ ॥

२२ अनुकृतेस्तस्य च ॥ १ ॥

२३ अपि स्मर्यते ॥ २ ॥

सप्तमं द्विसूत्रं शब्दादेव प्रमित इत्यधिकरणम् ॥ ७ ॥

२४ शब्दादेव प्रमितः ॥ १ ॥

---

१३. 'ईक्षतिकर्म व्यपदेशात् सः' इति रामानुजपाठः ।

२०. 'परामर्शः' इति मैध्वः पाठः ।

२३. 'अपि च स्मर्यते' इति पाठः क गो संज्ञकपुस्तकयोः शाङ्करभास्करशैवमैध्वस्य ।

२४. 'शब्दादेव तु प्रमितः' इति पाठः प्रदीपे ।

२५ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २ ॥

अष्टममष्टसूत्रं तदुपर्यपीत्यधिकरणम् ॥ ८ ॥

२६ तदुपर्यपि बादरायणः सम्भवात् ॥ १ ॥

२७ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २ ॥

२८ शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम्॥३॥

२९ अत एव च नित्यत्वम् ॥ ४ ॥

३० समाननामरूपत्वादावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ५ ॥

३१ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ६ ॥

३२ ज्योतिषि भावाच्च ॥ ७ ॥

३३ भावं तु बादरायणोऽस्ति हि ॥ ८ ॥

नवमं पञ्चसूत्रं शुगस्येत्यधिकरणम् ॥ ९ ॥

३४ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि १

३५ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेनालिङ्गात् ॥ २ ॥

---

२९. 'अत एव नित्यत्वम्' इति निम्बार्कपाठ. ।

३० 'समाननामरूपत्वाच्च' इति सर्वेषामप्येकदेशिनां पाठः । 'समानरूपनामत्वाच्च' इति क्वचित्पुस्तके भास्करपाठश्च ।

३२. 'ज्योतिषा भावाच्च' इति पाठः प्रदीपकारसम्मतः प्रतिभाति ।

३३. 'भावात्तु' इति क्वचिद्भास्करपाठः ।

३४. 'शूद्रस्य' इति भास्करपाठः ।

३५. 'क्षत्रियत्वगतेश्च' इति शाङ्करभास्करभैक्षवनैम्बार्करामानुजशैवानां पाठः । तत्रापि रामानुजशैवौ 'उत्तरत्र' इति सूत्रविभागं पृथक् पठतः ।

३६ संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३ ॥

३७ तदभावनिर्धारणे च प्रवृत्तेः ॥ ४ ॥

३८ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ५ ॥

दशममेकसूत्रं कम्पनाधिकरणम् ॥ १० ॥

३९ कम्पनात् ॥ १ ॥

एकादशमेकसूत्रं ज्योतिर्दर्शनाधिकरणम् ॥ ११ ॥

४० ज्योतिर्दर्शनात् ॥ १ ॥

द्वादशमेकसूत्रमर्थान्तरव्यपदेशाधिकरणम् ॥ १२ ॥

४१ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १ ॥

त्रयोदशं द्विसूत्रं सुषुप्त्युत्क्रान्त्योरित्यधिकरणम् ॥ १३ ॥

४२ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १ ॥

४३ पत्यादिशब्देभ्यः ॥ २ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु समन्वयाख्ये प्रथमाध्याये उपास्यस्वरूपविचारो नामाधारस्वरूपसन्देहनिवारकस्तृतीयश्चरणः ॥ ३ ॥

---

३६. 'संस्कारपरामर्शात्' इति भैक्षवः पाठः ।

३८. 'स्मृतेश्च' इतिसूत्रं योगविभागेन पृथक् पठन्ति निम्बार्करामानुजशैवाः ।

३९. 'प्राणः कम्पनात्' इति भैक्षवः पाठः ।

४३. 'पत्यादिशब्देभ्यश्च' इति भैक्षवः पाठः ।

॥ चतुर्थश्चरणः ॥

प्रथमं सप्तसूत्रमानुमानिकाधिकरणम् ॥ १ ॥

१ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

२ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

३ तदधीनत्वादर्थवत् ॥ ३ ॥

४ ज्ञेयत्वावचनाच्च ॥ ४ ॥

५ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

६ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

७ महद्वच्च ॥ ७ ॥

द्वितीयं त्रिसूत्रं चमसवदित्यधिकरणम् ॥ २ ॥

८ चमसवदविशेषात् ॥ १ ॥

९ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ २ ॥

१० कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ३ ॥

तृतीयं त्रिसूत्रं न सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

११ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥१॥

---

५. 'प्रकरणात्' इति योगविभागेन पृथग्भाष्यपाठ ।

६ 'त्रयाणामपि चैवम्' इति भेक्षव पाठ. ।

७ 'महत्त्वाच्च' इति क्वचिद्भास्करादर्शपाठः ।

८. 'अविशेषात्' इति क्वचिद्भास्करादर्शपाठः ।

९ ज्योतिरुपक्रमा तु' इति पाठो गोसङ्करपुस्तके विवरणे प्रदीपे शाङ्करभास्करनैम्बार्करामानुजशैवेषु च ।

१२ प्राणादयो वाक्यशेषात् ॥ २ ॥

१३ ज्योतिषैकेषामसत्यन्ने ॥ ३ ॥

चतुर्थमेकसूत्रं यथाव्यपदिष्टाधिकरणम् ॥ ४ ॥

१४ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १ ॥

पञ्चममेकसूत्रं समाकर्षाधिकरणम् ॥ ५ ॥

१५ समाकर्षात् ॥ १ ॥

षष्ठं त्रिसूत्रं जगद्वाचित्वाधिकरणम् ॥ ६ ॥

१६ जगद्वाचित्वात् ॥ १ ॥

१७ जीवमुख्यप्राणलिङ्गादिति चेत् तद्व्याख्यातम् ॥२॥

१८ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ ३ ॥

सप्तमं चतुःसूत्रं वाक्यान्वयाधिकरणम् ॥ ७ ॥

१९ वाक्यान्वयात् ॥ १ ॥

२० प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २ ॥

२१ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ ३ ॥

२२ अवस्थितेरिति काशकृत्स्नः ॥ ४ ॥

अष्टमं पञ्चसूत्रं प्रकृतिश्चेत्यधिकरणम् ॥ ८ ॥

२३ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १ ॥

---

१४ 'करणत्वेन च' इति भास्करपाठः ।

१७. 'जीवमुख्यप्राणलिङ्गान्नेति चेत्' इति शाङ्करभास्करनिम्बार्करामानुजश्रीकण्ठभेदपाठः ।

१८. षष्ठदशसूत्र एवान्तर्भाव्यास्यैतत्सूत्रं भास्करः ।

२४ अभिध्योपदेशाच्च ॥ २ ॥

२५ साक्षाच्चोभयाम्नानात् ॥ ३ ॥

२६ आत्मकृतेः परिणामात् ॥ ४ ॥

२७ योनिश्च हि गीयते ॥ ५ ॥

२८ एतेन सर्वे व्याख्याता व्याख्याताः ॥ ६ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु समन्वयाख्ये प्रथमाध्याये मतान्तरश्रौतताभ्रमजनकप्रकीर्णवाक्यार्थविचारो नाम चतुर्थश्चरणः ॥ ४ ॥

## द्वितीयोध्यायः।

### प्रथमश्चरणः।

प्रथममेकसूत्रं स्मृत्यधिकरणम् ॥ १ ॥

१ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

द्वितीयमेकसूत्रमितरेषामित्यधिकरणम् ॥ २ ॥

२ इतरेषां चानुपलब्धेः ॥ १ ॥

तृतीयमेकसूत्रं योगप्रत्युक्त्यधिकरणम् ॥ ३ ॥

३ एतेन योगः प्रत्युक्तः ॥ १ ॥

---

२६. 'परिणामात्' इति योगविभागेन पृथक् पठतो रामानुजशैवौ।

२७. 'योनिश्च गीयते' इतिपाठः प्रदीपे प्रतिभाति।

२८. इदं सर्वव्याख्यानाधिकरणं श्रीमत्प्रकाशकारमतेन नवमं विवरणद्वारास्त्विहाधिकरणसङ्ख्यायामाजोषमासते श्रीभावप्रकाशिकाकाराणां प्रदीपकाराणां निर्णयपमभट्टानां च मतेन स्पष्टमेव।

चतुर्थं त्रिसूत्रं न विलक्षणत्वाधिकरणम् ॥ ४ ॥

४ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ १ ॥

५ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ २ ॥

६ दृश्यते तु ॥ ३ ॥

पञ्चमं पञ्चसूत्रमसत्प्रतिषेधाधिकरणम् ॥ ५ ॥

७ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ १ ॥

८ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ २ ॥

९ न तु दृष्टान्तभावात् ॥ ३ ॥

१० स्वपक्षदोषाच्च ॥ ४ ॥

११ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ५ ॥

षष्ठमेकसूत्रं शिष्टापरिग्रहाधिकरणम् ॥ ६ ॥

१२ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १ ॥

---

४. एतस्य सूत्रस्याग्रे 'दृश्यते तु' इति नवमं सूत्रं माध्वमते ।

५. 'विशेषानुगताभ्याम्' इति भास्करपाठः ।

९. 'न तु दृष्टान्तभावात्' इत्येवम्पाठः श्रुतगोपुस्तकपुस्तकेषु भावप्रकाशिकायां मरीचिकायां प्रकाशे च । प्रदीपविवरणकारमते तु 'दृष्टान्ताभावात्' इतिपाठः प्रतिभाति ।

१० 'स्वपक्षे दोषाच्च' इति नैम्बार्कपाठः ।

११ 'अन्यथानुमेयम्' इत्यादियोगविभागमाद्रत्य पृथक्सूत्रं रामानुजशैवौ पठतः । 'अनिर्मोक्षप्रसङ्गः' इतिमाध्वनैम्बार्करामानुजशैवमेतेषु पाठः ।

१२. 'एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः' इति माध्वपाठः ।

मप्तममेकसूत्रं भोक्त्रापत्तेरित्यधिकरणम्॥ ७ ॥

१३ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १ ॥

अष्टमं त्रिसूत्रं तदनन्यत्वाधिकरणम् ॥ ८ ॥

१४ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १ ॥

१५ भावे चोपलब्धेः ॥ २ ॥

१६ सत्त्वाच्चावरस्य ॥ ३ ॥

नवमं चतुःसूत्रमसद्व्यपदेशाधिकरणम् ॥ ९ ॥

१७ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ४

१८ युक्तेः शब्दान्तराच्च ॥ २ ॥

१९ पटवच्च ॥ ३ ॥

२० यथा च प्राणादिः ॥ ४ ॥

दशमं त्रिसूत्रमितरव्यपदेशाधिकरणम् ॥ १० ॥

२१ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ १ ॥

२२ अधिकं तु भेदनिर्देशात् ॥ २ ॥

---

१५. 'भावाचोपलब्धेः' इत्यपि शाङ्करपाठः ।

१६. 'सत्त्वाच्चावरस्य' इति रामानुजीयपाठः ।

१८. प्रदीपकारमतेनेह 'शब्दान्तराच्च' इतिपाठः प्रतिभाति ।
१८ सू. नेदं रामानुजमतेऽसद्व्यपदेशसूत्रेऽन्तर्भवति ।

२०. 'यथा च प्राणादि' इति शाङ्करभास्करमतेऽत्र पाठो यथा 'प्राणादि.' इति च माध्वपाठः ।

२२. 'अधिकं तु भेदनिर्देशात्' [illegible]पाठः ।

२३ अश्मादिवच्च तदनुपपत्तिः ॥ ३ ॥

एकादशं षट्सूत्रमुपसंहारदर्शनाधिकरणम् ॥ ११ ॥

२४ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ १ ॥

२५ देवादिवदपि लोके ॥ २ ॥

२६ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ ३ ॥

२७ श्रुतेस्तु शब्दमूलत्वात् ॥ ४ ॥

२८ आत्मनि चैवं विचित्राश्च हि ॥ ५ ॥

२९ स्वपक्षदोषाच्च ॥ ६ ॥

द्वादशमष्टसूत्रं सर्वोपेतेत्यधिकरणम् ॥ १२ ॥

३० सर्वोपेता च तद्दर्शनात् ॥ १ ॥

३१ विकरणत्वान्नेति चेत्तदुक्तम् ॥ २ ॥

३२ न प्रयोजनवत्त्वात् ॥ ३ ॥

३३ लोकवत्तु लीलाकैवल्यम् ॥ ४ ॥

३४ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥५॥

३५ न कर्माविभागादिति चेन्नानादित्वात् ॥ ६ ॥

---

२३. 'अश्मादिवच्च तदुपपत्तिः' इतिपाठो मुद्रितमरीचिकायाम् ।

२४. पुस्तकपुस्तके 'चेत्क्षीरवद्धि' इतिपाठः ।

२६. 'निरवयवशब्दकोपो वा' इति भैक्षवपाठः ।

२९. 'स्वपक्षे दोषाच्च' इतिनैम्बार्कपाठ. ।

३०. 'सर्वोपेता सा दर्शनात्' इति नैम्बार्कपाठः ।

३५. 'न कर्मविभागात्' इति पाठो गोसंशकपुस्तके प्रदीपे च । 'अकर्माद्विभागादिति चेन्नानादित्वात्' इति तु भास्करपाठः ।

३६ उपपद्यते चाप्युपलभ्यते च ॥ ७ ॥

३७ सर्वधर्मोपपत्तेश्च ॥ ८ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेष्वविरोधाख्ये द्वितीयाध्याये प्रथमः स्मृतिचरणः ॥

॥ द्वितीयश्चरणः ॥

प्रथमं षट्सूत्रं रचनानुपपत्तेरित्यधिकरणम् ॥ १ ॥

१ रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

२ प्रवृत्तेश्च ॥ २ ॥

---

३६. इदं सूत्रं निम्बार्करामानुजशैवैः पूर्वस्मिन् सूत्रेऽन्तर्भावितम्।

३७. पादेऽस्मिन् प्रदीपकारमतेनाधिकरणानि दश तानि च यथा।

१. प्रथमं द्विसूत्रं स्मृत्यधिकरणम्।

२. द्वितीयमेकसूत्रं योगप्रत्युक्त्यधिकरणम्।

३. तृतीयं त्रिसूत्रं विलक्षणत्वाधिकरणम्।

४. चतुर्थं पञ्चसूत्रमसदितिचेदित्यधिकरणम्।

५. पञ्चममेकसूत्रमेतेनेत्यधिकरणम्।

६. षष्ठमेकसूत्रं भोक्त्रापत्तेरित्यधिकरणम्।

७. सप्तमं त्रिसूत्रं तदनन्यत्वाधिकरणम्।

८. अष्टमं त्रिसूत्रमितरव्यपदेशाधिकरणम्।

९. नवमं षट्सूत्रमुपसंहारदर्शनाधिकरणम्।

१०. दशममष्टसूत्रं सर्वोपेतेत्यधिकरणम्।

श्रीविठ्ठलेश्वरास्तु प्रथमाधिकरणं द्विसूत्रमेवादाविष्कारामनिर्भरामप्रष्टमध्येनाङ्गीकृत्य समाप्तौ पादेऽस्मिन् द्वादशाधिकरणानि श्रीमत्प्रकाशकारमतेन स्वीकुर्वन्ति ॥

२. इदं सूत्रं रामानुजशैवाभ्यां प्रथमसूत्रेऽन्तर्भावितम्।

द्वितीयं चतुःसूत्रं पुरुषाश्मवदित्यधिकरणम् ॥ २ ॥

३ पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

४ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

५ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

६ अभ्युपगमेप्यर्थाभावात् ॥ ६ ॥

७ पुरुषाश्मवदिति चेत् तथापि ॥ १ ॥

८ अङ्गित्वानुपपत्तेश्च ॥ २ ॥

९ अन्यथानुमितौ च ज्ञशक्तियोगात् ॥ ३ ॥

१० विप्रतिषेधाच्चासमञ्जसम् ॥ ४ ॥

तृतीयं सप्तसूत्रं महद्दीर्घवद्वेत्यधिकरणम् ॥ ३ ॥

११ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १ ॥

१२ उभयथापि न कर्मातस्तदभावः ॥ २ ॥

१३ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ ३ ॥

१४ नित्यमेव च भावात् ॥ ४ ॥

---

६. इदं सूत्रं रामानुजशैवाभ्यां 'अन्यथानुमिति'सूत्रस्याग्रे पठ्यते ।

७ 'पुरुषाश्मवच्चेत्तथापि'इति भैक्षव पाठः ।

८. 'अङ्गित्वानुपपत्तेः'इतिमाध्वः पाठ. ।

९. 'अन्यथानुमितौ ज्ञशक्तिवियोगात्'इति भास्करपाठः ।

१२. सर्वत्र 'उभयथा'इत्यस्य स्थाने 'उभयथा'इतिरामानुजपाठः ।

१४. 'नित्यमेव भावात्'इति भास्करपाठः ।

१५ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ ५ ॥

१६ उभयथापि च दोषात् ॥ ६ ॥

१७ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ ७ ॥

चतुर्थं दशसूत्रं समुदाय उभयहेतुकेपीत्यधिकरणम् ॥ ४ ॥

१८ समुदाय उभयहेतुकेपि तदप्राप्तिः ॥ १ ॥

१९ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् २

२० उत्तरोत्पादे च पूर्वनिरोधात् ॥ ३ ॥

२१ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ ४ ॥

२२ प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ५

२३ उभयथा च दोषात् ॥ ६ ॥

---

१५. 'दर्शनात्' इति केचनैकदेशिनटिप्पन्यन्ति ।

१६. 'उभयथा दोषात्' इति शाङ्करभाष्यनैमार्कभामानुजभेदपाठः । 'उभय । च दोषात्' इति भास्करपाठस्त्वशुद्धः प्रतिभाति ।

१८. निर्मयवामहा दर् 'अथ चतुर्थाधिकरणं समुदाय उभयहेतुकेपि तदप्राप्तिरित्यादिभिरेकादशभिः सूत्रैः' इत्याहुस्त प्रमाणं न जानीमः । लिपिकारप्रमादः स्यात् सूत्रकल्पना वा मतान्तरवत् स्यात् ।

१९. 'इतरेतरप्रत्ययत्वादुत्पत्तिमितिचेन्न सङ्घातभावानिमित्तत्वात्' इति भास्करपाठः ।

२२. 'प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरसम्भवः' इति भास्करपाठः ।

२३. 'उभयथापि च दोषात्' इति मध्वपाठः । इदं सूत्रं नेर हस्ते भास्करेण ।

२४ आकाशे च विशेषात् ॥ ७ ॥
२५ अनुस्मृतेश्च ॥ ८ ॥
२६ नासतोऽदृष्टत्वात् ॥ ९ ॥
२७ उदासीनानामपि चैवं सिद्धिः ॥ १० ॥

पञ्चमं पञ्चसूत्रं नाभाव उपलब्धेरित्यधिकरणम् ॥ ५ ॥

२८ नाभाव उपलब्धेः ॥ १ ॥
२९ वैधर्म्याच्च न स्वप्नादिवत् ॥ २ ॥
३० न भावोऽनुपलब्धेः ॥ ३ ॥
३१ क्षणिकत्वाच्च ॥ ४ ॥
३२ सर्वथानुपपत्तेश्च ॥ ५ ॥

षष्ठं चतुःसूत्रं नैकस्मिन्नसम्भवादित्यधिकरणम् ॥ ६ ॥

३३ नैकस्मिन्नसम्भवात् ॥ १ ॥
३४ एवञ्चात्माकार्त्स्न्यम् ॥ २ ॥
३५ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३ ॥
३६ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ४ ॥

---

२६. 'दृष्टत्वात्' इतिच्छेदः केषाञ्चित् ।

३१. चकाररहितः पाठो निम्बार्कस्य । 'क्षणिकत्वाच्च' इतिसूत्रमेव न पठ्यते रामानुजश्रीकण्ठाभ्याम् । भास्करभाष्ये तु पठ्यत एव,

३२. इदमपि सूत्रं न पठ्यत एव भास्करभाष्ये ।

३६. 'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ।' इति माध्वः पाठः ।

सप्तमं पञ्चसूत्रं पत्युरसामञ्जस्यादित्यधिकरणम् ॥ ७ ॥

३७ पत्युरसामञ्जस्यात् ॥ १ ॥

३८ सम्बन्धानुपपत्तेश्च ॥ २ ॥

३९ अधिष्ठानानुपपत्तेश्च ॥ ३ ॥

४० करणवच्चेन्न भोगादिभ्यः ॥ ४ ॥

४१ अन्तवत्त्वमसर्वज्ञता वा ॥ ५ ॥

अष्टमं चतुःसूत्रमुत्पत्त्यसम्भवादित्यधिकरणम् ॥ ८ ॥

४२ उत्पत्त्यसम्भवात् ॥ १ ॥

४३ न च कर्तुः करणम् ॥ २ ॥

४४ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ३ ॥

४५ विप्रतिषेधाच्च ॥ ४ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेष्वविरोधाख्ये द्वितीया-ध्याये द्वितीयश्चरणः ॥ २ ॥

तृतीयश्चरणः ।

प्रथमं सप्तसूत्रं न वियदित्यधिकरणम् ॥ १ ॥

१ न वियदश्रुतेः ॥ १ ॥

२ अस्ति तु ॥ २ ॥

---

३८. 'इदं सूत्रं भास्कररामानुजशैवैर्न पठ्यते ।

४४. 'विज्ञानादिभावो'वा इति भास्करपाठस्तद्भाष्यप्रकाशकप्रमादजन्यः

४५. इदं सूत्रं पठ्यत एव भास्करेण ।

३ गाण्यसम्भवात् ॥ ३ ॥

४ शब्दाच्च ॥ ४ ॥

५ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

६ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

७ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

द्वितीयमेकसूत्रमेतेन मातरिश्वेत्यधिकरणम् ॥ २ ॥

८ एतेन मातरिश्वा व्याख्यातः ॥ १ ॥

तृतीयमेकसूत्रमसम्भवाधिकरणम् ॥ ३ ॥

९ असम्भवस्तु सतोनुपपत्तेः ॥ १ ॥

चतुर्थमेकसूत्रं तेजोत इत्यधिकरणम् ॥ ४ ॥

१० तेजोतस्तथा ह्याह ॥ १ ॥

पञ्चममेकसूत्रमाप इत्यधिकरणम् ॥ ५ ॥

११ आपः ॥ १ ॥

षष्ठमेकसूत्रं पृथिव्यधिकार इत्यधिकरणम् ॥ ६ ॥

१२ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १ ॥

---

४. इदं सूत्रं पूर्वस्मिन् सूत्रेन्तर्भावितं नैम्बार्करामानुजशैवैः ।

६. योगविभागमाहत्य 'शब्देभ्यः' इति पृथक्सूत्रं रामानुजशैवाभ्यां पठ्यते ।

११. एतस्य सूत्रस्याग्रे 'पृथिवी' इति पृथक्सूत्रं नैम्बार्करामानुजशैवैः पठ्यते ।

१२. 'पृथिव्यधिकाररूपशब्दान्तरादिभ्यः' इति माध्वः पाठः । 'अधिकाररूपशब्दान्तरेभ्यः' इति रामानुजशैवपाठः ।

सप्तममेकसूत्रं तदभिध्यानादेवेत्यधिकरणम् ॥ ७ ॥

१३ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १ ॥

अष्टममेकसूत्रं विपर्ययेणेत्यधिकरणम् ॥ ८ ॥

१४ विपर्ययेण तु क्रमोत उपपद्यते ॥ १ ॥

नवमं द्विसूत्रमन्तरा विज्ञानमनसी इत्यधिकरणम् ॥ ९ ॥

१५ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्ना-विशेषात् ॥ १ ॥

१६ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भा-वभावित्वात् ॥ २ ॥

दशममेकसूत्रं नात्माश्रुतेरित्यधिकरणम् ॥ १० ॥

१७ नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १ ॥

एकादशमेकसूत्रं ज्ञोत एवेत्यधिकरणम् ॥ ११ ॥

१८ ज्ञोत एव ॥ १ ॥

द्वादशं दशसूत्रमुत्क्रान्तिगत्यागतीनामित्यधिकरणम् ॥ १२ ॥

१९ उत्क्रान्तिगत्यागतीनाम् ॥ १ ॥

---

१३. 'तदभिध्यानात्तु' इति निम्बार्कपाठः ।

१४. 'उपपद्यते च' इति सर्वेषामप्येकदेशिनां पाठः । पारम्पर्येण क्रमोत उपपद्यते च' इति शैवः पाठः। भास्करभाष्येऽन्तर्भावितमेतत्सूत्रं पूर्वस्मिन् ।

१६. 'अभाक्तः' इतिच्छेदः शैवस्य ।

१८. एतस्य सूत्रस्थाने 'युक्तेश्च' इति सूत्रं माध्वमते ।

१९. प्रदीपकारास्तु चतुर्दशसूत्रमेवैतदधिकरणं पठन्ति येन तन्मते पादेऽस्मिन्नधिकरणानि पञ्चदशैव न तु षोडश । श्रीविरजाशास्त्रिचरणास्त्वाचार्यमतमिममर्थं-तमेव स्वीकुर्वन्ति । 'करणादुत्क्रान्तिगत्यागतीनाम्' इति सूत्रितो भास्कर-पाठस्त्वशुद्धः ।

२० स्वात्मना चोत्तरयोः ॥ १ ॥

२१ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ ३ ॥

२२ स्वशब्दोन्मानाभ्याञ्च ॥ ४ ॥

२३ अविरोधश्चन्दनवत् ॥ ५ ॥

२४ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥६॥

२५ गुणाद्वालोकवत् ॥ ७ ॥

२६ व्यतिरेको गन्धवत् ॥ ८ ॥

२७ तथा च दर्शयति ॥ ९ ॥

२८ पृथगुपदेशात् ॥ १० ॥

त्रयोदशं चतुःसूत्रं तद्गुणसारत्वादित्यधिकरणम् ॥ १३ ॥

२९ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ १ ॥

३० यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २ ॥

३१ पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॥ ३ ॥

३२ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोन्यतरनियमो वान्यथा ॥ ४ ॥

---

२५. 'गुणाद्वा आलोकवत्' इति छेदो भास्करनैम्बार्करामानुजशैवानामपि ।

२७ 'तथा हि दर्शयति' इति पठित्वैतत्सूत्रमन्तर्भावितं पूर्वस्मिन् सूत्रे नैम्बार्कशैवाभ्याम् । 'तथा च दर्शयति' इति पठितञ्च रामानुजेन ।

३१. 'सतो व्यक्तियोगात्' इति पाठः मुम्बकपुस्तके प्रमादजः ।

चतुर्दशमष्टसूत्रं कर्ता शास्त्रार्थवत्त्वादित्यधिकरणम् ॥ १४ ॥

३३ कर्ता शास्त्रार्थवत्त्वात् ॥ १ ॥

३४ विहारोपदेशात् ॥ २ ॥

३५ उपादानात् ॥ ३ ॥

३६ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ४ ॥

३७ उपलब्धिवदनियमः ॥ ५ ॥

३८ शक्तिविपर्ययात् ॥ ६ ॥

३९ समाध्यभावाच्च ॥ ७ ॥

४० यथा च तक्षोभयथा ॥ ८ ॥

पञ्चदशं द्विसूत्रं परात्तु तच्छ्रुतेरित्यधिकरणम् ॥ १५ ॥

४१ परात्तु तच्छ्रुतेः ॥ १ ॥

४२. कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥२॥

षोडशमेकादशसूत्रमंशो नानाव्यपदेशादित्यधिकरणम् ॥ १६ ॥

४३ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ १ ॥

---

३४. 'उपादानाद्विहारोपदेशाच्च' इत्येकसूत्रत्वेन पठित्वोपेक्षितमुपरसूत्रं रामानुजभाष्याम् ।

४१. 'परात्तच्छ्रुतेः' इति भास्करपाठः ।

४२. 'विहितप्रतिषेधावैयर्थ्यादिभ्य' इति भास्करपाठः ।

४३ 'दाशकितवादित्वमधीयत एके' इति पाठो गोसशकपुस्तके शिरत्ने च ।

४४ मन्त्रवर्णात् ॥ २ ॥

४५ अपि स्मर्यते ॥ ३ ॥

४६ प्रकाशादिवन्नैवं परः ॥ ४ ॥

४७ स्मरन्ति च ॥ ५ ॥

४८ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ६ ॥

४९ असन्ततेश्चाव्यतिकरः ॥ ७ ॥

५० आभास एव च ॥ ८ ॥

५१ अदृष्टानियमात् ॥ ९ ॥

५२ अभिसन्ध्यादिष्वपि चैवम् ॥ १० ॥

५३ प्रदेशादिचेन्नान्तर्भावात् ॥ ११ ॥

इति श्रीमत्कृष्णद्वैपायनविरचितब्रह्मसूत्रेष्वविरोधाख्ये द्वितीयाध्याये तृतीयो वियदादिपादः ॥

---

४४. 'मन्त्रवर्णाच्च' इतिकसंज्ञकपुस्तकपाठः शाङ्करश्च।

४५. 'अपि च स्मर्यते' इतिकसंज्ञकपुस्तकपाठः शाङ्करनैम्बार्कशैवभैक्षवश्च।

४६. 'प्रकाशादिवत्तु नैवं परः' इति नैम्बार्करामानुजशैवपाठः।

४९. 'असन्ततेश्चाव्यतिरेकः' इति शैवः पाठः।

५०. 'आभासा एव वा' इति भास्करपाठः 'आभासा एव च' इति नैम्बार्कशैवपाठः। 'आभासा एव च' इति विकल्पेन रामानुजपाठः।

५२. 'अभिसन्ध्यादिष्वप्येवम्' इति भैक्षवपाठः।

५३. 'प्रदेशभेदादिति चेन्नान्तर्भावात्' इति रामानुजपाठः।

## चतुर्थश्चरणः ॥

प्रथमं पञ्चसूत्रं तथा प्राण इत्यधिकरणम् ॥ १ ॥

१ तथा प्राणः ॥ १ ॥

२ गौण्यसम्भवात् ॥ २ ॥

३ तत्प्राक्श्रुतेश्च ॥ ३ ॥

४ तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

५ सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

द्वितीयमेकसूत्रं हस्तादय इत्यधिकरणम् ॥ २ ॥

६ हस्तादयस्तु स्थितेऽतो नैवम् ॥ १ ॥

तृतीयमेकसूत्रमणवश्चेत्यधिकरणम् ॥ ३ ॥

७ अणवश्च ॥ १ ॥

चतुर्थं द्विसूत्रं श्रेष्ठश्चेत्यधिकरणम् ॥ ४ ॥

८ श्रेष्ठश्च ॥ १ ॥

९ न वायुक्रिये पृथगुपदेशात् ॥ २ ॥

पञ्चमं चतुःसूत्रं चक्षुरादिवत्त्वित्यधिकरणम् ॥

१० चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १ ॥

---

१. 'तथा प्राणाः' इति पाठः कश्चिन्कपुस्तके सर्वेषामप्येकदेशिनाम् ।

२. 'एतस्य सूत्रस्याग्रे प्रतिज्ञानुपरोधाच्च' इति नव्यं सूत्रं माध्वमते ।

३. 'इदं सूत्रं रामानुजशैवाभ्यां पूर्वस्मिन् सूत्रेन्तर्भावितम् ।

१०. 'तत्सहशिष्ट्यादिभ्यः' इति भास्करपाठस्तद्वान्यमकारप्रमादजः ।

११ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ २ ॥

१२ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ३ ॥

१३ अणुश्च ॥ ४ ॥

षष्ठमेकसूत्रं ज्योतिराद्यधिष्ठानन्त्वित्यधिकरणम् ॥ ६ ॥

१४ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥

सप्तमं द्विसूत्रं प्राणवतेत्यधिकरणम् ॥ ७ ॥

१५ प्राणवता शब्दात् ॥ १ ॥

१६ तस्य च नित्यत्वात् ॥ २ ॥

अष्टमं त्रिसूत्रमिन्द्रियाणि तद्व्यपदेशादित्यधिकरणम् ॥ ८ ॥

१७ तदिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १ ॥

१८ भेदश्रुतेः ॥ २ ॥

१९ वैलक्षण्याच्च ॥ ३ ॥

नवममेकसूत्रं संज्ञामूर्तिक्लृप्तिस्त्वित्यधिकरणम् ॥

२० संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १ ॥

दशमं द्विसूत्रं मांसादिभौममित्यधिकरणम् ॥

२१ मांसादि भौमं यथाशब्दमितरयोश्च ॥ १ ॥

---

१४. 'प्राणवता च शब्दात्' इतिसूत्रमन्तर्भावितं रामानुजशैवाभ्यां पूर्वसूत्रे । 'तदामननात्' इत्यस्य स्थाने 'तदाम्नानात्' इति भास्करपाठः ।

१६. 'तस्य नित्यत्वात्' इति निम्बार्कपाठः ।

१७. 'त इन्द्रियाणि' इति सर्वेषामप्येकदेशिनां पाठः ।

१८. 'भेदश्रुतेर्वैलक्षण्याच्च' इत्येकमेव सूत्रं नैम्बार्करामानुजशैवमते ।

२२ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेष्वविरोधाख्ये
द्वितीयाध्याये चतुर्थः प्राणादिचरणः ।

## ॥ तृतीयोऽध्यायः ॥

### प्रथमश्चरणः ।

प्रथमं सप्तसूत्रं रंहत्यधिकरणम् ॥ १ ॥

१ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

२ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

३ प्राणगतेश्च ॥ ३ ॥

४ अग्न्यादिगतिश्रुतेरितिचेन्न भाक्तत्वात् ॥ ४ ॥

५ प्रथमे श्रवणादितिचेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

६ अतच्छ्रुतत्वादितिचेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

७ भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥

द्वितीयं चतुःसूत्रं कृतात्ययाधिकरणम् ॥ २ ॥

८ कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च॥१॥

---

४. 'चेन्नाकत्वात्' इति नैम्बार्कः पाठः ।

५. प्रथमे श्रवणात्' इति भैक्षवः पाठः ।

७. 'भाक्तं च' इति भास्करपाठः ।

८. चकाररहितो भास्करपाठः । 'यथेतमनेवं च' इति सूत्रांशं भाष्या नरमसूत्रत्वेन पठन्ति ।

९ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ २॥
१० आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३ ॥
११ सुकृतदुष्कृते एवेति तु बादरिः ॥ ४ ॥
तृतीयं पञ्चसूत्रमनिष्टादिकारिणामित्यधिकरणम् ॥ ३ ॥
१२ अनिष्टादिकारिणामपि च श्रुतम् ॥ १ ॥
१३ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् २
१४ स्मरन्ति च ॥ ३ ॥
१५ अपि सप्त ॥ ४ ॥
१६ तत्रापि च तद्व्यापारादविरोधः ॥ ५ ॥
चतुर्थं चतुःसूत्रं विद्याकर्मणोरित्यधिकरणम् ॥ ४ ॥
१७ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥
१८ न तृतीये तथोपलब्धेः ॥ २ ॥
१९ स्मर्यतेपि च लोके ॥ ३ ॥
२० दर्शनाच्च ॥ ४ ॥
पञ्चमं त्रिसूत्रं तृतीयशब्दावरोधाधिकरणम् ॥ ५ ॥
२१ तृतीयशब्दावरोधः संशोकजस्य ॥ १ ॥

---

९. 'तदुपलक्षणार्थेति' रामानुजनिम्बार्कमाध्वशैवाः।
११. इतिरहितो भास्करपाठः।
१५. 'अपि च' इति शाङ्करीयभेदपाठः।
१६. चकाररहितो रामानुजपाठः।
२१. 'तृतीय' इति पाठो मूलपुस्तके भाष्ये च। अस्मात्सूत्रादनन्तरं 'स्मरणाच्च' इति माध्वाः पठन्ति।

२२ साभाव्यापत्तिरुपपत्तेः ॥ २ ॥

२३ नातिचिरेण विशेषात् ॥ ३ ॥

॥ षष्ठं द्विसूत्रमन्याधिष्ठित इत्यधिकरणम् ॥ ६ ॥

२४ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ १ ॥

२५ अशुद्धमिति चेन्न शब्दात् ॥ २ ॥

॥ सप्तममेकसूत्रं रेतःसिगधिकरणम् ॥ ७ ॥

२६ रेतःसिग्योगोथ ॥ १ ॥

॥ अष्टममेकसूत्रं योनेः शरीरमित्यधिकरणम् ॥ ८ ॥

२७ योनेः शरीरम् ॥ १ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु तृतीये साधनाख्ये प्रकारबोधकनानिरूपकेध्यायेधिकारिजन्मनिर्धारो नाम प्रथमश्चरणः ॥

॥ द्वितीयश्चरणः ॥

॥ प्रथमं षट्सूत्रं सन्ध्याधिकरणम् ॥ १ ॥

१ सन्ध्ये सृष्टिराह हि ॥ १ ॥

२ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

३ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥

---

२२. 'तत्स्वाभाव्यापत्ति' इति रामानुजनिम्बार्कमाध्वशैवपाठः । 'स्वाभाव्यापत्ति.' इति भास्करपाठः ।

२४. 'अन्याधिष्ठितेषु' इति शाङ्करः पाठः ।

२६. 'रेत सिग्योगाच्च' इति भास्करपाठः ।

२७. इदमपि सूत्र भास्करभाष्ये वर्तत एव ।

४ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

५ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ५

६ देहयोगाद्वा सोपि ॥ ६ ॥

॥ द्वितीयमेकसूत्रं तदभावो नाडीष्वित्यधिकरणम् ॥ २ ॥

७ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ १ ॥

॥ तृतीयं त्रिसूत्रमतः प्रबोध इत्यधिकरणम् ॥ ३ ॥

८ अतः प्रबोधोऽस्मात् ॥ १ ॥

९ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ २ ॥

१० मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ ३ ॥

॥ चतुर्थं त्रिसूत्रमुभयलिङ्गाधिकरणम् ॥ ४ ॥

११ न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ १ ॥

१२ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ २ ॥

१३ अपि चैवमेके ॥ ३ ॥

---

४. पराभिध्यानदेहयोगसूत्रे पठित्वा पठत्येनेदं सूत्र पठतो रामानुजनिम्बार्कौ । 'आचक्षते च' इत्येव पाठो भास्करभाष्ये ।

५. 'पराभिध्यानम्' इति भास्करपाठः ।

७. 'आत्मनि हि' इति माध्वः पाठः ।

९. 'स एव च' इति माध्वभेदपाठः ।

१०. 'अर्धसम्पत्तिः' इत्येव पाठो भास्करभाष्ये ।

१२. 'भेदादितिचेन्न' इतिरामानुजनैम्बार्कीयपाठः । 'न भेदात्' इत्येव पाठो भास्करभाष्ये ।

॥ पञ्चमं पञ्चसूत्रमरूपवदेव हीत्यधिकरणम् ॥ ५ ॥

१४ अरूपवदेव हि तत्प्रधानत्वात् ॥ १ ॥

१५ प्रकाशवच्चावैयर्थ्यम् ॥ २ ॥

१६ आह च तन्मात्रम् ॥ ३ ॥

१७ दर्शयति चाथोपि स्मर्यते ॥ ४ ॥

१८ अत एव चोपमा सूर्यकादिवत् ॥ ५ ॥

॥ षष्ठं चतुःसूत्रमम्बुवदग्रहणादित्यधिकरणम् ॥ ६ ॥

१९ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १ ॥

२० वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्॥२॥

२१ दर्शनाच्च ॥ ३ ॥

२२ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः।४।

॥ सप्तमं द्विसूत्रं तदव्यक्तमाह हीत्यधिकरणम् ॥ ७ ॥

२३ तदव्यक्तमाह हि ॥ १ ॥

---

१४. अरूपसूत्र भास्करभाष्ये वर्तत एव । 'अस्थूलम्' इत्यादि भाष्यमेव' तस्य सूत्रत्वेन पाठो भ्रान्त्यैव ।

१५. 'चावैयर्थ्यात्' इति भास्करपाठः । 'चावैयर्थ्यात्' इति माध्वः पाठः ।

१८. चकाररहितो भास्करपाठः ।

१९. तुकाररहितो भास्करपाठः ।

२०. 'एवम्' इत्येव भास्करपाठः ।

२१. सूत्रमिदं पूर्वस्मिन्नन्तर्भावयतो रामानुजशैवौ ।

२४ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २ ॥

॥ अष्टमं त्रिसूत्रं प्रकाशादिवच्चेत्यधिकरणम् ॥ ८ ॥

२५ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्॥१॥

२६ अतोऽनन्तेन तथा हि लिङ्गम् ॥ २ ॥

२७ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३ ॥

॥ नवमं त्रिसूत्रं प्रकाशाश्रयवद्वेत्यधिकरणम् ॥ ९ ॥

२८ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ १ ॥

२९ पूर्ववद्वा ॥ २ ॥

३० प्रतिषेधाच्च ॥ ३ ॥

॥ दशमं सप्तसूत्रं परमतः सेतून्मानेत्यधिकरणम् ॥

३१ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ १ ॥

३२ सामान्यात्तु ॥ २ ॥

३३ बुद्ध्यर्थः पादवत् ॥ ३ ॥

३४ स्थानविशेषात् प्रकाशादिवत् ॥ ४ ॥

---

२४. 'अपि च' इति शाङ्कर. पाठ ।

२५. 'प्रकाशश्च' इति माध्व: पाठ. । 'प्रकाशश्च' इत्यादिसूत्रांश पृथक्सूत्रत्वेन माध्वा. पठन्ति ।

२७. तुकाररहितो भास्करपाठ ।

३२. 'दर्शनात्' इति माध्व. पाठः ।

३४. इदमपि सूत्र भास्करभाष्ये वर्तत एव ।

३५ उपपत्तेश्च ॥ ५ ॥

३६ तथान्यप्रतिषेधात् ॥ ६ ॥

३७ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ७ ॥

॥ एकादशं चतुःसूत्रं फलमत उपपत्तेरित्यधिकरणम् ॥ ११ ॥

३८ फलमत उपपत्तेः ॥ १ ॥

३९ श्रुतत्वाच्च ॥ २ ॥

४० धर्मं जैमिनिरत एव ॥ ३ ॥

४१ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४ ॥

इति श्रीमत्कृष्णद्वैपायनविरचितब्रह्मसूत्रेषु तृतीये साधनाख्ये प्रकाशबोधकनानिरूपकेऽध्याये विषयावृत्तिर्नाम द्वितीयश्चरणः ॥

॥ तृतीयश्चरणः ॥

॥ प्रथमं पञ्चदशसूत्रं सर्ववेदान्तप्रत्ययत्वाधिकरणम् ॥ १ ॥

१ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

२ भेदान्नेति चेदेकस्यामपि ॥ २ ॥

३ स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

४ दर्शयति च ॥ ४ ॥

५ उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

६ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

७ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

८ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

९ व्याप्तेश्च समञ्जसम् ॥ ९ ॥

१० सर्वाभेदादन्यत्रेमे ॥ १० ॥

११ आनन्दादयः प्रधानस्य ॥ ११ ॥

१२ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

१३ इतरे त्वर्थसामान्यात् ॥ १३ ॥

१४ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

---

३. 'तथात्वेन हि' इति शाङ्करशैवभैक्षवपाठः 'तथात्वे हि' इति भास्कररामानुजनैम्बार्कपाठः। 'सववत्' इत्येव भास्करपाठः। 'सलिलवच्च तन्नियमः' इति माध्वानां पृथक्सूत्रम् ॥

६. 'अन्यथात्वं च' इति माध्वः पाठः

७. 'न च' इति भास्करपाठः।

९. 'प्राप्तेश्च' इति माध्वः पाठः।

१३. 'अर्थसाम्यात्' इति माध्वः पाठः।

१५ आत्मशब्दाच्च ॥ १५ ॥

॥ द्वितीयं द्विसूत्रमात्मगृहीत्यधिकरणम् ॥ २ ॥

१६ आत्मगृहीतिरितरवदुत्तरात् ॥ १ ॥

१७ अन्वयादिति चेत् स्यादवधारणात् ॥ २ ॥

॥ तृतीयं षट्सूत्रं कार्याख्यानादित्यधिकरणम् ॥ ३ ॥

१८ कार्याख्यानादपूर्वम् ॥ १ ॥

१९ समान एवं चाभेदात् ॥ २ ॥

२० सम्बन्धादेवमन्यत्रापि ॥ ३ ॥

२१ न वाविशेषात् ॥ ४ ॥

२२ दर्शयति च ॥ ५ ॥

२३ सम्भृतिद्युव्याप्त्यपि चातः ॥ ६ ॥

॥ चतुर्थमेकसूत्रं पुरुषविद्यायामित्यधिकरणम् ॥ ४ ॥

२४ पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ १ ॥

॥ पञ्चमं द्विसूत्रं वेधाद्यधिकरणम् ॥ ५ ॥

२५ वेधाद्यर्थभेदात् ॥ १ ॥

---

१६. 'आत्मगृहीतेः' इति भास्करपाठः ।

१८. 'अपूर्वम्' इत्येव भास्करपाठः ।

२१. 'विशेषात्' इति शाङ्करभास्कररामानुजनिम्बार्कमाध्वशैवपाठोऽपि सिद्धान्तसम्मत एव ।

२३. 'सम्भृतिद्युव्याप्त्यपि' इत्येव भास्करपाठः ।

२४. 'पुरुषविद्यायामपि' इति भास्कररामानुजनिम्बार्कमाध्वशैवपाठः ।

२६ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ॥ २ ॥

॥ षष्ठं द्विसूत्रं सम्परायाधिकरणम् ॥ ६ ॥

२७ सम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ १ ॥

२८ छन्दत उभयाविरोधात् ॥ २ ॥

॥ सप्तममेकसूत्रं गतेरर्थवत्त्वमित्यधिकरणम् ॥ ७ ॥

२९ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ १ ॥

॥ अष्टममेकसूत्रमुपपन्नाधिकरणम् ॥ ८ ॥

३० उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ १ ॥

॥ नवममेकसूत्रमनियमाधिकरणम् ॥ ९ ॥

३१ अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ १ ॥

॥ दशममेकसूत्रमाधिकारिकाधिकरणम् ॥ १ ॥

३२ यावदधिकारमवस्थितिराधिकारिणाम् ॥ १ ॥

---

२६. 'कुशाच्छन्दस्तुत्युपगानात्' इति शाङ्करनैम्बार्कशैवपाठः।

२७. 'साम्पराये' इति सर्वेप्येकदेशिनः।

२९ 'उभयथा' इति रामानुजपाठः।

३०. उपपन्नसूत्रमादौ पूर्वपक्षेण पठित्वा गतिसूत्रं पश्चात् सिद्धान्तेन पठति शैवः।

३१. यावदधिकारसूत्रमादौ पठित्वा पश्चादनियमसूत्रं पठतो रामानुजशैवौ।

३१. 'सर्वेषामविरोधः' इति भास्कररामानुजनैम्बार्कमाध्वशैवपाठः।

॥ एकादशं द्विसूत्रमक्षरधियामित्यधिकरणम् ॥ ११ ॥

३३ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ १ ॥

३४ इयदामननात् ॥ २ ॥

॥ द्वादशं त्रिसूत्रमन्तरा भूतग्रामवदित्यधिकरणम् ॥ १२ ॥

३५ अन्तरा भूतग्रामवत् स्वात्मनः ॥ १ ॥

३६ अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ २ ॥

३७ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३ ॥

॥ त्रयोदशं द्विसूत्रं सैव हीत्यधिकरणम् ॥ १३ ॥

३८ सैव हि सत्यादयः ॥ १ ॥

३९ कामादीतरत्र तत्र चायतनादिभ्यः ॥ २ ॥

॥ चतुर्दशं द्विसूत्रमादरादित्यधिकरणम् ॥ १४ ॥

४० आदरादलोपः ॥ १ ॥

४१ उपस्थितेतस्तद्वचनात् ॥ २ ॥

पञ्चदशमेकसूत्रं तन्निर्धारणाधिकरणम् ॥ १५ ॥

४२ तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्१

॥ षोडशमेकसूत्रं प्रदानवदित्यधिकरणम् ॥ १६ ॥

४३ प्रदानवदेव तदुक्तम् ॥ १ ॥

॥ सप्तदशं दशसूत्रं लिङ्गभूयस्त्वाधिकरणम् ॥ १७ ॥

४४ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ १ ॥

४५ पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥२॥

४६ अतिदेशाच्च ॥ ३ ॥

४७ विद्यैव तु निर्धारणात् ॥ ४ ॥

४८ दर्शनाच्च ॥ ५ ॥

४९ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ६ ॥

५० अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ७ ॥

५१ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः॥८॥

---

४१. 'उपस्थितेतस्तद्वचनात्' इत्येव भास्करपाठ. । 'उपस्थितेस्तद्वचनात्' इति च माध्वः ।

४२. 'तन्निर्धारणार्थनियमः' इति माध्वे पाठः ।

४३. 'एव हि' इति माध्वे पाठः ।

४८. सूत्रमिदमन्तर्भावयन्ति पूर्वस्मिन् सूत्रे रामानुजनैम्बार्कशैवाः ।

५०. 'प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च' इति प्राक्सूत्रं पठन्ति माध्वाः ।

५२ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥९॥

५३ एक आत्मनः शरीरे भावात् ॥ १० ॥

अष्टादशं त्रिसूत्रं व्यतिरेकाधिकरणम् ॥ १८ ॥

५४ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ १ ॥

५५ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ २ ॥

५६ मन्त्रादिवद्वाविरोधः ॥ ३ ॥

एकोनविंशमेकसूत्रं भूम्न इत्यधिकरणम् ॥ १९ ॥

५७ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ १ ॥

विंशमेकसूत्रं नानाशब्दादिभेदादित्यधिकरणम् ॥ २० ॥

५८ नाना शब्दादिभेदात् ॥ १ ॥

एकविंशमेकसूत्रं विकल्पाधिकरणम् ॥ २१ ॥

५९ विकल्पोविशिष्टफलत्वात् ॥ १ ॥

द्वाविंशमेकसूत्रं काम्यास्त्वित्यधिकरणम् ॥ २२ ॥

६० काम्यास्तु यथाकामं समुच्चीयेरन्न
वा पूर्वहेत्वभावात् ॥ १ ॥

त्रयोविंशं द्विसूत्रमङ्गेष्वित्यधिकरणम् ॥ २३ ॥

६१ अङ्गेषु यथाश्रयभावः ॥ १ ॥

---

५४. 'तद्भावभावित्वात्' इति भास्कररामानुजनिम्बार्कमाध्वशैवपाठः ।

५७. 'तथा च दर्शयति' इति माध्वः पाठः ।

॥ अधिकरणसङ्ग्रहकारमते द्विसूत्रमेतदधिकरणम् ।
तेन तन्मते चरणेऽस्मिन्नानुविंशतिरधिकरणानि ॥

६२ शिष्टेश्च ॥ २ ॥

चतुर्विंशं द्विसूत्रं समाहारादित्यधिकरणम् ॥ २४ ॥

६३ समाहारात् ॥ १ ॥

६४ गुणसाधारण्यश्रुतेश्च ॥ २ ॥

पञ्चविंशं द्विसूत्रं न वा तत्सहभावाधिकरणम् ॥ २५ ॥

६५ न वा तत्सहभावाश्रुतेः ॥ १ ॥

६६ दर्शनाच्च ॥ २ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषूपनिषदां विद्यानन-
कतारूपसाधनाख्ये तृतीयेऽध्याये गुणोपसंहारो
नाम तृतीयश्चरणः ॥

---

॥ चतुर्थश्चरणः ॥

प्रथमं चतुर्विंशतिसूत्रात्मकं पुरुषार्थोऽतः शब्दादित्यधिकरणम् ॥१॥

१ पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

२ शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

३ आचारदर्शनात् ॥ ३ ॥

४ तच्छ्रुतेः ॥ ४ ॥

५ समन्वारम्भणात् ॥ ५ ॥

---

६५. 'तत्सहभावश्रुतेः' इति माध्वः पाठः ।

२. 'यथा हि' इति भैरवः पाठः ।

४. 'तच्छ्रुतेश्च' इति भैरवः पाठः ।

६ तद्वतो विधानात् ॥ ६ ॥
७ नियमाच्च ॥ ७ ॥
८ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥
९ तुल्यं दर्शनम् ॥ ९ ॥
१० असार्वत्रिकी ॥ १० ॥
११ विभागः शतवत् ॥ ११ ॥
१२ अध्ययनमात्रवतः ॥ १२ ॥
१३ नाविशेषात् ॥ १३ ॥
१४ स्तुतयेऽनुमतिर्वा ॥ १४ ॥
१५ कामकारेण चैके ॥ १५ ॥
१६ उपमर्दञ्च ॥ १६ ॥
१७ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥
१८ परामर्शञ्जैमिनिरचोदना चापवदति हि ॥ १८ ॥
१९ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

२० विधिर्वा धारणवत् ॥ २० ॥

२१ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

२२ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २२ ॥

२३ तथा चैकवाक्यतोपबन्धात् ॥ २३ ॥

२४ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २४ ॥

॥ द्वितीयं पदसूत्रं सर्वापेक्षेत्यधिकरणम् ॥ २ ॥

२५ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ १ ॥

२६ शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २ ॥

२७ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३ ॥

२८ अबाधाच्च ॥ ४ ॥

२९ अपि स्मर्यते ॥ ५ ॥

३० शब्दश्चातोकामकारे ॥ ६ ॥

---

२१. अस्मात्सूत्रादनन्तरं 'मानशब्दाच्च' इति सूत्रं यत् सर्वत्येकदेशिनः पठन्ति तद् 'विधिर्वा धारणवत्' इति पूर्वेणैव सूत्रेण गतार्थत्वादुपेक्षितं श्रीमदाचार्यचरणैर्लेखकदोषादेव वा त्रुटितमिति श्रीप्रकाशकाराः ।

२२. भास्करभाष्यमत्र न दृश्यते ।

२३. 'एकवाक्योपबन्धात्' इति भास्कररामानुजभाष्यपाठः ।

२६. 'तेनापि' इति रामानुजभाष्यपाठः ।

२८. 'अपि च' इति शाङ्करभास्करनिम्बार्कशैवभाष्यपाठः ।

॥ तृतीयमष्टसूत्रं विहितत्वाच्चाश्रमकर्मेत्यधिकरणम् ॥ ३ ॥

३१ विहितत्वाच्चाश्रमकर्मापि ॥ १ ॥

३२ सहकारित्वेन च ॥ २ ॥

३३ सर्वथापि त एवोभयलिङ्गात् ॥ ३ ॥

३४ अनभिभवं च दर्शयति ॥ ४ ॥

३५ अन्तरा चापि तु तद्दृष्टेः ॥ ५ ॥

३६ अपि स्मर्यते ॥ ६ ॥

३७ विशेषानुग्रहश्च ॥ ७ ॥

३८ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ८ ॥

॥ चतुर्थमेकसूत्रं तद्भूतस्येत्यधिकरणम् ॥ ४ ॥

३९ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-
तद्रूपाभावेभ्यः ॥ १ ॥

॥ पञ्चमं द्विसूत्रं न चाधिकारिकमित्यधिकरणम् ॥ ५ ॥

४० न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥१॥

---

३३ 'सर्वथापि तु ते' इति माध्वः पाठः ।

३६ 'अपि च' इति शाङ्करनैम्बार्कशैवभैक्षवपाठः ।

३७. 'विशेषानुग्रहं च' इति माध्व॰ पाठः ।

३८. चकाररहितो नैम्बार्कपाठः ।

३९. 'जैमिनिरपि' इति भास्करपाठः । 'तद्भूतस्य तु तद्भावः' इति माध्वपाठः । तुरहितो भैक्षवश्च ।

४०. 'पतनानुमानात्' इत्येव भैक्षवपाठः ।

४१ उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ २ ॥

॥ षष्ठं चतुःसूत्रं बहिस्तूभयथेत्यधिकरणम् ॥ ६ ॥

४२ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ १ ॥

४३ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ २ ॥

४४ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ३ ॥

४५ श्रुतेश्च ॥ ४ ॥

॥ सप्तममेकसूत्रं सहकार्यन्तराधिकरणम् ॥ ७ ॥

४६ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ १ ॥

॥ अष्टमं चतुःसूत्रं गृहिणोपसंहाराधिकरणम् ॥ ८ ॥

४७ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ १ ॥

४८ मौनवदितरेषामप्युपदेशात् ॥ २ ॥

४९ अनाविष्कुर्वन्नन्वयात् ॥ ३ ॥

५० ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ४ ॥

---

४१. इदं सूत्रं भास्करेण न पठ्यते । 'अपीत्येके' इति रामानुजमाध्वशैवपाठः । 'भावशमनवत्' इति माध्वपाठः ।

४२. 'अपि' इति भास्करे नास्ति । 'उभयधा' इति रामानुजपाठः ।

४४. 'परिक्रियते' इति रामानुजमाध्वपाठः ।

४५. सूत्रमिदं न पठ्यते भास्कररामानुजनैम्बार्कमाध्वशैवैः ।

५०. 'ऐहिकमपि' इति शाङ्करपाठः । 'अप्रस्तुते' इति नैम्बार्कपाठः । 'ऐहिकमप्रयुक्तं प्रतिबन्धे तद्दर्शनात्' इति भास्करपाठः ।

॥ नवममेकसूत्रमेवं मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

५१ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्था-
वधृतेः ॥ १ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषूपनिषदां विद्याजनकतारूपसाधनाख्ये तृतीयाध्याये कर्मोपसंहारो नाम चतुर्थश्चरणः ॥

॥ चतुर्थाध्यायः ॥

॥ प्रथमश्चरणः ॥

॥ प्रथमं द्विसूत्रमावृत्त्यधिकरणम् ॥ १ ॥

१ आवृत्तिरसकृदुपदेशात् ॥ १ ॥

२ लिङ्गाच्च ॥ २ ॥

॥ द्वितीयं त्रिसूत्रमात्माधिकरणम् ॥ २ ॥

३ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ १ ॥

४ न प्रतीकेन हि सः ॥ २ ॥

५ ब्रह्मदृष्टिरुत्कर्षात् ॥ ३ ॥

॥ तृतीयं पञ्चसूत्रमादित्याद्यधिकरणम् ॥ ३ ॥

६ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ १ ॥

७ आसीनः सम्भवात् ॥ २ ॥

८ ध्यानाच्च ॥ ३ ॥

---

४. 'न प्रतीके न हि सः' इति शाङ्कररामानुजमाध्वशैवभैरवनः पाठः । 'न प्रतीकेन हि सः' इत्येव भास्करपाठः ।

९ अचलत्वं चापेक्ष्य ॥ ४ ॥

१० स्मरन्ति च ॥ ५ ॥

॥ चतुर्थमेकसूत्रं यत्रैकाग्रताधिकरणम् ॥ ४ ॥

११ यत्रैकाग्रता तत्राविशेषात् ॥ १ ॥

॥ पञ्चममेकसूत्रमाप्रायणाधिकरणम् ॥ ५ ॥

१२ आ प्रायणात्तत्रापि हि दृष्टम् ॥ १ ॥

॥ षष्ठं चतुःसूत्रं तदधिगमाधिकरणम् ॥ ६ ॥

१३ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १ ॥

१४ इतरस्याप्येवमसंश्लेषः पाते तु ॥ २ ॥

१५ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ३ ॥

१६ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४ ॥

॥ सप्तमं त्रिसूत्रमतोन्याधिकरणम् ॥ ७ ॥

१७ अतोऽन्यापि ह्येकेषामुभयोः ॥ १ ॥

१८ यदेव विद्ययेति हि ॥ २ ॥

---

११. 'तत्राविशेषात्' इत्येव भास्करपाठः ।

१६. 'तत्कार्यायैव' इत्येव भेदवः पाठः ।

१७. 'अतोन्यदपीति' इति माध्वः पाठः ।

१८. इदं सूत्रमुपेक्षितं भास्करेणानर्थकमिति ।

१९ भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ ३ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु फलाख्ये चतुर्थेऽध्याये जीवतः फलविचारो नाम प्रथमश्चरणः ॥

---

## ॥ द्वितीयश्चरणः ॥

### ॥ प्रथमं चतुःसूत्रं वाङ्मनोऽधिकरणम् ॥ १ ॥

१ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

२ अत एव सर्वाण्यनु ॥ २ ॥

३ तन्मनः प्राण उत्तरात् ॥ ३ ॥

४ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

### ॥ द्वितीयं द्विसूत्रं भूताधिकरणम् ॥ २ ॥

५ भूतेषु तच्छ्रुतेः ॥ १ ॥

६ नैकस्मिन् दर्शयतो हि ॥ २ ॥

### ॥ तृतीयं नवसूत्रं समानाधिकरणम् ॥ ३ ॥

७ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ १ ॥

८ तदापीतेः संसारव्यपदेशात् ॥ २ ॥

९ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ३ ॥

---

१९. अथरहितः शाङ्करभास्करभैक्षवपाठः ।

२ 'अत एव च' इति शाङ्करभास्करमाध्वशैवपाठः ।

४ 'सोध्यक्षेण' इति शैवः पाठः ।

५. 'भूतेषु तच्छ्रुतेः' इत्येव भास्करपाठः । 'भूतेभ्यतः' इति भैक्षवः पाठः ।

८. 'तदपीतेः' इति माध्वः पाठः ।

१० नोपमर्देनातः ॥ ४ ॥

११ अस्यैव चोपपत्तेरूष्मा ॥ ५ ॥

१२ प्रतिषेधादिति चेन्न शारीरात् ॥ ६ ॥

१३ स्पष्टो ह्येकेषाम् ॥ ७ ॥

१४ स्मर्यते च ॥ ८ ॥

१५ तानि परे तथा ह्याह ॥ ९ ॥

॥ चतुर्थमेकसूत्रमविभागाधिकरणम् ॥ ४ ॥

१६ अविभागो वचनात् ॥ १ ॥

॥ पञ्चममेकसूत्रं तदोकोऽधिकरणम् ॥ ५ ॥

१७ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया १

॥ षष्ठमेकसूत्रं रश्म्यधिकरणम् ॥ ६ ॥

१८ रश्म्यनुसारी ॥ १ ॥

॥ सप्तमं त्रिसूत्रं निश्यधिकरणम् ॥ ७ ॥

१९ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १ ॥

११. 'एष ऊष्मा' इति शाङ्करभास्करभेदपाठः ।

१३. इदमन्त्यमांशयन्ति पूर्वस्मिन् भास्कररामानुजनैम्बार्कीयाः ।

१९. 'सम्बन्धात्' इति पठित्वा यावद्देहमुभागं पृथक्सूत्रत्वेन पठन्ति माध्वा ।

१. मर्वाश्रयाद्यधिकरणमह्यप्रकाशमतेनेदं पञ्चमेत्राधिकरणम् । माध्वमताधिकाराद्यमेव चेदं सप्तममधिकरणम् ॥

२० अतश्चायनेपि दक्षिणे ॥ २ ॥

२१ योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ ३ ॥

इति श्रीमत्कृष्णद्वैपायनविरचितेषु तत्त्वसूत्रेषु फलाख्ये चतुर्थाध्याये म्रियमाणस्य फलविचारो नाम द्वितीयश्चरणः ॥

॥ तृतीयश्चरणः ॥

॥ प्रथमं चतुःसूत्रमर्चिराद्यधिकरणम् ॥ १ ॥

१ अर्चिरादिना तत्प्रथितेः ॥ १ ॥

२ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

३ तडितोधि वरुणः सम्बन्धात् ॥ ३ ॥

४ वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥

द्वितीयं त्रिसूत्रमातिवाहिकाधिकरणम् ॥ २ ॥

५ आतिवाहिकास्तल्लिङ्गात् ॥ १ ॥

---

२१. 'प्रति' इति शाङ्करभास्करभैक्षवपाठः ।

२. 'वायुशब्दात्' इति माध्वः पाठः ।

४. 'नव्यमपि सूत्रं केचन निवेशयन्ति' इत्यत्र 'वरुणाच्च' इत्यादि नितान्तस्फुटदेव श्रीवल्लभमूलमेव निदर्शनमिति ब्रह्मसूत्राणां बहुकर्तृकत्वं सिसाधयिषुर्यत् कश्चिदाह तदसदेव । श्रीवल्लभेनैवेदं सूत्रं नव्यं न्यवेशि । 'वरुणादधीन्द्रप्रजापती' इति शाङ्करभाष्ये, 'वरुणादुपरीन्द्रादिर्निवेशयितव्यः' इति रामानुजभाष्ये 'इन्द्रप्रजापती उत्तरस्थानाद्वरुणादधिनिवेशयितव्यौ' इति निम्बार्कभाष्ये, 'वरुणलोकात् प्रजापतिलोकमिति कौण्डिन्यश्रुतिः' इति माध्वभाष्ये, 'तदनन्तरमिन्द्रप्रजापतिलोकाः' इति शैवभाष्ये, 'तत इन्द्रस्ततः प्रजापतिः' इति भैक्षवभाष्ये चैतत्सूत्राक्षराणां स्फुटमोपलम्भात् स्वार्थत्वेनैव चास्य सूत्रस्य शङ्करादिभिः 'स्थानान्तराभावात् पाठसामर्थ्याच्च' इत्येवं भाष्यकरणाच्चेति दिक् ॥

५. 'आतिवाहिकः' इति माध्वः पाठः ।

६ उभयव्यामोहात् तत्सिद्धेः ॥ २ ॥

७ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ३ ॥

तृतीयमष्टसूत्रं कार्याधिकरणम् ॥ ३ ॥

८ कार्यं बादरिरस्य गत्युपपत्तेः ॥ १ ॥

९ विशेषितत्वाच्च ॥ २ ॥

१० सामीप्यात्तु तद्व्यपदेशः ॥ ३ ॥

११ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥४॥

१२ स्मृतेश्च ॥ ५ ॥

१३ परं जैमिनिर्मुख्यत्वात् ॥ ६ ॥

१४ दर्शनाच्च ॥ ७ ॥

१५ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ ८ ॥

'चतुर्थमेकसूत्रमप्रतीकाधिकरणम् ॥ ४ ॥

१६ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च ॥ १ ॥

पञ्चममेकसूत्रं विशेषाधिकरणम् ॥ ५ ॥

१७ विशेषं च दर्शयति ॥ १ ॥

इति श्रीमत्कृष्णद्वैपायनविरचितेषु तत्त्वसूत्रेषु फलाख्ये चतुर्थेऽध्याये गन्तुः फलविचारो नाम तृतीयचरणः ॥

---

६. इदं सूत्रं भास्कररामानुजमध्वाचार्या न पठन्ति ।

१५. 'प्रत्यभिसन्धिः' इति रामानुजभाष्यपाठः ।

१६. 'उभयथादोषात्' इति भास्करभाष्यपाठः । 'उभयथा च दोषात्' इति रामानुजभाष्यपाठः ।

## ॥ चतुर्थश्चरणः ॥

प्रथमं चतुःसूत्रं सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

१ सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

२ मुक्तः प्रतिज्ञानात् ॥ २ ॥

३ आत्मा प्रकरणात् ॥ ३ ॥

४ अविभागेन दृष्टत्वात् ॥ ४ ॥

द्वितीयषट्सूत्रं ब्राह्माधिकरणम् ॥ २ ॥

५ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ १ ॥

६ चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ २ ॥

७ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥३॥

८ सङ्कल्पादेव च तच्छ्रुतेः ॥ ४ ॥

९ अत एव चानन्याधिपतिः ॥ ५ ॥

१० अभावं बादरिराह ह्येवम् ॥ ६ ॥

११ भावं जैमिनिर्विकल्पामननात् ॥ ७ ॥

१२ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ ८ ॥

---

१. 'अविहाय' इति माध्वः पाठः ।

६. 'चितिमात्रेण' इति भास्करमाध्वशैवपाठः । 'तदात्मकत्वात्' इति च रामानुजनैम्बार्कमाध्वशैवमैश्वरः पाठः ।

८ 'एव तु' इति शाङ्करभास्करशैवमैश्वरः पाठः । 'एव तच्छ्रुते.' इति रामानुजनैम्बार्कपाठः ।

९ चकाररहितो मैश्वर. पाठः ।

११ 'अविकल्पमननात्' इति भास्करपाठः ।

तृतीयं द्विसूत्रं तत्त्वभावाधिकरणम् ॥ ३ ॥

१३ तत्त्वभावे सन्ध्यवदुपपत्तेः ॥ १ ॥

१४ भावे जाग्रद्वत् ॥ २ ॥

चतुर्थं द्विसूत्रं प्रदीपाधिकरणम् ॥ ४ ॥

१५ प्रदीपवदावेशस्तथाहि दर्शयति ॥ १ ॥

१६ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ २ ॥

पञ्चमं षट्सूत्रं जगद्व्यापाराधिकरणम् ॥ ५ ॥

१७ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १ ॥

१८ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥२॥

१९ विकारावर्ति च तथा हि स्थितिमाह ॥ ३ ॥

२० दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ४ ॥

२१ भोगमात्रसाम्यलिङ्गाच्च ॥ ५ ॥

२२ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ ६ ॥

इति श्रीमत्कृष्णद्वैपायनविरचितेषु तत्त्वसूत्रेषु फलाख्ये चतुर्थाध्याये प्राप्तफलस्य फलविचारो नाम चतुर्थश्चरणः ॥

---

१३ 'तत्त्वभावे' इति सर्वेप्येकदेशिनः ।

१७ 'प्रकरणात्' इत्यादिसूत्रांशं पृथक्सूत्रत्वेन पठन्ति माध्वाः ।

१८ 'नेति चेन्न' इति भास्करनैम्बार्कपाठः ।

१९ 'स्थितिम्' इत्यादिसूत्रांशमुत्तरसूत्रेण योजयन्ति माध्वाः । 'विकाराद् वर्ति' इति शैवः पाठः ।

२१ 'साम्यम्' इति भास्करपाठः ।

समाप्तानि श्रीमत्कृष्णद्वैपायनविरचितानि तत्त्वसूत्राणि ॥

# अथ बृहत्स्तोत्रसरित्सागरस्य शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | श्लो० |
|---|---|---|---|
| नेपुर्य | नैपुंर्य | १३ | ३ |
| चारी | चारो | १३ | १० |
| वकुण्ठ | वैकुण्ठो | १४ | १२ |
| वराग्य | वैराग्य | १७ | ३९ |
| वाणो | वाण | १७ | ४२ |
| गोंकुल | गोकुल | १९ | ५८ |
| विहेश | दृहेश | २१ | १८० |
| गोपीका | गोपिका | २२ | ८५ |
| अक्रर | अक्रूर | २२ | ८९ |
| वयकर्चित | वायकर्चित | २३ | ९२ |
| प्रहाता | प्रणेता | २४ | १ |
| विचारक: | विचारकः | २४ | २ |
| जांबुवती | जांबवती | २४ | ७ |
| काशिराज | काशीराज | २५ | १७ |
| मंश्युद्धवातुकवाक्य | मंश्युद्धवादिवाक्योक्त | २६ | २१ |
| महासंभार | महत्संभार | २६ | २२ |
| वृष्ण्यृषभाव | वृष्णिवृषाव | ३० | २५६ |
| गीत– | गीत | ३० | २५६ |
| वालुकां | वालुका | ३१ | ३ |
| नवौ | नवो | ३१ | ५ |
| दौकिकास्तु | दौकिकांस्तु | ३२ | ४ |
| प्रम | प्रम्र | ३६ | १४ |
| हिपेऽपि | हिपोऽपि | ३६ | १७ |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | श्लो० |
|---|---|---|---|
| तस्यां | तस्मान् | ३६ | १९ |
| यच्छ्रूते: | यन्छुतेः | ३७ | २ |
| क्रियारता | क्रियारताः | ३८ | १५ |
| आसत्तौ | आसक्तौ | ३९ | १८ |
| पापंडता | पापंडतां | ३९ | १९ |
| याति | यान्ति | ३९ | १९ |
| दुक्षा | दुक्षां | ३९ | २५ |
| पक्षे | पक्ष | ४० | १ |
| साभि | साभि | ४० | ५ |
| पोप्यति | पोप्याति | ४५ | १२ |
| भाग्यौ | भाव्यौ | ४५ | १५ |
| देवेपु | दैवेपु | ४६ | ३ |
| विरहित | दिरहित | ४६ | ९ |
| शास्त्र | शास्त्रं | ४९ | १ |
| यश्यादि | वेश्यादि | ४९ | ४ |
| पृष्ठा | पृष्वा | ५० | १० |
| प्रोक्ताः | प्रोक्ता | ५० | ११ |
| द्रम | द्रुम | ५० | १३ |
| उद्धतो | उद्धृतो | ५१ | २० |
| स्फ्रुत्वा | स्फूत्वा | ५५ | ८ |
| यात्य | यान्त्य | ५६ | ११ |
| यलिनं | वलितं | ६१ | २ |
| स्मरणं | रमणं | ६१ | ५ |
| सुकं | सुक्तं | ६२ | ७ |
| भस | यस | ६३ | ११ |
| नदे | नन्दे | ६८ | ५४ |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | श्लो० |
|---|---|---|---|
| चात.करणै | चान्तःकरणै | ६८ | ५५ |
| वैदिके | वैदिको | ७४ | १ |
| काना | कानां | ७८ | २९ |
| नटस्य | नटस्येव | ८० | ३० |
| मुक्ति हित्वा | मुक्तिंहित्वा | ८३ | ५ |
| संकुचित | सुकुचित | ८५ | ८ |
| सं | हासं | ८९ | ५ |
| चन्द्रं | चन्द्रं | ९० | ७ |
| गिविसारी | बिसारी | ९० | १ |
| द्वेल | द्वेल | ९१ | ७ |
| लुण्ठत् | लुठत् | ९१ | ८ |
| रामो | राम | ९१ | ८ |
| लेन्द्र ॥ सूनो | लेन्द्रसूनो | ९२ | २ |
| काशि | काशी | १०२ | ५२ |
| दन्तवक्र | दन्तवक्र | १२५ | ७१ |
| योकाय | योयकाय | १२७ | ५ |
| मयौभिराट् | मयोभिराट् | १२९ | १५ |
| लाकिक | लौकिक | १३२ | १३ |
| योगो | योगे | १३६ | २ |
| लक्षणं | लक्षणा | १४० | ६ |
| माड्गी | सांड्गी | १४४ | १ |
| मश्रित्त | नैश्रित्य | १४४ | ३ |
| त्यमकरोन् | त्वं करिष्यन् | १४५ | ३ |
| धृष्यारत्वं | धृष्यारयं | १४५ | ५ |
| सीघु | सीधुः | १४६ | १५ |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | श्लो० |
|---|---|---|---|
| सार्वे | सार्थ | १४७ | २१ |
| मार्गध्यांतां | मार्गाध्वांतां | १४९ | २ |
| लीलाब्धि | लीलाब्धिः | १६० | २ |
| भोग्यश्री | गोपीशः | १६१ | ८ |
| यो | यः | १६१ | २ |
| लभ्यम् | लभम् | १६४ | ४ |
| शक्या | शक्या | १६६ | २९ |
| रश्मिति | रश्मीति | १६९ | ५३ |
| यदुनाथ रघुनाथ | रघुनाथ यदुनाथ | १६९ | १ |
| विज्ञाप्तौ | विज्ञतौ | १७२ | १६ |
| भवति | भवती | १७८ | ३ |
| कुञ्चुकी | कञ्चुकी | १७८ | ६ |
| धर बधू | वरवधू | १८२ | १ |
| स्तूक्ति | सूक्ति | २०८ | १४ |
| श्रवाणि | श्रुत्राणि | २०९ | १५ |
| पपार्ति | पार्ति | २६८ | ३ |
| पुमार्थ | पुमर्थ | २८३ | ५ |
| कर्तव्या | कर्तव्याः | २७६ | १८ |
| अभिदानं | अभिधानं | २९१ | १ |
| रातान् | गौरतान् | ३०१ | १० |
| कामययो | काममयो | ३०३ | ३ |
| प्रसिद्धौ | प्रसिद्धथै | ३१७ | १ |
| वल्लभ | वल्लभ | ३२२ | ४३ |
| वला | वला | ३२२ | ४३ |
| पर्जिता: | वर्जिताः | ३२२ | ४३ |
| गुण त्व | गुणत्व | ३२२ | ४३ |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | श्लो० |
|---|---|---|---|
| आदि | आधि | ३३२ | २३ |
| भगवा | भगवता | ३४७ | ११ |
| तादशौ | तादशै | ३५८ | ६ |
| रूभो | रूपो | ३५९ | १ |
| वृत्त | वृत्ति | ३६७ | ६२ |
| तु | तु | ३६७ | ६२ |
| स्वस्य | स्वास्य | ३८८ | १४ |
| ग्रन्थित | ग्रथित | ४०४ | १ |
| महत्स्कुल | महत्कुल | ४०७ | १० |
| पक्षस्थ | पक्षस्य | ५४८ | १७ |
| यः | याः | ५५९(पंक्तिः)५ | |
| वत्सरा | वत्सरा | ५५९ | ११ |
| तत्व | तमत्व | ५७० | १५ |
| पूर्वेव | पूर्वैव | ५७० | १६ |
| मिपि | मिरपि | ५८३ | ५ |
| स्यैति | स्येति | ६०९ | ११ |
| सत्र | सत्य | ६१७ | १२ |

## 'गुजराती न्युस 'स्थानि क्रय्यसंस्कृतपुस्तकानि ।

### वेदग्रन्थाः

ऋग्वेदसंहिता— ... ... ... ... ३-०-०

ऐतरेयब्राह्मणं— ... ... ... ... १-०-०

गणेशाथर्वशीर्षम्—सभाष्यम् ... ... .. ०-६-०

पुरुषसूक्त-श्रीसूक्त-लक्ष्मीसूक्त-उत्तरनारायणसह— ... ०-३-०

मंत्रसंहिता—( शुक्लयजुर्वेदी ) ... ... ... ०-८-०

शुक्लयजुर्वेदीयरुद्राष्टाध्यायी— ... ... ... ०-६-०

### उपग्रन्थाः

आश्वलायनगृह्यसूत्रं—गार्ग्यनारायणीवृत्तिसहितं, गृह्यपरिशिष्टं,
गृह्यकारिकाश्च ... ... ... ... ३-८-०

आश्वलायनगृह्यसूत्रम्— ... ... ... ०-४-०

गृह्यसूत्रम्—( पारस्कराचार्यकृतम् ) ... ... २-०-०

पारस्करगृह्यसूत्रम्—भाष्यपञ्चकसमलंकृतम् ... ... ६-८-०

हिरण्यकेशीयगृह्यसूत्रम्—हिरण्यकेशीयानामुपनयनादिसंस्कार-
विषयेऽयं ग्रन्थोऽतीवोपयोगी, अद्यावधि केनापि न मुद्रितः । ०-५-०

### कर्मकाण्डग्रन्थाः

आशौचनिर्णयः—मूळ और गुजराती भाषांतर... ... ०-६-०

गणेशसहस्रनामावलिः— ... ... ... ०-३-०

देवीसहस्रनामावलिः— ... ... ... ०-३-०

पौराणकर्मदर्पणं पंच प्रकरणानि— ... ... ६-०-०

पूजासमुच्चयः— ... ... ... ... १-०-०

प्रयोगपारिजातः—षोडशसंस्कारखण्डम् ... ... ४-०-०

| | |
|---|---|
| प्रयोगरत्नं—( नारायणभट्टी ) ... ... ... | २-०-० |
| ब्रह्मनित्यकर्म शुक्लयजुर्वेदी— ... ... ... | १-८-० |
| ब्रह्मकर्मसमुच्चयः—ऋग्वेदी ... ... ... | २-१२ ० |
| शुक्लयजु शाखीयकर्मकाण्डप्रदीपः— ... ... | ५-०-० |
| विष्णुसहस्रनामावलिः— ... ... ... | ०-३-० |
| विवाहपद्धतिः—( संस्कृत ) पं. गुरुप्रसाद यांनी शुद्धकेलेली | १-४-० |
| शिवसहस्रनामावलिः— ... ... ... | ०-३-० |
| संस्कारकौस्तुभः—अनंतदेवभट्टकृतः ... ... | २-०-० |

## पुराण–इतिहासग्रन्थाः

| | |
|---|---|
| अध्यात्मरामायणं—मूल ... ... ... | १-८-० |
| तु० रामायण गु० टीका—( सचित्र ) नवी आवृत्ती । ... | ६-०-० |
| महाशिवपुराणं—गुजराती भाषांतर ( सचित्र ) ... | ६-०-० |
| वाल्मीकिरामायणं—मूल ... ... ... | ५-० ० |
| श्रीमद्भागवतं चूर्णिकासहितम्—( स्थूलोत्तमाक्षरं ) वेदस्तुतौ श्रीवल्लभाचार्यकृतसुबोधिनीटीकासहितं च सुचिक्कणश्लेजपत्रात्मकं सचित्रं । ... ... ... | १२-०-० |
| श्रीमद्भागवतं—श्रीधरीटीकासहितं ग्लेज ... ... | १०-० ० |
| श्रीमहाभारत–विराटपर्व—श्रीनीलकण्ठभट्टकृत-भारतभावदीपः, अर्जुनमिश्रकृता भारतदीपिका, चतुर्भुजमिश्रप्रणीतः भारतप्रकाशः, सर्वज्ञनारायणकृतः-भारतार्थप्रकाशः, विमलबोधकृता-दुर्घटार्थप्रकाशिनी, रामकृष्णविरचिता विरोधार्थभंजिनी, केनचिद्विदुषाविरचितं-विषमपदविवरणं, वादीराजविरचिता-लक्षाभरणेत्याख्यटीकाभिस्तथा विपुलपाठभेदैः समेतम् ... | ४-० ० |
| श्रीमद्भागवतमूलम्— ... ... ... | २-८-० |
| श्रीमहाभारत–उद्योगपर्व—श्रीनीलकण्ठभट्टप्रणीत-भारतभावदीपः, अर्जुनमिश्रकृत भारतदीपिका, विमलबोधकृत–दुर्घटार्थ | |

प्रकाशिनी, सर्वज्ञनारायणविरचित-भारतार्थप्रकाशः, वादीराज तीर्थविरचिता-लक्षाभरणेति पञ्चटीकोपेतम् । अत्र सनत्सुजातीयमाख्याने श्रीमदाद्यशङ्कराचार्याणां भाष्येण सहित वर्तते । ८-८-०

श्रीमद्भागवतम्—इदं देवीभागवतं वा महाभागवतमिति नाम्ना प्रसिद्धमस्ति । अस्य नामान्तरं देवीपुराणमित्यपि वर्तते अत्र महाकाली, दाक्षायणी, गंगा, पार्वत्यादीनां मनोहारिण्यः कथा विद्यन्ते । श्रीराम स्कन्द-पाण्डवादीनां कथानकानि सन्ति । ललितासहस्रनाम भगवती गीता च वर्तते । अतिप्राचीनं धार्मिक चेदं पुस्तकं मनोहरपत्रेषु सुवाच्यैः सीसकाक्षरैर्मुद्रितम् । ... ... ... २-०-०

श्रीरामायणम्—वाल्मीकिमुनिप्रणीतं रामायण-तिलक, रामायण शिरोमणि,रामायण-भूषणेति टीकात्रयोपेतम्—

| | | |
|---|---|---|
| „ | प्रथमं बालकाण्डम्— ... ... ... | ३-०-० |
| „ | द्वितीयं अयोध्याकाण्डम् ... ... | ५-०-० |
| „ | तृतीयं अरण्यकाण्डम् ... ... ... | २-१२-० |
| „ | चतुर्थं किष्किन्धाकाण्डम् ... ... | २-१२-० |
| „ | पंचमं सुन्दरकाण्डम् ... ... ... | ३-८-० |
| „ | षष्ठं युद्धकाण्डम् ... ... ... | ८-०-० |
| „ | सप्तमं उत्तरकाण्डम् ... ... ... | ६-०-० |

| | |
|---|---|
| सत्यनारायणपूजा—मूलं ... ... ... | ०-३-० |
| „ „ मूळ व गुजराती भाषांतर ... | ०-४-० |
| „ „ „ हिन्दी „ ... | ०-४-० |
| सप्तशती—देवीमाहात्म्यसहिता (पञ्चाङ्ग—सपूजाविधि) | १-०-० |
| „ (रेशमी पुठा) ... ... | १-४-० |
| „ (मध्यमाक्षर साधा पुठा) ... ... | ०-१२-० |
| „ „ (रेशमी पुठा) ... ... | १-१२-० |
| संस्कारगणपतम्— ... ... .. ... | १-४-० |

## नीतिशास्त्रग्रन्थाः

| | |
|---|---|
| तत्त्वज्ञान व तत्प्रतीपाद्य—विषय अद्वैतसिद्धान्तमाला ... | ०-८-० |
| नीतिसूत्रं—चाणक्याचार्येण विरचितं, अन्योऽयं लघुरपि नीतिसिद्धांतपूर्णो व्यवहारजिज्ञासूनामतीवोपकारकः । ... | ०-२-० |
| नीतिशास्त्रविचार— ... ... ... | १-८-० |

## स्तोत्रग्रन्थाः

| | |
|---|---|
| गंगालहरी—( सटीक ) सं. टीका ... ... | ०-७-० |
| त्रिविधनामावली—टीकासमेता ... ... ... | २-४-० |
| दक्षिणामूर्तिस्तोत्रं—सटीकं सं. टीका ... ... | २-०-० |
| बृहत्स्तोत्रसरित्सागरः—अत्र हरिरायजीकृताष्टपद्यः साधिकरणोमतान्तरपाठसहितो ब्रह्मसूत्रपाठोपि विद्यते. ... | ५-०-० |
| विष्णुसहस्रनाम—( मूलं स्थूलाक्षरं ) सार्धं बाइंडिंग ... | ० ३-० |
| ” ” रेशमी पुट्ठा ... ... | ०-६-० |
| ” ” जले क्लिन्नं न भवत्येवं ... | ०-४-० |
| विष्णुसहस्रनाम—गुर्जरानुवादयुतम् । सार्धं बाइंडिंग ... | ०-२-६ |
| ” ” जले क्लिन्नं न भवत्येवं ... | ०-४-० |
| ” ” रेशमी पुट्ठा ... ... | ०-६-० |
| विष्णुसहस्रनामयुतपंचरत्नस्तोत्रं— मूळ स्थूलाक्षर सार्धं ... | ०-३-० |
| ” ” जले क्लिन्नं न भवत्येवं ... | ०-४-० |
| ” ” रेशमी पुट्ठा ... | ०-६-० |
| शिवमहिम्नस्तोत्रम्—हरिहरपक्षयोः अन्वयस्पष्टीकरण-पदच्छेद-भावार्थैर्युक्तं संस्कृतं तथा च गुर्जरटीकासहितम् ... | ०-६-० |
| ” ( गुर्जरानुवादयुतम् ) ... ... | ०-७-० |
| श्रीपुरुषोत्तमनामसहस्रम्—नामचन्द्रिकायुतम् । ... | ०-१० ० |
| स्तोत्ररत्नाकरः—अत्रास्माभिः अतिप्रयासेन पूर्वस्मात्पाठितोत्राणि संगृहीतानि (४७६ स्तोत्रसंख्या, पृष्ठसंख्या १०२९) | २-०-० |
| ” ” ” रेशमी पुट्ठा .... ... | २-४-० |

| | |
|---|---|
| स्तोत्ररत्नहारः—प्रथमो भागः—स्तोत्रसंख्या २३४ ... | १-०-० |
| " द्वितीयो भागः— " २३५-४७६ ... | १-४-० |

## धर्मशास्त्रग्रन्थाः

| | |
|---|---|
| आचारमयूखः—मीमांसकनीलकण्ठभट्टविरचितः । ... | ०-८-० |
| उत्सर्गमयूखः—मीमांसकश्रीनीलकण्ठभट्टविरचितः । अत्र वापीकूपतडागारामाणामुत्सर्गविधिः कथितः । ... ... | ०-४-० |
| दानमयूखः—मीमांसकश्रीनीलकण्ठभट्टविरचितः । अत्र दानसामान्येतिकर्तव्यता, मण्डपादिलक्षणम्, दानानि दानप्रयोगाश्च विस्तरेण निरूपिताः । ... ... ... | २-०-० |
| नीतिमयूखः— ... ... ... ... | १-४-० |
| प्रतिष्ठामयूखः—मीमांसकश्रीनीलकण्ठभट्टविरचितः । अत्र शिवविष्ण्वादिप्रतिमास्थापनं, तथा जीर्णोद्धारः विस्तरेणोपपादितः । | ०-६-० |
| प्रायश्चित्तमयूखः— ... ... ... ...<br>विशुद्धिमयूखः— ... ... ... ...<br>शान्तिमयूखः— ... ... ... ... | २-८-० |
| मनुस्मृतिः—मन्वर्थमुक्तावलीनामटीकोपेता ... ... | २-८-० |
| व्यवहारमयूखः— ... ... ... ... | १-१२-० |
| श्राद्धमयूखः— ... ... ... ... | १-४-० |
| संस्कारमयूखः— ... ... ... ... | ०-१२-० |
| समयमयूखः— ... ... ... ... | १-८-० |

## व्याकरणग्रन्थाः

| | |
|---|---|
| अष्टाध्यायीसूत्रपाठः—( सह त्रिमुनिकल्पद्रुमोपेतः ) ... | ० ७-० |
| अष्टाध्यायी—( पाठचतुष्टयं ) ... ... | ० १२-० |
| अभिधावृत्तिमातृका तथा शब्दव्यापारविचारः— ... | ०-६-० |
| धातुरूपावलिः— ... ... ... | ०-२-० |
| भवानीसिंहकारकरत्नम्—( संस्कृत ) विद्यार्थीओ आदरणीय अने व्याकरणनो एकज ग्रंथ ... ... | ०-८-० |

